॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् ७ – आनन्दमयाधिकरणात् प्रथमपादान्तम्

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – ७

आनन्दमयाधिकरणात् प्रथमपादान्तम्


प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः




श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – ७

प्रथमं मुद्रणम् - ई.सन् २००५

Śrīman-Nyāyasudhā

Parimaḷādyupctā

Volume - 7

First Edition -2005 A.D.

पार्थिव संवत्सर, शके १९२७, ज्येष्ठ कृष्ण त्रयोदशी, सोमवासरः

श्री विजयीन्द्रतीर्थस्वामिनां आराधनामहोत्सवः

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**

**Śrīman Madvāchārya Mūla Mahāsamsthāna**

**Śrī Rāghavendra Swāmy Mutt**

Mantrālayam - 518 345

India.

✻ *मुद्रकः* ✻

धनंजयाचार्य बाळाचार्य वरखेडकरः

सुधा मुद्रणम्

शंकरपुरम्, बेंगळूर - ५६० ००४

दूरवाणी– २६६७६९४२, ५७६० २८३६

**SUDHA MUDRANA**

Shankarpuram, Bangalore - 560 004

Phone : 2667 6942, 5760 2836



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-
श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-

## श्रीमन्मध्वाचार्यसमलंकृतमूलमहासंस्थानाधिष्ठितानां

श्रीमदद्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

## श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां

हृत्कमलनिवासि-

## श्रीरामकृष्णवेदव्यासाभिन्न-

## श्रीमूलरघुपतिपादकमलयोः

**समर्पितोऽयं ग्रन्थः ॥**

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-

श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-

**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**

वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-

**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**

**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसम्पादकेभ्यः वैकुण्ठवासिभ्यः साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः ।*

मन्त्रालयक्षेत्रम्,

पार्थिव संवत्सर

ज्येष्ठ शुक्ल तृतीया



श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठाधीशानां

श्री श्री सुजयीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

## श्री श्री सुशमीन्द्रतीर्थश्रीपादानां

परमानुग्रहेण सम्पादितोऽयं ग्रन्थः ।

# सम्पादकविद्वन्मण्डली

**प्रधानसम्पादकाः**

## वैकुण्ठवासिनः श्री आचार्य साणूरु भीमभट्टाः

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**सम्पादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् आहिताग्नि श्री वरखेडकर भीमसेनाचार्याः

**निर्वाहकाः**

## श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः

श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः,

श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठः,

मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा सङ्क्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | सङ्क्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी | पांघ्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# टिप्पणीविषये स्पष्टीकरणम्

श्रीमज्जयतीर्थविरचितं महामेरुतुल्यं श्रीमन्न्यायसुधाग्रन्थमनेके व्याचख्युः। साम्प्रतमस्माभिः, उपलब्धाः श्रीमन्न्यायसुधाव्याख्याः सङ्गृह्यैकत्र मुद्रापयितव्याः इत्येकमात्रोद्देशेन अनेकव्याख्यासहिततया श्रीमन्न्यायसुधाग्रन्थः मुद्रापितः।

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां श्रीमद्राघवेन्द्रतीर्थश्रीपादानां च सुधाव्याख्यानयोः इदानीं मुद्रापितायां यस्यां कस्याञ्चित् सुधाव्याख्यायां यस्मिन् कस्मिंश्चिद्विषये भिन्नाभिप्राये सति (विरुद्धाभिप्राये सति) सः तद्व्याख्यातॄणामभिप्राय एव । सः श्रीमद्विजयीन्द्रतीर्थश्रीपादानां वा परिमलकाराणां वा सम्पादकानां वा प्रकाशकानां वा सम्मत इति न मन्तव्यमिति एतन्मूलकतया स्पष्टीकुर्मः।

इत्थम्

**सम्पादकाः**



॥ श्रीमन्मूलरामो विजयते ॥

# प्रकाशकीयम्

द्वापरे श्रीगौतममहर्षिभिः शप्तेषु साधुजनेषु व्याकुलीभूतेषु श्रीब्रह्मरुद्रेन्द्रादिभिः प्रार्थितो भगवान्नारायणः श्रीवेदव्यासत्वेनावतीर्य राशीभूतान् वेदान् विभज्य, वेदार्थनिर्णायकानि (५६४) चतुःषष्ट्यधिकपञ्चशत-ब्रह्मसूत्राणि व्यरचयत्।

एषां ब्रह्मसूत्राणां श्रीवाय्ववतारिणः सर्वज्ञाः श्रीमदानन्दतीर्थभगवत्पादाः भाष्यं, श्रीमदनुव्याख्यानं, न्यायविवरणं, अणुभाष्यं चेति ग्रन्थचतुष्टयं विरचय्य महदुपाकुर्वन्।

श्रीमदाचार्याणां प्रियान्तेवासिनां श्रीत्रिविक्रमपण्डिताचार्याणां "व्यक्ततर्कततिं कुरु" इति प्रार्थनामनुरुध्य श्रीमदाचार्याः उपर्युक्तग्रन्थेष्वन्यतमं श्रीमदनुव्याख्यानग्रन्थं रचयामासुः।

अनुव्याख्यानस्यास्य इन्द्रांशसंभूताः श्रीमज्जयतीर्थश्रीमच्चरणाः श्रीमन्न्यायसुधानाम्नीं मेरुतुल्यामनुपमां टीकां व्यरचयन्।

ग्रन्थोऽयं चित्रपदपुञ्जमण्डितः, महागाम्भीर्यवान् महापण्डितवरेण्यानामपि महान्तं गर्वपर्वतं खण्डयितुं दक्षश्चकास्ति।

अस्यामोघस्य ग्रन्थस्य महत्त्वम् एतद्ग्रन्थस्य एतदीयानामनेकासां व्याख्यानां सङ्ख्यैव व्यञ्जयति।

| | **व्याख्यातारो महाभागाः** | **व्याख्यानस्य नाम** |
|---|---|---|
| १) | श्री श्रीपादराजतीर्थाः | वाग्वज्रम् |
| २) | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः |
| ३) | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका |
| ४) | श्री राघवेन्द्रतीर्थाः | परिमलः |
| ५) | श्री यदुपत्याचार्याः | टिप्पणी |
| ६) | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः |
| ७) | श्री गलगली नरसिंहाचार्याः | आनन्दः |
| ८) | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः |
| ९) | श्री श्रीनिधितीर्थाः | टिप्पणी |
| १०) | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका |



| | | |
|---|---|---|
| ११) | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला |
| १२) | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका |
| १३) | श्री कुण्डलगिरि आचार्याः | रसकूलङ्कषः |
| १४) | श्री सत्यव्रततीर्थाः | सुधाविवृतिः |
| १५) | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः |
| १६) | श्री विट्ठलभट्टाः | टिप्पणी |
| १७) | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि |
| १८) | श्री विष्णुतीर्थाः | रसरञ्जनी |
| १९) | श्री अडवि कृष्णाचार्याः | लघुरसरञ्जनी |
| २०) | श्री मन्नारि कृष्णाचार्याः | चषकः |
| २१) | श्री एरी बाळाचार्याः | उपस्पर्शः |
| २२) | श्री काशी तिम्मण्णाचार्याः | काशी टिप्पणी |
| २३) | श्री गूढकर्तृकटिप्पणीकाराः | टिप्पणी |
| २४) | श्री प्रदीपकाराः | प्रदीपः |
| २५) | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी |
| २६) | श्री रोट्टि वेङ्कटभट्टाः | सुधाविवृतिः |
| २७) | श्री ताम्रपर्णी आचार्याः | टिप्पणी |
| २८) | श्री उमर्जी प्रह्लादकृष्णाचार्याः | उमर्जी |
| २९) | श्री व्यासतत्त्वज्ञतीर्थाः | कुलिशम् |
| ३०) | श्री महेश्वरसूरिः | टिप्पणी |
| ३१) | श्री पुट्ट तंबि आचार्याः | टिप्पणी |
| ३२) | श्री रत्नगर्भ ओडेयर् | टिप्पणी |
| ३३) | श्री अनन्तभट्टाः | टिप्पणी |
| ३४) | श्री सत्यनाथाचार्याः | टिप्पणी |
| ३५) | श्री जयवेङ्कटाचार्याः | टिप्पणी |
| ३६) | श्री गूढकर्तृकाचार्याः | सुधासारसङ्ग्रहः |
| ३७) | श्री गलगली गोविन्दाचार्याः | पञ्चरत्नस्तबकः |
| ३८) | श्री श्रीमुष्णाचार्याः | पञ्चाधिकरणी |
| ३९) | श्री लिङ्गेरि श्रीनिवासाचार्याः | सिद्धान्तप्रभा |
| ४०) | श्री पाण्डुरङ्गि केशवाचार्याः | सुधावाक्यार्थविनोदः |
| ४१) | श्री उडुपि राघवेन्द्रतीर्थाः (पुत्तिगे मठः) | टिप्पणी |



| | | |
|---|---|---|
| ४२) | श्री सत्यनाथाः | न्यायसुधापरशुः |
| ४३) | श्री सुमतीन्द्रतीर्थाः | भावरत्नकोशः |
| ४४) | श्री पाण्डुरङ्गि केशवाचार्याः | मञ्जरी |
| ४५) | श्री व्यासतत्त्वज्ञतीर्थाः | लघुरसरञ्जनी |
| ४६) | श्री व्यासतत्त्वज्ञतीर्थाः | गुरुरसरञ्जनी |
| ४७) | श्री भीमराव् कुलकर्णी कुम्बारगेरी | टिप्पणी |
| ४८) | श्री सत्यपराक्रमतीर्थाः | सुधाफक्किका |
| ४९) | श्री हुलिगि श्रीपत्याचार्याः | टिप्पणी |
| ५०) | श्री अहोबिलाचार्याः | टिप्पणी |
| ५१) | श्री सत्यप्रज्ञतीर्थाः | टिप्पणी |

एतादृशस्य अत्युत्तमग्रन्थस्य मुद्रणकार्यं श्रीमत्परमपूज्यानां प्रातःस्मरणीयानां श्रीमत्सुजयीन्द्रतीर्थ-श्रीमच्चरणानामादेशं सदिच्छां चानुरुध्य सम्प्रति श्रीराघवेन्द्रस्वामिमठीयपीठाधीश्वराः पूज्याः श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादाः कारयन्तीति अस्माकं परमं प्रमोदस्थानम् ।

अस्य ग्रन्थस्य संशोधनकार्ये अस्मद्विद्यापीठीयप्राच्यग्रन्थालयस्थाः अधोनिर्दिष्टाः टिप्पण्यः हस्तप्रति-कृतयोऽपि उपयोजिता इति निवेदयितुं नितान्तं तुष्यामः ।

संशोधनादिकार्येष्वनुकूलयितुं श्रीसुधाव्याख्यानं श्रीनिधितीर्थीयं तालपत्रस्थं अनुगृहीतवद्भ्यः परम-पूज्येभ्यः श्रीपुत्तिगेमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । एवमेव मुद्रणकार्येऽस्मिन् साक्षाद्वा परोक्षे वा सहकृतवद्भ्यः परमपूज्येभ्यः श्रीमठाधीश्वरेभ्यः सर्वेभ्यः सभक्तिप्रणामगणं कार्तज्ञ्यमाविष्कुर्मः । श्रीनिधितीर्थीयं व्याख्यानं तालपत्रस्थं तौलवलिपिगतं देवनागरिलिपिगतं कृतवतः विद्वान् श्री साणूरु भीमभट्टतनूजः श्री कृष्णमूर्ति महाशयान् सन्दर्भेऽस्मिन् सप्रश्रयं स्मरामः ।

ग्रन्थस्यास्य प्रधानसम्पादकेभ्यः विद्वद्भ्यः वैकुण्ठवासिभ्यः श्री आचार्य साणूरु भीमभट्टमहाशयेभ्यः तथा एतद्ग्रन्थसम्पादकेभ्यः विद्वद्भ्यः श्री कुरुडि सुशीलेन्द्राचार्येभ्यः, तथा विद्वद्भ्यः आहिताग्नि श्री वरखेडकर भीमसेनाचार्येभ्यः, एवं विठ्ठलभट्टीयां टिप्पणीं तथा एरी बाळाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री व्यासनकेरे प्रभञ्जनाचार्येभ्यः, तथा पांघ्री श्रीनिवासाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री पांघ्री लक्ष्मणाचार्येभ्यः, तथा वाक्यार्थरत्नमालां टिप्पणीं, सत्यनाथतीर्थीयां टिप्पणीं, हुग्गि टिप्पणीं च दत्वा उपकृतवद्भ्यः पंढरपुरीय पूर्णप्रज्ञमतोन्नाहिनीपाठशालाप्रांशुपालेभ्यः विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, तथा वाक्यार्थरत्नमाला-टिप्पण्याः प्रतिकृत्यन्तरं दत्तवद्भ्यः विद्वद्भ्यः श्री के. टि. पाण्डुरङ्गि महाशयेभ्यः एवमेव प्रदीपटिप्पणीं दत्तवद्भ्यः मद्रपुरसर्वकारीयग्रन्थालयव्यवस्थापकेभ्यः श्रीमद्भ्यः, श्रीमन्न्यायसुधाबिन्दुनाम्नीं टिप्पणीं दत्तवद्भ्यः श्रीमद्भ्यः केरलराज्यीय तिरुवाङ्कूरु ग्रन्थभाण्डारव्यवस्थापकेभ्यः, तथा रसरञ्जनी-लघुरसरञ्जनीद्वयं दत्तवद्भ्यः विद्वद्भ्यः श्री गंगूरु



हनुमेशाचार्येभ्यः, एवं ग्रन्थस्यास्य प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः विद्वद्भ्यः श्री कडपा राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, विद्वद्भ्यः श्री एन्. वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री पुरोहित नरसिंहाचार्येभ्यः, विद्वद्भ्यः श्री अग्निहोत्री वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, विद्वद्भ्यः श्री उंदारु पांडुरंग श्रीनिवासमूर्ती आचार्येभ्यः, एवं विशेषतः अल्पीयस्येव काले महता परिश्रमेण सश्रद्धं ग्रन्थानां प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः तथा सर्वाङ्गसौन्दर्येण मुद्राप्य दत्तवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः विद्वद्भ्यः श्री वरखेडकर धनंजयाचार्येभ्यः, तथा ग्रन्थस्यास्य अध्ययनाध्यापनादिकर्तृभ्यः सर्वेभ्यः श्रीभगवान् सीताजानिः श्रीमूल-रघुपतिवेदव्यासः आयुरारोग्यैश्वर्यादीनि चानुगृह्य संरक्षत्विति अनन्यया भक्त्या सम्प्रार्थयामहे ।

अत्र मुद्रापितासु टिप्पणीषु काश्चन टिप्पण्यः प्राचीनहस्तप्रतिरूपेण शिथिलाः मध्ये मध्ये त्रुटिताः कदाचिदसमग्रा अपि तेनैव रूपेण पण्डितैः संशोध्य मुद्रापिताः । अत्र प्रकाशितभागे यदि कुत्रचित् स्खलितानि प्राज्ञैर्विद्वद्भिः विलोकितानि चेत् ते अस्मान्प्रति संसूचयेयुः । तेन वयं शुद्धिपत्रिकायां अग्रिमसम्पुटेषु वा तत्सर्वं समीकृत्य विदुषां पुरः उपस्थापयितुं शक्ष्यामः । येषां समीपे अस्माभिरमुद्रितटिप्पण्यः उपलभ्यन्ते ते कृपया तान् ग्रन्थान् अस्मभ्यं प्रेषयन्ति चेत् तत्सर्वमागामिसम्पुटेषु वयं सम्यक् संशोध्य मुद्रापयितुं महता सन्तोषेण स्वीकुर्मः ।

इत्थम् ।

भवदीयम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्,**

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः





॥ श्रीमन्मूलरामो विजयते ॥

# प्रस्तावना

**यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम्।**
**न क्षमन्ते विमतयः तमुपासे श्रियःपतिम्॥**

भूर्भुवस्वरादिचतुर्दशभुवनात्मकसंख्यातिगब्रह्माण्डकोटीः रोमकूपे सन्निवेश्य सकललोकजनन्या श्रिया सह सर्पतल्पे शयानेन भगवता सृष्टेषु भूलोकखण्डेष्वन्यतमेऽस्मिन् भरतखण्डे जनिमतामस्माकं महद्भागधेयमिदं यदत्र भगवान् तत्तद्युगेष्ववतीर्य बलकार्यं ज्ञानकार्यं च सम्पाद्य स्वभक्तानन्वग्रहीत् । तत्रापीदमतिशयितं वक्तव्येष्वाद्यं वचनं यदत्र तद्भक्ताग्रणीः पावनः पवमानः अनेकधाऽवतीर्य तत्रापि तृतीयेऽवतारे श्रीमध्वनाम्नाऽत्र प्रकटीभूय सज्जनानुददीधरत् । तदीयभक्तानुग्रहकार्येषु आचन्द्रार्कं दीप्यमानानि बहूनि कार्याणि यद्यपि वक्तव्यानि सन्ति तथाऽपि समस्तशास्त्रार्थसारभूतानां श्रीबादरायणसंज्ञकेन श्रीवेदव्यासमहर्षिणा निर्मितानां ब्रह्मसूत्राणां भाष्य-अणुभाष्य-अनुभाष्य-न्यायविवरण-ग्रन्थानां निर्माणमतितरां सर्वैरपि अध्यात्मविद्यारसिकैः विचारविमर्शकैः प्रशंसनीयं सर्वदा स्मरणीयं कार्यमिति निश्चप्रचं दृढतरं वयं वक्तुं शक्नुमः।

तत्र च सूत्रसंबन्धिग्रन्थचतुष्टये ब्रह्मसूत्र-अनुव्याख्यान-ग्रन्थराजः नभसि नक्षत्रपुञ्जमध्ये चन्द्रमा इव चकास्ति । तस्यास्य ग्रन्थराजस्य इन्द्रावतारभूतैः प्रातःस्मरणीयैः परमपूज्यश्रीजयतीर्थमस्करिवरैः रचितम् अनुव्याख्यानव्याख्यानं न्यायसुधानामकं नैकाभिष्टिप्पणीभिः समलंकृतं श्रीराघवेन्द्रतीर्थगुरुवर्याणां प्रेरणया अनुग्रहेण च इदानीं सम्प्रकाश्य हरिगुरुभक्तानां करकमलयोः समर्पयितुं मोमुद्यते अस्माकं चेतः।

उपनिषत्प्रस्थान-गीताप्रस्थान-सूत्रप्रस्थाननामकप्रस्थानत्रये सूत्रप्रस्थानमेव अन्तिमं निर्णायकं समस्तैः शिरसा धारणीयं च भवति । किं बहुना समस्तेषु वेदेषु समस्तेषु पुराणेष्वन्यत्राप्यभ्यर्हणीयवैदिकवाङ्मयेषु च उक्तानामर्थानां निर्णयाय सूत्राण्येव अस्माकमवलम्बभूतानि महार्णवे तरतामाधारभूतनौकास्थानीयानि । तेषां सूत्राणां व्याख्यानभूतानुव्याख्यानस्य व्याख्यानरूपा इयं सुधा देवलोकीयसुधातोऽप्यभ्यर्हिततमा जन्ममृत्यु-जरादिकं सर्वमपहृत्य स्वरूपानन्दाविर्भावरूपं मोक्षं दापयितुं समर्था । अस्य ग्रन्थस्य प्रशंसा कथं कार्या, कियती कार्या इत्यादिविषयाः आलोच्यमानाः अस्माकं जिह्वां पुरःसर्तुमेव न मुञ्चन्ति । यतो हि ग्रन्थकाराः श्रीमज्जयतीर्थश्रीमच्चरणाः पूर्वाश्रमे नाममात्रेण गृहस्थाश्रमप्रवेशं लब्ध्वा केनापि अनालोचनीयेन केवलं भगवता क्लृप्तेन घटनाविशेषेण संसारमिमं तुच्छीकृत्य स्वीये तरुणे वयसि संन्यासाश्रमं प्रविश्य स्वगुरूणां विद्यारण्यारण्यच्छेदकानां श्रीमदक्षोभ्यतीर्थगुरुवर्याणां सविधे शुकवत् शिक्षिता भूत्वा स्वीयया अलौकिकप्रज्ञया आचार्याणां अनेकग्रन्थानां टीकाः विरचय्य प्रायः अन्ते इमां न्यायसुधां भक्तेभ्यः नाकीन्द्रः सुधां इव प्रादुः । अस्य ग्रन्थस्य माहात्म्यं शेषोऽपि वर्णयितुं नालम् । बाल्यादारभ्य यौवनपर्यन्तं प्रायः संस्कृतभाषायाः वेदादिशास्त्राणां च परिचयहीना अपि केवलं गुर्वनुग्रहेण शास्त्राण्यभ्यस्य अनन्तरं किञ्चित्समयपर्यन्तं सरस्वतीं संसेव्य तदनुग्रहेण घण्टां (लेखनीं) पूगं च लब्ध्वा



लेखनकार्यं प्रारभन्त जयतीर्थश्रीमच्चरणाः। तत्रापि गुहाया अन्तरुपविश्य पञ्चषशिष्यान् पाठयन्तः स्वयमेव वाणीकृपया लब्धया लेखन्या आचार्याणां ग्रन्थान् व्याख्यान्तः, अनन्तरं तदुपरि पूगेन सम्मार्जनमात्रेण तत्सर्वं त्रुटिलेशरहितं भगवत्कृपया आविर्भावयन्तः ते लोके टीकाचार्याः इत्येव निरुपपदगौरवनाम्ना प्रथिताः बभूवुः।

महानुभावाः जयतीर्थश्रीमच्चरणाः मठीयवैभवादीन् हित्वा शिष्यैः भिक्षया आनीतेन यावनालान्नेन (भक्करि) जीवनं निरवहन्।

महानुभावाः जयतीर्थश्रीमच्चरणाः गुरुभक्तिविषये अन्यादृशम् आदर्शम् अस्माकं पुरतः उपस्थापयामासुः। तद्यथा—

**न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम्।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम्॥**

अनेन श्लोकेन प्रदर्शितः विनयः अनन्यसाधारणः लोकातिशायी सहृदयान् जिज्ञासून् रोमाञ्चयति। एतदपेक्षया अधिकः गुरुप्रवणः गुरोः दासानुदासः लोके यत्र कुत्रापि नोपलभ्येत इत्येवं सर्वैः सर्वथा अनुभूयते एव।

अल्पीयसा अनेहसा स्वकीयप्रखरबुद्धिवैभवेन निर्मितस्य अस्य सुधाग्रन्थस्य वैशिष्ट्यं वर्णयितुं सहस्रवदनः शेषोऽपि नालम्, किमुत अल्पप्रज्ञाः तृणकल्पाः वयम्। एतदीयग्रन्थस्य माहात्म्यं संवर्णयन् कविरेकः एवमुद्गिरति स्म। यथा—

**आमूलाग्रनिबद्धतर्कजटिलं शब्दैकजीवातुकं**
**मीमांसानुनयं च शङ्करवचो हुङ्कारभङ्गप्रदम्।**
**शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्स्वप्रतन्त्रान्तराः**
**व्याख्यास्यन्ति पठन्ति वा कथमहो किं वा कलौ दुर्घटम्॥**

'अध्यात्मविद्या विद्यानाम्' इति श्रीकृष्णोक्त्यनुसारेण अद्वितीयाध्यात्मविद्याख्य-सूत्रव्याख्यानरूपा इयं न्यायसुधा नैकाभिष्टिप्पणीभिः सह संयोज्य, संशोध्य, संमुद्रय अत्र प्रकाशं नीयते। महदिदं साहसकार्यं महापुरुषोत्तमस्य श्रीहरेः अविच्छिन्नभक्ताग्रेसर-श्रीमन्मुख्यप्राणावताराणां श्रीमदानन्दतीर्थभगवत्पादानां परमानुग्रहेणैव सम्पन्नः प्रह्लादावतारभूतानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानाम् आराधनसमये तत्करकमलाभ्यामेव श्रीमन्मूलरामचन्द्रदेवस्य पादकमलयोः तद्भक्तवृन्देन सप्रश्रयं सभक्ति समर्प्यतेतमाम्। श्रीकृष्णार्पणमस्तु॥

**आचार्याः साणूरु भीमभट्टाः**

प्रधानसम्पादकाः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

**श्रीमज्जयतीर्थयतिकृता**

# श्रीमन्न्यायसुधा

## संपुटम् – ७

## आनन्दमयाधिकरणात् प्रथमपादान्तम्

### विषयानुक्रमणिका





**इति प्रथमाध्यायस्य प्रथमः पादः ॥**

श्रीकृष्णार्पणमस्तु ॥

✼✼✼



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

### प्रथमाध्याये प्रथमपादे

### ॥ आनन्दमयाधिकरणम् ॥

॥ १-१-६ ॥

ब्र०सू०— ॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥

॥ अथ तत्र स्वपक्षसाधनम् ॥

॥ तत्राप्यादौ एतदादिप्रथमाध्यायस्य कृत्यम् ॥

१ सु०— ''अथातो ब्रह्मजिज्ञासेति यस्य ब्रह्मणो जिज्ञासा विहिता तत्स्वरूपं 'जन्माद्यस्य यतः', 'शास्त्रयोनित्वादि'ति लक्षणप्रमाणाभ्यां स्वेतरसमस्तवस्तुव्यावृत्ततयाऽवधारितम् । प्रमाणस्यान्यपरत्व(।)शङ्कया लक्षणस्यातिव्याप्तिः समन्वयसूत्रेण परिहृता । ब्रह्मणश्च सकलशास्त्रप्रमाणकत्वासम्भावनाशङ्केक्षत्यधिकरणे निराकृता । न हि लक्षणप्रमाण-निरूपणव्यतिरेकेण वस्तुविचारणं नामास्ति । सम्भावना तु न वस्त्ववधारणार्था, अप्रमाणत्वात्, किन्तु यत्रासम्भावनया समीचीनयोरपि लक्षणप्रमाणयोरतथाभावशङ्कया प्रवृत्तिसङ्कोचस्तत्रैव सम्भावनोपयोगः । वस्तुतस्तु लक्षणप्रमाणाभ्यामेव वस्तुव्यव-स्थेत्यतो ब्रह्मस्वरूपनिरूपणेऽवशेषाभावात् किमानन्दमयोऽभ्यासादित्यादिनाऽध्यायेन'' इत्याशङ्क्य अध्यायशेषस्य कृत्यमाह **एवमिति** ।

अनु०— एवं शास्त्रावगम्यत्वे विभागेन समन्वयम् ॥
आनन्दमय इत्यादिनाऽध्यायेन वदत्यजः ।





**सत्यम् । न ब्रह्मस्वरूपनिरूपणे किमप्यवशिष्टम् । तथाऽपि 'तत्तु समन्वयादि'-त्युपक्रमादितात्पर्यलिङ्गबलात्सकलस्यापि शास्त्रस्य यो ब्रह्मणि परममुख्यया वृत्त्या प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वयोऽभिहितस्तमेव समन्वयं विभागेन प्रपञ्चेन 'आनन्दमयः' इत्यादिनाऽध्यायेन वदति सूत्रकार इति न वैयर्थ्यम् । 'तत्तु समन्वयादि'ति हि प्रतिज्ञामात्रेणोक्तम् । तद्यावदुदाहरणत्वेन वाक्यविशेषानुपादाय विमर्शपूर्वकं पूर्वोत्तरपक्षोपालम्भसाधनाभ्यां न प्रपञ्च्यते तावदनुक्तप्रायमकार्यकारित्वात् । अन्यथा परोऽपि ह्यन्यदेव समन्वयादित्युक्त्वा कृती स्यात् । यदि हि प्रत्ययमनुत्पाद्यैकः 'अयं भूमध्यप्रदेश' इति ब्रूयात्, तदा परोऽपि किं न ब्रूयात् 'परस्ताद्वितस्तेरि'ति । तस्मादावश्यकं समन्वयप्रपञ्चनम् ।**

**तदनेन समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्च्यप्रपञ्चकभावेन सङ्गतिर्दर्शिता । एवं तर्हि तदानन्तर्यमेव स्यात्कुतो व्यवधानमित्यत उक्तम् एवमिति । एवम् ईक्षत्यधिकरणव्युत्पादितन्यायेन, ब्रह्मणः, शास्त्रावगम्यत्वे मुख्यया वृत्त्या सकलशास्त्रप्रतिपाद्यत्वे, सम्भाविते सतीति ॥ एतदुक्तं भवति । सत्यं प्रपञ्चनमनन्तरप्राप्तम्, तथाऽप्यवाच्यत्वाद्याशङ्कानिरासेन शास्त्रावगम्यत्वसम्भावनासमर्थनेन व्यवधीयते ॥ सति हि तस्मिन्न(न्नेत)स्यावसरः, शब्दलेशसञ्चारा(भावे)सम्भवे वाक्यतात्पर्यविचारस्यानवकाशत्वात् । न हि तोयाभ्यवहारासमर्थस्य मुमूर्षोः शष्कुलीभक्षणं सचेतनः सम्भावयतीति ।**

**'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञाऽनुशासनादत्र न यतिभङ्गश्शङ्कनीयः ।**

**परि०**— ननु जिज्ञास्यब्रह्मस्वरूपनिर्णयाय जन्मादिसूत्राद्युक्तलक्षणस्यातिव्याप्तिनिरासाय सर्वकारणादिवाक्यानां ब्रह्मपरत्वाय तत्रासम्भावनानिरासाय चोत्तरग्रन्थस्य प्रवृत्तेर्वाच्यत्वान्मूले कथं प्रपञ्चनपरत्वोक्तिः । न ह्येतत्सर्वं प्राक्सिद्धमित्यतोऽवतारयति **अथात इति** । विहिता कर्तव्यत्वेन बोधिता इष्टसाधनत्वेनोक्तेति यावत् । वस्तुविचारणं नामास्तीत्यनन्तरं येनाध्यायशेषस्य सार्थक्यं भवेदिति शेषः । नन्वेवं तर्हि ईक्षत्यधिकरणमपि व्यर्थं स्यादित्याशङ्क्य तत्सार्थक्यमुपपादयति **सम्भावना त्वित्यादिना** । ननु लक्षणप्रमाणाभ्यां वस्त्ववधारितमित्यत्र सम्भावनया चेति वाच्यम् । अन्यथा तदुक्तिवैयर्थ्यादित्यत आह **सम्भावना त्विति** । **अतथाभावेति** । अलक्षणादिभावेत्यर्थः । नन्वीक्षतिनये प्रमाणविषयत्वसम्भावनैवोक्ता । तथा च लक्षणप्रमाणयोरित्युक्तिः कथम् । सत्यम् । ब्रह्मपदोक्तगुणपूर्णत्वलक्षणाभिप्रायेणात्र लक्षणोक्तिः । तस्य जन्मादिसूत्रे जगज्जन्मादिहेतुत्वोक्त्या





सम्भावनोक्तेः । यद्वा प्रमाणे सम्भावनयाऽतद्विषये तद्धेतुत्वादिलक्षणेऽपि सा भवतीति परम्पराभिप्रायेण तल्लक्षणोक्तिः । समन्वयसूत्रस्याध्यायादित्वमुपेत्योक्तम् **अध्यायशेषस्येति** । तात्पर्योक्त्या शङ्का-निरासप्रकारमाह **सत्यमित्यादिना** । 'तथा चैवं सूत्रयोजना' इत्यादिना यस्समन्वयसूत्रस्य प्रागर्थ उक्तस्तमनुवदति **तत्तु समन्वयादितीति** । **प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वय इति** । एतदेव हि तत्परत्वरूपः सम्बन्धः । तत्प्रमितिशेषत्वस्यैव तात्पर्यशब्दार्थत्वादिति भावः । कथं प्रपञ्चनं किमर्थं चेत्यत आह **तत्तु समन्वयादिति हीति** । **विमर्शेति** । युक्त्यनुसन्धानपूर्वकमित्यर्थः । **अन्यदेवेति** । तत्तु समन्वयादिति सुत्रकृदुक्ते सति अन्यदेव ब्रह्मभिन्नमेव वस्तु शास्त्रयोनि, समन्वयात् उपक्रमा-दिभिरन्यवस्तुपरत्वरूपसम्बन्धावगमादित्युक्त्वा कृती कृतार्थः स्यादित्यर्थः । **प्रत्ययमिति** । विश्वासम् । **एकः** कश्चित्पुमान् । **परस्ताद्वितस्तेरिति** । त्वदुक्तप्रदेशापेक्षया वितस्तिपरिमितप्रदेशात्परस्तात्परत्र भूमध्यप्रदेश इति ब्रूयादित्यर्थः । 'एवमि'त्यनुवादः । 'न्यायेन' इत्यन्तं व्याख्या । शब्दैकजन्य-ज्ञानकर्मत्वादिन्यायेनेत्यर्थः । 'सम्भाविते सति' इति शेषोक्तिः । कुतो व्यवधानमितिशङ्कानिरासप्रकारमाह **सत्यमित्यादिना** । ननु मूलश्लोके 'इत्यादिना' इत्येकपदत्वेन पदमध्य एव पादान्तविरामो न युक्तः, यतिभङ्गापत्तेरित्यत आह **स्वादिष्विति** । कप्रत्ययावधिषु परतः पूर्वं पदसंज्ञं भवतीत्युक्तत्वादिह च तृतीयाविभक्तेर्नाशब्दस्य स्वादित्वेन तत्परतः पूर्वस्य पदत्वेन पदस्यैव पादान्ते विरामप्राप्तेरिति भावः । **यतीति** । यतिरुपरमः । यम परम इति धातोः । यस्मिन् स्थले उपरमः पदस्योचितस्तस्य भङ्ग इत्यर्थः । पदान्तस्यैव पादान्ते उपरमस्योचितत्वेन पदमध्ये अनुचितत्वात् । 'यतिर्विच्छेदसंज्ञिका' इति वृत्तरत्नाकरोक्तेः । 'श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः' इति दण्डिनोऽप्युक्तेः ।

**गु०दी०**— **स्वादिष्वसर्वनामस्थान** इत्यत्र 'सुडनपुंसकस्ये'ति सूत्रात् सुट्प्रत्याहारेण सङ्गृहीतानां प्रथमैकवचनमारभ्य द्वितीयाद्विवचनपर्यन्तानां सर्वनामसंज्ञा । द्वितीयाबहुवचनमारभ्योपरितनविभक्तीनामसर्वनाम-संज्ञा । तेषु 'परतः स्थानित्वमि'ति वैयाकरणानां प्रक्रिया । तेषु परतः पूर्वं पदसंज्ञं स्यादिति सूत्रार्थः । **ततश्च** इत्यादीति पदान्त एवावच्छेदान्न यतिभङ्ग इति भावः ।

**यादु०**— वस्तुविचारणं नामास्तीत्यनन्तरं येनाध्यायशेषस्य सार्थक्यं स्यादिति शेषः । नन्वेवमीक्ष-त्यधिकरणमपि व्यर्थं स्यादित्याशङ्क्य तत्सार्थक्यमुपपादयति **सम्भावना त्वित्यादिना** । **विमर्शपूर्वकमिति** । संशयपूर्वकमित्यर्थः । नन्वित्यादीति कथं विरतिः । अपदान्तत्वात् । श्लोकेषु पदान्त एव विरतिदर्शनादित्यत आह **स्वादिष्वसर्वनामेति** । स्वादिष्विति सुशब्दादेकवचनादारभ्य आकपः प्रत्यया गृह्यन्ते । स्वादिषु प्रत्ययेषु परतः सर्वनामस्थानवर्जितेषु पूर्वं पदसंज्ञं भवतीति सूत्रार्थः । राजभ्यां राजभिरित्याद्युदाहरणं द्रष्टव्यम् । एवं च राजभ्या-





मित्यादौ यथा प्रातिपदिकान्तस्यापि नस्य पदान्तत्वेन लोपः। **एवमित्यादीति**। प्रातिपदिकान्तस्याप्यनेन सूत्रेण पदान्ततायां तत्र विरतिर्युक्तेति भावः। **यतिभङ्ग इति**। यतिस्थानभङ्गो यतिभङ्ग इति मध्यमपदलोपी समासः। यतिर्विरतिः।

**वं०प०**— ननु 'एवं शास्त्रावगम्यत्वे' इत्यनेनाध्यायशेषस्य तदर्थत्वोपपत्तेरित्यतो वृत्तानुवादपूर्वकमध्यायशेषमाक्षिपति **अथात इत्यादिना**। ननु लक्षणादिनिरूपणे कृतेऽपि वस्तुविचारणमेव तदर्थ इत्यत आह **न हीति**। अथाऽपि सम्भावनैव तदर्थ इत्यत आह **सम्भावना त्विति**। **अकार्यकारित्वादिति**। कार्यं गुणपूर्णतारूपं तदकारित्वादित्यर्थः। **अन्यदेवेति**। 'तत्तु समन्वयादि'ति सूत्रकुदुक्ते सत्यन्यदेव ब्रह्मभिन्नमेव वस्तु, शास्त्रयोनि। समन्वयादुपक्रमादिभिरन्यवस्तुपरत्वरूपसम्बन्धावगमादित्युक्त्वा कृती कृतार्थः स्यादित्यर्थः। **प्रत्ययमनुत्पाद्येति**। विश्वासकारणमुक्त्वेत्यर्थः। **सति हि तस्मिन्निति**। अवाच्यत्वशङ्कानिरासेन शास्त्रावगम्यत्वसम्भावनासमर्थने सतीत्यर्थः। **एतस्येति**। समन्वयस्येत्यर्थः। तदेव विशदयति **शब्दलेशेति**। अवाच्यत्वशङ्कयेत्यर्थः। **वाक्यतात्पर्यविचारस्येति**। समन्वयविचारस्येत्यर्थः। तोयाभ्यवहारासामर्थ्यं शब्दलेशसञ्चारासम्भवे दृष्टान्तः, शष्कुलीभक्षणं वाक्यतात्पर्यरूपसमन्वयविचारे दृष्टान्त इत्यवधेयम्।

**आनन्दः**— ननु एवं शास्त्रावगम्यत्व इत्यनेनाध्यायशेषस्य क्लृप्तकथनमयुक्तम्। ब्रह्मस्वरूपनिरूपणस्याद्याप्यसमाप्तत्वेनाध्यायशेषस्य तदर्थत्वोपपत्तेरित्यतो वृत्तानुवादपूर्वकमध्यायशेषं आक्षिपति **अथात इत्यादिना**। ननु लक्षणानिरूपणे कृतेऽपि वस्तुनिरूपणमेव तदर्थ इत्यत आह **न हीति**। तथापि सम्भावनैव तदर्थ इत्यत आह **सम्भावना त्विति**। तथाभावशङ्काया असमीचीनत्वशङ्कया तथापि ब्रह्मस्वरूपस्य पञ्चसूत्र्यैव निरूपितत्वात्समन्वयकथनमयुक्तमेवेत्यत आह **सत्यमिति**। ननु समन्वयादित्यनेनैव समन्वयस्योक्तत्वात् प्रपञ्चनमनर्थकं प्रपञ्चनप्रकारादर्शनाच्चेत्यत आह **तत्त्विति**। **अन्यथेति**। उक्तरूपेण प्रपञ्चाकरण इत्यर्थः। निर्हेतुकोक्तिरयुक्तेत्यत्र दृष्टान्तमाह **यदि हीति**। **प्रत्ययं** आश्वासम्। ननु समन्वयव्युत्पादनस्य सम्भावनया व्यवधानमयुक्तम्। तस्या अनुपयोगादित्यत आह **एतदुक्तं भवतीति**। **तस्मिन्निति**। शास्त्रावगम्यत्व इत्यर्थः। एतस्य प्रपञ्चनस्य नन्वानन्दमय इत्यादीति पदमध्येऽवस्थानमयुक्तम्। तथा सति यतिभङ्गापत्तिरित्यत आह **स्वादिष्विति**। तथा च प्रत्ययापेक्षया पूर्वस्यापि पदसंज्ञायाः सत्त्वेन न कोऽपि दोष इति भावः।

**श्रीनिधि०— सचेतन इति**। बुद्धिमानित्यर्थः।

**शे०वा०— (शेषवाक्यार्थचन्द्रिका)**

सकलसुगुणपात्रं सर्वदोषैकजैत्रं सुमतिसुगतिदात्रं सुष्ठुसज्ज्ञाननेत्रम्।
निखिलजनिजनित्रं नित्यदुष्टैकवेत्रं नवनवसुचरित्रं नौमि लक्ष्मीकलत्रम् ॥ १ ॥





शुभगुणगणगात्रं शुद्धविज्ञाननेत्रं श्रुतिविततचरित्रं श्रान्तततापातपत्रम्।
श्रमजलधिवहित्रं शान्तिमन्तःपवित्रं श्रयत विबुधमित्रं शक्तियोगीन्द्रपौत्रम्॥ २॥

विद्याख्यरत्नप्रभवाय बुद्धौ विद्योतमानाय सुवन्दिताय।
शुद्धाय नित्यं मुनिसेविताय मध्वाद्भुताम्भोनिधये नमोऽस्तु ॥ ३॥

श्रीमद्व्याससुशास्त्रशुद्धजलधिं मध्वोक्तसत्तर्कदु-
स्तर्काख्यामरदानवाभृतमतिश्रेष्ठाहि हृद्भूभृता।
आलोड्याखिलसत्त्वभासकमहारत्नानि चाप्नोत्सुधां
सोऽयं योगिमहेन्द्रसन्निभजयार्याख्यो भवेन्मे मुदे ॥ ४॥

रघूत्तमाख्यममलमलौकिककलानिधिम्।
सेवे प्रकाशिता येन सम्यक् तत्त्वप्रकाशिका ॥ ५॥

परवादीभवाक्कुम्भभेदपञ्चाननोपमम्।
विष्णुपादगुहासक्तं वेदव्यासमुनिं भजे ॥ ६॥

भक्तिज्ञप्तिविरक्त्यादिगुणसन्ततिसङ्गतिः।
विद्यापतियतीन्द्रार्यो ह्यविद्याप्रदोऽस्तु मे ॥ ७॥

वेदव्यासमतापगापतिवरं श्रीमज्जयप्रोक्तस-
त्सर्पविष्टितमध्वसन्मुनिवरग्रन्थागवर्येण यः।
संलोड्याखिलसन्नयामृतवरं तत्त्वादिसद्दीपिकां
सत्तात्पर्यसुचन्द्रिकां तरुवरं यस्तर्कसत्ताण्डवम् ॥ ८॥

निष्कास्याद्भुतखण्डनत्रयमुखव्याख्यानरत्नोच्चयं
दृष्ट्वा कुत्सितयुक्त्यरातिपिहितां श्रीव्यासतीर्थो बुधः।
स्वोक्तिं रक्षितुमत्र यः प्रतिपदं सम्यग्विशेषार्पको
विद्याधीशयतीन्द्रसद्गुरुवरः किं नावतीर्णः स हि ॥ ९॥

यद्धस्ताम्बुजसङ्गतोऽहमभवं देव्याः कटाक्षाश्रयो
यद्व्याख्यानदिवाकरेण विदुषामन्तस्तमः संहृतम्।
ये प्रीता भुवि चन्दनद्रुम इव स्वीयं स्ववत्कुर्वते
तान् व्याख्यानिरतान् भजे परगुरूनानन्दभट्टारकान् ॥ १०॥





यः श्रीनिवासमृगराट् सकलान्मदान्ध
मायाविसिन्धुरसुकुम्भगिरीन्विदार्य।
सत्तर्कतीक्ष्णनखैर्विरराज मध्व-
सिद्धान्तचारुविपिने तमलं भजेऽहम् ॥ ११ ॥

श्रीमत्सुधाद्भुताम्भोधिविक्रीडनविचक्षणान्।
श्रीमद्विद्याधीशतीर्थमुनीन्वन्दे गुरूनमम ॥ १२ ॥

अथ तत्कृपयैवाहं तत्सुशिक्षितमार्गतः।
तेषामाज्ञां पुरस्कृत्य तत्प्रसादानुरञ्जितः ॥ १३ ॥

शिक्षितान् युक्तिनिचयान् स्मारं स्मारं यथामति।
करोमि सौधगूढार्थशेषवाक्यार्थचन्द्रिकाम् ॥ १४ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात्।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ १५ ॥

ननु 'एवं शास्त्रावगम्यत्वे विभागेन समन्वयम्' इत्यध्यायशेषकृत्यप्रतिपादकमुत्तरभाष्यमनर्थकम्। अथातो ब्रह्मजिज्ञासेति यस्य ब्रह्मणो जिज्ञासा विहिता तत्स्वरूपस्याविचारितत्वेन तद्विचारार्थतयैवाध्यायशेषस्यार्थवत्त्वोपपत्त्या तद्वैयर्थ्यशङ्काया एवानुदयेन तत्सार्थक्यस्यावक्तव्यत्वादित्यतो वृत्तानुवादपूर्वकं स्वरूपनिरूपणेऽनवशेषोपपादनेन गतार्थताशङ्कामुत्थाप्य तत्परिहारकत्वेन मूलं योजयितुं वृत्तं तावदनुवदति **अथात इत्यादिना**। **विहितेति**। प्रतिज्ञातेत्यर्थः। विषयादिमत्त्वोपपादनेन कर्तव्यतया प्रतिपादितेति वाऽर्थः। नन्वेतावता लक्षणप्रमाणनिरूपणेन सजातीयविजातीयसमस्तवस्तुव्यावृत्ततया लक्ष्यस्वरूपावधारणसिद्धावपि यस्य ब्रह्मणो जिज्ञासा कर्तव्येति प्रतिज्ञाता तत्स्वरूपस्याविचारितत्वात् तदर्थमध्यायशेषप्रवृत्तिः किं न स्यादित्यतो विचार्यत्वेन प्रतिज्ञातस्य ब्रह्मणो लक्षणप्रमाणाभ्यामिवान्येनापि प्रकारेण निरूपणीयत्वे ह्यधिकरणचतुष्टयेन लक्षणप्रमाणाभ्यां तन्निरूपणसिद्धावप्युपायान्तरेण तदसिद्ध्या तदर्थमध्यायशेषस्यारम्भणीयत्वप्रसक्तावपि लक्षणप्रमाणनिरूपणव्यतिरेकेण वस्तुविचारस्यैवाभावान्न तदर्थतयोत्तरसूत्रारम्भप्राप्तिरित्याह **न हीति**। ननु लक्षणप्रमाणनिरूपणव्यतिरेकेण कथं वस्तुविचारणाभावसम्भावनानिरूपणेन वस्तुविचारस्य सत्त्वादित्यतः स्यादेतदेवं यदि लक्षणप्रमाणयोरिव सम्भावनाया अपि वस्त्ववधारकत्वं स्यान्न चैतदस्तीत्याह **सम्भावना त्विति**। तत्र हेतुमाह **अप्रमाणत्वादिति**। उत्कटैककोटिकसन्देहस्यैव सम्भावनात्वादिति भावः। नन्वेवं सति सम्भावनाया वस्त्ववधारकत्वाभावाद्ग्रन्थकाराणां तद्व्युत्पादनमनर्थकमापद्येतेत्यभिप्रायेण शङ्कते **किं त्विति**। वस्त्ववधारणार्थत्वाभावेऽपि प्रयोजनान्तरार्थत्वान्न तद्व्युत्पादनानर्थक्यमित्यभिप्रेत्य समाधत्ते **यत्रेति**। **प्रवृत्तिसङ्कोचनमिति**। स्वेतरसमस्तवस्तुव्यावृत्ततया लक्ष्यस्वरूपानवधारकत्वमित्यर्थः।





ननु समन्वयोक्तिमात्रेण सिद्धत्वात् समन्वयस्याप्रपञ्चनीयत्वान्न प्रपञ्चनार्थतया अध्यायशेषस्यार्थवत्त्वमित्यतो विना प्रपञ्चनेन समन्वयोक्तिमात्रेण तदसिद्धेस्तत्प्रपञ्चनमर्थवदिति भावेनोक्तिमात्रस्यासाधकत्वं सदृष्टान्तमुपपादयति **तत्त्वित्यादिना** । ननु च विभागेन समन्वयम् । आनन्दमय इत्यादिनाऽध्यायेन वदति इत्येतावतैव समन्वयप्रपञ्चकतया अध्यायशेषस्यार्थवत्त्वसिद्धेरेवं शास्त्रावगम्यत्व इति भाष्यखण्डस्य वैय्यर्थ्यमित्यतः समन्वयसूत्रोक्तार्थप्रपञ्चकत्वे प्राप्तानुपपत्तिपरिहारार्थत्वान्न तदिति भावेन समन्वयप्रपञ्चकत्वेऽनुपपत्तिप्रदर्शनपूर्वकं तत्परिहारतया भाष्यं सङ्गमयति **एवं तर्हीत्यादिना** । कथमस्य व्यवधायकत्वमित्यतः सयुक्तिकं तदभिप्रायमाह **एतदुक्तं भवतीत्यादिना** । ननु सर्वत्र पदान्त एव विरतिदर्शनात्प्रकृते च 'इत्यादिना' इत्यस्य सुबन्ततया पदत्वेऽपीत्यादीत्यस्य तदभावेन पदत्वात् कथम् इत्यादीत्यत्र विरतिरित्यतो न सुबन्तत्वेनैव पदत्वमिति नियमः । तथा सति राजभ्यामित्यत्र राजन्नित्यस्य सुबन्तत्वाभावेनापदत्वान्नलोपाभावप्रसङ्गः । ततश्च यथाऽसुबन्तस्यापि राजन्नित्यादेरसर्वनामस्थानसुब्विभक्तिपरत्वेन 'स्वादिष्वसर्वनामस्थाने' इति पदत्वान्नलोपः । तथाऽस्यापि पदत्वाद्युक्ता तत्र विरतिरित्याशयेनाह **स्वादिष्वसर्वनामस्थान इति पदसंज्ञानुशासनादिति** । ननु च राजभ्यामित्यादावजादिपरत्वाभावेन 'यचि भम्' इति भत्वाप्रसङ्गेनापवादकाभावात् 'स्वादिषु' इति पदसंज्ञोपपत्तेर्युज्यते नलोपः । प्रकृते तु तृतीयैकवचनस्याच्त्वेन 'यचि भम्' इति भत्वप्राप्तेर्भसंज्ञायाः पदसंज्ञापवादकत्वान्न पदत्वमिति विरत्यनुपपत्तिस्तदवस्थैव चेत् । अत्र केचित् । 'अयस्मयादीनि छन्दसि' इति सूत्रे वार्तिककृता छन्दस्युभयसंज्ञान्यपीति वक्तव्यमिति पदत्वभत्वयोः समावेशाङ्गीकारात् । छन्दस्तुल्यतया 'उपदेशोजनुनासिक' इत्यत्राच्शब्दे पदत्वप्रयुक्तजश्त्वस्य भत्वप्रयुक्तकुत्वाभावस्य च दर्शनादस्यापि छन्दस्तुल्यत्वादत्रापि पदत्वभत्वयोः समावेशसम्भवान्न भसंज्ञायाः सर्वत्र पदसंज्ञापवादकत्वमिति । वस्तुतस्तु तृतीयैकवचनस्याच्त्वेऽपि नाभावेन हल्त्वादजादिपरत्वाभावेन यचि भमिति भत्वाप्राप्तेरस्त्येवेहाप्यपवादकाभाव इति युक्तैव पदसंज्ञया विरतिरिति ध्येयम् । अङ्गीकृत्य चेदं समाधानमुक्तम् । वस्तुतस्तु यतिभङ्गस्य काव्यदोषत्वमेव । न शास्त्रदोषत्वमपि । 'य उपाधिर्लगति साध्ये सम्बन्धविशेषणे' इति शास्त्रे पदमध्येऽपि विरतिदर्शनात् । अत एव गीताभाष्यटीकायां तस्यादोषत्वेनैव समाधानमुक्तमिति न किञ्चिदेतत् ।

**वा०र०**—

श्रीशं सुपूर्णसुखपूर्वगुणैकदेहं
व्यासं श्रुतीशमथ मध्वमुनिं जयार्यम् ।
श्रीव्यासराजमपि मान्यगुरुं सुविद्या-
धीशं परं गुरुमथो गुरुराजमीडे ॥ १ ॥

गुरुराजपदे स्मृत्वा शेषवाक्यार्थचन्द्रिकाम् ।
तद्व्यातो व्याकरिष्ये तत्र तत्र यथामति ॥ २ ॥





टीकाकारो ग्रन्थादौ मङ्गलमाचरति **सकलेति**। वाद्यान्तरोक्ताष्टगुणत्वव्यवच्छेदाय सकलपदम्। तद्रीत्यैव दुःखादावपि गुणत्वव्यवहारात् तेषामपि प्रसक्तिवारणाय शोभनार्थकशुभशब्दोपपादनम्। पिबत्यनेनेति पात्रमित्याद्यर्थकौणादिकः पात्रशब्दोऽत्र न विवक्षितः। अपि तु आश्रयत्वार्थ एव, सपात्रं बन्धमोक्षयोरित्यादाविव विवक्षितः। तथा च सार्वज्ञ्यसर्वैश्वर्यपूर्णसुखानन्तकल्याणगुणाश्रयमित्यर्थः। कतिपयदोषराहित्यस्येतरसाधारणत्वात् **सर्वेति** दोषविशेषणम्। दोषाणां मुख्यजैत्रं जयशीलमित्यनेन सर्वदोषादिदूरत्वमुक्तम्। जेतृशीलोपेतं जैत्रम्। छत्रशीलोपेतः छात्र इत्यत्र शीलमित्यनुवर्तमाने छत्रादिभ्योऽण् इत्यनेनास्येणो विधानात्। तद्धिता इति बहुवचन-बलेन जेतृशीलवत्यर्थेऽपि णप्रत्ययः। यद्वा ऋतोऽञिति सूत्रे ऋवर्णान्तात्प्रातिपदिकात् तस्य धर्म्यमित्यर्थे विहितोऽप्यञ् जेतृशब्दात् स्वार्थे जेतैव जैत्रमिति भवति। प्रज्ञ्यादित्वाभ्युपगमात्। एतद्विशेषणद्वयेन प्रथमद्वितीयाध्याययोरर्थः सङ्गृहीतः। तृतीयचतुर्थाध्यायार्थसङ्ग्राहकं सुमतिसुगतिदात्रमिति। तत्र सुमतिदात्रमिति तृतीयार्थः। सुगतीति चतुर्थार्थः। दातृशीलोपेतं दात्रमिति वा स्वार्थिकाञादिप्रत्यये दातृ यत्तदेव दात्रमिति वा सर्वधातुभ्यः करणे ष्ट्रन्प्रत्ययविधायकेनेष्ट्रानिति सूत्रेण दीयतेऽनेनेति दातृमिति करणे धातोः ष्ट्रन्प्रत्यये स्त्रीत्वस्याविवक्षणात् ङीपोऽभावेन वा दात्रमिति साधु। एतेन लवनार्थकदाञ्धातोः करणकारके ष्ट्रन्विधायकेन दाम्नीशसयुयुजस्तुदसिसिचमिहपतदशनहः करणे इत्यनेन दानार्थकदाधातोः ष्ट्रन्नङ्गीकारानुपपत्तिरिति उमर्जीकोक्त-दूषणं गर्भस्रावेणैव गतम्। भगवतः शरीराभाव इति मतनिरासाय सुष्ठु सदिति विशेषणम्। नीयते ज्ञायतेऽनेनेति नेत्रम्। दाम्नीति पूर्वोदाहृतसूत्रे नीधातोः करणे ष्ट्रन्। ज्ञानस्य सत्त्वं च मिथ्याज्ञानादिसामानाधिकरणत्वाभावः उत्पत्त्यादिशून्यत्वं च विवक्षितम्। सुष्ठुत्वं चोरुसंविदित्यत्रत्योरुत्वमिव सर्वविषयकत्वमिति विवेकः। तन्नेत्रं यस्येति विग्रहः। यद्वा सुष्ठु इत्येतन्नेत्रविशेषणं भगवन्नेत्रस्य सज्ज्ञानात्मकत्वेनैव सुष्ठुत्वं प्राकृतभौतिकवद्विनाशादि-शून्यत्वमिति भावः। भगवति कर्तृभूतस्यापि करणत्वं तु सर्वविभक्तीनां भगवति प्रवृत्तेः सर्वास्तच्छब्दगा अपीत्यादिप्रमाणसिद्धत्वात् करणविभक्तिमत्वेन युक्तम्। अस्मदादेशादहमित्येतद्व्यतिरिक्ताहमित्यस्येवान्तर्यामित्वं विनाऽपि स्वातन्त्र्येण भगवत्प्रतिपादकतृतीयान्तशब्दानामपि सुलभत्वात्। अन्तर्यामित्वनिर्बन्धे प्रज्ञानेत्र इत्यत्र प्रज्ञाशब्दवाच्यभगवन्नेतृक इत्यर्थे पृथगधिकरणोक्तेऽप्यन्यथाख्यातिरीत्या करणान्तरमङ्गीकार्यं स्यात्। न च तद्युक्तम्। मुक्तनियामककरणान्तराभावादिति ज्ञेयम्।

चष्ट इत्येव तच्चक्षुरीत्यानन्दमयनयभाष्यावतारमूले करणत्वानुपपत्तेरित्युक्तिरप्यङ्गीकारवादेनेति तद्व्याख्यानावसर एव वक्ष्यामः। अनेनैवोपलक्षणया ज्ञानानन्दात्मकविग्रहवत्वमुक्तं भवति। ब्रह्मजिज्ञासे-त्यत्रत्यब्रह्मपदोक्तगुणपूर्णत्वरूपमुख्यलक्षणसङ्ग्रहानन्तरं तत्साधनकत्वेन जन्मादिसूत्रोक्तजगज्जन्मादिकारणत्व-रूपलक्षणमपि भगवति सङ्गृह्णाति **निखिलेति**। पत्युरसामञ्जस्यादित्यधिकरणीयसर्वज्ञत्वादिकैः सर्वगुणैः पूर्णं सर्वदोषवर्जितमिति प्रधानलक्षणाविरुद्धार्थोपन्यास इत्येतन्मूलानुसारेण लक्षणपरयोजनायामुक्तं लक्षणद्वयमपि जन्मादिकारणत्वादिरूपं प्रधानमेव लक्षणमुक्तम्। उत्तरमूलेऽपि यत्र गुणपूर्णत्वं प्रधानलक्षणमित्युक्तिः तत्र ब्रह्मशब्दार्थत्वेनैकस्यैव प्रतीतिरित्याशयेनेति न दोष इति ज्ञेयम्। स्वेतरसमस्तजगतो या जनिरुत्पत्तिः तस्या





आदिभूताया ग्रहणं स्थित्याद्युपलक्षणार्थम्। तस्या जनित्रं कारणम्। जनयति करोतीत्यर्थे जनेर्धातोः वक्ष्यमाणरीत्या इत्रप्रत्ययः। निखिला वियदधिकरणव्युत्पादितावान्तरभेदभिन्ना या जनिः तज्जनित्रमिति वा। शिष्टपरिपालनवत् दुर्जनशिक्षणमपि भगवता क्रियत इत्याह **नित्येति**। दुष्टत्वं शापादिना जयादीनामपीत्यतो नित्येति विशेषितम्। नित्यं ये दुष्टास्तेषां शिक्षणार्थं मुख्यतः वेत्रवत् स्थितम्। मुख्यतः शिक्षकमिति यावत्। गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्र इति सूत्रेण गत्याद्यर्थकवीधातोस्त्रप्रत्ययः। वीयतेऽनेनेति वेत्रमिति भवति। एवंभूतस्य भगवतो आश्चर्यरूपत्वमाह **नवनवेति**। नवनवं ज्ञातृभिः पूर्वं प्रत्ययेनाविषयीकृतमेव कालभेदेन विषयीक्रियमाणं सु शोभनं चरित्रं चरितं यस्येति तथोक्तः तम्। चरेर्वृत्तेर्ह्रस्वश्चेति सूत्रेण चरधातोः णित्रन्प्रत्यये ह्रस्वपक्षे चरित्रमिति साधु। ग्रन्थारम्भे सकलवाङ्मनसदेवतया रमया युतस्यैव हरेर्वन्दनमाचरणीयमिति मूलकृता तत्र तत्र प्रतिपादनाल्लक्ष्मीपतित्वेनैव विशेष्यं निर्दिशति **लक्ष्मीकलत्रमिति**। लक्ष्मीः कलत्रं यस्य स तथोक्तः। गडेरादेश्च क इत्यनेन गडेरत्रन्प्रत्यये आदेश्च कादेशे कडत्रमित्येव सूत्रे उक्तावपि डलयोरेकत्वस्मरणात् कलत्रमिति सिद्धान्तकौमुद्युक्तेः गलधातोरत्रन्प्रत्यये गकारस्य ककारश्च भवतीति कलत्रमिति साधु। नवनवेति विशेषणस्यैतद्विशेषणसन्निधानकरणेन लक्ष्म्या अपि नवनवसुविशेषोपलम्भेनोक्तरीत्या नवनवमेवेति ध्वनितम्॥ १॥

शास्त्रकर्तुर्वेदव्यासस्य भजनरूपं मङ्गलमन्यापदेशव्याजेनाचरति **शुभगुणेति**। शुभाः मङ्गलरूपा गुणा ज्ञानानन्दाः यः तेषां गुणः समुदायः। अनन्तकल्याणगुणा इति यावत्। स एव गात्रं शरीरं यस्येति तथोक्तस्तम्। गमेराचेति सूत्रेण गम्धातोस्त्रन्प्रत्यये मकारस्यादेशो आकारे जाते सवर्णदीर्घे च गच्छतीति गात्रमिति साधुता। **शुद्धविज्ञानेति** विशेषणं सुष्ठु सदिति पूर्वश्लोकगतविशेषणवद्व्याख्येयम्। एवं भगवति प्रमाणप्रतिपादनाय **श्रुतीति** विशेषणम्। श्रुतिषु विततो विस्तृतं विस्तरेण प्राचुर्येण प्राधान्येन वा महातात्पर्येणेति यावत् प्रतिपादितम्। **चरित्रं** चरितं यस्य स तथोक्तः। **श्रान्तता**पेत्यनेन योग्यभगवद्भक्तानां संसारक्लेशानुभवानन्तरं वैराग्ये सति श्रवणादिसाधनानुष्ठानवतामपरोक्षज्ञानदानपूर्वकमशेषानिष्टरूपतापनिवर्तकत्वं फलोपधानरूपमुक्तम्। श्रान्तानां तापस्य निवर्तने आतपत्रमिवेति विग्रहस्य गम्यमानत्वान्निवर्तनपदाप्रयोगः। मतध्वान्तदिवाकरः, तिमिराशिशिरद्युतिमित्यादौ तथात्वस्य सिद्धत्वात्। ब्रह्मभावो ब्रह्मभूयमित्येतदुपपादनाय वत्यर्थस्य वृत्तावन्तर्भावात् मयूरव्यंसकादिवदिति चतुर्दशगीताभाष्यटीकायामुक्तम्। पञ्चदशे असङ्गशास्त्रपदविचारावसरे तु दध्योदनादिवद् वृत्तौ साहित्यस्यान्तर्भावादप्रयोग इत्युक्तम्। तट्टीकायामन्येन व्यजनं भक्षेण मिश्रीकरणमित्येतत्सूत्रीयकाशिकामञ्जर्याद्यनुसारेण गुरुचरणैर्विचारः कृतोऽस्ति सोऽप्यनुसन्धेयः।

**श्रमेत्य**नेन तु संसारश्रमलक्षणजलधेस्तरणे कर्तव्ये वहित्रं नौस्तद्वदित्येवं श्रमनिवर्तनयोग्यत्वमुच्यत इति पूर्वभेदः। पूयतेऽनेनेति **पवित्रम्**। कर्तरि च ऋषिदेवतयोरिति सूत्रेण पुवोधातोः कर्तरि देवतायां इत्रप्रत्यये पवित्रमिति भवति। अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु इति श्रुतिः। पिता माता सुहृद्बन्धुरित्यादिस्थले भगवतः सुहृत्वरूपमित्रत्वप्रसिद्धेर्विबुधानां देवानां मित्रं सुहृदित्यर्थः। अभिचिमिदिशसिभ्यः





क्त इत्यनेन ञिमिदा स्नेहन इति धातोः क्तप्रत्यये मेद्यत इति मित्रमिति भवति । स्नेहविषय इति फलति । तत्सूत्रीयोणादिवृत्तौ मित्रमित्यस्य सुहृदित्युक्तेः । मनोरमायां 'मित्रंसुहृदिनद्वयोः । सूर्ये पुंसि चे'त्युक्तेश्च । तथा 'सुहृद्दुर्हृदौ मित्रामित्रयोरि'त्येतत्सूत्रेण सुशब्दात्परस्य हृदयशब्दस्य हृदादेशविधानेन सुहृदिति मित्रवाचीति तच्छब्दयोरेकार्थत्वम् । सुहृन्मित्रार्युदासीनेति गीतास्थसुहृन्मित्रपदयोस्तु तद्द्वयस्य सह प्रयोगादर्थभेद-सिद्धयर्थं प्रमाणानुसारेण निमित्तोपकारकत्वाद्यर्थकतया तद्भाष्ये व्याख्यानं कृतमिति न दोषः ।

देवकार्यार्थमवतारादिकरणात् प्राधान्यविवक्षया देववाचिविबुधपदप्रयोगः । यद्वा **विबुध**पदेन विशिष्ट-बोधवन्तो देवर्षिमुखा अधिकारिणो ग्राह्याः । एवंविशेषणकं **शक्तियोगीन्द्रपौत्रम्** । शक्तिनामको यो योगीन्द्रः पराशरपिता तत्पौत्रमित्यर्थः । पौराणिकप्रसिद्धयनुसारेण पराशरस्वरूपमपि व्यञ्जयितुमेतत् । शान्तिमन्तः उपलक्षणत्वात् शान्त्यादिगुणोपेता जनाः श्रयत सम्भजतेति सम्बन्धः । पूर्वश्लोके पूर्वोत्तरार्धगतदलचतुष्कयोः आद्याक्षरे सकारत्वनकारत्वाभ्यां भेदेऽपीह श्लोके पूर्वोत्तरार्धगतदलाष्टकेऽपि शकार एवाद्यक्षरम् । त्रकारस्यान्त्य-तया प्रासस्तु प्रत्येकं दलाष्टके श्लोकद्वयेऽपीति ज्ञेयम् ॥ २ ॥

**विद्याख्येति** तृतीयपद्ये मध्वस्याद्भुताम्भोनिधित्वमुक्तम् । तदुपपादयितुं सुवन्दिताय शुद्धायेत्यादिकं प्रसिद्धाम्बुधिव्यावृत्तं विशेषणमुक्तम् । भुवि विद्योतमानः प्रसिद्धोऽम्भोनिधिः अयं क्व विद्योतमान इत्यत उक्तं **बुद्धाविति** ॥ ३ ॥

**श्रीमद्व्यासेति** चतुर्थपद्ये प्रसिद्धजलधितोऽतिशयप्रतिपादनाय शुद्धत्वकीर्तनम् । मन्दराचलस्थाने हृदयमित्युक्तं **हृदिति** । वासुकिसर्पस्थाने मतिपदेन ज्ञानमुक्तम् । मतिलक्षणः श्रेष्ठाहिरिति योज्यम् । अहियुक्तं यद् हृद् इति गम्यमानत्वादप्रयोगः । अहिधारकदेवासुरस्थानीयं वक्तुं मध्वोक्तेत्यादि मतिश्रेष्ठा हि विशेषणम् । मध्वोक्ताः सत्तर्काश्च वाद्यन्तरोक्ता दुस्तर्काश्च **मध्वोक्तसत्तर्कदुस्तर्काः** । अमराश्च दानवाश्च अमरदानवाः मध्वोक्तसत्तर्कदुस्तर्का **एवामरदानवाः** सत्तर्कदुस्तर्काख्यामरदानवाः तैरासम्यक् भृतो धृत इत्यर्थः । अत्र मतेराभृतत्वमुत्पाद्यत्वमेव । पूर्वोत्तरपक्षनिराकरणसमर्थनोपयोगितया दुस्तर्के अज्ञानस्याप्यलोडने कारणत्वात् । प्रसिद्धरत्नवैषम्यं वक्तुमखिले-त्यादि । महारत्नानि सुधातिरिक्तग्रन्थान्, सुधां चेति सम्बन्धः । योगी चासौ महेन्द्रसन्निभश्चेति विग्रहः । महेन्द्रसन्निभत्वोक्त्या वेदेषु श्रेष्ठतया महेन्द्रे मथनयत्नाधिक्यमिति सूचयति । तथा जयमुनेरिन्द्रावतारत्व-प्रसिद्धिरप्यनुकूलिता । अत एव श्रीमुष्णमाहात्म्ये इन्द्रकर्तृकभगवत्स्तोत्रावसरे 'विश्वस्योदयमातनोषि तदनु त्राणं विधत्से पुनः सौख्यात्तीतरहानिसाधनमलं वक्षि श्रुतिरि'त्यादिरूपेण पठितमेव पद्यं तत्त्वनिर्णयटीकायां विश्वस्योदयमातनोतीत्यादिरूपेण पठितमिति बहवः ॥ ४ ॥

**रघूत्तमेति** पञ्चके प्रसिद्धचन्द्रवैलक्षण्यप्रतिपादनाय **अमल**मित्यादिकम् । **तत्त्वप्रकाशिका**सूत्रभाष्य-व्याख्यानरूपा ॥ ५ ॥





**परवादीति** षष्ठे परवादिलक्षणगजानां वागेव कुम्भपदोक्तगण्डस्थानीया तद्भेदकारण इति गम्यमानत्वादप्रयोगः ॥ ६ ॥

**भक्तीति** सप्तमे **गुणसन्ततेर्**बहुगुणानां सङ्गतिर्यस्मिन्नित्यर्थः ॥ ७ ॥

हृद्व्यामनोहरश्रीमद्व्यासराजमभिष्टुवन्नेव श्रीविद्याधीशमपि तदवतारत्वेनाभिष्टौति **वेदव्यासमतेति**। मतलक्षणो यो आपगपतिवरः सरित्पतिश्रेष्ठः तम्। प्रसिद्धतत्पतिवैलक्षण्यं वक्तुं परपदम्। एवं सदादिपदानि। श्रीमतो जयतीर्थस्य प्रोक्तं प्रोक्तिस्तल्लक्षणो यः सत्सर्पस्तेनावेष्टितो यो मध्वसन्मुनिवरनिर्मितग्रन्थलक्षणः। **अगवर्यः** पर्वतश्रेष्ठः तेनेति योज्यम्। **सन्नयामृतवर**मित्यनेन न्यायामृतं निर्दिष्टम्। **तत्त्वादी**त्यादिपदेन न्यायानां ग्रहणम्। दीपिकातत्त्वप्रकाशिकेति यावत्। तस्याः यत्सत्तात्पर्यं तस्य **सुचन्द्रिका**मिति विग्रहः। **तरुवरं** तर्कताण्डवमिति सम्बन्धः। अत्र यो इति द्विवारोक्त्या यः श्रीव्यासतीर्थो बुधः सन्नयामृतवरं निष्कासितवान् यश्चन्द्रिकां या निष्कासितवानित्येवं प्रत्येकयोजनां सूचयति। खण्डनमुखेत्यत्र मुखपदेन तत्त्वविवेकपरिग्रहः। व्याख्यानपदमावर्तनीयम्। खण्डनत्रयादिव्याख्यानानां यानि व्याख्यानानि तल्लक्षणं रत्नोच्चयमिति योजना। उपलक्षणया तत्कृतभेदोज्जीवनादिग्रन्थान्तरमपि ग्राह्यम्। तदनन्तरं च व्यासतीर्थः प्राङ्निर्दिष्टां स्वोक्तिं कुत्सितयुक्त्यरातिपिहितां दृष्ट्वा तां रक्षितुं विद्याधीशयतीन्द्रसद्गुरुवरः तेन रूपेणावतीर्णो न किम्? अवतीर्ण एव। **हीत्यस्यार्थस्य** प्रसिद्धत्वमाह। अवतारकृत्यं वक्तुं विशेषणं प्रतिपदमिति। यः विद्याधीशगुरुवरः प्रतिपदं प्रवचनादिकाले सम्यग्विशेषार्पकः तद्विद्याधीशरूपेणेति योज्यम् ॥ ८-९ ॥

स्वपितृत्वाद्युपेतानन्दाचार्यभजनरूपं मङ्गलमाचरति **यद्धस्तेति**। अत्र यद्धस्ताम्बुजेन **सङ्गतः** सङ्गृहीत इति विशेषणेनेदं सूचितम्। पूर्वं किल श्रीतिम्मणभट्टोपाध्यायानां च पुत्रभूतस्य स्वस्य परिपालनविधिना आनन्दाचार्यैः स्वस्य सङ्ग्रहः कृतः तत आरभ्य आनन्दाचार्यपुत्रत्वमेव स्वस्येति। अत्रेयं कथा। आनन्दाचार्यतिम्मणभट्टयोरिष्टालापकाले तव चत्वारः पुत्राः मम तु द्वावेवेति वैषम्यं मास्त्वित्यानन्दाचार्यैः स्वीकृतस्तत आरभ्यानन्दाचार्यपुत्रत्वमेव स्वस्येति।

अत्रेयं कथा— आनन्दाचार्याः चतुर्ष्वेको ग्राह्य इति तिम्मणभट्टैरुक्ते सति पश्चात्परिपालनविधिना तैः सङ्ग्रहं कृत्वा अक्षराभ्यासादिसम्पत्त्यनन्तरं विष्णुस्तुत्यर्थपाठादिकथनारम्भः कृतः। सहायेन गोदावरीस्नानार्थं प्रत्यहं नयनादिकं च कृतम्। तदा प्रबुद्धान् श्रीनिवासाचार्यनरसिंहाचार्यान्प्रति भवदपेक्षया एतं प्रौढं करिष्यामीति कथनादि च। स्वाशक्तिसमये नरसिंहाचार्यत्वावस्थापन्नस्वामिहस्ते एतेषां प्रदानं कृतम्। तदारभ्य स्वामिभिरेव सम्पूर्णं शास्त्राभ्यासादि कारितमित्यादिका ज्ञेया। अत एव परगुरूनिति स्वामिद्वारकं गुरुत्वमुक्तम्। देव्याः सरस्वतीदेव्याः श्रीदेव्याश्च। नन्दनद्रुमो यथा स्वसंलग्नवृक्षविशेषं स्वसम्बन्धनिमित्तेन सुगन्धादियुक्तं करोति। एवमेव स्वीयं स्वसङ्गतं जनं स्ववद्व्याख्यानादिनिपुणं कुर्वत इति योज्यम् ॥ १० ॥





स्वज्येष्ठभ्रातृश्रीनिवासाचार्यभजनरूपं मङ्गलमाचरति **य इति** । मायाविलक्षणा ये सिन्धुराः गजाः तेषां सुकुम्भगिरीनिति योज्यम् । 'मातङ्गमाद्यद्घटाकुम्भोच्चाद्री'त्यादाविव गिरित्वस्याप्युक्तिः । अत एव नखरैरित्यत्र वज्रकल्पैरित्यभिप्रैति । तीक्ष्णपदेनैव वा वज्रकल्पत्वं विवक्षितमिति ज्ञेयम् ॥ ११ ॥

गुरून्ममेत्येतत् वैराग्यभाग्यो ममेत्येतदुपपादनीयम् ॥ १२ ॥

स्वस्य ग्रन्थकरणे बलं वदन्नेव स्वामिकृतग्रन्थस्य शेषपूरणम् । तदाज्ञाभावे दोषतया सम्भावितमपि तत्सत्त्वेन दोष इति च सूचयन् चिकीर्षितं प्रतिजानीते **अथेत्यादिना** कुलकेन । **तेषामाज्ञामिति** । अत्रायमाज्ञा-दानप्रकारः । यदा स्वामिनो गङ्गायात्रोद्देशेन धर्मपुरीं प्राप्ताः तदा तत्स्थले यदुपत्याचार्यप्रमुखविद्वत्समाजे सति स्वग्रन्थशेषकरणाय एतेषां नियोगः क्रियते । एते मदीयग्रन्थशेषनिर्वाहं करिष्यन्तीत्यादिकं प्रसक्तानुप्रसक्त्योक्तवन्तः । यदा प्रयाणोन्मुखाः तदा सर्वजनसमाजे सति यद्यस्माभिः गङ्गायात्रादिकर्तव्यनिष्पत्त्यनन्तरमागम्यते तर्हि वयमेवैतद्ग्रन्थशेषपूरणं करिष्यामः । यदि च रघुपतिसङ्कल्पानुसारेण मदागमनं न भवति तर्हि मत्सम्प्रदायाभिज्ञ-स्त्वमसि, शिक्षितप्रकारेण त्वमेव एतच्छेषपूरणं कुरु इत्युपदिश्य श्रीवेदनिधितीर्थश्रीपादादिसमक्षं स्वकीयं पुस्तकं लेखनिकां च एतेभ्यो दत्त्वा लौकिकविषये किञ्चिदुपदिश्य तुभ्यं किमपि मया न दत्तम्, इदानीं यद्याच्यते तद्द्रव्यं भूम्यादि दास्यामीत्युक्तवन्तः । तदा गुरवोऽन्यदविगणय्य स्वामिन एव ममापेक्षिता नातोऽन्यदपेक्षितमित्युक्तवन्तः तदा स्वामिभिः स्वकण्ठस्थितश्रीतुलसीमालिकाः दत्वा एतानालिङ्ग्य नेत्राम्बुना अभिषेकः कृतः तदेतत् दृष्ट्वा यदुपत्याचार्या भवतामद्यैव भागीरथीस्नानं जातमित्युक्तवन्तः । तदनन्तरं गुरवो मध्ये मध्ये कठिणवाक्यभागमेव पुरस्कृत्य तत्र तत्र व्याख्यानार्थं प्रवृत्ताः । कालविशेषे स्वामिनां वैकुण्ठयात्रा जातेति श्रवणानन्तरं चित्ताकुल-मनस्काः सन्तो यत्काले स्वामिस्थला जनाः समागताः तदा तद्द्वारा ग्रन्थकरणविषये स्वाम्याज्ञां ज्ञात्वा स्वप्रत-श्चावगम्य तद्ग्रन्थशेषपूरणे प्रवृत्ता इति । अत एव मध्ये निमित्तविशेषेण गुर्जरीव्यासाचार्यद्वारा यदुपत्याचार्यैः स्वाम्याज्ञानुसारेण ग्रन्थशेषपूरणं कार्यमित्यादिकं श्रावितम् ॥ १३ ॥

**स्मारं स्मारम्** । स्मृत्वा स्मृत्वा । स्मृ आध्यान इत्यस्मात्पौनःपुन्यरूपाभीक्ष्ण्ये विशिष्टार्थे वर्तमाना-दाभीक्ष्ण्ये चेति सूत्रे णमुल्प्रत्यये णादिलोपे नाम् इत्युर्वरीति णिति परतः अचोञ्णितीत्यनेनाजन्ताङ्गस्य ऋकारस्य आकाररूपवृद्धौ रपरत्वे कृन्मेजन्त इत्यव्ययत्वे स्मारमिति सिद्धाव्ययस्य नित्यवीप्सयोरित्यनेन नित्यशब्दोक्ता-भीक्ष्ण्ये द्विर्वचनविधानात् द्वित्वे च सति स्मारं स्मारमिति साध्विति ज्ञेयम् । **सौधेति** । सुधासम्बन्धिनः सौधाः ते च ते गूढा अर्था वाक्यार्थश्च सौधगूढार्थाः स्वामिचरणैर्निरूपिताः तेषां शेषभूता ये वाक्यार्थास्तेषां चन्द्रिकामिति योज्यम् ॥ १४ ॥

तदेतद्ग्रन्थकरणं न ग्रन्थकर्तृत्वाभिमानेनापि तु स्वामिश्रीचरणसेवात्वबुद्ध्यैवेति व्यञ्जयन् लोकान्तरं गतानां सेवान्तरं च स्वस्याप्रियमिति तदकृत्वा शेषपूरणरूपैव तत्पादसेवा क्रियत इत्याह **यद्विद्याधीशेति** । शुश्रूषाशब्दः





सेवापर्यायः । वक्ष्यति च **सेवेति** । विद्याधीशगुरोः शुश्रूषा अन्या तदुद्देश्यकव्रतानुष्ठानादिरूपा न रोचते । गुरोरित्येतद्विपरिणामेन गुरव इति वर्तते । गुरुभिः स्वप्रकृतग्रन्थविशेषपूरणस्यैव कर्तव्यतयोक्तत्वेन तत्करणस्यैव सेवान्तरापेक्षया प्रीतिकरत्वादिति भावः । यद्वोक्तरीत्या गुर्वाज्ञानुसारेण प्रवृत्तिरेवोचितेति मन्यमाना अयमूह्य इत्यभ्यर्हितत्वात्सम्बध्यते । नारायणोऽगण्यगुणेत्युपाधिखण्डनपद्यव्याख्याने प्रीयतामस्माकमिति शेषः । अभ्यर्हितत्वेन सिद्धत्वान्नेदमुक्तमित्युक्तेः । एतेन शुश्रूषा गुरोर्न रोचत इति सम्बन्धमाश्रित्य रुच्यर्थानां प्रीयमाण इत्यनेन प्रीयमाणाख्यसम्प्रदानत्वोक्तेरत्र चतुर्थी स्यादिति कस्यचिच्चोद्यं निरस्तम् । शुश्रूषायाः कर्मत्वेनानिर्दिष्टस्य गुरोरित्यस्य रुचिसम्प्रदानत्वेनोक्तिकल्पनस्याज्ञानमूलकत्वात् । तथा सति शुश्रूषाकर्मानुक्तिपरिहारायान्यस्य कर्मणो वक्तव्यत्वप्रसङ्गः । तदपि दूषणात्वेनोद्भावयिष्यामीति मन्यमानस्तु न लौकिको नापि परीक्षकः । गुरोः शुश्रूषेति स्पष्टदृष्टसम्बन्धं विहाय रोचत इत्यत्र सम्बन्धं च परिकल्प्य शुश्रूषेत्यत्र प्रतिबन्ध्यनुक्तिः । रोचत इत्येतद्योगे च चतुर्थी च स्यादित्यादिशङ्काया भ्रान्तिमात्रमूलकत्वात् । यतो विद्याधीशगुरोः शुश्रूषा ग्रन्थकरणान्या मह्यं न रोचते तस्मादियमेव मत्प्रीतिहेतुभूता सेवाऽस्त्विति योजनायां पूर्वार्धस्योत्तरार्धे हेतुत्वेनान्वयोपपत्तेरन्वयाभाव इति दोषोक्तिरप्यज्ञानमूला । यद्यप्यार्थायास्तृतीयपादस्य द्वादशमात्रकत्वेनेह च भक्तियुक्तेति त्रयोदशमात्राकत्वा-दार्यालक्षणाभावेनास्या आर्याया अलक्षणिकत्वमिति काव्यपाठचोद्यं तदपि न । अप्राप्तकाले त्ववयवविपर्यासादि निग्रहस्थानमेव न भवति । अर्थाविरोधाच्छन्दोभङ्गवदिति प्रमाणलक्षणोक्तं टीकोक्तेः ।

न चात्र यतिभङ्गः शङ्कनीयः तस्य काव्यदोषत्वात् । शास्त्रे त्वित्यादिना गीताभाष्यटीकायामुक्तेश्च इह आर्यालक्षणैकदेशस्याभावेऽपि न दोषः । अपि च सर्वेषां छन्दसामवान्तरानेकविभागवत्वं सर्वसिद्धं भवताऽपि स्वीकार्यमिति तत्तदवान्तरभेदाभ्युपगमेन विषमवृत्तादेरुपपादनवदिहात्यधिकावान्तरभेदभिन्नार्थायाः स्वरूपतो-ऽवान्तरभेदतश्च विवेक्तुमशक्यतया तावद्भेदानज्ञात्वा सामान्यलक्षणासम्भवव्युत्पादनमयुक्तम् । अत एव पूर्वान्तः-स्वरिते पुंसोरित्येतन्मूलोक्तरीत्यैव समाधास्यति मूलकारः । उत्पत्तिस्थितिभङ्गं विश्वं यस्मादित्यादौ चतुर्थपादस्य पञ्चदशाक्षरत्वेऽपि सत्यं ज्ञानमनन्तं गर्गः शूरसुतोत्तया वन्दे, ध्यायेत्तं परमानन्दमित्यादौ चतुर्थस्याधिकमात्रा-कत्वदर्शनाच्च । तत्रावान्तरभेदकल्पने प्रकृतेऽपि समानम् । पादान्तस्थं विकल्पनेत्यनेनोत्सर्गतो गुरुताविकल्पा-ल्लघोर्गुरुतावद्गुरोरपि लघुतेति मते दोषाभावश्च । युतेति पाठस्तु बहुपुस्तकेष्वभावान्न परं प्रति साधकतयोच्यते । अधिकं उमर्जीकबौद्धधिक्कारेऽस्मत्कृते ज्ञेयम् । यदप्युत्तमस्वरूपस्य पादपदेन ग्रहणविवक्षायामपि पादस्येत्येव वक्तव्यतया द्विवचनायोग इति तदपि न । अमरपामरसाधारण्येन स्वामिनां पादौ प्रतिज्ञापना क्रियते । पादावेव अस्माकं गतिः । स्वामिपादयोर्बलादेवाहं सर्वकार्याणि साधयिष्ये इत्यादिव्यवहाराणां सत्त्वेन श्रीपादस्वामिभ्यो विज्ञापनापत्रलेखावसरे पादयुगले प्रतीत्यादि लेखानां सहस्रशः सत्त्वेनोक्तशङ्क्या अपरामर्शमूलकत्वादित्यलं क्षुद्र-निरासायासेन । एषा बुद्धिस्थैनेकमङ्गलानि ॥

**अध्यायशेषेति** । एतच्चाध्यायशेषस्येति मूलस्थपदव्युत्पादनावसरेऽस्मद्वक्ष्यमाणरीत्या व्युत्पाद्यम् । ननु आनन्दमय इत्याद्युत्तरशास्त्रवैयर्थ्यशङ्कायां तत्परिहारायोक्तभाष्यं सार्थकमित्याशङ्कापरिहारायाह **अथातो ब्रह्मेति** ।





**वृत्तानुवादेति**। तदभावे वृत्तस्य बुद्धिस्थत्वाभावेन तत्र गतार्थताशङ्काया बुद्ध्यनारोहप्रसङ्गादिति भावः। **प्रतिज्ञातेत्यर्थ इति**। सूत्रे कर्तव्येति पदाध्याहारात् तस्य प्रत्ययस्य विध्यर्थत्वात् कर्तव्यत्वेन जिज्ञासाविधिरूपं सूत्रमिति सूत्रे जिज्ञासाप्रतिज्ञा सिद्धेति भावः। तद्विजिज्ञासस्वेति श्रुत्यैव जिज्ञासा विधीयते सूत्रेण तु तदितिकर्तव्यतारूपेण न्यायमात्रमुच्यते इति न सूत्रस्य जिज्ञासाप्रतिज्ञारूपत्वमित्यपरितोषादाह **विषयादिमत्त्वोपपादनेनेति**। **तदर्थमिति**। तत्स्वरूपविचारार्थमिति बुद्ध्याविवेकेन परामर्शः। **निरूपणीयत्वे ह्यधिकरणेति**। अत्र निरूपणीयत्वे हीत्यनन्तरं सतीति शेषः। निरूपणीयत्व इति सति सप्तमी वा। तथा च निरूपणीयत्वे सति हीति लभ्यते। एवं चानेनापि प्रकारणेन निरूपणीयत्वे आरम्भणीयत्वप्रसक्तिः सुप्रसिद्धेति सूचनायेति बोध्यम्। **प्रसक्तावपीति**। यद्यपि प्रसक्तिरस्ति तथापीति योज्यम्। अभावादित्यनन्तरमन्येन प्रकारेणानिरूपणीयत्वासिद्धेर्न तदर्थतयेति योज्यम्। **नन्वेवं सतीति**। सम्भावनाया अप्रमाणत्वे सतीत्यर्थः। **ग्रन्थकाराणामिति**। समतीतक्षराक्षरमित्यादौ स्वग्रन्थकारस्य परग्रन्थकारणं च तत्रतत्रेत्यर्थः। समन्वयस्य सिद्धत्वादिति सम्बन्धः। मध्यदीपिकान्यायेन समन्वयस्येत्यस्य प्रयोगात्। मूले **ब्रह्मस्वरूपनिरूप इति**।

ननु चतुरध्यायात्मकशास्त्रेणैव ब्रह्मस्वरूपनिरूपणं सम्पूर्णं भवति। सर्वशास्त्रस्य ब्रह्मविचारपरत्वात् न तु पञ्चाधिकरणीमात्रेण समाप्तिरिति चेन्मैवम्। सर्वस्य ब्रह्मविचारपरत्वेऽपि न ब्रह्मस्वरूपविचारपरत्वम्। किं तु प्रथमाध्याय एव ब्रह्मस्वरूपविचारकः। द्वितीयस्तु बाधकपरिहाररूपतया ब्रह्मविचारपरः। तृतीयचतुर्थौ तु ब्रह्मज्ञानसाधनफलविचारपरतया ब्रह्मविचारपरौ। न तु ब्रह्मस्वरूपविचारपरौ। स्वरूपविचारो नाम लक्षण-प्रमाणाभ्यामित्यत्रत्यमूलोक्तरीत्या स्वरूपजिज्ञासा च लक्षणप्रमाणाभ्यां भवतीति जन्माधिकरणीयमूलोक्तरीत्या च लक्षणप्रमाणाभ्यां ब्रह्मणः सजातीयविजातीयस्वेतरसमस्तवस्तुव्यावृत्ततयाऽवधारणफलको विचारः। स्वरूप-साधनफलजिज्ञासामन्तरेणेति जन्माधिकरणे साधनफलयोः स्वरूपाद्बहिर्भावस्योक्ततया स्वरूपविचारस्योक्तरूपस्यैव वाच्यत्वात्। अत एव वक्ष्यति प्रथमाध्यायान्ते। एवमस्मिन्नध्याये परब्रह्मणि नारायणे प्रतिपादितस्य सकल-श्रुतिसमन्वयस्य फलं जन्मादिसूत्रोक्तस्वलक्षणसिद्धिमुपसंहरतीति। एवं द्वितीयाद्यद्वितीयपादयोरपि सकल-जगज्जन्मादिनिमित्तकारण इत्यादिना जगज्जन्मादिनिमित्तकारणत्वाद्यनेकलक्षणप्रमाणनिरूपणेनेव ब्रह्मस्वरूपनिरूपणं प्रथमाध्यायसिद्धमिति प्रतिपादनं कृतम्। एवमुपासनापादेऽपि पञ्चाधिकरण्या वक्तव्यस्योक्तत्वात् किमध्याय-शेषेणेत्यतः प्रपञ्चनरूपां सङ्गतिमाहेति। 'अतो निखिलवेदानां सिद्ध एव समन्वयः। इति सुज्ञापितार्थोऽपि पृथक् चाह समन्वयम्' इति वाक्यावतारः कृतः अध्यायशेषेणेति शेष इति चोक्तम्। 'समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णय' इत्येतद्व्याख्यावसरेऽपि यद्यपि ब्रह्मविचारः कर्तव्य इत्युक्तम्। कृतश्चासौ। तथापि साधनफल-विचारसहितस्य ब्रह्मविचारस्य कर्तव्यतयोक्तत्वादित्यादिना स्वरूपनिरूपणस्य साधनाद्यध्यायाविषयत्वस्यैवोक्तिः। अन्यदपि तत्र तत्र तत्त्वप्रकाशिकायां चोक्तमवधेयम्। ततश्च ब्रह्मस्वरूपनिरूपणं नाम ब्रह्मलक्षणाभिधानपूर्वकं तेन स्वेतरसमस्तवस्तुव्यावृत्ततया ब्रह्मस्वरूपविचारणेऽपि लक्षणविशिष्टे प्रमाणाकाङ्क्षायां प्रमाणमभिधाय तस्य प्रमाणस्य समर्थनेन तत्प्रमाणप्रमितलक्षणविशिष्टत्वेन तन्निर्धारणमेव। नान्यत्। तच्च पञ्चाधिकरण्यां जातमिति





स्वरूपनिरूपणेऽशेषाभावोक्तिर्युक्तिमती । एवमेव तत्त्वप्रकाशिकायाम् अन्यत्र वा यत्र स्वरूपनिरूपणेऽवशेषाभावप्रतिपादनं तत्रापि तदुपपादनमवधेयम् ।

मूले **अध्यायेनेति** । तच्छेषेणेत्यर्थः । अत एवाह **अध्यायशेषस्येति** । नन्वध्यायस्यानारब्धत्वात् कथमध्यायस्य शेषत्वमानन्दमयोऽभ्यासादित्यादेरुच्यत इति चेदत्र ब्रूमः । केन प्रमाणेन भवताऽवधृतमध्यायोऽनारब्ध इति । शास्त्रस्यान्यपरत्वशङ्कावारणाय समन्वयसूत्रे तद्रूपप्रमाणस्याभिधानेन समन्वयरूपाध्यायार्थप्रतिपादकतया समन्वयाधिकरणमारभ्यैवाध्यायस्यारम्भात् । अत एव समन्वयासम्भवशङ्कापरिहारायेक्षत्यधिकरणं प्रवृत्तम् । कथमन्यथा समन्वयप्रपञ्चकतया आनन्दमय इत्याद्यध्यायस्य सार्थक्यप्रतिपादनं युक्तं स्यात् । प्रपञ्च्यप्रपञ्चकभावसङ्गतिश्च कथं वक्तव्या स्यात् । सा च समन्वयं प्रकटयतीति भाष्ये अनुव्याख्याने च विभागेन समन्वयसूत्रानन्तर्यप्रसङ्गमाशङ्क्य एवं शास्त्रावगम्यत्व इत्यनेनेक्षत्यधिकरणव्यवधानमुपपादितमिति वक्ष्यते युक्तमानन्दमय इत्यादेरध्यायशेषत्वम् । न च समन्वयप्रतिज्ञामात्रस्य समन्वयसूत्रत्वेऽपि तत्र साधकानुपन्यासान्न समन्वयप्रतिपादकत्वं इति वाच्यम् । तथा सति प्रतिज्ञाबाधकोद्धारयोः पूर्वत्र सत्त्वेऽप्यानन्दमय इत्यादावभावेन समन्वयप्रतिपादनासम्पूर्तिः स्यात् । अधिकमनुपदमेव वक्ष्यामः । अध्यायश्चासौ शेषश्चाध्यायशेष इति विग्रहाश्रयणेऽध्यायं प्रति शेषत्वाप्राप्त्या अध्यायशेषपदेनानन्दमय इत्यादेरध्यायत्वमेवोक्तं भवतीति नानुपपत्तिरिति केचित् तन्न । अध्यायं प्रति शेषत्वे सम्भवति सति तत्परित्यागे कारणाभावात् । अध्यायस्य स्वतन्त्रतया पञ्चाधिकरणीशेषत्वायोगश्च।

अस्मत्पक्षे तु समन्वयप्रपञ्चकतया न स्वतन्त्रत्वम् । तथाप्यल्पस्य बहुशेषत्वसम्भवेऽपि बहोरल्पशेषत्वं कथमिति चेन्न । शेषशब्दो ह्युर्वरितपरः । तथाच बहूर्वरितं यत्र तत्राप्यल्पमुर्वरितं यत्र तत्रैव शेषपदप्रयोगात् प्रकृते बहोरपि शेषत्वमुपपद्यत एव । लोके प्रधानपुरुषोपभोगनिर्मितान्नराश्यादौ प्रधानेन केवलं तद्द्वयादिमात्रस्वीकारेऽपि सम्पूर्णान्नादेस्तच्छेषत्वमिति सिद्धेश्च । यज्ञश्राद्धशेषे बहावपि हविःशेषान् शिष्टमन्नमित्यादेश्च प्रयोगस्य दृष्टतया बहावपि शेषशब्दोपपत्तेः । शेषशब्दस्योपभुक्तार्थतया तत्र व्याख्याने तु प्रकृतेऽपि समन्वयस्य प्रतिपादनेनोपभोगसिद्धिरित्यादि स्पष्टमेव । शतस्थदेवतासु त्रयोदशानां परिग्रहेऽपि तदतिरिक्तसप्ताशीतिदेवेषूक्ता दोषा इति व्यवहारश्च । उक्ताः शेषभूताः येषामिति बहुव्रीहिपक्षे उक्तेभ्योऽन्ये इत्यादि तत्तदुक्तिभिः प्रथमप्राप्तानामवशेषिताप्राप्तेः पूर्वस्य शेषतायास्तद्विरोधेनायोगः । अध्यायशेषस्येत्यनेन प्रथमाध्यायस्येव सम्पूर्णशास्त्रस्य ग्रहणमिति व्याख्यानं तु एवं शास्त्रेत्यस्य शास्त्ररूपशेषकृत्यकथनत्वाभावात् शास्त्राभिप्राये किमध्यायेनेति पूर्वोक्त्यनुपपत्तेः समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्च्यप्रपञ्चकभावसङ्गतिप्रदर्शकतया एतदनुव्याख्यानस्यातो निखिलवेदानामिति तृतीयाध्यायीयानुव्याख्यानस्य च प्रवृत्तिवर्णनायोगप्रसङ्गात् समस्तेनाध्यायेनेति बललब्धाध्यायं प्रति शेषत्वेन प्रथमाध्यायस्यैवानुवाद इति स्पष्टप्रतीतेश्च न युक्तमिति तथा व्याख्यानं न कर्तुं शक्यम् । एवं तत्त्वप्रकाशिकायामपि शेषो मुख्य एव व्याख्येयः ।





ननु कथं तत्र मुख्यार्थव्याख्यानम् । प्रथमसूत्रीयतद्ग्रन्थे प्रथमपञ्चाधिकरणानामध्यायपादपीठतया तदुभयसङ्गतिर्नास्तीति प्रतिपादनेन पञ्चाधिकरण्या अध्यायपीठतया अध्यायान्तर्भावभावसिद्ध्या आनन्दमय इत्यादेरेवाध्यायत्वप्राप्त्या तच्छेषत्वस्य तत्रोक्त्यलाभादिति चेन्न । चतुरध्यायात्मकं हि शास्त्रमिदम् । तत्र यदीयं पञ्चाधिकरणी नाद्याध्यायान्तर्गता तर्हि पञ्चमोऽयमध्यायः स्यात् । शास्त्रीयचतुराध्यायानन्तरभावे शास्त्रान्तरत्वापत्तेश्च । ततो यथा प्रथमसूत्रस्य शास्त्रारम्भसमर्थनार्थस्यापि शास्त्रान्तर्भाव इष्यते । अत एवं तत्सूत्रस्य शास्त्रान्तर्गततया स्वविषयत्वमाश्रित्य स्वारम्भोऽपि तेनैव सिद्ध इति समाधानमाकरे एवं प्रथमाध्यायपादपीठभूतानामपि तदुभयान्तर्गतत्वमविरुद्धम् । पीठत्वोक्तिस्तु आनन्दमय इत्यादेरिव वाक्यविशेषोपादानेन समन्वयप्रतिपादकत्वाभावाभिप्राया । अन्ततः नान्दीश्लोकचिकीर्षितप्रतिज्ञानस्वाहङ्कारखण्डनादिश्लोकानां चाध्यायाद्यर्थसंस्पर्शमात्रशून्यत्वेऽपि तदुभयान्तर्भावोऽवश्यं वाच्यः । अध्यायचातुर्विध्यसंरक्षणस्यावश्यकत्वात् । अत एव नान्दीश्लोकव्याख्यावसरे शिष्यसमाधानाय वक्ष्यमाणार्थप्रतिपादकत्वमस्यास्तीति योजनान्तरमपि वर्णितम् । तथा च शास्त्रान्तर्भूतस्यारम्भोऽप्याद्येनैव सूत्रेणेति वदता अथात इत्यादिशास्त्रव्याख्यानत्वमाद्यश्लोकस्य वर्णयता च प्रथमसूत्रमारभ्यैव शास्त्रमारब्धमिति सिद्धत्वात् तदध्यायस्य तत्पादस्य च आरम्भसिद्धेः तदन्तर्गतपञ्चाधिकरण्या अध्यायारम्भात् तदुत्तरशेषवैयर्थ्यमित्युक्तिर्युज्यत एव ।

आग्नेयमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारिप्समान इत्येतच्छ्रुतिवाक्येन दर्शपूर्णमासावारिप्समानेन आरम्भणीयेष्टिः कर्तव्येति विधानानुसारेण दर्शपूर्णमासशब्दोक्ताग्नेयादियागषट्कात्पूर्वभावितयारम्भणीयेष्टिप्राप्तावप्यङ्गस्य अव्यवधायकतया साङ्गदर्शपूर्णमासात्पूर्वभावित्वमतिपर्यवसानमाश्रित्य दर्शपूर्णमासाङ्गान्वाधानादिप्रधानहोमपर्यन्तं कर्तव्यविशेषस्य तदुत्तरकर्तव्यविशेषस्य च दर्शपूर्णमाससंज्ञया व्यवहारवदेतच्छास्त्रोऽपि प्रासङ्गिकदेवताद्यधिकरणस्याध्यायान्तर्भाववत् स्मृतिविरोधपरिहारस्य द्वितीयप्रथमपादान्तर्भावकपञ्चाधिकरणया अपि तदुभयान्तर्भावोपपत्तेश्च । न चानन्दमयादिसूत्राणामिव समन्वयसूत्रस्य समन्वयप्रतिपादकत्वाभावान्न अध्यायार्थप्रतिपादकत्वमिति वाच्यम् । तथा सति समन्वयसूत्रं यथा सर्वशब्दपुरस्कारेण समन्वयप्रतिपादकं तथा तत्प्रतिपादकत्वस्यानन्दमयादिनयेषु प्रत्येकभावेन तेषां न समन्वयप्रतिपादकत्वमिति वैपरीत्यापातात् । तस्मात्सङ्क्षेपेण विस्तारेण वा समन्वयप्रतिपादकत्वमात्रं विवक्षित्वा तेन निमित्तेनाध्यायान्तर्भावे वाच्ये समन्वयसूत्रस्यापि तथात्वाद्युक्तः समन्वयाध्यायान्तर्भावः । अत एव चन्द्रिकायामध्यायसङ्गत्यङ्गीकारेण अध्यायपादसङ्गतिरिति तत्त्वप्रकाशिकायाः सङ्गतिद्वयाभावार्थतया व्याख्यानं कृतम् ।

एतेन समन्वयेक्षत्योः समन्वयप्रतिज्ञाबाधकोद्धारमात्रसिद्धावपि साधु युक्त्यनुपन्यासान्न समन्वयप्रतिपादकत्वमित्यपि निरस्तम् । तथा सति प्रतिज्ञाबाधकोद्धारौ विना युक्त्युपन्यासादिना समन्वयप्रतिपादनमात्रस्यासम्पूर्णतया समन्वयाध्यायत्वाभिमतस्यापि तदध्यायत्वाभावापातात् । समन्वयसूत्रस्य पीठत्वोक्तिप्रायपाठोऽपि समन्वयप्रतिज्ञाया अभावे तदुपपादनस्थानवसरग्रस्ततया पीठसादृश्यमात्रेणोपपन्न इति न तद्विरो-





धोऽपि । तदेवमध्यायार्थसमन्वयनिरूपणस्य समन्वयसूत्र एवारम्भश्चन्द्रिकोक्तरीत्यैव जिज्ञासाद्यधिकरणस्यापि समन्वयाकाङ्क्षोत्थापकत्वादिना समन्वयान्तर्भावस्याश्रयणीयत्वे जिज्ञासाधिकरणमारभ्यैव समन्वयनिरूपणारम्भाद्वा युक्तमध्यायशेषत्वमानन्दमय इत्यारभ्य एतेन सर्वे व्याख्याता इत्यन्तस्येति युक्ता तच्छेषत्वोक्तिः स्थलद्वयेऽपि । अन्यथा पञ्चानां त्रयाणां वा पूर्वाधिकरणानामध्यायान्तरत्वापत्तिः । प्रासङ्गिकत्वेऽप्यन्तर्भावस्तु कर्तव्य एवेत्यलम् ।

एवमत्र कृतं चर्चं परिगृह्णन्तु सज्जनाः ।
मात्सर्यं सम्यगुत्सार्य सुखं प्राप्स्यन्तु संसदि ॥

**उपक्रमादितात्पर्यलिङ्गबलादिति मूलम्** । सर्वे वेदाः सर्वे घोषा इत्यैतरेयभाष्ये समुद्रमेघादिमार्जारमूषकादितृणादिशब्दवाच्यत्वोक्तावपि समाकर्षाधिकरणे लौकिकशब्दानां वैदिकशब्दानां च भगवत्परत्वे बाधकोद्धारस्य कृतत्वेऽपि कल्पनोपदेशाच्चेति गुणसूत्रतत्त्वप्रकाशिकायां स्तम्भादिशब्दानां हरौ विद्वद्रूढिसद्भावेऽपि सार्वजनीनताभावेन अमहत्वात्तद्वेद इत्युक्तावपि गर्गरादिशब्दानां शक्तिमात्रं हरौ न तात्पर्यमित्यादेः कर्मनिर्णयटीकायामुक्तेरुपक्रमादिलिङ्गकतात्पर्याभावेन नोक्तसर्वशब्देषु समन्वयविषयत्वमिति ज्ञापनायोपक्रमादीति विशेषणमिति ज्ञेयम् । अत्र श्रुत्यादीनामप्युपलक्षणया सङ्ग्रहो अभिप्रेतः । समन्वयाधिकरणमूले उपक्रमादीनां चेत्याद्युक्तेः । श्रुत्यादिषट्कं च ग्राह्यमिति तत्त्वप्रकाशिकोक्तेश्च । उपक्रमादिलिङ्गेभ्य इत्येतदनुव्याख्यानमूलटीकायां तात्पर्यज्ञापकत्वेन वाक्यार्थज्ञानोपयुक्तत्वेन च सजातीयानामुपसंहारादीनां श्रुत्यादीनां चेति व्यवहारात् । शक्तितात्पर्यावधारणलक्षणः समन्वय इति चन्द्रिकोक्तेश्च । जिज्ञासोऽयं विधीयत इत्येतन्मूले उक्तावधारणस्याविचारप्रयोजनत्वोक्तेश्च । अधिकं समन्वयाधिकरण उक्तं ज्ञेयम् । अत एवात्र प्रतिपाद्यप्रतिपादकत्वलक्षणः समन्वय इत्यस्य शक्तितात्पर्यावधारणपर्यन्तत्वेन व्याख्यानं कार्यमिति ज्ञेयम् । **अर्थवत्त्वसिद्धेरिति** । अर्थवत्वोक्तिसिद्धेरित्यर्थः । **भाष्यमिति** । तत्खण्डमित्यर्थः । **सर्वत्र पदान्त एवेति** । पादान्ते पदान्त एवेत्यर्थः ।

'अधिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः । ज्ञेयः पादश्चतुर्थांशो यतिर्विच्छेदसंज्ञिता' इति वृत्तरत्नाकरे समुद्रादीनां यावती सङ्ख्या चतुःपञ्चादिरूपा तावत्सङ्ख्याकाक्षराणां चतुःपञ्चषट्सप्ताष्टौनवदशैकादशद्वादशत्रयोदशचतुर्दशानां समुद्रभूतरसमुनिवसुरंध्रदिक्रुद्रादित्यविश्वेदेवभुवनादिसंज्ञाविधानात् समुद्रादिसंज्ञकचतुरादिषु यत्रानुष्टुबादिछन्दोनिमित्तेन विरतिप्रसक्तिस्तत्र समुद्रादिपदान्ते चेति छन्दोग्रन्थात्समुद्रादौ पदान्त एव विरतिरिति प्राप्तम् । तथा यतिः सर्वत्र पदान्ते श्लोकार्धे तु विशेष इति वृद्धवाक्यानुसारेण प्राप्तायाः पदान्ते विरतेरपि यतिभङ्गो नाम धातुभागेत्यादिकविकल्पताद्यनुसारेण नामादौ मध्य एव दूषणत्वस्थित्या पदान्त एव कर्तव्यत्वं सिद्ध्यति । उक्तं च श्लोकेषु नियतस्थानपदच्छेदं यतिं विदुरिति । क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेदित्यपवादेन समुद्रादिपदोक्तचतुरक्षरादिषु पदमध्येऽपि विरामसिद्धेस्तत्र पदमध्येऽपि विरामोपपत्तावपि पदान्ते पदमध्ये विरामप्रापकभूतापवादाभावेन तत्र पदान्त एव विराम इत्यस्य सिद्धत्वाच्च । उदाहृतं च पदान्ते पदमध्ये विरामविषये ।





प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानन्दहेतुमित्यादि । अतोऽत्र पदान्ते पदान्त एव विरतिदर्शनादित्येवार्थोऽभिप्रेतः।

प्रकृते पदान्तस्यैव सत्त्वेन तत्सिद्धवत्कारेण पदान्त एवेत्याक्षेप्यमात्रांशोक्तिरिति स्पष्टं प्रतीतिः । अधिकं छन्दोग्रन्थानुसारेणोपपादनम् । न चात्र यतिभङ्गः शङ्कनीय इत्येतत् प्रमेयदीपिकावाक्यव्याख्यावसरेऽस्माभिः कृतं तत एव प्रतिपत्तव्यम् । **इत्यादिनेत्यस्येति** । अनेन सुप्तिङन्तमिति लक्षणानुसारेण पदत्वं स्वीकृत्य तदन्ते विरामो वाच्यः स चेत्यादिनेत्यत्र यद्यप्यस्ति तथापीत्यादीत्यत्र नास्तीति प्रतिपादयता सुबन्तत्वप्रयुक्तपदत्वोदाहरणान्तरगवेषणायासो न कार्यः प्रकृत एव तदुदाहरणसत्त्वादिति सूचितं भवति । **नलोपाभावेति** । नलोपप्रातिपदिकान्तस्येत्यत्र पदान्तस्येत्यस्यानुवृत्तेरिति भावः । सर्वनामेति तत्सूत्रप्राप्तिवर्णनम् । तत्परत्वे पूर्वस्य पदसंज्ञाविधायकत्वात् तस्येति भावः । **अस्यापि पदत्वादिति** । तृतीयैकवचनस्य सर्वनामस्थानत्वाभावेन तादृशसुप्विभक्तिपरतया पदत्वादित्यर्थः । **अपवादकेति** । भसंज्ञायाः पदसंज्ञापवादकत्वादित्युत्तरवाक्ये प्रतिपादनात् इह **अपवादके**त्येवोक्तम् । **अच्त्वेनेति** । ततश्चाजादिस्वादिपरत्वमिति भावः ।

ननु 'ना' इत्येतदेकमेवाक्षरं तत्कथमजादावित्यनेकाक्षरसाध्यं कार्यमत्र यस्मात्पूर्वाक्षरस्याल्पत्वे सति उत्तरस्य सत्त्वं तदादिरित्युच्यते । यस्माच्च पूर्वमक्षरान्तरसत्त्वेऽप्युत्तरस्याभावस्तदन्त इत्युच्यते इति निर्णयादिति चेन्न । आद्यन्तवदेकस्मिन्नित्यनेन सूत्रेणैकस्मिन् क्रियमाणकार्यस्यापि यथाऽऽद्यन्ततया क्लृप्तस्थले पूर्वोत्तराक्षरसद्भावेनाद्यन्ताश्रितकार्यं भवति तथा भवनप्रतिपादनेन प्रकृते तृतीयैकवचनस्यैवाजादावित्येतन्निर्देशविषयत्वोपपत्तेः एवमेवंजातीयके ज्ञेयम् । तथाचाजादिपरत्वेनेति फलति । उक्तोपपादनप्रकारं द्योतयितुमेवाजादित्वेनेत्यनुक्त्वा अनेनेत्येवोक्तम् । केचिदित्यनन्तरमाहुरिति शेषः । तद्युक्तपाठस्तु स्वरस एव इतीत्युत्तरेणान्वयः । **सूत्रे वार्तिकेति** । सूत्रीयवार्तिककृतेत्यर्थः । वृद्धिरादैजित्येतत्सूत्रभाष्ये तु उभयसंज्ञान्यपि छन्दसि दृश्यन्त इति व्यवहृतम् । उभे संज्ञे निमित्तत्वेन एषामिति बहुव्रीहिः । कार्याणि चान्यपदार्थः इत्यादिविवृ(वर)णोक्तरीत्या कार्यपरत्वशब्दपरत्वाभ्यां संज्ञानीत्येतद्व्याख्येयम् । आकडारादेका संज्ञेति नियमेन पदसंज्ञापवादेन प्राप्तभसंज्ञामात्रमाश्रित्य दुहः दुहेत्यादौ घत्वजश्त्वादेरभाव इत्यादेराकारसिद्धतया विवक्षितस्थलेऽपि भसंज्ञामात्रप्राप्त्या कथं संज्ञाद्वयसमावेशाङ्गीकार इति तु न शङ्कनीयम् । षष्ठीयुक्तः छन्दसि वेति सूत्रे वेति योगविभागेनाकडारादिति नियमस्यापि वारणात् छन्दस्येकत्र संज्ञाद्वयसमावेशोपपत्तेरिति विवरणोक्तेरिति च ज्ञेयम् । वृद्धिरिति सूत्रस्थभाष्ये हि कुत्वं कस्मान्न भवति चोःकुःपदस्येति भत्वादित्यादिप्रतिपादनानुसारेणेदं केचिन्मतम् । तत्र यदि भसंज्ञा वृद्धिरादैजदेङ्गुण इति जश्त्वमपि न प्राप्नोतीत्याशङ्क्य उभयसंज्ञान्यपीत्याद्युक्त्वा तद्यथा ससुष्टुभासऋक्वतागणेन । पदत्वात् कुत्वं भत्वाभावे जश्त्वं न भवति इत्येवं सन्धिपक्षे प्राप्तप्रयोगोपपादनेऽपि तदनुसारेण उपदेशोऽजनुनासिक इदित्यत्र टीकाकारैः समाहितत्वात् । सिद्धसौत्रप्रयोग एवोदाहरणतयोपात्त इत्यदोषः । तथा च वृद्धिरादैच् इत्यत्र अयस्मयादीनि छन्दसीत्यनेन भसंज्ञायां पदसंज्ञाश्रितं चोः कुरिति





कुत्वं न भवति । उपदेशेऽजनुनासिक इति सूत्रे तु पदसंज्ञाश्रयणेन जश्त्वे अचश्चकारस्य जकारेऽपि जकारस्य कुत्वेन (?)कारोऽपि पदत्वात् प्राप्नोतीत्यतो भसंज्ञाप्याश्रिता । ततश्च भत्वात्कुत्वाभावे जकारस्यैव श्रवणं भवति । एवं संज्ञाद्वयसमावेशदर्शनात् प्रकृतेऽपि तत्समावेशोऽजादिसुब्विभक्तिपरत्वेन भसंज्ञायामपि पदत्वेन पदान्तत्वसम्भवात् पदमध्ये विरामो नायातीत्याशयः ।

ननु कथमत्र संज्ञाद्वयम् । न चोक्तसूत्रीयं छन्दस्युभयसंज्ञान्यपीति वार्तिकेनेति वाच्यम् । यावता तत्र छन्दांसीत्युच्यते न चेदं छन्दः । न च तर्ह्युपदेशेऽजित्यत्रापि छन्दस्त्वाभावः समान इति वाच्यम् । यत एवं भसंज्ञाविषये आशङ्कैव छन्दोवत्सूत्राणि भवन्तीति भाष्यकारेणोक्तम् । तेन तत्र छन्दस्तुल्यत्वाश्रयणेन कार्योपपत्तावपि नेह तथा सम्भवः । अनुव्याख्यानस्य असूत्रत्वात् । तथा च अस्यापि छन्दस्तुल्यत्वादित्ययुक्तमिति चेन्मैवम् । भाष्यकारेण हीयमिष्टिः कृता सूत्रप्रयोगसंरक्षणाय । तथा च सूत्रे भाष्यकारीयातिदेशसामर्थ्यात् सूत्रेषु छान्दसकार्यप्रवृत्तिरिति विवरणोक्तप्रकारेण भसंज्ञायाः प्राप्तिः । इह तु परमवैदिकत्वख्यापनाय विष्णवीत्यादिप्रयुञ्जानस्य वचनेषु छान्दसत्वमभ्युपगम्य प्रवृत्तेः सिद्धत्वात् अत्र छान्दसत्वादेः वा उभयसंज्ञाप्राप्तिरिति न दोषः । एतेनैव प्रागुक्तं सूत्रेषु छन्दस्तुल्यत्वं च व्याख्यातमिति ज्ञेयम् ।

**सर्वत्रेति** । दुहः दुहेत्यादौ तु बाधकत्वमङ्गीक्रियत एवेत्याशयः । अधिकं प्रदीपविवरणादौ ज्ञेयम् । एवं भाष्योक्तप्रकारानुसारेणात्र समाधाने छन्दस्तुल्यत्वमाश्रयणीयमित्यस्वरसं सूचयन् पक्षान्तरमाह **वस्तुतस्त्विति** । अत एव नानुमानमतच्छब्दादित्येतद्गुणसूत्रव्याख्यावसरे उक्तरीत्या स्वरसष्टीकायामुक्तः । एवं सद्भावं यापयेदित्युत्तरभाष्यस्य सत्ततेर्यातनाच्चैवेति चतुर्थपादीयभाष्यस्य च व्याख्यानरूपमूले तट्टीकायां चोपयुक्तं प्रमेयमवधेयम् । **नाभावेन हल्त्वादिति** । दृष्टं चैतत् । पञ्चम इत्यत्र पञ्चन्शब्दात् तस्य पूरणेडट् इति सूत्रेण पूरणार्थे डट्प्रत्यये तस्मिन् परतः प्राप्तष्टेरित्यनेन यष्टिलोपः ततोऽप्यन्तरङ्गतया नान्तादसङ्ख्यादेर्मडिति मडागमेऽकारडकारयोरुपदेश इत्यादिना इत्वे तस्य लोपे चोर्वरितमकारेण व्यवधाने सति अजादिपरत्वात् पूर्वमट् पश्चाद्भत्वाभावात् टिलोपो नेति । उक्तं च तत्त्वबोधिन्यां टेरिति सूत्रे । पञ्चमः अत्र डटो मडागमे भत्वाभावाट्टिलोपो न भवति । किन्तु पदत्वान्न लोप एवेति । तथा पञ्चन् आमिति स्थितेऽलोपनिमित्तभूतभसंज्ञाप्राप्तौ षट्चतुर्भ्यश्चेत्यनेन नुटि नामो निष्पत्त्या हलादित्वेन तदप्राप्तिरिति तत्प्रयुक्ताल्लोपस्याप्यप्राप्तौ नोपधाया इत्यनेन पञ्चन्निति नान्तस्योपधाया दीर्घे सति नलोपे च पदत्वाज्जाते पञ्चानामिति भवति । अत एव गौणत्वे नुट्निषेधात् प्रिया पञ्च येषामिति बहुव्रीहौ प्रियपञ्चन् आम् इति स्थिते भत्वादल्लोपे नकारस्य चुत्वेन ञकारे पमित्यनुस्वारस्य चकाररूप यपि परतः परसवर्णे ञकारे सति ञद्वयमध्यतया चकारः प्रियपञ्चामित्युच्चार्यमाणो भवति । एवं षण्णामित्यादौ न पदान्ताट्टोरनामिति पदान्तत्वप्रयुक्तष्टुत्वाभावे प्राप्ते तत्सूत्रीयानाम्नवतिनगरीणामिति वार्तिके प्रतिप्रसवात् ष्टुत्वमिति तावत्सिद्धम् । तत्र नामि परतो हलादित्वेन भसंज्ञाभावः पदसंज्ञा चेत्यवश्यं स्वीकार्यम् । उक्तं च मनोरमादौ तत्र तत्रेति ज्ञेयम् । **अपवादकाभाव इतीति** । इत्यतो हेतोः पदसंज्ञोपपत्तेस्तया विरतिर्युक्तैवेति योजना ।

अत्रत्ययतिभङ्गपरिहारस्य गीताभाष्यटीकास्थपरिहारस्य च परस्परं विरोध इत्याशङ्कानिरासाय एतत्समाधानस्याङ्गीकारवादेन प्रवृत्तेः वस्तुगतिमवलम्ब्य प्रवृत्तस्थलान्तरस्थपरिहारेण न विरोध इत्याह **अङ्गीकृत्य चेदमिति**। स्वादिष्वित्यनेन पदसंज्ञायां यतिभङ्गो न हि इदं समाधानं यतिभङ्गस्य शास्त्रेऽपि दोषत्वमङ्गीकृत्योक्तमित्यर्थः। **काव्यदोषत्वमेवेति**। तददोषौ शब्दार्थावनलंकृतीत्यादि काव्यसूत्रे काव्यलक्षणकथनपरेऽदोषपदेन छन्दोभङ्गयतिभङ्गादिराहित्यस्य काव्यलक्षणत्वेन प्रतिपादनात् यतिर्जिह्वोष्ठविश्रामस्थानं कविभिरित्यादिना निरूपितानां यतितद्भङ्गादीनां काव्यदोषताया एव प्राप्तेरित्यर्थः। अत एव काव्यकण्ठाभरणनामग्रन्थे श्लोकत्वमात्रादेर्भारतादिसाधारणत्वादिना न काव्यलक्षणत्वमित्याद्युक्तमिति भावः। छन्दोभङ्गवदिति शेषः। अत एव प्रमाणलक्षणत्वादिना न काव्यलक्षणटीकायामवयवविपर्यासः प्राप्तकालतेत्यादि निरूप्याप्राप्तकाले त्ववयवविपर्यासादिनिग्रहस्थानमेव न भवति अर्थाविरोधात् छन्दोभङ्गवदित्युक्तमिति ज्ञेयम्।

शास्त्रेऽपि तद्दोषत्वाङ्गीकारे शास्त्रस्थाभियुक्तप्रयोगश्छिद्येतेति बाधकमाह **शास्त्रे त्विति**। तद्विशेषणयुक्तैतदभावाभूस्तु केवल इति तद्वाक्योत्तरार्धः। तर्कताण्डवे तु यतिभङ्गरूपदोषभयेन पूर्वार्धे य उपाधिर्लगति साध्ये वै यद्विशेषण इति तट्टीकाकृत्कल्पितं यत्पाठान्तरं तदेवोदाहृतमित्यदोषः। तत्र केचित्त्वित्यादिनैतच्छ्लोकार्थानुसारिमतानुवादं कृत्वा तत्रोपष्टम्भकतयोदाहरणात् तदवसरे च स्पष्टार्थकवाक्यस्यैवोपादानमिति च ज्ञेयम्। सम्बन्धे विशेषणे साध्ये च उपाधिर्लगति तद्व्यापको भवतीति पूर्वार्धयोजना, सम्बन्धो विशेषणस्य यस्मिन्निति व्यधिकरणो बहुव्रीहिः। सम्बन्धो विशेषणो यस्मिन्निति समानाधिकरणो वा बहुव्रीहिः। सम्बन्धश्च धर्मान्तरस्येति सिद्धत्वात्। उभयत्रापि विशेषणसम्बन्धोक्त्या इतरधर्मावच्छिन्नतोक्ता। यत्तदोर्नित्यसम्बन्धाद्यदिति लब्धे यदवच्छिन्ने इति पर्यवसितम्। तद्विशेषणयुक्तः साध्यावच्छेदकतयोपात्तेन तेन विशेषणयुक्तो य एतस्योपाधेरभावस्तस्य विशिष्टस्य भूरभावः भावार्थको भूशब्दः क्विबन्तः। नञा च तदन्वितेनाभावः प्रतिपादनात्सोऽभावः केवले शुद्धे साध्य इति वर्तते। उपाधिर्भवतीति उत्तरार्धस्यार्थः। अनेनावच्छिन्नसाध्यव्यापकत्वाभिधानम्। यथान्वयतिरेकव्याप्त्यादिनाऽन्वयव्याप्त्यादेराक्षेपाभि-प्रायेण व्यतिरेकव्याप्त्यभिधानं शास्त्र इति ज्ञापितं भवति। यथा वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सत्युपलभ्यमानस्पर्शाधिकरणत्वादित्यत्र स्पार्शनत्वरूपसाध्यस्य द्रव्यत्वरूपे विशेषणे कृते सति चाक्षुषत्वमुपाधिर्लगति तद्द्रव्यत्वाख्यविशेषणयुक्तो यश्चाक्षुषत्वरूपोपाध्यभावः तदभावरूप उपाधिः केवले स्पार्शनत्वे उपाधिर्भवति। अयं हि विशिष्टाभावरूप उपाधिः स्पार्शनत्वरूपसाध्यवति स्पर्शे चाक्षुषत्वाभावरूपविशेष्यसत्त्वेन तदभावप्रयुक्तो न सम्भवतीति द्रव्यत्वरूपविशेषणस्याभावेन घटादौ तु द्रव्यत्ववति तदभावप्रयुक्तो न सम्भवतीति चाक्षुषत्ववत्त्वेन तदभावाभावविशेष्याभावेनानुगत इति भवति शुद्धसाध्यव्यापकः। उक्तसाधनवति वायौ द्रव्यत्वचाक्षुषत्वाभावरूपविशेष्यविशेषणयोर्द्वयोरपि सत्त्वेन तदुभयोरप्यभावायोगात् तत्प्रयुक्तविशिष्टाभावासम्भवात् साधनाव्यापकश्चेति शुद्धसाध्यव्यापकोपाधित्वं तस्य युक्तम्। अत्राधिकं वक्तव्यप्रमेयं साध्यव्यापकवैलोम्यमव्याप्तिरित्येतत् नविलक्षणत्वाधिकरणीयानुव्याख्यानमूलस्थक्वचित्साध्यावच्छेदकावच्छिन्नस्योपाध्यभावस्य हेतुत्वादित्येतद्वाक्य-





व्याख्यानटीकायां तत्प्रपञ्चे च अस्मदीये द्रष्टव्यम् । **पदमध्येऽपि** पदान्ते पदमध्येऽपीत्यर्थः । काव्यदोषत्वमेवेत्यादिकं समाधानं न युक्तिप्राप्तमित्येव । अपि तु ग्रन्थकृताऽपि तथान्यत्रोक्तमस्तीत्याह **अत एवेति** । अदोषत्वेनैव । तदाश्रयणेनैव न किञ्चिदेतत् । यदेतद्यतिभङ्गाख्यं तत्किञ्चित्फल्गु अर्थाविरोधात् । तथाविधमपि प्रकृते नास्तीति योजना । यद्यप्यभेदेऽपि विशेषणेनैवान्य इत्युदित इत्यादौ स्वसन्धौ सवर्णदीर्घस्य पूर्वान्तत्वसाधकपूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवदित्यनेनाधर्मधर्मचतुरस्यात्मा स्याद्दुःखभाजनमित्यत्रेव नेत्याकारस्य परादिवद्भावेन व्यञ्जनस्यापि तत्प्राप्तेर्न यतिभङ्ग इति समाधातुं शक्यं तथापि प्रकारान्तरेणापि समाधानप्रकारोऽस्तीति वक्तुमेवं मूले समाहितमिति ज्ञेयम् ।

**स०व्र०**— वस्तुविचारणं नामास्तीत्यनन्तरं येनाध्यायशेषस्य सार्थक्यं स्यादिति शेषः । नन्वेवमीक्षत्यधिकरणमपि व्यर्थं स्यादित्याशङ्क्य तत्सार्थक्यमुपपादयति **सम्भावना त्वित्यादिना** । यद्वा ननु लक्षणप्रमाणव्यतिरेकेण वस्तुविचारणमन्यन्नास्तीत्यनुपपन्नम्, सम्भावनाया अपि वस्तुस्वरूपनिर्धारकत्वादित्यत आह **सम्भावना त्विति** । ननु इत्यादीति कथं विरतिः, अपदान्तत्वात्; श्लोकेषु पदान्त एव विरतिदर्शनादित्यत आह **स्वादिष्वसर्वनामेति** । तथा चानया विवक्षयाऽस्य पदान्तत्वात् तत्र विरतिरुपपन्नेति भावः । **यतिभङ्ग इति** । यतिर्विरतिः यतिस्थानभङ्गो यतिभङ्ग इति मध्यमपदलोपी समासः । यत्र स्थाने पदान्तलक्षणे विरत्या भाव्यं तत्र विरतिर्नास्तीति भावः ।

**विठ्ठल०**— एवं शास्त्रावगम्यत्व इत्युत्तरमूलस्य सूत्रार्थप्रतिपादकत्वाभावात् वैय्यर्थ्यम् । न चाध्यायशेषस्योक्तार्थप्रपञ्चनरूपकृत्यप्रतिपादकतया सार्थक्यमिति वाच्यम् । सत्यं ब्रह्म स्वरूपविचारस्य प्राक्सिद्धतया प्रपञ्चकत्वायोगादित्यतोऽवतारयति **अथात इत्यादिना** । ईक्षत्यधिकरणे निराकृत्य, अतो ब्रह्मस्वरूपनिरूपणेऽनवशेषादिति सम्बन्धः । ब्रह्माख्यवस्तुविचारणमवशिष्टं वर्तत इत्यत आह **न हीति** । नास्तीत्यतःपरं येनाध्यायशेषस्य सार्थक्यं स्यादिति शेषः । वस्तुसद्भावसम्भावनारूपमपरमस्तीत्यत आह **सम्भावना त्विति** । तर्हि ईक्षत्यधिकरणे सम्भावना किमर्थमुक्तेति शङ्कते **किन्त्विति** । उत्तरमाह **यत्र इति** । **अतथाभावशङ्कया** = अलक्षणत्वादिशङ्कया । प्रवृत्तिसङ्कोचः स्वेतरसमस्तवस्तुव्यावृत्ततया वस्त्ववधारणाभावेन व्यवहारादिप्रवृत्तिसङ्कोच इत्यर्थः । स्वरूपस्य सिद्धत्वेऽपि तद्विशेषप्रतिपादनार्थमुत्तरस्योपयोग इत्यत उक्तं **विशेषाभावादिति** । अवशेषाभावादिति पाठे तु ब्रह्मस्वरूपस्य लक्षणप्रमाणाभ्यां सिद्धत्वेन वक्तव्यस्यानवशिष्टत्वात् इत्यर्थः । प्रपञ्चनं किमर्थं कार्यमित्यत आह **तत्तु समन्वयादिति** । विमर्शपूर्वकं इत्यस्य संशयपूर्वकमित्यर्थः । प्रत्ययं = निश्चयम् । एकः = कश्चित् । ननु व्यवधानाभावे आनन्तर्यरूपसङ्गतिलाभात् व्यवधानमनुपपन्नमित्यत आह **इदमुक्तं भवतीति** । अवसरसङ्गतिरेव प्रबलेत्याशयः । **नन्वानन्दमय इत्यादीति** । पादान्तरस्य पदमध्यगतत्वात् कथं पदमध्ये पादविरतिरित्यत आह **स्वादिषु इति** । स्वादिषु प्रत्ययेषु परतः सर्वनामस्थानवर्जितेषु पूर्वं प्रातिपदिकसंज्ञं स्यात् । सुडनपुंसकस्येति स्वादि पञ्चवचनानां सर्वनामस्थानसंज्ञाविधानात् द्वितीयाबहुवचनमारभ्यैव तदन्तप्रातिपदिक-





मात्रस्यात्र पदसंज्ञा प्रथमैकवचनादिपञ्चकस्य तु स्वादिप्रत्ययसहितस्यैव पदसंज्ञा । तथा चेत्यादिना इति टाबन्तप्रातिपदिकमात्रस्य पदत्वात् तदन्ते पादविरतिर्युक्तेति भावः । यतिविरतिः यतिस्थानभङ्ग इति मध्यमपदलोपी समासः ॥

**चषकः**—

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः।
सुनन्दतात्सेवया मे भक्त्याऽलंकृतयाऽनया ॥

**विहितेति** । विषयादिमत्तानिबन्धनकर्तव्यतया 'अथातो ब्रह्मजिज्ञासा' इति सूत्रोपस्कृतविधायकतव्यान्तबोधितेत्यर्थः । प्रतिज्ञातेत्यर्थः इत्यर्थापयन्ति **लक्षणप्रमाणाभ्यामिति** । द्वन्द्वप्रकृतिकतृतीयाप्रत्यायितं जन्यत्वं तलन्तप्रकृतिकतृतीयोपस्थापितप्रकारतानिरूपकत्वं च भूताधिकारीयकर्मसाधननिष्ठाप्रकृतिभूतण्यन्तधातूपस्थाप्यावधारणक्रियायामन्वेति । तथा च तादृग्लक्षणप्रमाणनियन्त्रिततादृग्व्यावृत्तिनिष्ठप्रकारतानिरूपकसाम्प्रतिकध्वंसप्रतियोगित्वरूपातीतत्वविशेषितावधारणक्रियाकर्मीभूतं तत्स्वरूपमिति समुदिताशयः । अन्यपरत्वशङ्कया शिवादितात्पर्यकत्वशङ्कया । ईक्षतिनयसाफल्यं दर्शयति **असम्भावनाशङ्केति** । **नामास्तीति** । येनाध्यायशेषसाफल्यं स्यादिति पूरितेनान्वेति । ननु लक्षणप्रमाणनिरूपणतुल्यकक्षापन्नसम्भावनानिरूपणेन वस्तुविचारणसत्त्वेन न तदतिरेकेण वस्तुविचारणाभाव इत्यत औत्कट्यानौत्कट्याङ्कितकोटिद्वयावगाहिसन्देहात्मकसम्भावनाया अप्रामाण्येन वस्त्वनवधारकतया लक्षणप्रमाणतुल्यकक्ष्याऽनापन्नतया न तन्निरूपणेन वस्तुविचारणमित्याशयेनाह **सम्भावना त्विति** । प्रवृत्तिसङ्कोचनम् । स्वेतरसमस्तवस्तुव्यावृत्त्युपरागेण लक्ष्यस्वरूपानवधारकत्वम् । **सम्भावनोपयोग इति** । तस्याः वस्त्वनवधारकत्वेऽपि फलान्तरसद्भावेन न तद्व्युत्पादनानर्थकतेति भावः । **विमर्शपूर्वकं** सन्देहपूर्वकम् । अकार्यकारित्वात् समन्वयविशेषानवधारकत्वात् । **अन्यदेव समन्वयादिति** । शिवादिकमेव शास्त्रयोनिसमन्वयादित्युक्तवेत्यर्थः । **कृती स्यात्** कुशलः स्यात् । **प्रत्ययं** विश्रम्भम् । **परस्ताद्वितस्त्तेरिति** । न त्वदभिहतो भूमध्यप्रदेशः किन्तु त्वदभिहितप्रदेशादपि वितस्तिद्वयप्रदेशाधिकपरत्वविशेषित एव भूमध्यप्रदेश इति ब्रूयादित्यर्थः । समन्वयसूत्रेण समन्वयसूत्रनिरूपिता । अध्यायशेषस्य अध्यायशेषनिरूपिताधेयताविशेषिता । शेषपदोपादानं समन्वयनयमारभ्याध्यायसङ्गतिरस्तीत्यभिप्रेत्य । प्रपञ्च्यप्रपञ्चकभावेन प्रपञ्च्यप्रपञ्चकभावाभिन्ना सङ्गतिर्दर्शितेति योजनीयम् । **एवमित्यनूद्य** व्याकुरुते **न्यायेने**त्यन्तेन । ईक्षतिनयस्य व्यवधायकत्वाशयं सनिदर्शनं सयुक्तिकं स्फुटीकरोति **एतदुक्तं भवतीति** । ननु निखिलश्लोकेषु पदान्त एव विरतिदर्शनात् प्रकृते चेत्यादि इत्यस्यापदान्ततया कथं विरतिरित्याशङ्कायां यथा राजभ्यां राजभिरित्यादौ स्वादिष्विति तृतीयाद्विवचने बहुवचने च परतः प्रातिपदिकान्तस्यापि नस्य पदान्तत्वेन लोपस्तद्वदित्यादीत्यस्याप्यनेन सूत्रेण पदान्ततया तत्र विरतिः सङ्गच्छत एवेति समाधत्ते **स्वादिष्विति** । **यतिभङ्ग इति** । यतिर्विरतिस्तत्स्थानभङ्ग इत्यर्थः । अथ राजभ्यां राजभिरित्यादौ विभक्तेर्हलादितया





अजाद्यसर्वनामस्थानस्वादिपरतानियन्त्रिताया: 'यचिभम्' इति भसंज्ञाया अप्रवृत्त्या निरपवादपदसंज्ञोपपत्त्या नलोपस्य सूपपादत्वेऽपि प्रकृते टारूपविभक्तेरजादितया पदसंज्ञापवादभूतभसंज्ञायापदत्वस्यापोदिततया विरत्यनुपपत्तिः दुर्वारैवेति चेत् । अत्र व्याकर्तारः । अयस्मयादीनि छन्दसीति सूत्रे छन्दस्युभयसंज्ञाऽन्वयीति वक्तव्यमिति कात्यायनवचनेन भत्वपदत्वयोरेकत्र समावेशमूरीकृत्य छन्दोवत्सूत्राणि भवन्तीति भाष्यकृदुक्त्या 'उपदेशेजननुनासिक इत्' इति सूत्रघटकाच्छब्दस्य पदत्वनिबन्धनजश्त्वस्य भत्वनियन्त्रितकुत्वाभावस्य च दर्शनिन प्रकृतभाष्यकारीयवचनस्यापि छन्दस्तुल्यतया भत्वपदत्वयोः सुसमावेशतया भत्वस्य सर्वत्रपदत्वानपवादकतया सामञ्जस्यमिति समादधति । तृतीयैकवचनस्याच्त्वेऽपि 'आङोनास्त्रियामि'त्यनुशिष्टनाभावेन हल्त्वादजादिपरत्वाभावेन यचि भमिति भत्वाप्राप्तेरस्त्येवात्रापवादकाभाव इति युक्तैव पदसंज्ञया विरतिरिति ध्येयमित्यपि समाहितम् । प्रमेयदीपिकायां देवमिति प्रथमपद्यव्याख्यावसरे न चात्र यतिभङ्गो दोषस्तस्य काव्यविषयत्वात् । शास्त्रे तु 'य उपाधिर्लगति साध्ये सम्बन्धविशेषणे' इत्याद्यभियुक्तवाक्यदर्शनादिति समाहिततया प्रकृतसमाहितित्वस्य शास्त्रदोषतामप्यूरीकृत्येत्यवधेयम् ।

**॥ इति एतदधिकरणीयस्वपक्षसाधने एतदादिप्रथमाध्यायस्य कृत्यम् ॥**

* * *

**॥ अथ एतदधिकरणीयस्वपक्षसाधने**
**'मायावायुक्तयोः उत्तरसूत्रसन्दर्भाक्षेपसमाधानयोः अनुपपत्तिः' ॥**

**२ सु०— मायावादी तूत्तरसूत्रसन्दर्भमाक्षिप्य समाधानमाह, ''द्विरूपं हि ब्रह्मावगम्यते वेदान्तवाक्येषु । नामरूपविकारोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम् । 'यत्र हि 'द्वैतमिव भवति', 'सर्वाणि रूपाणि विचिन्त्य धीरः' इत्येवं सहस्रशोऽविद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वेदान्तवाक्यानि । तत्राविद्याऽवस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यवहारः । तत्र कानिचिद्ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित्क्रममुक्त्यर्थानि, कानिचित्कर्मसमृद्ध्यर्थानि । एवम् 'अपेक्षितोपाधिभेदं ब्रह्मोपास्यत्वेन निरस्तसमस्तोपाधि तु ज्ञेयत्वेनोपदिश्यत' इत्यस्यार्थस्य प्रदर्शनायोत्तरग्रन्थ आरभ्यत'' इति ।**

**तदिदमनुपपन्नम्, ब्रह्मणो द्वैरूप्यस्याप्रामाणिकत्वात् । सर्वाण्यपि हि वेदवाक्यान्यसङ्ख्येयकल्याणगुणाकरं सकलदोषगन्धविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयन्ति । किन्तु 'कानिचित् सर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसौन्दर्यौदा(र्यवी)र्यादिगुण-**





**विशिष्टतया, कानिचित् अपहतपाप्मत्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादिदोषाभाव-विशिष्टतया, कानिचित् अतिगहनताज्ञापनाय वाङ्मनसागोचरत्वाद्याकारेण, कानिचित् सर्वपरिहारेण तस्यैवोपादानायाद्वितीयत्वेन, कानिचित् सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्तता-प्रतिपत्त्यर्थं सर्वात्मकत्वेन' इत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति । ततो व्याकुल-बुद्धयो गुरुसम्प्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधाना वेदं छिन्दन्ति । न (च)एतद्वैरूप्यप्रपञ्चनमुत्तरत्रोपलभ्यते । नाप्यस्याविद्याविषयस्य प्रपञ्चनं मोक्षशास्त्रेऽत्रोपयुज्यते । प्रसङ्गादुच्यत इति चेन्न सर्वस्य प्रासङ्गिकत्वे प्रतिपाद्याभाव-प्रसङ्गात् । तदिदमाभाणकं लौकिकानां नातिवर्तते 'सार्थादपि तस्करा बहवः' इति ॥ एतच्च सगुणनिर्गुणभेदं निराकुर्वताऽऽचार्येण निरस्तमिति नेह पुनः प्रक्रान्तम् । तथा च भाष्यम्, 'नान्यथा तदहृष्टेरि'ति ।**

**परि०**— अध्यायार्थोक्तिः पराभिमतार्थव्युदासायापीति भावेन यथाश्रुतपरभाष्यमनूद्य निराह **मायावादी त्वित्यादिना** । **नामरूपविकारेति** । शब्दार्थरक्षणकार्योपाधिविशिष्टमित्यर्थः । 'तद्विपरीतं च' इत्यस्य व्याख्या 'सर्वोपाधिविवर्जितम्' इति । आद्येऽर्थे मानं 'यत्र हि द्वैतम्' इति । 'यत्र हि द्वैतमिव भवति तत्रेतर इतरं पश्यति' इत्यादि । सर्वाणीति तु निरुपाधिकब्रह्मणि । **अविद्याविद्याविषयेति** । अविद्यापदेन तत्कार्यभ्रम उच्यते । भ्रमविषयप्रमाविषयभेदेनेत्यर्थः । 'द्वैतमिव' इति वाक्ये भ्रान्तिद्योतकेवशब्दस्य सर्वाणीति वाक्ये तमेव विद्वानिति तच्छब्दस्य श्रवणादिति भावः । तथा च सत्यभूतं ब्रह्म निरुपाधिकमेवेति नाद्वैतभङ्ग इति भावः । ननु निरुपाधिकब्रह्मज्ञानादेव मुक्तिसिद्धौ अविद्याविषयब्रह्म किमर्थमपेक्ष्यत इत्यत आह **तत्रेति** । आदिपदेन ज्ञातृज्ञेयगुरुशिष्यादिलक्षणो ग्राह्यः । **क्रमेति** । अर्चिरादिक्रमेत्यर्थः । **उपाधिभेदम्** । उपाधिकृतभेदोपेतम् । ननु यद्येकरूपं ब्रह्म तर्हि 'यः सर्वज्ञः अपहत पाप्मा, निरनिष्ट' इत्यादि वैचित्र्यं वेदवाक्येषु कथमिति पृच्छति **किं त्विति** । गुणदोषविधिनिषेधपरत्वेन परिहरति **कानिचिदिति** । **प्राकृतभौतिकेति** । 'अशरीरः प्रज्ञात्मे'ति, 'अस्थूलमनण्वि'त्यादीनीत्यर्थः । **वाङ्मनसेति** । 'यतो वाचो निवर्तन्त' इत्यादीनीति भावः । **अद्वितीयत्वेनेति** । 'एकमेवाद्वितीयमि'-त्यादीनीति भावः । **सर्वात्मकत्वेनेति** । 'सर्वं खल्विदं ब्रह्म' 'पुरुष एवेदं सर्वम्' इत्यादीनीति भावः । **मोक्षशास्त्र इति** । निरुपाधिकज्ञानाय सोपाधिकनिरूपणमुपयुज्यत इत्युक्तमिति चेन्न । तयोर्विरोधेन सोपाधिकनिरूपणस्य तत्रोपायत्वासम्भवात् । अन्यफलार्थं तत्तन्निरूपणे च मोक्षशास्त्रत्वव्याघातादिति भावः । **उपयुज्यत इति** । तदुपयोगाभावादिश्चन्द्रिकायां व्यक्तः । **आभाणकं** लौकिकगाथा । **सार्था-**





**दिति** । समूहादित्यर्थः । आदित्यादिवारविशेषे क्वचित्स्थलविशेषे विक्रयार्थं वणिग्भिरागन्तव्यमिति क्लृप्तसङ्केतस्थले मिलितवणिजां यः समूहः सोऽत्र सार्थपदेन गृह्यते। तस्मादपीत्यर्थः।

**गु०दी०— अभ्युदयार्थानि** इत्यत्र ऐश्वर्याद्यर्थानीत्यर्थः । **अद्वितीयत्वेन** इत्यत्र समाभ्यधिकराहित्येन इत्यर्थः । **सर्वात्मकत्वेन** इत्यत्र सर्वान्तर्यामित्वेनेत्यर्थः । 'अत सातत्यगमन' इति धातुः । पराभिमतैक्यवाक्यानां गतिसूचनायेदमुदितम् । **पराक्रान्तम्** इति प्रक्रान्तमित्यर्थः ।

**यादु०— आक्षिप्येति** । ब्रह्म जिज्ञासितव्यमिति प्रतिज्ञातम् । तच्च शास्त्रैकसमधिगम्यम् । शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम् । न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति च गतिसामान्यादित्युक्तम् । तत्किमपरमवशिष्यते । यदर्थमुत्तरसूत्रसन्दर्भस्यावतारः स्यात् इत्याक्षिप्येत्यर्थः । **द्विरूपं हीति** । यद्यपि तत्त्वतो निरस्तसमस्तोपाधिरूपं ब्रह्मैव जिज्ञास्यमिति तदेव वक्तव्यं नान्यत् । तथाऽपि न तेन रूपेण प्रथममुद्देष्टुं शक्यमित्युपहितेन रूपेणोप-देष्टव्यमित्युपाधिरपि क्वचिदुच्यत इति भावः । नन्वेवं ब्रह्मणो द्विरूपत्वे एकमेवेत्यादिश्रुतिविरोध इत्यत आह **अविद्याविद्याविषयभेदेनेति** । अत्राविद्यापदेन विद्याविरुद्धं मिथ्याज्ञानं विवक्षितम् । विद्यापदेन च तत्त्वज्ञानम् । तथा च तत्त्वज्ञानविषयीभूतं निरुपाधिकं रूपमेकमेव पारमार्थिकम् । सोपाधिकं तु कल्पितं भ्रमेऽवभासतेऽतो न विरोध इति भावः । नन्वेवमुपाधिभेदं ब्रह्मोपास्यत्वेनेत्यादिवक्ष्यमाणमयुक्तम् । तत्त्वतश्चैतन्यस्यैकत्वे उपा-स्योपासकभावस्य ज्ञातृज्ञेयभावस्य चायोगादित्यत आह **तत्राविद्याऽवस्थायामिति** । आदिपदेन ज्ञातृज्ञेय-लक्षणादिर्ग्राह्या । ननु सोपाधिकोपास्तीनामपि यदि मोक्षफलकत्वं तदा किं निरुपाधिकज्ञानेनेत्याशङ्कानिरासाय सोपाधिकोपास्तीनां फलान्तराण्याह **तत्र कानिचिदित्यादिना** । अभ्युदयार्थानि प्रतीकोपासनानि । क्रममुक्त्यर्थानि दहरादीनि । कर्मसमृद्ध्यर्थानि उद्गीथादीनि । एवमपेक्षितमुक्त्वा, ननु निरुपाधिकं ब्रह्मस्वरूपं प्रथमतो न ज्ञातुं शक्यं चेत्तर्हि तज्ज्ञापनाय केनचिदेकेनोपाधिना विशिष्टं ब्रह्मोपदेष्टव्यं नानोपाधिविशिष्टं ब्रह्म वेदान्तेषु किमर्थ-मुच्यते, किञ्च निरुपाधिकवत्सोपाधिकस्यापि ज्ञेयत्वे सत्यत्वमेव स्यादित्याशङ्काद्वयं परिहरन्निदानीमुक्ताक्षेपे समाधानमाह **एवमपेक्षितोपाधिभेदमित्यादिना** । अपेक्षितफलसाधनीभूतनानागुणविशिष्टमित्यर्थः । ततश्च सत्यं निरुपाधिकब्रह्मज्ञापनाय केनचिदेकेनोपाधिना विशिष्टं ब्रह्मोपदेष्टव्यमिति । तथाऽप्यधिकारिणोऽविद्यावस्थाया-मन्यफलापेक्षाया अपि सत्त्वात् । तत्तत्फलसाधनीभूतगुणलक्षणोपाधिविशिष्टोपास्तयोऽनेकरूपा अपि कथ्यन्ते । तं यथा यथोपासते तदेव भवतीति श्रुतेरित्याद्याशङ्कापरिहारः । न निरुपाधिकमपि ज्ञेयतयोपदिश्यते । येन तस्य सत्यताप्रसङ्गः । किन्तूपास्यतयैव । उपासना चाऽविद्यमानेऽपि भवतीति नोक्तदोष इति द्वितीयशङ्कापरिहार-श्चात्रोक्त इति ज्ञातव्यम् । **मोक्षशास्त्र इति** । निरुपाधिकज्ञानाय सोपाधिकनिरूपणमुपयुज्यत इत्युक्तमिति चेन्न । तयोर्विरोधेन सोपाधिकनिरूपणस्य तत्रोपायत्वासम्भवात् । अन्यफलार्थं तत्तन्निरूपणे च मोक्षशास्त्रत्व-व्याघातादिति भावः । **सार्थादपीति** । वणिजोऽपीत्यर्थः ।





**वं०प०**— सर्वेष्वपि वेदवाक्येष्वेकमसङ्ख्येयगुणगणाकरत्वादिनैकैकस्मिन्वाक्ये प्रतिपाद्यत इत्याशयेन शङ्कते **किं त्विति**। नेत्याह **कानिचिदिति**।

**आनन्दः**— स्वोक्तसम्मतिदार्ढ्याय परोक्तसङ्गतिप्रकारं दूषयितुमनुवदति **मायावादी त्विति** । **नामरूपविकारोपाधिविशिष्टमिति**। नामरूपात्मकविकारलक्षणोपाधिविशिष्टमित्यर्थः। द्विरूपब्रह्मसद्भावे प्रमाणमाह **यत्र हीति । अविद्याविद्याविषयभेदेनेति**। अत्राविद्याविद्याशब्दौ समीचीनासमीचीनज्ञानपरौ। ननु विरूपाधिकज्ञानस्यैव मोक्षसाधनत्वान्निरूपणमेवात्र कर्तव्यम् । न तु सोपाधिकं तज्ज्ञानस्य मोक्षसाधनत्वादित्यत आह **तत्राविद्येति । कानिचिदभ्युदयार्थानि** प्रतीकोपासनानि । **क्रममुक्त्यर्थानि** दहरादीनि । **कर्मसमृद्ध्यर्थानि** उद्गीथाद्युपासनानि । तथा चैवंविधद्विरूपब्रह्मप्रतिपादकत्वान्नाध्यायशेषस्य वैयर्थ्यमिति भावः । कुतो प्रामाणिकत्वमत आह **सर्वाण्यपीति** । ननु वेदवाक्येषूक्तगुणविशिष्टस्याप्रतीतेः । कथं तेषां तत्प्रतिपादकं कानिचित् । एष आत्मापहतपाप्मेत्यादीनि कानिचित् । यतो वाच इत्यादीनि कानिचित् । एकमेवाद्वितीयमित्यादीनि कानिचित् । सर्वं खल्विदमित्यादीनि । नन्वेवमेकप्रकारब्रह्मप्रतीतिरन्येषां कुतो नेत्यत आह **तत इति** । ननु द्वैरूप्यप्रपन्नस्योत्तरत्रोपलम्भादेवं कल्प्यत इत्यत आह **न चैतदिति** । मोक्षशास्त्रत्वाच्चाविद्याविषये प्रपञ्चनमयुक्तमित्यत आह **नापीति । सर्वप्रासङ्गिक इति** । न च निर्विशेषस्याप्युत्तरत्र प्रतिपादनात्कथं सर्वस्य प्रासङ्गिकत्वमिति वाच्यम् । तत्रापि लिङ्गेनैव तत्परत्वस्य व्युत्पादनीयत्वेन तद्वैशेष्ये वक्तव्ये तस्याप्यविषयत्वादिति भावः । **सार्थात्** । धनवतः ।

**श्रीनिधि०**— **नामरूपविकारोपाधिविशिष्टमिति**। नामरूपलक्षणो यो विकारः तल्लक्षण . . उपाधिः धर्मः तद्विशिष्टं शब्दार्थात्मकप्रपञ्चविशिष्टमित्यर्थः । कानिचिदभ्युदयार्थानीति मधुविद्याद्युपासनामिति भावः । वसुनामेवैको भूत्वेत्यादि श्रवणात् क्रममुक्त्यर्थानि प्राणाद्युपासनापराणि चित्तनिरोधद्वारा ज्ञानार्थत्वात् । कर्मसमृद्ध्यर्थानि उद्गीथाद्युपासनानि तर्हि वाक्यभेदः किं प्रयुक्त इत्यत आह **किंत्विति** । तर्हि अन्येषां अन्यथा व्याख्याने किं कारणमित्यत आह **गुरुसम्प्रदायविकला इति** । तदपि कुत इत्यत आह **अश्रुतेति** । विशिष्टव्याख्यानकर्तारो न श्रुता एभिः । दृष्टा इति तु दूरे एभिर्गुरुत्वेनाभिमतास्तु आख्याकर्तार एव । न तु व्याख्यातार इति गुरुसम्प्रदायविकलत्वमिति भावः । तर्हि प्रतिभामूलमस्त्वेवं व्याख्यानमित्यत आह **व्याकुलबुद्धय इति । अस्याविद्याविषयस्येति** । नामरूपविकारोपाधिविशिष्टस्येत्यर्थः । **सर्वस्यापि प्रसङ्गत्व इति** । सर्वत्रापि विशिष्टस्यैव प्रतीतेरिति भावः । **सार्थादपीति** । सार्थाः अर्थोपेताः वणिक्प्रभृतय इत्यर्थः ।

**शे०वा०**— **आक्षिप्येति**। ब्रह्म जिज्ञासितव्यमिति प्रथमसूत्रे प्रतिज्ञातम्, तच्च शास्त्रैकसमधिगम्यम् । शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम् । न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमिति बोधयेदिति गतिसामान्यादित्युक्तम् । तत्किमपरमवशिष्यते यदर्थमुत्तरसूत्रसन्दर्भावतारः स्यात्; इत्याक्षेपप्रकारो द्रष्टव्यः । उत्तरसूत्राणामगतार्थत्वं वक्तुं वेदान्तेषु भासमानार्थं





सङ्क्षिपति **द्विरूपं हीति** । यद्यपि निरुपाधिन एव जिज्ञास्यत्वात्तत्त्वतो निरस्तसमस्तोपाधिसम्बन्धं ब्रह्मैवोपदेष्टव्यं न सोपाधिकमपि तथाऽपि न तत्तेन रूपेण प्रथममुपदेष्टुं शक्यमित्युपहितरूपेणोपदेष्टव्यमिति निरुपाधिकोपदेश-शेषतया सोपाधिकस्य युज्यते तन्निरूपणं वेदान्तेष्वित्यदोषः । तत्र सोपाधिकविषयं वाक्यमुदाहरति **यत्र हीति** । यस्यां खल्वविद्यावस्थायामाभासभूतद्वैतं सदिव भाति तत्रेतरः सन्नितरं पश्यतीति, दृष्ट्यादिगोचरमुपाधिमद्वस्तु वदतीत्यर्थः । सोपाधिकविषयं श्रुत्यन्तरं पठति **सर्वाणीति** । सर्वज्ञो हीश्वरो नामरूपादिकं विश्वं निर्माय तत्र प्रविश्याभिवदनादिकं कुर्वन्योऽवतिष्ठते तं विद्वानिहैवामृतो भवतीत्यर्थः । यद्यप्यत्र द्विरूपं हि ब्रह्म वेदान्तेष्ववगम्यत इति प्रतिज्ञाय सोपाधिकविषयकवाक्योदाहरणवन्निरुपाधिविषयकवाक्यमप्युदाहर्तव्यमेव उदाहृतं चापव्याख्यान-कर्त्रा तथाऽपि यत्र हीति वाक्योदाहरणेन तदुत्तरस्य यत्र त्वस्य सर्वमात्मैवाभूदिति निरुपाधिकविषयवाक्यस्याप्युदा-हृतप्रायत्वात् किं तत्पृथगुदाहरणेनेत्याशयेन निरुपाधिकविषयवाक्यानुदाहरणमिति ध्येयम् । यद्वा । उपलक्षणतया यत्र त्वस्य सर्वमात्मैवाभूदित्यस्य यत्र नान्यत्पश्यतीत्यादेश्चात्र ग्रहणाददोषः । स्वशब्देनानुपादानं तु परस्य निरुपाधिकविषयताऽभिधानमात्रं न तु निरुपाधिकविषयत्वं तस्य वास्तवं सर्वस्यापि वेदस्य सगुणप्रतिपादकत्वा-दिति ज्ञापनार्थमित्यवधेयम् । यत्र यस्यां विद्यावस्थायामस्य विदुषः सर्वं कर्त्रादि आत्मातिरेकेणासदेवासीत् तत्र केन करणेन कं विषयं को वा कर्ता पश्येदित्याक्षेपादव्यवहार्यमनौपाधिकं तत्त्वमवगम्यते । यत्र यस्मिन्भूम्नि स्थितो विद्वानन्यद्द्रष्टव्यं चक्षुषा न पश्यत्यन्यच्च श्रोतव्यं श्रोत्रेण न शृणोति न चान्यन्मन्तव्यं ज्ञातव्यं वा मनसा वा बुद्ध्या वा मनुते जानाति वा स भूमा दृष्ट्याद्यगोचरो निरतिशयमहत्त्वसम्पन्नः परमात्मेत्युपलक्षितवाक्यद्वयार्थः । ननु ब्रह्मणो न द्वैविध्यं युगपदेकस्य तद्विरोधादित्यतः सोपाधिकत्वनिरुपाधिकत्वयोस्तात्त्विकत्वतात्त्विकत्वाभ्यामेकस्मिन्नप्युप-पत्तेर्न विरोध इत्याह **अविद्याविद्याविषयभेदेनेति** । ननु शुद्धमेव वास्तवं चेदुपास्योपासकादिभेदस्यावस्तुत्वा-दुपास्तिविध्यानर्थक्यमित्याशङ्क्याह **तत्रेति** । ननु चोपास्तीनामपि मुक्त्यर्थत्वाद्विद्यावद्वस्तुगामितैव युक्तेत्यतो न तासां साक्षान्मोक्षार्थतेत्याह **तत्रेति** । **कानिचिदिति** । उद्गीथाद्युपासनानीत्यर्थः । **कानिचिदिति** । दहरा-द्युपासनानीत्यर्थः । **कानिचिदिति** । उद्गीथाद्युपासनानीत्यर्थः । यद्यप्येतानि विधेयत्वात्कर्मकाण्ड एव वक्तव्यानि तथाऽपि मानसत्वेन विद्यासाम्यादिहोक्तानीत्यवगन्तव्यम् । श्रुतिषु दृष्टं ब्रह्मद्वैरूप्यं शिष्ठानन्तरसूत्रसन्दर्भारम्भं सम्भावयति **एवमिति** । तस्याद्याप्यविवेकात्कुत्रोपाधिरिष्टः कुत्र वा नेति निरूपयितुमुत्तरो ग्रन्थसन्दर्भ इत्याशयः ।

उदाहृतश्रुतीनामेव ब्रह्मद्वैविध्ये प्रामाण्यात्कथमप्रामाणिकत्वमित्यत आह **सर्वाण्यपीति** । तर्ह्यनुभव-विरोधः सर्वत्र वाक्येषूक्तार्थाप्रतिभासादिति शङ्कते **किं त्विति** । परिहरति **काचिदिति** । यः सर्वज्ञः सर्वविदेष सर्वेश्वर इत्यादीनीत्यर्थः । **कानिचिदिति** । एष आत्माऽपहतपाप्मेत्यादीनीत्यर्थः । **कानिचिदिति** । यतो वाचो निवर्तन्त इत्यादीनीत्यर्थः । **कानिचिदिति** । एकमेवाद्वितीयमित्यादीनीत्यर्थः । **कानिचिदिति** । सर्वं खल्विदं ब्रह्मेत्यादी-नीत्यर्थः । **न चेति** । नापीत्यर्थः । उत्तरत्र विशिष्टस्यैव प्रतिपादनेन द्विरूपब्रह्मप्रतिपादनाभावात् न द्विरूपब्रह्मप्रपञ्चनं तदर्थ इति भावः । **नापीति** । अविद्याविषयस्यातात्त्विकत्वे तत्प्रतिपादकत्वे शास्त्रस्याप्रामाण्यापत्तेरित्यर्थः । न च सविशेषत्वे श्रुतेरतात्पर्यान्नाप्रामाण्यमिति वाच्यम् । तात्पर्यनिर्णायकैः सूत्रैः प्रत्यधिकरणं सविशेषे तात्पर्यनिर्णयात् ।





किञ्च मुमुक्षुं प्रति न तावन्मोक्षसाधनतया सविशेषनिरूपणमुपयुज्यते । त्वन्मते निर्विशेषज्ञानस्यैव मोक्षसाधनत्वात्सविशेषस्य कल्पितत्वेन भ्रमरूपतज्ज्ञानस्याविद्यानिवर्तकत्वायोगाच्च । नापि निर्विशेषज्ञानार्थतया तन्निरूपणं रूपादियुक्तपराग्भूतसविशेषज्ञानेन तद्विपरीतनिर्विशेषज्ञानायोगात् । अतो न तन्निरूपणं मोक्षशास्त्र उपयुक्तमिति भावेनोक्तम् **मोक्षशास्त्र इति** । ननु न मोक्षसाधनतया मोक्षसाधनज्ञानसाधनतया वा सविशेषनिरूपणमुच्यते किन्तु प्रसङ्गादेवेति नोक्तदोष इति शङ्कते **प्रसङ्गादिति** । सार्थाद्वनिकात् । भाष्ये पराभिप्रेताध्यायशेषकृत्यानिराकरणेन प्रसक्तां न्यूनतां परिहरति **एतच्चेति** । **निरस्तमिति** । जन्माधिकरणेक्षत्यधिकरणयोरिति शेषः । भाष्ये एतदधिकरण एव च ब्रह्मद्वैविध्यनिरासादप्यत्र न निराकृतमित्याह **तथा चेति** । द्विरूपब्रह्मप्रपञ्चनायाध्यायशेषवृत्तिरिति न युक्तं ब्रह्मद्वैविध्यप्रपञ्चनस्यादृष्टेरित्यपि भाष्यार्थो वर्णनीय इति भावः ।

**वा०र०**— 'जन्माद्यस्य यत' इत्यारभ्य 'श्रुतत्वाच्च' इत्येवमन्तैः सूत्रैरित्यारभ्य अतःपरस्य ग्रन्थस्य किमुत्थानमित्यन्तभाष्याभिप्रायकथनरूपब्रह्मजिज्ञासितव्यमिति प्रतिज्ञातमित्यादि भामतीग्रन्थानुसारेणाक्षेपप्रकारमुपदर्शयति **ब्रह्मजिज्ञासितव्यमिति हीत्यादिना** । वेदान्तानां ब्रह्मपरत्वे सिद्धेऽपि प्रमाणान्तरैरविरोधार्थमुत्तरस्तु प्रारम्भ इत्याशङ्क्य तेषां ब्रह्मण्यप्रवेशमाह **तच्च शास्त्रैकेति** । भामतिस्थयद्यपि तत्त्वतो निरस्तेति वाक्यव्याख्यानरूपकल्पतरौ निरुपाधिन एव जिज्ञास्यत्वादिति तन्मूलकाराभिप्रेतो हेतुरभिहितस्तदनुसारेणाह **यद्यपीत्यादिना** । इतःपरं भाष्यानन्दगिरिभामतिकल्पतरुपरिमलपरकीयोपनिषद्भाष्यानुसारेण वैदिकाः शब्दा इत्येतन्मूलटीकापर्यन्तं टीका व्याकर्तव्यास्ति । अन्यद्रष्टव्यं चक्षुषेति मूलपाठः । न्यायामृतानुसारेणाह **न च सविशेषत्व इत्यादि** । सार्थादित्यस्य समूहादित्यर्थप्रतीतिनिरासाय व्याचष्टे **सार्थाद्धनिकादिति** । अत एव अपरस्पराः क्रियासातत्य इति सूत्रे अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थ इति प्रकाशिकासिद्धान्तकौमुद्योर्योजनाकरणान्न तद्विसंवादः । अपरे परे च सततं गच्छन्तीत्यर्थे हि तेन सूत्रेण सुट् निपात्यते । तेषामपरस्पराणां सार्थत्वस्य द्वेधादिसम्भवेनादोषात् । अस्तु वाऽन्यत्र यथा तथा प्रकृते तु सार्थशब्दो न समुदायार्थः । समुदायात्तस्करा बहव इत्यस्यासङ्गतत्वात् । तस्करप्रतियोगित्वेन धनिकस्यैव शीघ्रोपस्थितिकतया वृथाऽर्थान्तरस्वीकारोपयोगाच्चेति ज्ञेयम् । तेन सार्थानां चोरादिभयेन मिलितानामेव गमनप्रतिपादनात् सार्थशब्दो धनिकपरोऽवगम्यते । यद्यपि मञ्जर्यां सार्थभूता इति व्याख्यानात् समुदाया अपरस्पराः सार्था गच्छन्तीत्यस्य निर्धार्यमाणशब्दाभावादिति । अन्यत्र प्रसिद्धानां येभ्यः पृथक्करणरूपां निर्धारणं सप्तम्या अर्थस्तेषां निर्धार्यमाणानां शब्दानां तत्रेति वाक्यात् प्रागुक्त्यभावेन तत्रेत्यत्रत्यप्रकृत्या परामर्शायोगादित्यर्थः ।

**स०व्र०**— ननु ब्रह्मणो द्विरूपत्वमेकमेवेत्यादिश्रुतिविरुद्धमित्यत उक्तम् **अविद्याविद्याविषयभेदेनेति** । अत्राविद्यापदेन विद्याविरुद्धं मिथ्याज्ञानं विवक्षितम् । विद्यापदेन च तत्त्वज्ञानम् । तथाच तत्त्वज्ञानविषयीभूतं निरुपाधिकं रूपमेकमेव । सोपाधिकं तु कल्पितं भ्रमेऽवभासते, अतो न विरोध इति भावः । नन्वेवमुपाधिभेदं ब्रह्मोपास्यत्वेनेत्यादिवक्ष्यमाणमयुक्तम् । तत्त्वतश्चैतन्यस्यैकत्वे उपास्योपासकभावस्य ज्ञातृज्ञेयभावस्य चायोगादित्यत आह **तत्राविद्यावस्थायामिति** । आदिपदेन ज्ञातृज्ञेयलक्षणादिर्ग्राह्या । ननु निरुपाधिकं ब्रह्मस्वरूपं प्रथमतो





न ज्ञातुं शक्यमिति तज्ज्ञापनाय केनचिदुपाधिना विशिष्टं ब्रह्मोपास्यत्वेन वक्तव्यम् । नानोपाधिविशिष्टं ब्रह्मोपासत्वेन वक्तव्यम् । नानोपाधिविशिष्टं ब्रह्मोपास्यतया वेदान्तेषु किमर्थमुच्यत इत्याशङ्कायामाह तत्र **कानिचिदित्यादिना** । **एवमपेक्षितोपाधिभेदमिति** । अपेक्षितफलसाधनीभूतनानागुणविशिष्टमित्यर्थः । ततश्चायमर्थः । सत्यं निरुपाधिकब्रह्मज्ञानाय 'केनचिदुपाधिना विशिष्टं ब्रह्मोपास्यत्वेन वक्तव्यमिति । तथाप्यधिकारिणोऽविद्यावस्थायामन्यफलापेक्षया अपि सत्त्वात्तत्फलार्थं सगुणलक्षणोपाधिविशिष्टोपास्तयोऽनेकरूपा अपि कथ्यन्ते । 'यथा यथोपासते तदेव भवतीति श्रुतेरि'ति । ननु सर्वत्रैकरूपमेव ब्रह्म प्रतिपाद्यत इत्यनुपपन्नम् । यः सर्वज्ञः सर्वविदित्यादिविशिष्टब्रह्मप्रतिपादकवाक्यानामपि श्रवणादित्यत आह **किं त्विति** । **मोक्षशास्त्रेऽत्रोपयुज्यत इति** । सोपाधिकनिरूपणं न निरुपाधिकज्ञानोपयुक्तम् । विरोधात् । अन्यफलार्थं तन्निरूपणे च मोक्षशास्त्रव्याघातः । अविद्याविषयप्रतिपादकत्वेनातत्त्वावेदकप्रसङ्गश्चेति भावः । **सार्थादपीति** । वणिजोऽपीत्यर्थः ।

**विठ्ठल०**— एवमध्यायार्थकथनेन परोक्ताध्यायार्थोऽपि निरस्त इति भावेन परभाष्यमनूद्य निराह **मायावादीत्यादिना** । **आक्षिप्येति** । ब्रह्मजिज्ञास्यमिति प्रतिज्ञातं तच्च शास्त्रगम्यम् । शास्त्रं च जगदुत्पत्तिलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादावित्युपपादितं न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति च गतिसामान्यादित्युक्तम् । तत्किं अवशिष्यते यदर्थमुत्तरग्रन्थसन्दर्भस्यावतारः स्यादित्याक्षेपेऽर्थः । **द्विरूपमिति** । यद्यपि निरस्तसमस्तोपाधिभूतं ब्रह्मैव जिज्ञास्यतयोक्तमिति तदेव वक्तव्यमिति । न तु नामाद्युपाधिविशिष्टं सगुणं, तथापि निरुपाधिकस्य प्रथमं बुध्यनारोहात् उपहितरूपेण तदुपदेष्टव्यमित्युपाधिविशिष्टमपि वेदान्तेनावगम्यत इति भावः । 'तद्विपरीतम्' इत्यस्यैव विवरणं 'सर्वोपाधिवर्जितम्' इति । 'यत्र हि' इत्यत्र यत्र त्वस्य सर्वमात्मैवाभूत् इत्याद्युत्तरवाक्यं निर्गुणपरं सर्वाणि रूपाणीति सोपाधिकपरं द्रष्टव्यम् । ब्रह्मणो द्विरूपत्वं 'एकमेवे'त्यादि श्रुतिविरुद्धमित्यत उक्तम् **अविद्याविद्याविषयभेदेनेति** । अत्र अविद्यापदेन विद्याविरोधिमिथ्याज्ञानं विवक्षितं विद्यापदेन च तत्त्वज्ञानम् । तथा च तत्त्वज्ञानविषयीभूतं निरुपाधिकं रूपमेकमेव, सोपाधिकं तु कल्पितं भ्रमेऽवभासते अतो न विरोध इति भावः । नन्वेवं चैतन्यस्य तत्त्वत एकत्वे उपास्योपासकभावस्य ज्ञातृज्ञेयभावस्य चानुपपत्तिरित्यत आह **तत्राविद्यावस्थायामिति** । ननु निरुपाधिकब्रह्मोपासनस्यैव मोक्षफलकत्वात् सोपाधिकचैतन्योपासनानुपपत्तिरित्यतस्तदुपासनस्य सार्थक्यमनेकप्रकारेणाह **तत्र कानिचिदिति** । 'अभ्युदयार्थानि' नामादि प्रतीकोपासनानि । 'क्रममुक्त्यर्थानि' दहरादीनि । 'कर्मसमृद्ध्यर्थानि' उद्गीथोपासनादीनि इति ॥ ननु निरुपाधिकब्रह्मस्वरूपस्य प्रथमतो ज्ञातुमशक्यत्वेन तज्ज्ञापनाय केनचिदेकेनोपाधिना विशिष्टं ब्रह्मोपास्यतया उपदेष्टव्यं नानोपाधिविशिष्टं ब्रह्म वेदान्तेषु किमर्थमुच्यते । किञ्च निरुपाधिकस्यानुपास्यत्वे किमर्थं चैतदुच्यत इत्यत आह **एवमपेक्षितोपाधिभेदमिति** । अपेक्षितफलसाधनीभूतनानागुणविशिष्टमित्यर्थः । अपेक्षितफलविशेषलब्ध्यर्थं तदनुगुणनानोपाधिविशिष्टमुच्यते । उपासनाया अविद्यमानेऽपि सम्भवान्निरस्तोपाधिब्रह्मतत्त्वज्ञानस्य मोक्षहेतुत्वेन ज्ञेयतया तदुपदेशोऽप्युपपद्यत इति भावः । ननु सर्ववेदानामप्येकरूपब्रह्मप्रतिपादकत्वे वेदवाक्येषु नानाप्रकारेणोक्तिः कथमित्याशङ्क्य समाधत्ते **किं तु कानिचित् इति** । अद्वितीयत्वेन इत्यस्य असदृशत्वेनेत्यर्थः । **सर्वात्मकत्वेन इति** । 'यदधीना यस्य सत्ता





तत्तदित्येव भण्यते' इत्युक्तेः तत्त्वमसीत्यादेः तदधीनः त्वम् असि इत्यर्थलाभादिति भावः । इत्यादीत्यादिशब्देन कानिचिद्वाक्यान्यधिकारानुसारेण सूर्यचन्द्रनामवागाद्यधिष्ठानविशेषाधिष्ठितत्वेनेत्यादि ग्रहणम् । **मोक्षशास्त्रे इति** । अविद्याविषयज्ञानस्य मोक्षानुपयोगित्वात् । न च तस्य निरुपाधिकज्ञानोपयोगित्वेनेति वाच्यम् । सोपाधिक-निरुपाधिकयोरतिविरुद्धत्वेन सोपाधिकज्ञाने तत्रैव दृढसंस्कारत्वात्तस्य निरुपाधिकज्ञानानुपायत्वादिति भावः । **सार्थादिति** । सार्थो धनिकः वणिगिति यावत् । आपणवीथ्या वणिक्समूहापेक्षया चोरा एव बहुला इतीवायातमिति भावः ।

**चषकः— आक्षिप्येति** । ब्रह्म जिज्ञासितव्यमिति प्रतिज्ञातं तच्च शास्त्रैकसमधिगम्यं शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम् । न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति गतिसामान्यादित्युक्तं तत्किमपरमवशिष्यते यदर्थमुत्तरसूत्र-सन्दर्भावतारः स्यादित्याक्षिप्येत्यर्थः । वर्तिष्यमाणयोगानां वृत्तयोगाप्रतिपादितार्थप्रतिपादकतां घटयितुं वेदान्त-वाक्येषु प्रतीयमानार्थं समस्यति **द्विरूपं हीति** । विगलितनिखिलोपाधिकब्रह्मण एव जिज्ञास्यतया तस्यैवाभि-धातव्यत्वेऽपि 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः' इत्यनुपहितस्य प्रथमं दुरुपदेशतयोपहितरूपस्यैवोपदेशानर्हतयोपाधिः क्वचिदभिधीयत इति भावः । तत्रोपहितप्रतिपादकवाक्य-मुदाहरति **यत्र हीति** । यस्यामविद्यादशायां द्वैतं द्वयोर्भावो द्विता, तस्या इदं द्वैतम्ः द्वितीयं सदिवाभाति तत्रेतर इतरं पश्यतीति दर्शनकर्तृत्वाद्यवच्छिन्नं वस्तु वदतीत्यर्थः । तादृशं वाक्यान्तरं चोदाहरति **सर्वाणीति** । निखिलनामरूपात्मकप्रपञ्चं निर्मायाभिवदनं कुर्वाणो य आस्ते तं विद्वानमृतो भवतीत्यर्थः । द्विरूपं हि ब्रह्मेति प्रतिज्ञाऽनुरोधादुपहितप्रतिपादकवाक्यवदनुपहितप्रतिपादकवाक्यानामपव्याख्यात्रोदाहृतानामुदाहार्यतया तादृशानि यत्र त्वस्य 'सर्वमात्मैवाभूत् । यत्र नान्यत्पश्यति' इत्यादीन्यप्युदाहार्याणि । कण्ठतस्तदनुदाहरणबीजं तु तादृश-वाक्यानामप्युपहितपरत्वस्यैव समर्थिततया तत्रानुपहितपरत्वाभिमतिमात्रमन्यदीयमिति ध्वनयितुम् । आद्येऽर्थे मानं यत्र हि द्वैतमिव भवतीति । सर्वाणीति तु निरुपाधिकब्रह्मणीत्यपि स्थितम् । ब्रह्मणो द्विरूपतायामेक-मेवेत्यादिश्रुतिविरोध इत्यत आह **अविद्याविद्याविषयभेदेनेति** । तत्त्वज्ञानरूपविद्याविरुद्धमिथ्याज्ञानविषयीभूतं कल्पितम् । तत्त्वज्ञानविषयीभूतं निरुपाधिकं तु रूपमेकमेव वास्तवमतो न विरोध इति भावः । ननु चैतन्यैक्यस्यैव वास्तवतयोपास्योपासकभावः ज्ञातृज्ञेयभावश्च कथं सङ्घटनीय इत्यत आह **तत्रेति** । आदिपदं ज्ञातृज्ञेयभाव-सङ्ग्राहकम् । उपहितगोचरोपासनानां मोक्षफलकत्वोपगमेऽनुपहितोपरक्तज्ञानानर्थक्यापत्त्या तासां फलान्तरौप-यिकतामाह **तत्र कानिचिदित्यादिना** । प्रतीकोपासनान्यभ्युदयार्थानि दहरादीनि क्रममुक्त्यर्थानि उद्गीथादीनि कर्मसमृद्ध्यर्थानि । एवं उपहितानुपहितभेदेन रूपद्वैविध्ये सति । **अपेक्षितोपाधिभेदमिति** । ईप्सितानेकफलौप-यिकानेकगुणविशेषितमित्यर्थः । तेनैकगुणोपरागेणोपासनस्यानुपहितप्रतिपत्त्यौपयिकत्वेऽपि फलान्तरानौपयिकतया तत्तत्फलसाधनीभूतनानागुणरूपोपाधिविशेषितोपासनानां सङ्कीर्तनम् । एवमुपहितस्योपास्यतायामपि ज्ञेयताराहित्येन व्यधिकरणप्रकारेणाप्युपासनोपपत्त्या न ज्ञेयभूतनिरुपाधिकवत्पारमार्थ्यप्रसङ्ग इति भावः । **मोक्षशास्त्र इति** ।





मोक्षसाधनीभूतानुपहितगोचरज्ञानं प्रति तदुपाध्यवच्छिन्नावगाहिज्ञानस्य विरोधित्वेन तदनौपयिकतया फलान्तरप्रेप्सया तन्निरूपणस्य च मोक्षशास्त्रत्वविघटकत्वादिति भावः । सार्थात् धनसहितात् वणिजः ।

**॥ इति एतदधिकरणीयस्वपक्षसाधने 'मायावायुक्तयोः उत्तरसूत्रसन्दर्भाक्षेपसमाधानयोः अनुपपत्तिः' ॥**

* * *

**॥ अथ एतदधिकरणीयस्वपक्षसाधने 'अध्यायस्यैकवाक्यत्वे पादभेदप्रयोजनम्' ॥**

३ **सु०—** नन्वेवमध्यायस्य समन्वयप्रतिपादनलक्षणैकार्थत्वेनैकवाक्यत्वे सति पादभेदः किंनिबन्धनः । अवान्तरार्थोपाधिभेदादिति भावेनाह **तत्रेति** ।

**अनु०— तत्रान्यत्रप्रसिद्धानां विष्णावेव समन्वयम् ॥**
**शब्दानां प्रथमे पादे**

चतुर्विधा (हि) वैदिकाः शब्दाः । केचिद्ब्रह्मण्येव प्रसिद्धाः, अन्येऽन्यत्रप्रसिद्धाः, केचिदुभयत्रप्रसिद्धाः, अपरे त्वन्यत्रैवप्रसिद्धा इति । सर्वेऽपि प्रत्येकं नामलिङ्गात्मकतया द्विविधाः । साक्षाद्धर्मिवाचिनो नामात्मकाः, धर्मद्वारा धर्मिणि वर्तमाना लिङ्गात्मकाः । तेषु ब्रह्मणिप्रसिद्धानां समन्वयो न वक्तव्यः, विवादाभावात्, तत्रैव च मीमांसाऽवतारात् । **तत्र** वक्तव्यसमन्वयेषु त्रिविधेषु, शब्देषु **अन्यत्रप्रसिद्धानां** नामात्मकानां शब्दानां, **विष्णावेव समन्वयम्** । **तत्र** प्रथमेऽध्याये । **प्रथमे पादे** वदत्यजः । अन्येषामन्येष्विति तत्र तत्र वक्ष्यति । क्रमनियमे तु हेतुरुपरिष्टाद्वक्ष्यते ।

प्रथमे स्पष्टब्रह्मलिङ्गानां, द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानां समन्वयः, चतुर्थे प्रधानस्य शाब्दत्वनिराकरणमित्ययुक्तम्; द्वितीयतृतीयपादोदाहरणवाक्यानामपि बहुलं स्पष्टब्रह्मलिङ्गत्वात्, द्वितीयतृतीययोर्भेदाभावप्रसङ्गाच्च ।

सगुणनिर्गुणप्राचुर्येण तद्भेद इति कश्चित्, तन्न निराकृतत्वात्, प्रधानशाब्दत्वनिरासस्येक्षत्यधिकरणानन्तर्यं विहाय विक्षेपे कारणाभावाच्च ।

**परि०— वैदिका इति** । वेदगताः । संस्कृता इति यावत् । वेदगतानामेव लोकवेदाधिकरणन्यायेन लौकिकत्वात् । भाषाशब्द एव व्यावर्त्य इति भावः । **साक्षादिति** । रूढयौगिकभेदेन तद्भेद इत्यर्थः । लिङ्गपादे वक्ष्यमाणदिशा आपातत इति योज्यम् । विवृतमेतच्चन्द्रिकायाम् । **धर्मद्वारेति** । धर्मोपस्थितिद्वारैवेत्यर्थः । **तत्रैवेति** । विवादस्थल एवेत्यर्थः । तत्रेति मूलानुवादः, वक्तव्येत्यादि व्याख्या । तत्रेत्यस्यावृत्तिमुपेत्यार्थमाह **तत्र प्रथमेऽध्याय इत्यादि** । **उपरिष्टादिति** । उपासनापाद इत्यर्थः । मायावाद्युक्तपादोपाधीन्निराह **प्रथमे स्पष्टेत्यादि** । स्पष्टत्वं नाम वाक्यान्तरे ब्रह्मपरत्वेन निर्णीतत्वम् । **बहुलं स्पष्टलिङ्गवत्त्वादिति** । तच्च चन्द्रिकायां विवृतम् । **सगुणनिर्गुणेति** । द्वितीये सगुणं ब्रह्म तृतीये निर्गुणं ब्रह्मोच्यत इति पादयोर्भेद इत्यर्थः । **निराकृतत्वादिति** । प्राचुर्येण 'मायावादि' इत्यादिग्रन्थेनेत्यर्थः ।

**यादु०— साक्षाद्धर्मीति** । आपाततो रूढा इत्यर्थः । न तु रूढा एवेति विवक्षितम् । योगरूढानामन्नमयादीनामसङ्ग्रहापत्तेः । आपातत इत्युक्त्या च सर्वेषामपि नाम्नां महायोगाङ्गीकारादसम्भव इति शङ्काऽनवकाशः । **धर्मद्वारेति** । धर्मोपस्थितिद्वारैवेत्यर्थः । तेन योगरूढेष्वन्नमयादिनामसु नातिव्याप्तिः । यत्त्वापाततो यौगिका एवेत्यत्र तात्पर्यमिति व्याख्यानम्, तच्चिन्त्यम् । यौगिकत्वस्यान्तर्यामीत्याद्येकप्रातिपदिकमात्ररूपलिङ्गात्मकशब्देषु सत्त्वेऽपि सर्वेषु भूतेष्वेतमिति यस्मिन्द्यौरित्याद्यनेकपदसमभिव्याहाररूपेषु लिङ्गात्मकेषु शब्देष्वभावात् । धर्मद्वारा धर्म्युपस्थापकत्वस्य च सर्वत्रापि सत्त्वात् । 'एवमेवापातप्रतीत्यनुरोधेनेयमुक्तिः' इति लिङ्गपादीयसुधायाः 'धर्मविशिष्टधर्मिवाचिनाम्' इति, तत्त्वप्रकाशिकायाश्च तात्पर्यं वर्णनीयम्; अतो न कोऽपि विरोध इति । **अन्यत्रप्रसिद्धानामिति** । लोकतोऽन्यत्रैवप्रसिद्धानामित्यर्थः । चतुर्थपादे तु श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानां समन्वयो वक्ष्यते । तेन प्रथमपादे समन्वेतव्यानां यद्यन्यत्रापि प्रसिद्धिरभिप्रेता, तर्हि तृतीयपादसाङ्कर्यं यद्यन्यत्रैव तर्हि चतुर्थपादसाङ्कर्यम् । अन्यत्राप्यन्यत्रैवेत्येतद्विहायान्यत्रप्रसिद्धेर्दुर्निरूपत्वादिति शङ्काऽनवकाशः । एतेषां शब्दानामसङ्कीर्णलक्षणादिकं चन्द्रिकायां द्रष्टव्यम् । **उपरिष्टादिति** । उपासनापाद इत्यर्थः । **द्वितीयतृतीयपादोदाहरणवाक्यानामिति** । द्वितीये 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र ''सर्वं खल्विदं ब्रह्म'' इति जीवेष्वयुक्तस्य सर्वात्मकत्वादेः ''अत्ता चराचर'' इत्यत्रान्यत्र धर्मादन्यत्राधर्मादिति पुण्यपापराहित्यादेः, 'अन्तर' इत्यत्र 'एतदमृतमभयमेतद्ब्रह्मे'त्यमृतत्वादेः 'अन्तर्यामि' इत्यत्र 'एष त आत्मान्तर्याम्यमृतः' इत्यमृतत्वादेः, 'अदृश्यत्वादिगुणक' इत्यादौ 'यः सर्वज्ञ' इति सार्वज्ञ्यादेः ब्रह्मलिङ्गस्य स्पष्टत्वेन, तृतीये च 'द्युभ्वादि' इत्यत्र 'अमृतस्यैष सेतुः', 'यः सर्वज्ञ' इत्यमृतत्वसेतुत्वसार्वज्ञ्यादेः, 'भूमेत्य'त्र 'यत्र नान्यत्पश्य'तीत्यद्वितीयत्वादेः, 'अक्षरमम्बर' इत्यत्र 'अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अस्थूलमनण्वित्यदृश्यत्वास्थूलत्वानणुत्वादेः, 'ईक्षतिकर्मे'त्यादौ परात्परमिति परात्परत्वादेः ब्रह्मलिङ्गस्य स्पष्टतया तदुदाहरणवाक्यानां स्पष्टब्रह्मलिङ्गवत्त्वादित्यर्थः । **सगुणनिर्गुणेति** । द्वितीये सविशेषम्, तृतीये निर्विशेषम्, प्राचुर्येण प्रतिपाद्यम् । अतस्तयोर्भेद इति कल्पतरुकार आहेत्यर्थः । द्वितीयेऽपि 'सर्वत्रे'त्यत्र सर्वं खल्विदं ब्रह्मेत्यविद्यादिसर्वभ्रमाधि-





ष्ठानत्वरूपसार्वात्म्यादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य, तृतीयेऽपि 'द्युभ्वादी'त्यत्र 'तमेवैकं जानथ', 'यदा पश्यः पश्यते रुक्मवर्णमि'ति दृश्यत्वरूपित्वादेर्निर्विशेषेऽनुपपत्तेः सविशेषस्य प्रतिपादनात्प्राचुर्येणेत्युक्तमिति द्रष्टव्यम् । **निराकृतत्वादिति** । सविशेषातिरिक्तनिर्विशेषस्याप्रामाणिकतयेक्षत्यधिकरणे निराकृतत्वान्न तन्निबन्धनः पादभेदः सम्भवतीति भावः । यत्तु यौगिकरूढविषयतया द्वितीयतृतीययोर्भेद इति तेनोक्तम् । तत्तृतीये द्युभ्वाद्यायतनत्वादे-ररूढत्वात्तुच्छमित्युपेक्षितम् ।

**आनन्दः**— ननूत्तरत्र समन्वयव्युत्पादनमेव कर्तव्यम् । अन्यत्रप्रसिद्धानामित्यादि तु असङ्गमित्यत-स्तन्निवर्त्यां शङ्कां दर्शयति **नन्वेवमिति** । ननु तत्रेति निर्धारणे सप्तमी । सा च न युक्ता निर्धार्यमाणाभावात् । सर्वेषामप्यन्यत्रप्रसिद्धत्वेन तदपीति शब्दाभावेनान्यत्रप्रसिद्धेति शब्दग्रहणायोगाच्चेत्यत आह **चतुर्विधा हीति** । भेदकधर्माभावाद् द्वैविध्यमनुपपन्नमित्यत्राह **साक्षादिति** । **तत्रैवेति** । विवादविषय इत्यर्थः । **तत्र वक्तव्येति** । अत्र तत्रेत्येतद् द्वेधा व्याख्यातमिति ज्ञातव्यम् । तथाप्यन्येषां शब्दानां समन्वयस्यानुक्त्या तत्तु समन्वयादिति सकलशब्दसमन्वयप्रतिज्ञा कथमित्यत आह **अन्येषामिति** । तत्कर्म यत्र प्रसिद्धादीनामेवादौ समन्वय उच्यता-मित्यत्राह **क्रमनियम इति** । परोक्तपदार्थानृषय इति **प्रथमे स्पष्टेति** । चतुर्थपदार्थं प्रत्याख्याति **प्रधानस्येति** ।

**श्रीनिधि०— अवान्तरार्थोपाधिभेदादिति** । अवान्तरप्रतिपाद्यलक्षणप्रयोजकभेदादित्यर्थः । **अन्यत्र-प्रसिद्धाः** इत्यत्रान्यत्रैव प्रसिद्धा इत्यर्थः । **नन्वन्यत्रापीति** । तेन न तृतीयसमन्वेतव्येन साङ्कर्यं तर्हि चतुर्थपाद-समन्वेतव्येन साङ्कर्यमिति चेत् न । अन्यत्रैवेत्यस्य लोकतोऽन्यत्रैवेत्यर्थत्वात् । चतुर्थे तु बलत्यादिना अन्यत्रैव प्रसिद्धाः समन्वीयन्त इति न कश्चिद्दोषः । धर्मद्वारा धर्मिणि वर्तमाना इति इदं च योगिकपदवाक्यसाधारणम् । तेन 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र समन्वयीयमानवाक्येनैव धर्मद्वारा धर्मिबोधनान्न कोऽपि दोषः । **उदाहरण-वाक्यानामिति** । उदाहरणत्वेनोपात्तवाक्यानामित्यर्थः । परेणेति च द्रष्टव्यम् । **सगुणनिर्गुणप्राचुर्येणेति** । सगुण-लिङ्गनिर्गुणलिङ्गप्राचुर्येणेत्यर्थः ।

**श०वा०**— निर्धार्यमाणशब्दाभावात्तत्रेति निर्धारणानुपपत्तिः । व्यावर्त्याभावादन्यत्रप्रसिद्धिविशेषणवैयर्थ्यं च । एकोपाधिकथनेऽपि पादचतुष्टयत्वानिर्वाहश्चेत्यत आह **चतुर्विधा हीति** । **वैदिका इति** । उपक्रमादितात्पर्य-लिङ्गप्रमाणकस्य मुख्यवृत्त्या प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वयस्य वैदिकशब्देष्वेव सम्भवाद्वैदिकत्वेन शब्दो विशेषित इति बोध्यम् । **ब्रह्मण्येव प्रसिद्धा इति** । उभयत्रप्रसिद्धेष्वन्तर्भावं वारयितुमत्रावधारणमिति ध्येयम् । यद्यप्यत्र ब्रह्मण्येव प्रसिद्धवत् ब्रह्मणि प्रसिद्धशब्दानामपि सत्त्वात्पाञ्चविध्यमेव सम्भवति । न च ब्रह्मणीत्यनेन ब्रह्मण्येवेति विवक्षणीयम् अन्यथा ब्रह्मण्यपीति पक्षापत्त्योभयत्र प्रसिद्धेष्वन्तर्भावः स्यात् कथं ब्रह्मणि प्रसिद्धानां पार्थक्यमिति वाच्यम् । लोकतो ब्रह्मण्येवप्रसिद्धा ब्रह्मणिप्रसिद्धाः श्रुतिलिङ्गादिभिर्ब्रह्मण्येवप्रसिद्धास्तु ब्रह्मण्येव-प्रसिद्धा इति भेदसम्भवात् । तथाऽपि ब्रह्मणिप्रसिद्धानां ब्रह्मण्येवप्रसिद्धानां चाव्युत्पाद्यसमन्वयत्वेनाभेदविवक्षया चातुर्विध्याभिधानमिति ध्येयम् ।





**अन्यत्रप्रसिद्धा इति**। नन्वन्यत्रेत्यनेनान्यत्रैवेत्येव विवक्षणीयम्। अन्यथाऽन्यत्रापीति पक्षापत्त्योभयत्रप्रसिद्धेष्वन्तर्भावापातात्। न च लोकतोऽन्यत्रैवप्रसिद्धा अन्यत्रप्रसिद्धाः श्रुत्यादिभिरन्यत्रैवप्रसिद्धास्त्वन्यत्रैवप्रसिद्धा अत एव प्रत्यधिकरणं लोकतोऽन्यत्रप्रसिद्धानामिति टीका चतुर्थपादे च श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानामिति भाष्यमिति वाच्यम्। अन्यत्रप्रसिद्धत्वेनाभिमतस्यानन्दमयनाम्नोऽन्यस्मिन्नर्थविशेषे, सर्वगतत्वान्तर्यामित्वादिलिङ्गात्मकशब्दजातस्यान्यत्रादित्यादौ इन्द्राकाशादिशब्दानामिन्द्रादाविव, लोकतोऽप्रसिद्ध्या अन्यत्रप्रसिद्धत्वाभावापातात्। अन्यत्रैवप्रसिद्धाव्यक्तप्रकृत्यादिशब्देष्वपि लोकतोऽन्यत्रप्रसिद्धेः सत्त्वादन्यत्रप्रसिद्धेन्द्राकाशादिशब्देषु च श्रुत्यादिनाऽप्यन्यत्रप्रसिद्धेः सत्त्वात्साङ्कर्यं स्यात्। न च श्रुत्यादिमात्रेणान्यत्रैव प्रसिद्धा अन्यत्रप्रसिद्धाः, प्रबलश्रुत्यादिभिरन्यत्रैव प्रसिद्धा अन्यत्रैवप्रसिद्धा इति भेदः। अव्यक्तादिशब्दानामन्यत्रप्रसिद्धिसाधकावरत्वादीनामिव गुहाप्रविष्टत्वादेरन्यत्रप्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन् ब्रह्मण्यसम्भवेन बलवत्त्वात्। तस्मान्नान्यत्रप्रसिद्धानामन्यत्रैव प्रसिद्धेभ्यो भेदः। न चाप्युभयत्रप्रसिद्धानामन्यत्रप्रसिद्धवादिभ्यो भेदः सम्भवति। द्युभ्वाद्यायतनत्वादीनां प्रकृत्यादौ लोकतोऽप्राप्त्या लोकत उभयत्रप्रसिद्धेरसम्भवात्। नापि श्रुत्यादितः। आनन्दमयादिशब्देष्वपि पूर्वोत्तरपक्षश्रुत्यादिनोभयत्रप्रसिद्धेर्वक्तुं शक्यत्वात्। तत्कथमयं विभाग इति चेन्न। येषां शब्दानां वस्त्वन्तरे लोकप्रसिद्ध्यादेः सत्त्वात्तद्विरोधेन क्वापि ब्रह्मणि वृत्त्यादिकं पूर्वपक्षिणो न सम्मतमत एव येषां विषयवाक्ये आपाततोऽन्यमात्रोपस्थापकत्वमत एव च येषां समन्वयस्यान्योपस्थितिब्रह्मानुपस्थितिभ्यामेवातिप्रतिबन्धस्तेऽन्यत्रप्रसिद्धाः। अत्र च हेतुरूपफलमुखस्य लक्षणत्रयस्य विवक्षितत्वान्न विशेषणवैय्यर्थ्यम्। एवं येषां लोके ब्रह्मणीवान्यत्राप्रयोगाद्व्यक्तिविशेषनिर्धारणाय श्रुत्यन्तरान्वेषणे श्रुत्यन्तरेऽन्यत्रेव ब्रह्मण्यपि प्रयोगात् श्रुत्यन्तरसाधारण्यं वा पूर्वपक्षिणोऽपि सम्मतमत एव येषां विषयवाक्ये आपाततोऽन्योपस्थापनसमये तत्तुल्यतया ब्रह्मोपस्थापकत्वम्, अत एव च येषां समन्वयस्यान्योपस्थितिमात्रेण प्रतिबन्धस्त उभयत्रप्रसिद्धाः। अत्रापि पूर्ववल्लक्षणत्रयविवक्षा द्रष्टव्या। येषां तु पुनर्वस्त्वन्तरे लोकप्रसिद्धिस्तत्परत्वे प्रबलश्रुत्यादिकमप्यस्त्यत एव येषां विषयवाक्ये आपाततोऽत्यन्तमन्यमात्रोपस्थापकत्वम्, अत एव च येषां समन्वयस्यान्योपस्थितिब्रह्मानुपस्थितिभ्यां ब्रह्मपरत्वस्यात्यशक्यकल्पनत्वशङ्कया चातितरां प्रतिबन्धस्तेऽन्यत्रेवप्रसिद्धाः। अत्रापि लक्षणत्रयविवक्षा द्रष्टव्या। तथा हि। अन्यत्रप्रसिद्धानामिन्द्रादिशब्दानां लोकतः सर्वगतत्वादीनां च लोकतोऽन्यत्रप्रसिद्धादित्यश्रुत्यादिसाहचर्येणान्यत्रप्रसिद्धिर्न तूभयत्रप्रसिद्धानामिव ब्रह्मसाधारणश्रुत्यन्तरादिनाऽन्यत्रप्रसिद्धिरिति युक्त एवान्यत्रप्रसिद्धानामुभयत्रप्रसिद्धेभ्यो भेदः। उभयत्रप्रसिद्धानां द्युभ्वाद्यायतनत्वादीनां 'रुद्रो वा व लोकाधारः विष्णावेवोताश्च प्रोताश्चे'त्यादिश्रुत्यन्तरसाधारण्येन, अक्षरादिशब्दानां प्रवृत्तिनिमित्तसाधारण्येन, सदादिशब्दानां विषयवाक्यस्थकारणत्वादिधर्मसाधारण्येन, आकाशादिशब्दानां प्रयोगसाधारण्येन, उभयत्रप्रसिद्धिर्न तु पूर्वपक्षसिद्धान्तन्यायाभ्यां येनान्यत्रप्रसिद्धसाङ्कर्यं स्यात्। श्रुत्यादिसाधारण्येनान्यत्रप्रसिद्धेष्वन्यत्रैवप्रसिद्धेषु सत्त्वेऽपि श्रुत्यादेः प्राबल्यदौर्बल्याभ्यां तद्भेदसिद्धिः। न च प्रागुक्तदोषः। ब्रह्मपरत्वे बहुविप्लवापत्तिरूपतर्कानुगृहीतत्वं श्रुत्यादेः प्राबल्यम्। तच्च चतुर्थपादीयटीकोक्तरीत्याऽव्यक्तादिशब्दानामेवास्तीति युक्त एवान्यत्रप्रसिद्धेन्द्रादिशब्दानामन्यत्रैवप्रसिद्धाव्यक्तादिशब्देभ्यो भेद इति सङ्क्षेपः। विस्तरस्तु चन्द्रिकायां द्रष्टव्यः।





ननु तत्र प्रसिद्धानामव्युत्पाद्यसमन्वयत्वस्य वक्ष्यमाणत्वात्समन्वेतव्याः शब्दास्त्रिविधा एवेति तावन्निष्टङ्कितम् । तथा च त्रिविधानां शब्दानां पादत्रयेणैव समन्वयप्रतिपादनसिद्धेरेकस्य वैयर्थ्यमित्यत आह **सर्वेऽपीति** । यद्यपि सर्वेषामपि नामलिङ्गात्मकत्वकथनं न प्रकृते उपयुक्तम् । एकत्र नामलिङ्गभेदकथनेनाप्युक्तशङ्कापरिहारात् । तथाऽपि वस्तुस्थितिकथनमेवैतदिति ध्येयम् । यद्वा उक्तशङ्कापरिहाराय क्वचिन्नामलिङ्गभेदाश्रयणे प्राप्ते विनिगमनाविरहेणान्यत्रप्रसिद्धेष्वेव वोभयत्रप्रसिद्धेष्वेव वाऽन्यत्रैवप्रसिद्धेष्वेव वा तद्भेदाश्रयणानुपपत्तेः सर्वेषां नामलिङ्गभेदेन द्वैविध्योक्तिरिति ज्ञेयम् । ननु कथं नामलिङ्गभेदः । न च रूढत्वयौगिकत्वाभ्यामिति वाच्यम् । सर्वेषामपि ब्रह्मणि महायोगाङ्गीकारात् । न चापातप्रतीत्या रूढता । अन्नमयादिषु तदसम्भवात् । न च योगरूढियुक्तानि नामानि केवलयौगिकानि तु लिङ्गानीति भेदः । सर्वेषामपि ब्रह्मणि विद्वद्रूढेरित्यत आह **साक्षादिति** । आपाततो निरूढा इत्यर्थः । सर्वेषां नाम्नां ब्रह्मणि महायोगाङ्गीकारेण निरूढत्वाभावेऽप्यापाततो निरूढत्वान्नासम्भव इत्याशयेनापातत इत्युक्तम् । **धर्मेति** । आपाततो रूढिरहिता इत्यर्थः । ततश्च लिङ्गात्मकत्वेनाभिमतानां ब्रह्मणि विद्वद्रूढत्वेन केवलयौगिकत्वाभावेऽप्यापाततो रूढिरहितत्वान्नासम्भव इति द्रष्टव्यम् । ननु चतुर्विधशब्दसमन्वयप्रतिपादकतया पादचतुष्टयनिर्वाहात्किं नामलिङ्गात्मकत्वेन द्वैविध्यकल्पनयेत्यत आह **तेष्विति** । अतो नामलिङ्गभेदाश्रयणमावश्यकमिति भावः । **तत्रैवेति** । विवादविषय एवेत्यर्थः । अन्यथा 'नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्ततेऽपि तु सन्दिग्धेऽर्थे' इति न्यायविरोधप्रसङ्गादिति भावः । शाब्दचातुर्विध्यव्युत्पादनस्य मूलोक्तनिर्धारणोपयोगं दर्शयंस्तत्रेत्यस्यावृत्तिं चाभिप्रेत्य मूलं योजयति **तत्रेत्यादि** । अत्र भाष्ये नामत्वानुक्तावप्युत्तरपादीयानुव्याख्याने समन्वेतव्यानां लिङ्गात्मकानामिति लिङ्गत्वाभिधानेनैवैतत्पादे समन्वेतव्यानां नामत्वसिद्धेर्न पृथक् तदभिधानमावश्यकमित्याशयेन सिद्धार्थकथनं **नामात्मकानामिति** । **अन्येषामिति** । अन्यत्रप्रसिद्धलिङ्गात्मकोभयत्रप्रसिद्धनामलिङ्गात्मकान्यत्रैवप्रसिद्धनामलिङ्गात्मकानामित्यर्थः । **तत्र तत्रेति** । तेषु पादेष्वित्यर्थः । **वक्ष्यतीति** । 'लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे', 'तत्रान्यत्रप्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः' इत्यादिनेति शेषः । न चैवमन्यत्रप्रसिद्धेष्विवोभयत्र प्रसिद्धादावपि नामलिङ्गभेदाश्रयणेन पादभेद आश्रयणीयः स्यात् । अन्यथाऽन्यत्रप्रसिद्धेष्वपि तदाश्रयणमनर्थकमिति वाच्यम् । अध्याये पादचतुष्टयादिनियमसंरक्षणायान्यत्रप्रसिद्धेषु तद्विभागाश्रयणस्योभयत्रप्रसिद्धेषु तदनाश्रयणस्य चोपपन्नत्वात् । अन्यथा त्रिपादीत्वषट्पादीत्वप्रसङ्गेन प्रमितस्य पादचतुष्टयत्वस्य पादाष्टकत्वस्य वा हानिप्रसङ्गात् । यद्वा । नाम्नां प्राधान्याल्लिङ्गानां च द्वितीये समन्वयोक्त्या बुद्धिस्थत्वादुभयानुसरणाय तत्र भेदो नाश्रितः । वस्तुतस्त्वापातसिद्धं नामलिङ्गयोर्भेदमाश्रित्याद्यद्वितीययोर्भेदः कृतः । इदानीं त्वापातप्रसिद्धितिरस्कारेण तत्रोक्तमहायोगविद्वद्रूढिभ्यामेकीकृतत्वान्न भिन्नपादनिवेशार्हतेति दर्शयितुं न तत्र भेद आश्रित इत्यवधेयम् । ननु महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्ये ह्यन्यत्रैवप्रसिद्धानां शब्दानां प्राथम्यं स्यात् । सोपानारोहणन्यायेनाननतिप्रयत्नसाध्यस्य प्राथम्ये तूभयत्रप्रसिद्धानां प्राथम्यं स्यादित्यन्यत्रप्रसिद्धानां पूर्वं समन्वयः, तत्रापि नाम्नां पूर्वमनन्तरं लिङ्गानां तदनन्तरमुभयत्रप्रसिद्धानामन्ते अन्यत्रैवप्रसिद्धानामिति क्रमस्य सर्वथाऽनुपपत्तिरित्यत आह **क्रमनियम इति** । **उपरिष्टादिति** । तृतीयस्य तृतीय इत्यर्थः । **वक्ष्यत इति** । 'तत्र प्रथमतोऽन्यत्रप्रसिद्धानां समन्वयः । शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत् । इतोऽत्यभ्यधिकत्वेऽपि तुर्यपादोदितस्य तु ।





महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि । दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽञ्जसा' इत्यादिनेति शेषः । पादत्रयप्रतिपाद्यशब्दानां चतुर्थपादव्युत्पाद्यशब्दानां मध्ये च सोपानारोहणन्यायेनानतिप्रयत्नसाध्यस्य, पादत्रयव्युत्पाद्यशब्दमध्ये महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य, प्राथम्यविवक्षणाद्युक्तः पादक्रम इत्याशयः ।

ननु परोक्तपादार्थानामभिमतत्वे पृथक् तदभिधानवैयर्थ्यप्रसङ्गादनभिमतत्वमेव वाच्यम् । तथा चानभिमतपादार्थादूषणान्न्यूनत्वमित्यतो 'नान्यथा तददृष्टेः' इति भाष्य एव तद्दूषणादत्रादूषणं न दोषायेत्याशयेन भाष्येण तन्निरासलाभमुपवर्णयितुं तदनुवदति **प्रथम इत्यादिना** । तददृष्टेरिति भाष्यं हेतुतया योजयति **द्वितीयतृतीयेति** । यथा 'अन्तस्तद्धर्मोपदेशादि'त्यस्य विषयवाक्ये 'सैवर्क् तत्साम तदुक्थं तद्यजुः' इति सर्वात्मकत्वं, 'सर्वेभ्यः पाप्मभ्य उदित' इति सर्वपापराहित्यं च ब्रह्मलिङ्गं स्पष्टमस्ति । तथा द्वितीये 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्मे'ति जीवेष्वसम्भावितस्य सार्वात्म्यादेः 'अत्ते'त्यत्र 'अन्यत्र धर्मादन्यत्राधर्मादि'ति पुण्यपापराहित्यादेः 'अन्तर' इत्यत्रैतत् 'अमृतमभयमेतद्ब्रह्म' इत्यमृतत्वादेः 'अन्तर्यामी'त्यत्र 'एष ते आत्माऽन्तर्याम्यमृतः' इत्यमृतत्वादेः 'अदृश्यत्वादी'त्यादौ 'यः सर्वज्ञ' इति सार्वज्ञादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात्तृतीयेऽपि 'द्युभ्वादी'त्यत्र 'अमृतस्यैष सेतुरि'त्यमृतसेतुत्वादेः 'भूमे'त्यत्र 'यत्र नान्यत्पश्यती'त्यद्वितीयत्वादेः 'अक्षरमि'त्यत्र 'अदृष्टं द्रष्टृ'त्याद्यस्थूलानणुत्वादेः 'ईक्षतिकर्मे'त्यादौ परात्परमिति परात्परत्वादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात् तदुदाहरणवाक्यानामपि स्पष्टब्रह्मलिङ्गत्वादित्यर्थः । **भेदभावप्रसङ्गाच्चेति** । उभयत्राप्यस्पष्टब्रह्मलिङ्गानामेवोदाहरणत्वेनार्थैकत्वादित्यर्थः । **सगुणनिर्गुणेति** । द्वितीये सविशेषं तृतीये निर्विशेषं प्रतिपाद्यमतस्तयोर्भेद इति कल्पतरुकार आहेत्यर्थः । द्वितीये 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्म' इत्यविद्यादिसर्वभ्रमाधिष्ठानत्वरूपसार्वात्म्यादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य तृतीये द्युभ्वादीत्यत्र 'तमेवैकं जानथ', 'यदा पश्यः पश्यते रुक्मवर्णमि'ति दृश्यत्वरूपित्वादेर्निर्विशेषेऽनुपपत्त्या सविशेषस्य प्रतिपादनात्कथं सविशेषनिर्विशेषविषयतया भेद इत्यतः प्राचुर्येण द्वितीये सविशेषस्य तृतीये च निर्विशेषस्य प्रतिपादनात्प्राचुर्येण योऽर्थः प्रतिपाद्यते तस्यैव तदर्थतायाः क्लृप्तत्वाद्युक्तः पादभेद इति भावेनोक्तम् **प्राचुर्येणेति** । **निराकृतत्वादिति** । 'सर्वत्रेत्य'त्रैवात्तेत्यत्रापि 'भूताच्च भव्याच्च महतो महीयानि'ति कालत्रयातीतत्वादेः 'अन्तर' इत्यत्र 'कं ब्रह्म खं ब्रह्मे'ति पूर्णसुखत्वादेः 'अन्तर्यामी'त्यत्र 'एष त आत्मे'ति जीवतादात्म्यादेरदृश्यत्वादीत्यादौ 'यत्तदद्रेश्यमि'त्यदृश्यत्वादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य, तृतीयेऽपि 'द्युभ्वादी'त्यत्रेव 'भूमे'त्यत्र 'एवं पश्यन्नि'ति सप्रकारकज्ञानविषयत्वादेः 'अक्षरमि'त्यत्र 'अदृष्टं द्रष्टृश्रुतं श्रोतृ'ति द्रष्टृत्वादेः 'ईक्षतिकर्मे'त्यत्र 'पुरुषमीक्षत' इति दृश्यत्वादेः 'दहर' इत्यादौ 'सत्यकामः सत्यसङ्कल्प' इति कामादेर्निर्विशेषेऽनुपपत्त्या सविशेषस्य प्रतिपादनेन, प्राचुर्येण सविशेषनिर्विशेषविषयतया तद्भेदस्य निराकृतत्वान्निराकृतप्रायत्वान्न तथा भेदो युक्त इति भावः । यद्वा । जन्माधिकरणेक्षत्यधिकरणयोः सविशेषातिरिक्तनिर्विशेषस्य वन्ध्यापुत्रोपमत्वप्रतिपादनेन सविशेषनिर्विशेषभेदस्य निराकृतत्वान्न तन्निबन्धनः पादभेद इति भावः ।

**वा०र०— व्यावर्त्येति** । अन्यत्रप्रसिद्धातिरिक्तकोट्यन्तरानुपस्थित्या व्यावर्त्याभावादित्यर्थः । **एकोपाधीति** । पदचतुष्टयत्वनिर्वाहायावान्तरोपाधिभेदाभिप्राय उक्तः । भाष्ये चोपाध्यन्तरं नोक्तमिति तद्भेदेनैतद्भाष्यात्





तन्निर्वाहायोग इत्यर्थः । **अत आहेति** । लिङ्गात्मकानां शब्दानामित्यादिरूपोत्तरपदगततद्भाष्यानुसारेण बुद्धिस्थानं निर्धार्यमाणत्वाङ्गीकारादुभयत्र प्रसिद्धादेरेव व्यावर्त्यतोपपत्तेरुपाध्यन्तरस्यापि ज्ञातुं शक्यत्वाच्च नानुपपत्तिरित्याशयेन तच्चातुर्विध्यमाहेत्यर्थः । **वैदिकशब्देष्वेवेति** । तेष्वेव प्रकरणादितदन्तादिरूपोपक्रमादेस्तात्पर्यलिङ्गस्य श्रुत्यादिरूपलिङ्गस्य च प्रसक्तिसत्त्वेऽपि लौकिकशब्देषु तदप्रसक्तेरिति भावः । शक्तितात्पर्यविधारणमिति स्थलान्तरे चन्द्रिकादावुक्तेः । **उभयत्रेति** । तेषामपि ब्रह्मणि प्रसिद्धतया तद्ग्रहणेन गृहीतत्वात् पृथग्ग्रहणायोग इत्याशङ्कां वारयितुं ब्रह्मण्येवेत्येवकारार्थः । अधिकसङ्ख्याकत्वप्रसङ्गपराहतत्वान्न मूलोक्तं चातुर्विध्यं युक्तमित्याशयेनाक्षिप्य समाधत्ते **यद्यप्यत्रेत्यादिना** । **इति विवक्षणीयमिति** । तथा च तत्रैवान्तर्भावान्न पार्थक्याशङ्कनं युक्तमित्याशयः । ननु लोकतोऽन्यत्रैवेति चन्द्रिकानुसारेण तत्र तत्रैव प्रसिद्धयोरपि भेदप्रसक्तिं दर्शयति **लोकतो ब्रह्मण्येवेति** । अन्यथा अन्यत्रप्रसिद्धान्यत्रैवप्रसिद्धयोरपि लोकत इत्यादिप्रकारेण भेदो न स्यादिति भावः । अस्तु नामभेदस्तथाप्यव्युत्पाद्यसमन्वयत्वरूपेणैकीकारान्न पाञ्चविध्यप्रसङ्गः । विवादाभावादित्यादिनोक्तरूपस्य मूले वक्ष्यमाणत्वादित्याशयेन समाधत्ते **तथापि ब्रह्मणीति** । न्यूनसङ्ख्याप्रसङ्गेनान्यत्रेत्यादित्रैविध्यमाक्षिपति **नन्वन्यत्रेत्यादिना** । **इत्येव विवक्षणीयमिति** । तथा चान्यत्रैव प्रसिद्धेष्वेवान्तर्भावान्न पार्थक्यं युक्तमिति भावः । **टीकेति** । तत्त्वप्रकाशिकेत्यर्थः । **भाष्यमिति** । सूत्रभाष्यमित्यर्थः । **अर्थविशेष इति** । कोशरूप इत्यर्थः । आनन्दमयादीति चन्द्रिकानुसारिपाठे तु कोशादिरूप इत्यर्थः । **इन्द्राकाशादीति** । इन्द्राकाशादिशब्दानामिन्द्रादौ लोकतः प्रसिद्धिवदानन्दमयादिशब्दानां लोकतः प्रसिद्ध्यभावादिति व्यतिरेकदृष्टान्तः । **अन्यत्रप्रसिद्धत्वाभावेति** । तथा चान्यत्रप्रसिद्धलक्षणमव्याप्तमिति भावः । यद्यपि चन्द्रिकायां प्रत्युतेत्यादिनाऽन्यत्रैवप्रसिद्धलक्षणस्यान्यत्र प्रसिद्धेष्वतिव्याप्तिरप्युक्ता । तथापि विस्तरभयेनेह सङ्कोचाश्रवणादतिव्याप्तिरप्युपलक्षणया बोध्या । तदुपपादनं च तथा चेत्यादिना क्रियमाणमुपलक्षणया बोध्यमिति वदन्ति । वस्तुतस्तु प्रत्युतेत्यनेनेव किञ्चान्यत्रैवप्रसिद्धेत्यनेनाप्यन्यत्रैवप्रसिद्धलक्षणस्य अतिव्याप्तिः चन्द्रिकायामुक्ता । तत्र च प्रत्युतेत्यत्र द्वितीयपादसमन्वेतव्यसर्वगतत्वादेरिव इन्द्रादीनामपि ग्रहणसम्भवेऽपि किञ्चेत्यत्र च इन्द्राकाशादिशब्दानामिव सर्वगतत्वादेरपि ग्रहणासम्भवेऽपि च स्पष्टत्वार्थं पृथक्प्रतिपादनसिद्धा । इह टीकायां किञ्चान्यत्रैव प्रसिद्धाव्यक्तेत्युक्तरीत्यैव अन्यत्रप्रसिद्धलक्षणस्य अन्यत्रैवप्रसिद्धेषु तल्लक्षणस्य च अन्यत्रप्रसिद्धेष्वतिव्याप्तिरित्युभयमपि सिद्ध्यतीत्याशयेन आह **किञ्चान्येति** । चन्द्रिकोक्तदूषणमेव अन्यत्रैवप्रसिद्धाव्यक्तेत्युत्तरवाक्ये प्रतिपाद्यत इति न तदुपलक्षणया सहेत्यवधेयम् । अन्यत्रैवेति वाक्ये च साङ्कर्यं च स्यादिति चशब्दयुक्तः पाठः । तथा च किञ्चेति चन्द्रिकानुसारलाभ इति ज्ञेयम् । तदभावेऽपि तदर्थान्तरभावेन व्याख्येयमित्यप्याहुः ।

पूर्वं क्वचित् श्रुत्यादिनैव अन्यत्रप्रसिद्धशब्दानां समन्वयोक्तावपि एतत्पादीयश्रुत्यादीनां प्राबल्यादिति चतुर्थपादीयतत्त्वप्रकाशिकाद्यनुसारेण अन्यत्रप्रसिद्ध-अन्यत्रैवप्रसिद्धयोः प्राप्तं भेदमाशङ्क्य निराकरोति **न च श्रुत्यादिमात्रेणेति** । अव्यक्तादीत्यादिपदेन दुःखादिशब्दपरिग्रहः । अवरत्वादीनामित्यादिपदेन दुःखादिपरिग्रहः । अवरत्वं चाव्यक्तादिति पञ्चम्युक्तपुरुषगतपरत्वावधित्वाक्षिप्तमिति तस्य साधकतयोक्तिरिति ज्ञेयम् । **गुहाप्रविष्ट-**





**त्वादेरि**त्यत्र अतद्गुणसंविज्ञानबहुव्रीहिणा ऋतपातृत्वादेः परिग्रहः । द्वित्वादीनां बलवत्त्वं च ब्रह्मण्यापाततोऽसम्भव एव । न तु सर्वथाऽसम्भवः । तथा सति सिद्धान्तानुदयप्रसङ्गादिति ज्ञेयम् । ननु लोकत अन्यत्रप्रसिद्धा उभयत्रप्रसिद्धा इत्यङ्गीकारे आनन्दमयादिप्रकृत्यादिशब्देषु तथोभयत्रप्रसिद्धेरभावात् तद्भेदोऽयुक्त एवेत्यतः श्रुत्यादिना अन्यत्रप्रसिद्धा उभयत्रप्रसिद्धा इति लक्षणाङ्गीकार एव अन्यत्रैवप्रसिद्धेभ्यो भेदाभावप्रतिपादनमभिमतमित्याशयेन उभयत्रप्रसिद्धिं लोकतो वा श्रुत्यादितो वेति विकल्प्य तत्राद्यं निराकृत्य श्रुत्यादिनेति पक्षे अन्यत्रप्रसिद्ध-अन्यत्रैवप्रसिद्धेषु तल्लक्षणसत्त्वं प्रतिपादयति । द्युभ्वाद्यायतनत्वादिलिङ्गानां ज्योतिरादिनाम्नश्चेत्यर्थः । **लोकत इति** । यदि हि द्युभ्वाद्यायतनपदात् प्रकृतिरुद्रवायुजीवविष्णूनां प्रतीतिर्लोकस्य स्यात् यदि वा प्रकृत्यादिषु द्युभ्वाद्यायतनपदप्रयोगः स्यात् तदा लोकतो द्युभ्वाद्यायतनत्वलिङ्गस्योभयत्रप्रसिद्धिः स्यात् । एवं ज्योतिरादिशब्दाज्जीवेशयोः प्रतीतिर्लोकस्य यदि भवेत् तच्छब्दस्य तयोः प्रयोगो वा यदि भवेत् तदा ज्योतिरादिनाम्न उभयत्रप्रसिद्धिः स्यान्न चैतत्किञ्चित् । एवं शब्दान्तरेऽपीति भावः । ततश्चाव्याप्तिरिति तात्पर्यम् ।

**आनन्दमयादिशब्देष्विति** । आदिपदेनेन्द्राव्यक्तादिशब्दपरिग्रहः । पूर्वपक्षप्रापकश्रुत्यादिना च विष्णौ प्रसिद्धेर्वक्तुं **शक्यत्वादिति** । अन्यत्रप्रसिद्धानन्दमयादिशब्दस्य अन्यत्रैवप्रसिद्धाव्यक्तादिशब्दस्य चोभयत्र प्रसिद्धत्वापातादित्यर्थः । ततश्चातिव्याप्तिरिति हृदयम् । यस्तानि प्रविभक्तानि हेतुरूपफलैः पृथगिति स्मृतिचरणकार्तिके पृथग्भूतः हेतुरूपफलैः प्रविभक्तत्वेन श्रुतिलिङ्गवाक्यादिज्ञानस्य मीमांसानिरपेक्षवेदाध्ययनमात्रादसिद्धेर्मीमांसासाध्यत्वप्रतिपादनात् तन्न्यायेन पृथग्भूतैर्हेतुरूपफलैः प्रविभक्तत्वेन अन्यत्रप्रसिद्धादिज्ञानं भवतीत्यतस्तदज्ञानार्थं हेतुरूपफलमुखानां त्रयाणामपि लक्षणानामावश्यकत्वमिति मनसि निधाय अन्यत्रप्रसिद्धादेस्त्रीणि त्रीणि लक्षणानि चन्द्रिकायां **एषां शब्दानामित्यादिना** उक्तानि । तत्प्रकारं मनसि निधायात्र पादक्रमानुसारेण विचारस्य प्रक्रान्तत्वाच्चन्द्रिकायां दौर्बल्यक्रमेण लक्षणानामुक्तत्वेऽपि प्रकान्तक्रमानुसारेण स्वयं लक्षणान्याह **येषां शब्दानामित्यादिना** । वस्त्वन्तरे लोकप्रसिद्धेरिति त्विन्द्राकाशादिशब्दाभिप्रायेण सर्वगतत्वाद्यभिप्रायेणादिपदं तस्य चादित्यादिश्रुत्यादिसाहित्येन प्रसिद्धेरित्यर्थः । **ब्रह्मानुपस्थितिभ्यामेवेति** । न तु तथा प्रतिबन्धार्थमधिकमपेक्ष्यमित्येवकारार्थः । वस्त्वन्तरे लोकप्रसिद्ध्यादिविरोधेन क्वापि ब्रह्मणि पूर्वपक्षिणः सम्मतिरहितवृत्त्यादिकत्वे सति अन्यमात्रोपस्थापकत्वे सति ब्रह्मणि समन्वयातिप्रतिबन्धकत्वमिति लक्षणेऽन्यतममात्रेणोत्तरव्यावृत्तिसिद्धेर्विशेषणान्तरवैयर्थ्यान्न विशिष्टं लक्षणं युक्तमित्यत आह **अत्र चेति** । **हेतुमुखं** स्वरूपमुखं फलमुखं चेति मुखशब्दस्य प्रत्येकं सम्बन्धः । अत्र चाद्येन येषां शब्दानामित्यनेन अत एवेत्यतः पूर्वेण हेतुमुखं लक्षणमुक्तम् । द्वितीयेन येषामित्यादिना अत एवेत्यतः पूर्वेण स्वरूपमुखम् । अवशिष्टेन फलमुखमिति विवेकः । एवमुत्तरत्रापि ज्ञेयम् । एतेषां मध्ये स्वरूपमुखानि लक्षणानि अन्यत्रप्रसिद्धादिपदावयवार्थरूपाणीत्यादिकं चन्द्रिकायां द्रष्टव्यम् ।

**एवं येषामिति** । शब्दानामित्यनुवर्तते । प्रवृत्तिनिमित्तादीत्यादिपदेन प्रयोगकारणत्वादेः सङ्ग्रहः । **अत एवेति** । श्रुत्यन्तरादिसाधारण्यादेवेत्यर्थः । **अत एव चेति** । उभयोपस्थापकत्वादेव चेत्यर्थः । विशिष्टलक्षणानङ्गीकारान्न विशेषणान्तरवैयर्थ्यमित्याशयेनाह **अत्रापीति** । पूर्ववदित्यस्य हेतुरूपफलमुखभेदेनेत्यर्थः । **तत्परत्व**





**इति**। वस्त्वन्तरपरत्व इत्यर्थः। **अत एवेति**। अन्यत्रलोकप्रसिद्धे तत्परत्वे बलवच्छ्रुत्याद्युपेतत्वादेवेत्यर्थः। विमर्शे सति विष्णुमात्रबोधकत्वादाह **आपातत इति**। **अत एव चेति**। अन्यपरत्वे प्रबलश्रुत्याद्युपेतत्वादेवेत्यर्थः। **अत्रापीति**। पूर्ववत् त्रिविधलक्षणेषु स्वरूपफलमुखलक्षणयोः अत एव द्वयेन हेतुमूलकत्वकीर्तनात् हेतुमुखलक्षण-प्रदर्शने तन्मूलकपश्चात्तनलक्षणद्वयज्ञानस्य सुशकत्वमित्यभिप्रेत्य हेतुमुखलक्षणान्येवोदाहरणनिष्ठतया दर्शयितुं प्रतिजानीते **तथा हीति**। इन्द्रादिशब्दानां लोकत इत्यस्य अन्यत्रप्रसिद्धिरित्युत्तरेणान्वयः। **लोकतोऽन्यत्रेति**। यद्यपि द्युभ्वाद्यधिकरणीयचन्द्रिकोक्तप्रकारेण सर्वगतत्वादेरपीन्द्राकाशादिशब्दवत्स्वत एव अन्यत्रप्रसिद्धिरस्ति तथाप्यभ्युपगमवादोऽयमित्यवधेयम्। उभयत्रप्रसिद्धानामित्यतःपरं तुशब्दो योज्यः। तेन पूर्वापेक्षया वैलक्षण्यप्रदर्शनाय निर्देशलाभ इति ज्ञेयम्। **विष्णावेवेति**। अत्र च श्रुत्येकदेशोत्कीर्तनेन सर्वे वा एते प्राणाश्च प्राणिनश्चेत्यारभ्यालोकिनश्चेत्यन्ता श्रुतिर्गृहीता। आदिपदेन वायुना वै गौतमसूत्रेण 'अयं च लोकः परश्च लोकः सर्वाणि भूतानि संदृब्धानि भवन्ती'ति वायोः सर्वलोकाश्रयत्वप्रतिपादकश्रुतेः आकाश एव तदोतं च प्रोतं चेति प्रकृतेः सर्वाश्रयत्वप्रतिपादकश्रुतेश्च परिग्रहः। **साधारण्येनेति**। पूर्वत्रिकस्योभयत्र प्रसिद्धिरित्युत्तरेण सम्बन्धः।

**प्रवृत्तिनिमित्तेति**। अविनाशित्वरूपनिमित्तेत्यर्थः। **कारणत्वादी**त्यादिपदेन बाधितत्वपरिग्रहः। **प्रयोगेति**। अवकाशब्रह्मणोः प्रयोगस्य साधारण्येनेत्यर्थः। कम्पनादित्यधिकरणीयलोकप्रसिद्ध्या भगवल्लिङ्गेन च साधारण्यप्रतिपादकतत्त्वप्रकाशिकाविरोधमाशङ्क्य तत्परिहारश्चन्द्रिकायां तदधिकरण एव कृतो ज्ञेय इति भावः। **येनेति**। तथोभयत्रप्रसिद्धेः सर्वत्र वक्तुं शक्यत्वादिति भावः। अन्यत्रैवप्रसिद्धानाम् अन्यत्रप्रसिद्धेभ्यो भेदं दर्शयति **श्रुत्यादिसाधारण्येनेति**। अन्यत्रप्रसिद्धत्वस्योभयत्राविशेषेऽपि तदुभयशब्दस्य अन्यत्रप्रसिद्धत्वसाधकश्रुत्यादेर्न साम्यम्। किन्त्वन्यत्रप्रसिद्धेष्विन्द्राकाशादिशब्देषु अन्यत्रप्रसिद्धिसाधकश्रुत्यादिकं दुर्बलम्। इतरेषु तत्साधक-श्रुत्यादिकं तु प्रबलमिति तयोर्भेदसिद्धिरिति योज्यम्। प्राणस्तथेत्यधिकरणमूलेऽमुख्यया वृत्त्याऽत्र मुख्यप्राणस्य वाच्यत्वं सिद्धान्तिनोऽप्यभ्युपगम्यत इत्यतो मुख्ययेत्युक्तमित्युक्तम्। सिद्धान्ते च मुख्यवाच्यत्वमित्यादि-र्मुख्यपदप्रवेशेनैव व्यवहारः। अन्यत्रैवप्रसिद्धत्वेऽपि यत्रान्यवाचकत्वेऽप्यविरोधस्तत्र अन्यदप्युच्यत इत्येतेन शिष्टा अपरिग्रहा इत्येतद्भाष्योक्तप्रकारोऽप्यस्ति। अन्तस्थत्वाधिकरणचन्द्रिकायामपि इन्द्राग्न्यादिशब्दानां ब्रह्मणि परममुख्यत्वेऽपि यत्र बाधकं तत्र कृतदेवतापरत्वं युक्तमेव। इन्द्रो ह्यजेत्यादाविन्द्रशब्दस्य ब्रह्मपरत्वेऽपीन्द्रस्य तु उत्पाद्यत्वादन्यपरता च बाधकाद्युक्तेत्युक्तम्। समाकर्षाधिकरणपर्यालोचनया तु प्रकरणं प्रतीयते। पादान्त्य-प्राणाधिकरणेत्यादि चोक्तं चन्द्रिकायाम्। द्युभ्वाद्यधिकरणे चाधिकं वक्ष्यते। तथापि पादान्त्यप्राणशब्दस्यापि अन्यत्रैवप्रसिद्धत्वाभावेऽपीत्यादिकमाशङ्क्य प्रायिकत्वादभेदस्येत्यादिरूपेण परिहार्यः। **प्रागुक्त इति**। अव्यक्तादि-शब्दानाम् अन्यत्रप्रसिद्धिसाधकावरत्वादीनामिव गुहां प्रविष्टत्वादेः अन्यत्रप्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन् ब्रह्मण्यसम्भवेन बलवत्त्वादित्युक्तं इत्यर्थः। **बहुविप्लवेति**। तारतम्यकर्मक्रमादिविलयापातरूपविप्लवेत्यर्थः।

नन्वाकाशादिशब्दानामाकाशस्तल्लिङ्गादिति प्रथमे आकाशोऽर्थान्तरत्वादिव्यपदेशादिति तृतीये कारणत्वेन चाकाशादिष्विति चतुर्थे च पादे समन्वयोक्तेः अन्यत्रोभयत्रान्यत्रैव प्रसिद्धता स्यादिति साङ्कर्यं कथं परिहरणीयमित्यत





आह **इति सङ्क्षेप इति**। इहाधिकविचारे ग्रन्थगौरवभयादुपरम्यत इत्याशयः। तर्हि तत्प्रमेयविचारोऽवशिष्ट एव किमित्यतश्चन्द्रिकोक्तप्रकारेण अन्यत्रप्रसिद्धादिलक्षणादिविचारोऽस्माभिः कृतः। इतोऽप्यधिकोपयुक्तविचारस्तु चन्द्रिकायामेव द्रष्टव्य इत्याह **विस्तरस्त्विति**। तत्रैकस्यैव दशाभेदेन त्रितयं युक्तमित्यादेः प्रतिपादनात्। एवं हेतुमुखलक्षणस्य भाष्यटीकादितो लाभप्रकारादिकमपि तत्र द्रष्टव्यमित्याशयः। यद्वा श्रुत्यादेः प्राबल्यं च यद्यप्यापाततो ब्रह्मणीत्यादिना पक्षान्तरनिराकरणपूर्वकं तथापि प्रवृत्तिनिमित्तस्य तदधीनत्वादिनेत्यादिनोक्तप्राबल्यस्वरूपनिरूपणं चन्द्रिकोक्तरीत्याऽवधेयमित्याशयेनाह **विस्तरस्त्विति**। अस्माभिरपि चतुर्थपादे प्राबल्यनिरूपणं चन्द्रिकोक्तरीत्या करिष्यत इति भावः।

**तत्र प्रसिद्धानामिति**। ब्रह्मणि प्रसिद्धानामित्यर्थः। चन्द्रिकानुसारेण तत्रेति व्यवहारः निष्टङ्कितं सिद्धमित्यर्थः। अनेन वक्ष्यमाणत्रैविध्यं सिद्धवत्कृत्येह शङ्कोत्थानात् ननु चतुर्विधेत्युत्तरग्रन्थोत्थाने नानुपपत्तिरिति सूचितम्। **सर्वेषां नामलिङ्गभेदेनेति**। तथा सति तद्भेदनिबन्धनपादबाहुल्यं स्यादिति तु न च एवमन्यत्रप्रसिद्धेष्विवेत्यादिना टीकायामनुपदमेव निराकरिष्यत इति ज्ञेयम्। **न च रूढत्वेति**। प्रथमपादे समन्वितानामाकाशादिशब्दानां यौगिकत्वेन लिङ्गत्वस्य सर्वगतत्वाधिकरणमूले आशङ्क्यमाणतया यौगिकत्वं लिङ्गत्वमिति सिद्धेस्तत्प्रतिद्वन्द्वितया रूढत्वं नामत्वमित्यपि सिद्धमिति भावेनेयमाशङ्केति ज्ञेयम्। **सर्वेषामपि ब्रह्मणीति**। महायोगानङ्गीकारे गुणपूर्त्यलाभेन तदर्थकसमन्वयसमर्थनवैयर्थ्यं स्यात्। प्रकरणात् गुणलाभेन सार्थक्यमिति तु न युक्तम्। वचनवृत्त्यङ्गीकारवैफल्यापत्तेः। यच्छब्दा योगवृत्तय इत्यणुवेदान्ते सर्वेषां यौगिकत्वोक्तेश्च। तथा च सर्वेषां यौगिकत्वाद्रूढत्वाभावेन नामलिङ्गभेदायोग इति भावः। तथापि अन्यत्रप्रसिद्धत्वादिवदापातप्रतीत्यनुरोधेनेयमुक्तिरित्यदोष इति। सर्वगतत्वाधिकरणीययथाश्रुतमूलानुसारेण शङ्कते **न चापातेति**। **तदसम्भवादिति**। तेषामर्थविशेषे आपाततो रूढत्वाभावेन नामत्वं न स्यादिति भावः। **सर्वेषामपीति**। तथा च केवलवैदिकत्वलक्षणस्यासम्भव इति भावः। न च केवलपदेन लौकिकरूढिराहित्याभिधानम्। न तु रूढिमात्रराहित्यस्य विवक्षा। तथा च सर्वशब्दानां ब्रह्मणि विद्वद्रूढिसत्त्वेऽपि लौकिकरूढिराहित्येन यौगिकत्वाभिमतेषु नासम्भव इति वाच्यम्। अन्नमयादिशब्देषु लौकिकरूढिरहितेष्वतिव्याप्त्यवारणात्। तेषां कोशेषु लौकिकरूढेरभावादिति भावः। **आपाततो निरूढा इत्यर्थ इति**। न चान्नमयादिषु तदसम्भवादित्युक्तमिति वाच्यम्। अतल्लक्षणपक्षे तेषां नामत्वाभावस्येष्टत्वात्। योगरूढानि नामानीति लक्षणान्तरे तत्सङ्ग्रहोपपत्तेश्च। अत एवैतल्लक्षणपक्षे आपाततो रूढिरहिता इति धर्मद्वारेत्यस्यार्थकथनं च युक्तम्। अन्नमयादिशब्दानामपि लिङ्गात्मकत्वाङ्गीकारेणालक्ष्यतयाऽतिव्याप्तेरभावात्। न चापाततो यौगिकत्वमेव लिङ्गत्वं तर्ह्युच्यतां विद्वद्रूढानामपि लिङ्गात्मकानां तथात्वेनासम्भवाभावादिति वाच्यम्। तथा सत्यनेकपदसमभिव्याहारात्मकेषु सर्वेषु भूतेष्वेतमित्यादिरूपलिङ्गात्मकशब्देष्वापाततो यौगिकत्वाभावेनाव्याप्तिः स्यादित्यत्र तात्पर्यात्। वक्ष्यति चोत्तरपादादिभागे **एवमिति**। आपाततो रूढिराहित्यमभ्युपगम्यान्नमयादिषु तदसम्भवादिति प्रागुक्तत्वेऽपि शुद्धिप्रार्थनावाक्ये कोशेषु रूढ्यङ्गीकाराभिप्रायेण चन्द्रिकावत् परिहारग्रन्थप्रवृत्तिरिति न दोषः। **आपाततो रूढिरहिता** इत्यादि चन्द्रिकाटीकाव्याख्यावसरे अस्मदुक्तप्रकारेण विशेषविचारः कर्तव्योऽस्ति।





विवादाभावेऽपि मीमांसावताराङ्गीकारे बाधकमाह **नानुपलब्ध इति** । अन्यथेति प्रथमतः पूरणीयम् । **लिङ्गत्वाभिधानेनैवेति** । उपलक्षणं चेदम् । तृतीयाध्यायतृतीयभाष्ये .... इत्युक्तिसत्त्वाच्चेति ज्ञेयम् । **पादचतुष्टयादीति** । आदिपदेनाष्टकसङ्ग्रहः । पूर्वमीमांसायां तृतीयाष्टमदशेषु पादाष्टकत्वदर्शनादिति भावः । उभयप्रसिद्धेष्विति पाठः । प्रसिद्धेष्विति पाठे अन्यत्रैवप्रसिद्धानामुपलक्षणया ग्रहणम् । स्रष्टृत्वेऽपि चतुर्थपादमूलकानुसारेण त्रिपादित्वेत्यादौ त्वतलोरिति पुंशब्दास्तु येन भवति षट्पादादित्वादिप्रसङ्गवारणाय उभयत्रप्रसिद्धान्यत्रैवप्रसिद्धयोस्तद्भेदो विवक्षितः इति निबन्धः । अन्यत्रप्रसिद्धातिरिक्तयोरन्यतरस्मिन्नेव तद्विवक्षया पादचतुष्टयनिर्वाहोपपत्तेरित्यपरितोषादाह **यद्वेति** । **तत्रेति** । उभयप्रसिद्धान्यत्रैवप्रसिद्धयोरित्यर्थः । तर्हि प्राधान्यादेव तृतीयेऽपि पादे भेदाश्रयणायोगः । उभयपुरस्कारस्यावश्यकत्वादित्यपरितोषादाह **वस्तुतस्त्विति** । **इदानीं त्विति** । इदानीं तु न तत्र भेद आश्रित इति सम्बन्धः । भेदाश्रयणे मूलं विघटयितुमुक्तमापातप्रसिद्धिं तिरस्कारेति । तर्ह्यभेदविवक्षाप्रयोजकैकोपाधेरभावात् तदभेदविवक्षायोग इत्यत उक्तं **महायोगेत्यादि** । अनेनैवैकोपाधिक्रोडीकृते प्राग्भेदाश्रयणमङ्गीकारबाधेन वस्तुतस्तु तद्भेदाश्रयणं न युक्तमिति तृतीयचतुर्थयोस्तद्भेदविवक्षायोग इति च सूचयति । तत्र प्रथमतोऽन्यत्रेत्यादिमहामल्लेशभङ्गवदित्यन्तोऽप्यभ्यधिकरणत्वेऽपीत्यादिदुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोंऽजसेत्यन्तोदाहरिष्यमाणानुव्याख्यानानुसारेण सोपानारोहणन्यायेन अनतिप्रयत्नसाध्यस्य प्राथम्यं तत्र निमित्ततयाऽभिमतमिति विकल्पद्वयं मनसि निधाय क्रमेणोत्थाप्य दूषयन् पादक्रमयोगमाशङ्क्य तन्निरासकतयोत्तरवाक्यं योजयति **ननु महामल्लेति** । यथानेकेषु मल्लेषु प्रत्यर्थितयाऽवस्थितेष्वपि भगवता श्रीकृष्णेनातिप्रबलानां चाणूरादिमल्लानामेव प्रथमं भङ्गो विहितस्तन्न्यायेनेत्यर्थः । अन्यत्रप्रसिद्ध्यपेक्षया अन्यत्रैवप्रसिद्धेर्बलवत्वेन बलवत् तत्प्रसिद्धिमतां शब्दानां समन्वयस्यैवातिप्रयत्नसाध्यत्वादिति भावः । **सोपानेति** । प्रथमं स्वल्पसोपानमारुह्यतेऽनन्तरं तदपेक्षया किञ्चित्स्थूलं तदनन्तरं चातिस्थूलम् । तन्न्यायेनेत्यर्थः । **प्राथम्यं स्यादिति** । अन्यत्रप्रसिद्धानां तत्प्रसिद्धिनिरासपूर्वकं भगवत्परत्वप्रतिपादनापेक्षया उभयत्रप्रसिद्धानामन्यत्रप्रसिद्धिनिराकरणमात्रस्यानतिप्रयत्नसाध्यत्वादिति भावः । इतिशब्दो हेतौ । ननु वक्ष्यमाणमहामल्लभङ्गन्यायसोपानारोहणन्याययोरेकैकस्योपादानमयुक्तमित्याशङ्कनात् कथं वक्ष्यमाणानुव्याख्यानेन तत्तत्क्रमनिर्वाह इत्यतः शिष्यसमाधानाय तदनुव्याख्यानाशयस्येह प्रदर्शनेन शङ्कानवकाशं प्रतिपादयति **पादत्रयप्रतिपाद्येति** । अयमर्थः । नात्रैकन्यायादरेण क्रम इत्युच्यते । अपि तु त्रिपाद्योश्चतुर्थपादापेक्षया प्रथमं सोपानारोहणन्यायस्य पुरस्कारः । त्रिपाद्यां तु अन्यत्रप्रसिद्धानां समन्वयस्य प्रागुक्तरीत्याऽतिप्रयत्नसाध्यत्वात् उभयत्रप्रसिद्धशब्दसमन्वयनिरूपणपरतृतीयादाद्यपादद्वयं प्राथम्यम् । अन्यत्रप्रसिद्धेष्वपि नाम्नां प्रधानभूतधर्मिण्येकोक्तरीत्या नामसमन्वयनिरूपणस्य प्राथम्यं नाम पादस्य पादद्वयमध्येऽपि प्राथम्यं लिङ्गपादस्य तु तदानन्तर्यम् । तथा चोक्तप्रकारेण न्यायद्वयाश्रयणेन पादक्रमो युक्त इति ।

**पृथक्तदभिधानेति** । अनुभाष्य इति शेषः । **अनभिमतत्वमिति** । अनुभाष्यकारस्येति शेषः । न्यूनत्वमित्यत्राप्यनुभाष्य इति शेषः । **भाष्य एवेति** । सूत्रभाष्य एवेत्यर्थः । **उपवर्णयितुमित्यादि** । तदनूद्य भाष्येण तन्निरासलाभमुपवर्णयतीत्यर्थः । **तददृष्टेरिति भाष्यमिति** । बहुलं स्पष्टब्रह्मलिङ्गत्वादित्यनेन मूलेनास्पष्टत्वाभावस्यैव





प्रतिपादनलाभादस्पष्टत्वाददृष्टेरिति भाष्यार्थसूचनं तस्य हेतुतया योजने लाभ इत्याशयः । चन्द्रिकोक्तरीत्योपपादयति **यथेत्यादिना** । यथेत्यनन्तरं प्रथमं इति पूरणीयम् । परमतेऽतस्तदित्यधिकरणविषयवाक्यद्वयस्य स्वीकारात् तद्वाक्यद्वयशेषवाक्ययोः क्रमेण सर्वात्मकत्वं सर्वपापराहित्यं च प्रतिपाद्यत इत्याशयेनोभयकथनमिति ज्ञेयम् । **सर्वात्मादे**रित्यादावादिपदेन तत्तद्वाक्यगतलिङ्गान्तरपरिग्रहः । एवं लिङ्गस्पष्टतामुक्त्वा मूलोपयोगमाह **तदुदाहरणेति** । तत्पादद्वयगताधिकरणोदाहरणेत्यर्थः । अविद्यादिसर्वप्रपञ्चाभेदरूपसर्वात्म्यस्य बाधितत्वादाह **सर्वग्रामाधिष्ठातृत्वेति** । **निर्विशेषस्येति** प्रतिपादनादित्युत्तरेण सम्बन्धः । **सविशेषस्येति** पुनः पठितस्य प्रतिपादनादित्युत्तरेण सम्बन्धः । यद्यपि द्वितीये सर्वत्रेत्यादिना चन्द्रिकायां सर्वात्म्यादेरिव कालत्रयातीतत्वादिरूपतत्तदधिकरणीयवाक्योक्तधर्माणामपि निर्विशेषेऽनुपपत्तिप्रतिपादनम् । तथा तृतीयेऽपि दृश्यत्वरूपित्वादेरिव सप्रकारकज्ञानविषयत्वादिरूपतत्तदधिकरणीयवाक्योक्तधर्माणामपि निर्विशेषेऽनुपपत्तिप्रतिपादनमिति । तथापि प्राचुर्येणेति तत्रानुक्तेः सर्वसङ्ग्रहोपपत्तावपीह मूले प्राचुर्येणेत्युक्त्याऽधिकरणविशेषे सगुणस्य निर्गुणस्य च प्रतिपाद्यत्वाभावस्य परेणैवाङ्गीकारज्ञापनात् तदङ्गीकृतं प्राचुर्येणेत्येतद्व्यावर्त्यतयाऽभिधाय शिष्टानामेव सविशेषनिर्विशेषयोरनुपपत्त्युद्भावनमुचितमित्याशयेन पूर्वं प्राचुर्येणेत्येतद्व्यावर्त्यतया सार्वात्म्यादेः सगुणादावनुपपत्तिं प्रतिपाद्येदानीमधिकरणान्तरविषयवाक्योक्तधर्माणां सविशेषादावनुपपत्तिप्रतिपादनेन परोक्तप्राचुर्यखण्डनप्रकारमाह **सर्वत्रेत्यत्रेवेत्यादिना** । निर्विशेषेत्यस्य प्रतिपादनेनेत्युत्तरेण सम्बन्धः । **सविशेषस्य प्रतिपादनेनेति** । तथा च द्वितीयपादीयलिङ्गानां निर्विशेषनिष्ठतया तृतीयपादीयानां च तेषां सविशेषनिष्ठतया द्वितीये निर्विशेषं प्रतिपाद्यम् । तृतीयेऽपि सविशेषं प्रतिपाद्यमित्यङ्गीकार्यतया प्राप्नोति । तथा च तत्पादयोर्विशेषसविशेषयोरेव प्राचुर्येण प्रतिपादनप्राप्त्या प्राचुर्येण सविशेषनिर्विशेषविषयतया यः परोक्तस्तत्पादयोर्भेदस्तस्येत्यर्थः । प्रागनिराकरणात् व्याख्यातं **निराकृतप्रायत्वादिति** । निराकृतत्वादित्येतत् स्वारस्यानुसारिप्रकारान्तरमाह **यद्वेति** ।

**स०व्र०— साक्षाद्धर्मिवाचिन इति** । रूढा इत्यर्थः । **धर्मद्वारेति** । अवयवार्थद्वारेत्यर्थः । यौगिका इति यावत् । यद्यपि सर्वेऽपि वैदिकाः शब्दाः यौगिका एवास्मन्मते तथाप्यज्ञप्रसिद्ध्यैतदुक्तमित्यवधेयम् । **अन्यत्रप्रसिद्धानामिति** । लोकतोऽन्यत्रप्रसिद्धानामित्यर्थः । चतुर्थपादे तु श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धशब्दसमन्वयः । तेनात्र पादे समन्वेतव्यशब्दानां यद्यन्यत्रापि प्रसिद्धिरभिप्रेता तर्हि तृतीयपादसाङ्कर्यं, यद्यन्यत्रैवेति तर्हि चतुर्थपादसाङ्कर्यं अन्यत्राप्यन्यत्रैवेत्येतद्विहायान्यत्रप्रसिद्धेर्निरूपयितुमशक्यत्वादिति चोद्यानवकाशः । शिष्टं चन्द्रिकायां द्रष्टव्यम् । **उपरिष्टादिति** । तृतीयेऽध्याय इत्यर्थः । **द्वितीयतृतीयपादोदाहरणवाक्यानामिति** । द्वितीये पादे 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र 'सर्वं खल्विदं ब्रह्म' इति जीवेष्वयुक्तस्य सार्वात्म्यादेः 'अत्ता चराचर' इत्यत्र 'अन्यत्रधर्मादि'ति पुण्यपापराहित्यादेः 'अन्तर' इत्यत्र 'एतदमृतमभयमेतद्ब्रह्मे'ति अमृतत्वादेः 'अन्तर्यामी'त्यत्र 'एष त आत्माऽन्तर्याम्यमृतः' इत्यमृतत्वादेः अदृश्यत्वादिगुणकः इत्यादौ 'यः सर्वज्ञः' इति सार्वज्ञादेः ब्रह्मलिङ्गस्य स्पष्टत्वेन, तृतीयपादे च 'द्युभ्वादी'त्यत्र 'अमृतस्यैष सेतुः', 'यः सर्वज्ञः' इति अमृतत्वसेतुत्वसार्वज्ञादेः भूमेत्यत्र यत्र 'नान्यत्पश्यती'त्यद्वितीयत्वादेः । 'अक्षरमम्बरे'त्यत्र 'अदृष्टं द्रष्टृश्रुतं श्रोतृ अस्थूलमनण्वि'त्यदृश्यत्वास्थूलानणुत्वादेः ।





'ईक्षतिकर्मे'त्यादौ 'परात्परमि'ति परात्परत्वादेर्ब्रह्मलिङ्गस्य स्पष्टतया तदुदाहरणवाक्यानामपि स्पष्टब्रह्मलिङ्गवत्वादित्यर्थः।

**विट्ठल०— साक्षाद्धर्मीति**। आपाततो रूढतया प्रतीयमाना इत्यर्थः। अत्र चन्द्रिकायाम् अन्यत्रान्यत्रैवेत्यादि प्रभेदः स्पष्टमुपपादितः। 'तत्रैव' विवादविषये एव। 'उपरिष्टात्' उपासनापादे। परकीयपादभेदं निराचष्टे **प्रथम इत्यादिना**। **द्वितीयतृतीयोदाहरणवाक्यानामिति**। द्वितीये सर्वत्र प्रसिद्धोपदेशादित्यत्र 'सर्वं खल्विदं ब्रह्मे'ति जीवेष्वयुक्तस्य सर्वात्मकत्वादेः 'अत्ता चराचरे'त्यत्र अन्यत्र धर्मादन्यत्राधर्मादिति पुण्यपापराहित्यादेः। एवम् अदृश्यत्वाद्यधिकरणेष्वपि, तथा द्युभ्वादीत्यत्र अमृतस्यैष सेतुरित्यमृतसेतुत्वादेः, भूमेत्यत्र यत्र नान्यत्पश्यति इत्यद्वितीयत्वादेः एवम् अक्षराधिकरणेष्वपि तदुदाहृतवाक्यानां स्पष्टब्रह्मलिङ्गत्वादित्यर्थः। **सगुणनिर्गुणेति**। 'द्वितीये सविशेषं तृतीये निर्विशेषं प्राचुर्येण प्रतिपाद्यमतस्तयोर्भेद इति' इति कल्पतरुकार आहेत्यर्थः।

**चषकः— चतुर्विधा इति**। स्त्रीप्रत्ययान्तोत्तरपदघटितोऽयं षष्ठ्यर्थे सप्तम्यर्थे वा बहुव्रीहिः। 'सङ्ख्याया विधार्थे धा' इति सूत्रव्याख्याऽवसरे विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथा स्यात्तादृशश्चार्थः प्रकार एवेत्याकरोक्त्या विधाशब्दः प्रकारवचनः। स्वाश्रयनिरूपितवृत्तिताऽनवच्छेदकीभूतसमासघटकपूर्वपदार्थताऽवच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्नानां तदुपलक्षितानां वा विधापदोपस्थाप्यप्रकारव्यक्तीनां चैत्रः श्यामो युवा लोहिताक्ष इत्यादाविवैकत्रद्वयमितिरीत्यान्वयबोधेऽपि तदुपलक्षिततत्तद्व्यक्तीनां श्वेतरक्तदण्डवद्भूतलमित्यादाविव शब्दपदोपस्थाप्यप्रातिस्विकव्यक्तिषु प्रत्येकमन्वयोपगमेन क्षत्यनवकाशादिति भावः। **वैदिका इति**। अध्यात्मादित्वाट्ठञ्। वेदगता इत्यर्थः। उपक्रमादिप्रमाणकशक्तितात्पर्यलक्षणसम्बन्धरूपसमन्वयस्य वैदिकशब्देष्वेव सम्भवाद्वेदगतशब्देतरशब्दसामान्यव्यावर्तनाय वैदिकपदोपादानमिति व्याचक्षाणाः। **वैदिका इति**। वेदगताः संस्कृता इति यावत्। वेदगतानामेव लोकवेदाधिकरणन्यायेन लौकिकत्वाद्भाषाशब्दा एवात्र व्यावर्त्यन्त इति भाव इत्यपि स्थितम्। **ब्रह्मण्येवेति**। ब्रह्मेतरनिरूपितशक्तितात्पर्यरूपसम्बन्धवर्जितत्वविशेषितब्रह्मनिरूपिततादृशसबन्धविशेषिता इत्यर्थः। विष्णुतदितरोभयप्रसिद्धिकव्यावर्तनायाऽऽद्यदलोपादानम्। **अन्यत्रेति**। अन्यारादित्यनुशासनादन्यपदार्थतावच्छेदकीभूतभेदान्वयिप्रतियोगिताऽवबोधकपञ्चम्यन्तब्रह्मपदं पूरणीयम्। नन्वन्यत्रैवप्रसिद्धवत्तत्रैवप्रसिद्धा अपि पृथग्वाच्याः। ननु तत्र प्रसिद्धानां समन्वयव्युत्पादनौपयिकसमन्वेतव्यासमन्वेतव्यत्वकोटिकसन्देहानास्कन्दिततया व्युत्पादनीयसमन्वयकताराहित्यस्याभिधास्यमानतया व्युत्पादनीयसमन्वयकानां त्रैविध्यस्य निर्गलिततया पादत्रिकेणैव शब्दत्रिकसमन्वयव्युत्पादनस्य निर्वृत्ततया तुरीयपादानर्थक्यमित्यत आह **सर्वेऽपीति**। तथा च कोषादिव्युत्पादितान्यत्रिकप्रसिद्धिमन्नामात्मकशब्दानां प्रथमे, तादृशलिङ्गात्मकानां द्वितीये, श्रुत्यन्तरादिव्युत्पादितविष्णुतदितरोभयप्रसिद्धिकनामलिङ्गोभयेषां तृतीये, बलवच्छ्रुतिलिङ्गादिव्युत्पादितसावधारणविष्णिवतरप्रसिद्धिकतादृगुभयात्मकानां तुरीये समन्वयव्युत्पादनमिति न तदानर्थक्यमिति भावः। **साक्षाद्धर्मिवाचिन इति**। विष्णुनिरूपितमहायोगविद्वद्रूढिगाहकप्रमाणाप्रतिसन्धानदशायामर्थान्तरनिरूपितसमुदायवृत्तिग्रहविषयत्वरूपं यदापातततो-





रूढत्वं तद्विशेषिता इत्यर्थः । रूढा एवेत्यवधारणस्याविवक्षिततया योगरूढानामन्नमयादीनामपि सङ्ग्रहोऽवसेयः । आपातत इति पदोपादानात्सर्वेषामपि नाम्नां ब्रह्मणि महायोगाङ्गीकारात् तत्र निरूढत्वाभावादसम्भव इति शङ्कायास्तत्र निरूढत्वाभावेऽपि तादृशप्रमाणाप्रतिसंहितिदशायामर्थान्तरनिरूपितसमुदायवृत्तिग्रहविषयतया दर्शितं यदापाततो रूढत्वं तद्राहित्यविशेषिता इत्यनवकाशः । ब्रह्मनिरूपितविद्वद्रूढिविशेषितानां लिङ्गात्मकाभिमतानां केवलयौगिकत्वाभावेऽपि दर्शितापातरूढिराहित्यसत्त्वान्नासम्भव इति भावः । **धर्मद्वारेति** । व्याप्यधर्मोपस्थिति-द्वारैवेत्यर्थः । तेन योगरूढेष्वन्नमयादिनामसु नातिव्याप्तिः । यत्त्वापाततो यौगिका एवेत्यत्र तात्पर्यमिति व्याख्यानं तच्चिन्त्यम् । यौगिकत्वस्यान्तर्यामीत्याद्येकप्रातिपदिकमात्ररूपलिङ्गात्मकशब्देषु सत्त्वेऽपि 'सर्वेषु भूतेष्वेतं इति 'यस्मिन् द्यौः' इत्याद्यनेकपदसमभिव्याहाररूपेषु लिङ्गात्मकेष्वभावात् धर्मद्वारा धर्म्युपस्थापकत्वस्य च सर्वत्रापि सत्त्वात् । 'एवमेवापातप्रतीत्यनुरोधेनेयमुक्तिरि'ति लिङ्गपादीयसुधायाः, धर्मविशिष्टधर्मिवाचिनामिति तत्त्वप्रका-शिकायाश्च तात्पर्यं वर्णनीयमतो न कोऽपि विरोधः इत्यपि व्याकुर्वते । **अन्यत्रप्रसिद्धानामिति** । कोशादि-व्युत्पादितान्यत्रिकप्रसिद्धमत्वरूपं यल्लोकतोऽन्यत्रप्रसिद्धत्वं तद्विशेषितानामित्यर्थः । **वक्ष्यतीति** । 'लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे । तत्रान्यत्रप्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः' इत्यादिनेत्यादिः । समन्वेतव्यत्रिविधशब्दाना-मसङ्कीर्णचान्द्रिकलक्षणानि चन्द्रिकाऽऽनन्दमयनयभावदीधितावस्माभिः स्फुटीकृतान्यवसेयानि । **उपरिष्टादिति** । उपासनापाद इत्यर्थः । **वक्ष्यत इति** । 'तत्र प्रथमतोऽन्यत्रप्रसिद्धानां समन्वयः । शब्दानां वाच्य एवात्र महामल्लेश-भङ्गवत् । इतोऽत्यभ्यधिकत्वेऽपि तुर्यपादोदितस्य तु । महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि । दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोञ्जसा' इत्यादिनेत्यादिः । अद्वैतवाद्यभिहितपादप्रतिपाद्यताऽवच्छेदकधर्माणां 'नान्यथा तददृष्टेरि'ति भाष्य एव प्रतिविहिततयाऽनुव्याकृतौ तदप्रतिविहितिर्न क्षतिमावहतीत्याशयेन तादृग्भाष्याशय-स्फुटीचिकीर्षया परापभाषितमनुवदति **द्वितीयतृतीयेति** । यथा प्रथमपादीयान्तरस्थत्वनयीयविषयवाक्ये 'सैवर्क् तत्साम तदुक्थं तद्यजुरि'ति सार्वात्म्यं, 'सर्वेभ्यः पाप्मभ्य उदित' इति सर्वपापोज्झितत्वं च ब्रह्मलिङ्गं स्पष्टमस्ति तद्वत् द्वितीये 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्मे'ति जीवासम्भावितसार्वात्म्यादेः 'अत्ते'त्यत्र 'अन्यत्रधर्मादन्यत्रा-धर्माधर्मादिति पुण्यपापराहित्यादेः 'अन्तर' इत्यत्र 'एतदमृतमभयमेतद्ब्रह्मे'त्यमृतत्वादेः 'अन्तर्यामी'त्यत्र 'एष त आत्मान्तर्याम्यमृत' इत्यमृतत्वादेः 'अदृश्यत्वादी'त्यादौ 'यः सर्वज्ञ' इति सार्वज्ञादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात् । तृतीयेऽपि 'द्युभ्वादी'त्यत्र 'अमृतस्यैष सेतुरि'त्यमृतसेतुत्वादेः 'भूमे'त्यत्र 'यत्र नान्यत्पश्यती'त्यद्वितीयत्वादेः 'अक्षर'मित्यत्र 'अदृष्टं द्रष्ट्रि'त्याद्यस्थूलानणुत्वादेः 'ईक्षतिकर्मे'त्यादौ 'परात्परमि'ति परत्परत्वादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात् तदुदाहरणवाक्यानामपि स्पष्टब्रह्मलिङ्गवत्वादित्यर्थः । **भेदाभावप्रसङ्गाच्चेति** । अस्पष्टब्रह्मलिङ्गानामेव द्वितीयतृतीयोदाहार्यतायामर्थैक्यात् तयोर्भेदो न स्यादित्यर्थः । द्वितीये सविशेषं तृतीये निर्विशेषं प्रतिपाद्यमत-स्तयोर्भेद इति कल्पतरुकारमतं प्रतिविधित्सुरनुवदति **सगुणेति** । द्वितीयेऽपि 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्म' इति सर्वभ्रमाधिष्ठानत्वरूपसार्वात्म्यादेः सविशेषेऽनन्वयेन निर्विशेषस्य, तृतीयेऽपि 'द्युभ्वादी'त्यत्र 'तमेवैकं जानथ' 'यदापश्यः पश्यते रुक्मवर्णमि'ति दृश्यत्वरूपित्वादेर्निर्विशेषेऽनन्विततया सविशेषस्य प्रतिपादनात्प्राचुर्य-पदोपादानम् । **निराकृतत्वादिति** । द्वितीयेऽपि 'सर्वत्रे'त्यत्र 'अत्ते'त्यत्र च 'भूताच्च भव्याच्च', 'महतो महीयान्' इति





कालत्रयातीतत्वादेः 'अन्तर' इत्यत्र 'कं ब्रह्म खं ब्रह्म' इति पूर्णसुखत्वादेः 'अन्तर्यामी'त्यत्र 'एष त आत्मा' इति जीवतादात्म्यादेः 'अदृश्यत्वादी'त्यादौ 'यत्तदद्रेश्यमि'त्यदृश्यत्वादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य, तृतीये 'द्युभ्वादी'त्यत्रेव 'भूमे'त्यत्र 'एवं पश्यन्' इति सप्रकारकज्ञानविषयत्वादेः 'अक्षरमि'त्यत्र 'अदृष्टं द्रष्टृश्रुतं श्रोत्रि'ति दृश्यत्वादेः 'ईक्षतिकर्म' इत्यत्र 'पुरुषमीक्षत' इति दृश्यत्वादेः 'दहर' इत्यादौ 'सत्यकामः सत्यसङ्कल्पः' इति कामादेर्निर्विशेषेऽनन्वयेन सविशेषप्रतिपादनप्राचुर्येण सविशेषनिर्विशेषत्वनिबन्धनभेदस्यापहस्तितदेश्यत्वान्न तथा भेदो युक्त इति भावः। इति व्याचक्षते। सविशेषातिरिक्तनिर्विशेषस्याप्रामाणिकतया ईक्षत्यधिकरणे निराकृतत्वान्न तन्निबन्धनः पादभेदः सम्भवतीति भावः।

**॥ इति एतदधिकरणीयस्वपक्षसाधने**
**'अध्यायस्यैकवाक्यत्वे पादभेदप्रयोजनम्' ॥**

* * *

**॥ अथ एतदधिकरणीयस्वपक्षसाधने**
**'अवशिष्टसप्ताधिकरणानां तद्विभागस्य च प्रयोजनम्' ॥**

४ **सु०—** ननु 'अत्र पादे सप्ताधिकरणानि समन्वयविभागार्थानि। तत्र सप्तानां शब्दानां ब्रह्मणि समन्वयः सिद्ध्येत्। तत्कथमन्यत्रप्रसिद्धानां नामात्मकानां सर्वशब्दानां समन्वयसिद्धिरत्र स्यात्। अन्यथा समन्वयसूत्रेणैवालम्, किमनेनात्यल्पप्रपञ्चनेन' इति। मैवम्। एकैकत्राधिकरणे समानन्यायानामनेकशब्दराशीनां निर्णीयमानत्वात्। वाक्यविशेषग्रहणस्य पूर्वपक्षविशेषोपादानस्य, सिद्धान्तप्रमाणविशेषस्वीकारस्य चोदाहरणार्थत्वात्। प्रत्येक(कं)-निर्णये शास्त्रस्यापर्यवसानप्रसङ्गः, विश्वतोमुखता च सूत्राणां न स्यात्॥ तर्हि निर्णेतव्य-शब्दावच्छेदकोपाधयो वक्तव्याः, अन्यथाऽस्येदमुदाहरणमिति ज्ञातुमशक्यत्वात्, सर्वोदाहरणत्वे च सर्वथाऽधिकरणान्तरानारम्भप्रसङ्गादिति। सत्यम्। सन्ति प्रत्यधिकरणं निर्णेतव्यार्थावच्छेदकोपाधय इत्याशयवानानन्दमयाधिकरणनिर्णेयशब्दोपाधिमाह **गुणीति**।

अनु०— गुणिसामान्यवाचिनाम्।
गुणवाचिनां च प्रथममाह देवः समन्वयम्॥

आनन्दमयादिशब्दा 'हि गुणिसामान्यं वदन्ति। न शतक्रत्वादिशब्देभ्य इवैतेभ्यो गुणिविशेषप्रतीतिरस्ति। ते च मयट्प्रत्ययादिना ब्रह्मणोऽन्यत्प्रत्याययन्ति' इति भवन्त्यत्र-





**प्रसिद्धाः। गुणवाचिनस्त्वानन्दादयः, ते गुणिनि ब्रह्मणि वर्तितुं नार्हन्ति, इत्यन्यत्रप्रसिद्धाः। गुणगुणिनोरभेदस्त्वहिकुण्डलाधिकरण एव साक्षात् सूत्रकृता वक्ष्यते। अभेदेऽपि शब्दादि-साङ्कर्याभावश्चेति।**

**परि०**— चतुर्थपादादिग्रन्थमवतारयति **नन्वत्रेत्यादिना**। विष्वतोमुखता चेति। अनेक-शाखानिर्णायकता चेत्यर्थः। **अवच्छेदकेति**। क्रोडीकार(क)धर्मा इत्यर्थः। कथं तर्हि तेषामन्यत्र-प्रसिद्धत्वमित्यत आह **ते च मयट्प्रत्ययादिनेति**। **गुणवाचिनस्त्वानन्दादय इति**। 'आनन्दो ब्रह्मेति व्यजानात्', 'विज्ञानं यज्ञं तनुते' इत्यादिना श्रुता इत्यर्थः। एतच्चैतेषां गुणवाचकत्वमुपेत्योक्तम्। 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते' इति वक्ष्यमाणदिशा तेषामपि नामैकदेशग्रहणन्यायेन गुणि-वाचित्वात्। नन्वेवं गुणवाचिनां ब्रह्मणि वृत्तिश्चेत्तर्हि तयोरैक्यं स्यात् तथा च आनन्दज्ञानादिशब्दानां पर्यायत्वं आनन्दज्ञानादिसाङ्कर्यं गुणस्य गुणिना साङ्कर्यं च स्यादित्यत आह **गुणगुणिनोरिति**। यद्वा कथं तर्हि गुणवाचिनो गुणिनि ब्रह्मणि समन्वयः तस्य गुणगुण्यैक्यहेतुकत्वात् तस्यात्र नयेऽनुक्तत्वादित्यत आह **गुणगुणिनोरिति**। 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इति भक्तिपादीयाधिकरणे गुणगुण्यभेदो विशेषबलेन साङ्कर्याभावश्च वक्ष्यत इत्यर्थः। तर्हि तेनैवेदं गतार्थमिति चेन्न। गुणिसामान्यवाचिनां समन्वयेऽर्थात्तेषां समन्वयेन तदर्थमेवास्यानारम्भणात्।

**गु०दी०**— **न शतक्रत्वादिशब्देभ्य इव** इत्यत्र कोशेषु प्रयुज्यमाना अपि अन्नमयादिशब्दाः अन्नविकार-त्वादिगुणयोगादेव पाचकयाचकादिशब्दवत् गुणिसामान्यवाचित्वेन प्रयुज्यन्ते न तु रूढ्या। लिङ्गानुशासनादा-वदर्शनात्प्रस्तारितबह्वन्ने पाकस्थानेऽप्यन्नमयशब्दप्रयोगदर्शनाच्चेति भावः।

**यादु०**— **विश्वतोमुखता चेति**। सर्वशाखानिर्णायकतेत्यर्थः। **अवच्छेदकोपाधय इति**। विभाजको-पाधयो वक्तव्या इत्यर्थः। ननु गुणवाचकशब्दानां गुणिनि प्रवृत्तौ, गुणगुणिनोरभेदः स्यादित्यतो नेदमनिष्टमित्याह **गुणगुणिनोरिति**। नन्वभेदे गुणगुणिशब्दयोरपर्यायत्वं न स्यादित्यत आह **अभेदेऽपीति**। शब्दसाङ्कर्याभावो-ऽपर्यायत्वम्। आदिपदादर्थक्रियादिसाङ्कर्याभावः। विलक्षणार्थक्रियादिकारित्वरूपो ग्राह्यः। एतत्सर्वं विशेष-समर्थनेनाहिकुण्डलाधिकरणे सूत्रकृता वक्ष्यत इत्यर्थः।

**वं०प०**— **सर्वोदाहरणत्वे चेति**। एकस्मिन्नधिकरणे एकस्य न्यायस्य सर्वाण्यपि वाक्यान्युदाहरणानीति ज्ञातुं शक्यत इति स्वीकार इत्यर्थः।

**आनन्दः**— ननु गुणिसामान्यवाचिनामित्यत्र बहुवचनग्रहणमयुक्तम्। एकस्मिन्नधिकरणे एकैकशब्दस्य समन्वेतव्यत्वेन बहुशब्दानामसमन्वेतव्यत्वात्। अस्तु वानेकशब्दसमन्वयः तथाप्यवच्छेदक उपाधिर्वक्तव्यः





इत्यतस्तन्निवर्त्यां शङ्कां दर्शयति **नन्वत्रेति**। तर्हि वाक्यविशेषापादनाद्ययुक्तमत्राह **वाक्यविशेषेति**। **अन्यथेति**। अवच्छेदकोपाध्यनुक्ता इत्यर्थः। **सन्ति प्रत्यधिकरणेति**। न चैवमग्रिमाधिकरणोपाध्यनुक्तिः कुत इति वाच्यम्। एतदधिकरणोपाध्युक्त्यैवाधिकरणान्तरेऽप्युपाधिः ज्ञेय इत्यभिप्रायेणात्रोपाधिरुक्त इति भावः। अत एवेत्यत्र यावानित्युक्तम्। नन्वानन्दमयादिशब्दानां गुणिसामान्यवाचित्वे भगवतोऽपि गुणसामान्यत्वेनानन्दमयादिशब्दानां तत्परत्वस्यान्याप्यत्वस्य च सत्त्वेनोभयत्र प्रसिद्धत्वान्न तत्र तत्समवायो युक्त इत्यत आह **ते चेति**। तथापि गुणवाचिनां कथं तदित्यत आह **गुणवाचिन इति**। ननु गुणगुणिनोर्भेदान्न गुणवाचिशब्दानां गुणिपरत्वमत्राह **गुणगुणिनोरिति**। नन्वभेदे गुणशब्देन गुणिग्रहणम्। गुणिशब्देन गुणग्रहणमिति। शब्दसाङ्कर्यं पर्यायत्वं च स्यादित्यत आह **अभेदेऽपीति**। आदिशब्देन व्यवहारप्रत्यययोर्ग्रहणम्। नन्वेवमपि गुणिसामान्यवाचित्वगुणवाचित्वरूपाधिक्यस्योक्तत्वेनैकोपाधेरभावात् कथमनेकशब्दानामनुगम इति चेन्न। तथापि विशेष्यत्वेन विशेषणत्वेन वा गुणप्रतीतिजनकत्वरूपोपाधेर्भावान्न कोऽपि दोष इत्यत्राशयः।

**श्रीनिधि०— विभागार्थानीति**। प्रपञ्चार्थानीत्यर्थः। **उदाहरणार्थत्वादिति**। विवक्षितसमन्वयप्रदर्शनार्थत्वादित्यर्थः। निर्णेतव्यार्थावच्छेदक उपाधय इति निर्णेतव्या ये विषयाः तदवच्छेदकधर्माः इत्यर्थः। निर्णेतव्यशब्दोपाधिमिति निर्णेयशब्दे निर्णयान्न्यूनातिरिक्तवृत्तिधर्ममित्यर्थः। गुणिनि वर्तितुं नार्हन्तीति गुणगुणिनोरभेदादिति भावः। तर्हि कथं गुणवाचिना तत्र समन्वय इत्यत आह **गुणगुणिनोरभेदस्त्विति**। तर्ह्यानन्दः ज्ञानानन्दमयः इत्यादिशब्दानां पर्यायता स्यादित्यत आह **अभेदेऽपीति**। विशेषबलादिति भावः।

**शे०वा०—** माऽस्त्वन्यत्रप्रसिद्धसर्वशब्दसमन्वयसिद्धिः। न चैवं समन्वयप्रपञ्चकत्वानुपपत्तिरिति वाच्यम्। उपात्तशब्दसमन्वयप्रतिपादकत्वेऽपि प्रपञ्चकत्वसम्भवादित्यत आह **अन्यथेति**। अन्यत्रप्रसिद्धनामात्मकसर्वशब्दसमन्वयसिद्ध्यभाव इत्यर्थः। अतिप्रसङ्गपरिहाराय **समानन्यायानामिति**। सूत्रोक्तन्यायसञ्चारविषयाणामित्यर्थः। नन्वेकस्यानेकशब्दराशिनिर्णायकत्वे वाक्यविशेषग्रहणं पूर्वपक्षविशेषोपादानं सिद्धान्तप्रमाणविशेषस्वीकरणं चायुक्तं स्यादित्यत आह **वाक्यविशेषेति**। ननु किमुदाहरणार्थत्वकल्पनया प्रत्येकं तत्तच्छब्दसमन्वयप्रतिपादनमेव किं नाश्रीयत इत्यत आह **प्रत्येकमिति**। ननु तथाऽप्युपात्तशब्दमात्रनिर्णायकत्वाङ्गीकारे बाधकाभावान्नोपलक्षणत्वं युक्तमित्यत आह **विश्वतोमुखता चेति**। सर्वशाखानिर्णायकत्वमित्यर्थः। **अन्यथेति**। अवच्छेदकोपाध्यवचन इत्यर्थः। ननु किमस्येदमुदाहरणमिति ज्ञानेनापि। न चैवं सर्वस्योदाहरणत्वप्रसङ्गः तस्येष्टत्वादित्यत आह **सर्वेति**। एकेनैव सर्वशब्दनिर्णयादिति भावः।

नन्वानन्दमयादिशब्दानां गुणिसामान्यवाचित्वमेव कुतः। तथात्वे वा कथमन्यत्रप्रसिद्धत्वमित्यतस्तदुभयमुपपादयति **आनन्दमयादीति**। 'तत्रानन्दादयो गुणाः। ईशस्यैवेति निर्णीताः' इत्युत्तरभाष्यं मनसि निधाय गुणवाचिनामिति भाष्यं व्याकुर्वन्नेव तेषामन्यत्रप्रसिद्धत्वं चोपपादयति **गुणवाचिन इति**। ननु गुणगुणिनोर्भेदपक्षेऽन्यवाचिनामन्यत्र वर्तितुमनर्हतया अन्यत्रप्रसिद्धत्वस्योक्तरीत्या प्रासावप्यहिकुण्डलाधिकरणे सूत्रकृतैव

गुणगुणिनोर्भेदस्यैवोपपादयिष्यमाणत्वेन गुणगुणिनोरभेदसिद्धेर्गुणवाचिनामप्यानन्दादिशब्दानां गुणिनि ब्रह्मणि वर्तितुमर्हत्वात्कथनमर्हत्वनिबन्धनमन्यत्रप्रसिद्धत्वमित्याशङ्क्य तयोरभेदस्य वक्ष्यमाणत्वेऽपि गुणवाचिनां गुणिनि गुणिवाचिनां च गुणे, वृत्त्यादिरूपसकलसाङ्कर्यपरिहाराय, सविशेषाभेदस्यैव तत्र समर्थनाद्विशेषबलेन गुणवाचिनां गुण एव वृत्तिर्न गुणिनीति सिद्धेर्गुणिनि वर्तितुमनर्हत्वमस्त्येवेति युक्तं तन्निबन्धनमन्यत्रप्रसिद्धत्वमित्याशयेन परिहरति **गुणगुणिनोरित्यादिना**। यद्यपि गुणगुणिनोरभेदः सूत्रकृतैव वक्ष्यते तथाऽपि विशेषबलाच्छब्दादिसाङ्कर्याभावोऽपि वक्ष्यत इति योजना।

**वा०र०— ननु गुणगुणिनोर्भेदेत्यादि**। अत्रैवं योज्यम्। गुणगुणिनोरभेदान्न गुणवाचिनां ब्रह्मणि वर्तितुमनर्हत्वप्रयुक्तमन्यत्रप्रसिद्धत्वं सम्भवति। न च तयोरभेदो जन्माधिकरणादौ तत्र तत्र भाष्याद्युक्तोऽपि न सूत्रकारेणोक्त इति वाच्यम्। अर्थतस्तेन तदनुक्तौ भाष्यादावपि तदुक्त्ययोगादिति चेन्न। साक्षात्तदुक्तिर्नास्ति। तस्याहिकुण्डलाधिकरण एव भविष्यत्वादिति न तदाश्रयेण अन्यत्रप्रसिद्धत्वायोगः। न च उत्तरत्र तथा प्रतिपादनादेवोक्तदोष इति वाच्यम्। तत्राभेदस्येव तत्साङ्कर्याभावस्यापि प्रतिपादनेन विशेषबलात् अन्यत्रप्रसिद्धत्वोपपत्तेरिति। एवं च साक्षादित्यादिसार्थकम्। एतेनाभेदः स्यादित्यादिशङ्का गुणगुणिनोरित्येतत्परिहाराननुगुणेति तथाशङ्कोत्थापनमन्यथाख्यातिरित्थं निरस्तम्। न हि गुणगुणिनोरभेदः स्यादित्यादिशङ्कायां तस्य वक्ष्यमाणत्वोक्तिरेवकारः साक्षात्पदं सूत्रकृतेति च सार्थकम्। एतेनैवाभेदेऽपीत्येतद्वाक्यावतारोऽपि निरस्तः इत्यलम्।

**स०व्र०— अवच्छेदकोपाधय इति**। सङ्ग्राहकासाधारणधर्मा इत्यर्थः। ननु गुणवाचकानां शब्दानां गुणिनि प्रवृत्तौ गुणगुणिनोरभेदः स्यादित्यतो नेदमनिष्टमित्याह **गुणगुणिनोरभेदस्त्विति**। नन्वभेदेऽयं गुणिवाचकोऽयं गुणवाचक इत्यपर्यायत्वरूपमसाङ्कर्यं न स्यादित्यत आह **अभेदेऽपीति**। शब्दसाङ्कर्याभावोऽपर्यायत्वम्। आदिपदार्थस्तु गुणगुणिभावाद्युपपत्तिः। एतत्सर्वमहिकुण्डलाधिकरणे विशेषसमर्थनेन वक्ष्यत इत्यर्थः। यद्वा गुणवाचकानामानन्दादिशब्दानां गुणिनि ब्रह्मणि वृत्तेरसम्भवेनान्यत्रप्रसिद्धिरिति शङ्कायां गुणगुणिभेदनिमित्तत्वेन गुणगुणिनोरभेदप्रतिपादनेनैव तत्परत्वसम्भवेन किमित्यभेदो न व्युत्पाद्यत इति गूढाभिसन्धिना शङ्किते गूढाभिसन्धिरेवोत्तरमाह **गुणगुणिनोरभेदस्त्विति**। तथात्वे तावन्मात्रेणैव तत्परत्वसिद्ध्या गुणवाचिनः पुनः समन्वयप्रतिपादनं व्यर्थमिति पूर्वपक्षिणा स्वाशये उद्घाटिते सिद्धान्ती गुणगुणिनोरभेदेऽपि गुणिगुणवाचिनां पर्यायत्वाभावेन समन्वयासिद्धेः समन्वयप्रतिपादनं सङ्गतमिति वदन् स्वाशयमुद्घाटयति **अभेदेऽपीति**।

**विठ्ठल०— अन्यथेति**। मास्तु नामात्मकसर्वशब्दसमन्वयसिद्धिरित्यङ्गीकारे इत्यर्थः। **समानन्यायानामिति**। तत्तदधिकरणावच्छेदकोपाध्यवच्छिन्नतया तत्रतत्रोदाहृतवाक्यस्य पूर्वपक्षसिद्धान्तन्यायसमानन्यायोपेततया विद्यमानानां शब्दराशीनामित्यर्थः। तर्ह्येकैकाधिकरणेष्वपि विषयवाक्यादीनामनेकेषां भावात् वाक्यविशेषमात्रादिग्रहणं कुत इत्यत आह **वाक्यविशेषेति**। 'विश्वतोमुखते'त्यनेकशाखानिर्णायकेत्यर्थः। 'कस्य' इत्यस्य कियद्भागस्य





इत्यर्थः । **शतक्रत्वादि शब्देभ्य इति वेति** । अत्र यथा इन्द्रोपस्थितिर्न तथा आनन्दमयादिशब्दश्रवणैः धर्मिविशेषप्रतिपत्तिरिति गुणिसामान्यवाचित्वमिति भावः । धर्मिविशेषानुपस्थापकत्वे अन्यत्रप्रसिद्धत्वविरोध इत्यत आह **ते च इति** । धर्मिविशेषानुपस्थापकत्वेऽपि विकारार्थकमयटो ब्रह्मण्यसम्भवात् तदन्यगुणिसामान्योपस्थापकत्वादन्यत्र प्रसिद्धत्वमिति भावः । गुणवाचिनां गुणिनिवृत्त्यनुपपत्तौ कथमेकस्मिन् ब्रह्मणि गुणिवाचिनां गुणवाचिनां च समन्वयो घटत इत्यतोऽन्यत्र गुणपराणां शब्दानां गुणिन्ययोगेऽपि ब्रह्मणि युज्यते । गुणगुणिनोः ब्रह्मण्यभेदादित्याशयेनाह **गुणगुणिनोरिति** । नन्वभेदे गुणगुणिशब्दयोरपर्यायत्वं न स्यादित्यत आह **अभेदेऽपीति** । शब्दसाङ्कर्याभावोऽपर्यायत्वम् । आदिशब्देन गुणिनो ज्ञातत्वेऽपि गुणानामज्ञातत्वादिकं गृह्यते ।

**चषकः**— यत्तु यौगिकरूढविषयतया द्वितीयतृतीययोर्भेद इति तेनोक्तं, तत्तृतीयेऽपि द्युभ्वाद्यायतनत्वादे रूढत्वात्तुच्छमित्युपेक्षितमित्यप्याशयं प्रकाशयति **समन्वयविभागार्थानीति** । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमि'ति कात्यायनवचनात्समन्वयविभागाय इमानीति समासाघटकपदघटितविग्रहकत्वरूपास्वपदविग्रहत्वलक्षणा नित्यसमासता प्रयोजनवाचकार्थपदघटितसमानाधिकरणबहुव्रीहिता वैतस्योपेया । सूत्रघटकशब्दसमन्वयव्युत्पादनेनैव प्रपञ्च्यप्रपञ्चकभावसङ्गतेः सूपपादतयाऽन्यत्रप्रसिद्धसर्वशब्दसमन्वयसिद्ध्यनुपगमेऽपि न क्षतिरित्यत आह **अन्यथेति** । **समानन्यायानामिति** । सूत्रघटकपदप्रत्यायितन्यायसञ्चारविषयत्वमेवातिप्रसङ्गभञ्जकमिति भावः । **प्रत्येकं निर्णय इति** । अन्यत्रप्रसिद्धनामात्मकशब्दत्वाक्रान्ताः यावत्यः शब्दव्यक्तयः प्रत्येकं तत्तद्वृत्तिप्रातिस्विकधर्मावच्छिन्नघटिततया सूत्रणमुपेत्य तत्तद्व्यक्तिनिरूपितशक्तितात्पर्यसम्बन्धव्युत्पादन इत्यर्थः । **विश्वतोमुखता** सर्वशाखानिर्णायकता । **अवच्छेदकोपाधय इति** । अधिकरणान्तरसमन्वेतव्यशब्दव्यावृत्तप्रकृतनयसमन्वेतव्याखिलशब्दवृत्तिधर्माः विभाजकोपाधिपदवाच्या अभिधातव्या इत्यर्थः । **अन्यथा** तादृशधर्मानभिधाने । **उदाहरणमिति** । अधिकरणान्तरसमन्वेतव्यविलक्षणमित्यादिः । **सर्वोदाहरणत्वे** अधिकरणान्तरसमन्वेतव्यानामप्युदाहरणत्वोपगमे । स्वसामानाधिकरण्यस्वावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्योभयसम्बन्धेन किञ्चिद्विशिष्टो यो धर्मस्तदवच्छिन्ननिरूपकताकशक्तिकत्वरूपगुणिसामान्यवाचकतां तादृशोभयसम्बन्धावच्छिन्नकिञ्चिन्निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वरूपैकमात्रवृत्तित्वविशेषितधर्मावच्छिन्नानिरूपितशक्तिकशतक्रत्वादिशब्दव्यावृत्तिपुरस्कारेण प्रकृतनयसमन्वेतव्यशब्देषु दर्शयति **आनन्दमयादिशब्दा हीति** । गुणवाचकशब्दानामपि गुण्यभिधायकतोपगमे गुणगुणिनोरैक्यापत्तिरित्याशङ्कायामापाद्यानिष्ठताघटितसामग्रीविरहादियमापत्तिरेव नोत्पत्तुमर्हतीत्याह **गुणगुणिनोरिति** । अहिकुण्डलनये विशेषसमर्थनेन शब्दपर्यायत्वं विलक्षणार्थक्रियानिर्वाहकत्वमित्यादिकं सूत्रकृतैवाभिधास्यत इत्यर्थः ।

**॥ इति एतदधिकरणीयस्वपक्षसाधने**
**'अवशिष्टसप्ताधिकरणानां तद्विभागस्य च प्रयोजनम्' ॥**

* * *





**॥ अथ एतदधिकरणीयस्वपक्षसाधने**
**'एतदधिकरणगतप्रथमसूत्रानुभाष्यसुधाव्याख्यानानि' ॥**
**॥ तत्रादौ तैत्तिरीये श्रुता आनन्दमयादयः पञ्च, ब्रह्म एव, अभ्यासात् ॥**
**॥ तत्रादाववतरणिकायां पूर्वपक्षः-नान्नमयादयः पञ्चापि ब्रह्म किन्त्वन्यदेव ॥**

५ **सु०—** तैत्तरीयके 'स वा एष पुरुषोऽन्नरसमय' इत्यादिनाऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पठ्यन्ते । तत्र संशयः, 'किमेतेऽन्नमयादयः परमात्मैव, उत तदन्यः कश्चिदि'ति, सर्वत्र ब्रह्मशब्दश्रवणात्तस्य च विष्णावन्यत्र च प्रयोगात् ॥ किं तावत्प्राप्तम् । अन्य एवान्नमयादिशब्दार्थ इति । कुतः । अन्नमयादिशब्दा हि विकारवाचिनः, मयट्प्रत्ययस्य विका(रे)रार्थेऽनुशासनात्(म्) । विकारस्य च शरीरादिकोशेषु सम्भवात्, सर्वविकारात्मकत्वेन प्रकृतौ वोपपत्तेः, जीवानां वा विकाराभिमानिनामन्नमयत्वादिकं युक्तम् 'गौरः श्याम' इत्यादिवत्, अधिष्ठात्रीणां ब्रह्मादिदेवतानां वाऽयं शब्दः सम्भवति, अशनिरिन्द्र इतिवत् । न च विकारत्वं परस्य ब्रह्मणः सम्भवति, निर्विकारोऽक्षरः शुद्ध इत्यादेः ।

यद्यपि विकार इव प्राचुर्येऽपि मयट्प्रत्ययोऽस्ति, तथाऽप्यन्नमयशब्दस्तावद्विकारार्थोऽङ्गीकार्यः, 'ओषधीभ्योऽन्नमन्नात्पुरुषः' इत्योषधिजनितान्नविकारं पुरुषशब्दाभिधेयं शरीरं प्रकृत्य 'स वा एष पुरुषोऽन्नरसमयः' इत्युक्तत्वात् । 'तस्येदमेव शिरः' इत्यपरोक्षतया निर्देशात् । तथा च द्वैविध्यकल्पनाऽनुपपत्तेः सर्वत्र विकारार्थ एवाङ्गीकार्यः ।

किञ्चान्नमयादयः पञ्च, ब्रह्म त्वेकमेव; अतः कथं तदेतैः शब्दैरुच्येत । अपि चैते परस्परमन्यतया शरीरशरीरिभावेनान्तरत्वेन चोच्यन्ते । न चैवं ब्रह्म भवितुमर्हति । न च तर्ह्यानन्दमयोऽस्तु ब्रह्म सर्वान्तरत्वादिति वाच्यम्, विकारप्रवाहपतितत्वात् । अन्नमयाद्यान्तरत्वमात्रेण सर्वान्तरत्वानिश्चयात् ।

किञ्च ब्रह्मविदाप्नोति परमिति प्रकृतं परं ब्रह्म आनन्दमयस्य 'ब्रह्म पुच्छं प्रतिष्ठे'त्यवयवतया प्रतीयते । न चावयव एवावयवी, विरोधात् । अतो न अन्नमयादयः पञ्चापि ब्रह्म किं त्वन्य एवेति ।

**परि०—** आनन्दमयादेः सूत्रे ब्रह्मत्वोक्तेः का प्रसक्तिरित्यतोऽन्यत्र भाष्यकृदुक्तं प्रसञ्जकं वदन्मूलमवतारयति **तैत्तिरीयक इत्यादिना** । संशयबीजमाह **सर्वत्रेत्यादि(ना)** । **अनुशासनादिति** ।





'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधे'ति सप्तमगीताभाष्योक्तेरिति भावः। **शरीरादिकोशेष्विति**। शरीरपदेनान्नविकारदेहग्रहः । आदिपदेन प्राणविकारदेहादिर्ग्राह्यः । तथा चान्नविकारदेहादिरूपकोशेषु जीवाश्रयभूतमञ्जूषारूपेष्वित्यर्थः। **गौर इति**। यथा देहस्य गौरत्वादिना तदभिमानिजीवो गौरादिपदवाच्यः तथाऽन्नविकारदेहाभिमानी जीवोऽन्नविकारदेहवाच्यन्नमयादिशब्देनोच्यत इत्यर्थः । **अशनिरिति** । वज्रस्वामित्वादिन्द्रो यथा वज्रवाचकाशनिपदेनोच्यते तथा ब्रह्मादयस्तन्नियन्तृत्वात्तैः शब्दैरुच्यन्त इत्यर्थः। **प्राचुर्येऽपीति**। प्रागुक्तस्मृतौ प्राचुर्यार्थ इत्यप्युक्तेः। पाणिनिनापि 'तत्प्रकृतवचने मयडि'ति प्राचुर्येण प्रस्तुतमित्यर्थे 'प्रथमासमर्थान्मयड् भवती'ति पञ्चमेऽध्यायेऽनुशासनादिति भावः । मयटो वैयर्थ्यापत्त्या तादात्म्यार्थत्वमशक्यशङ्कमिति न शङ्कितम्। **एते परस्परमिति**। प्राणमयादयश्चत्वार इत्यर्थः। 'तस्माद्वा एतस्मादन्योऽन्तर आत्मा प्राणमय' इति 'तस्यैष एव शारीर आत्मे'त्यादि श्रवणादिति भावः। **किं त्वन्य एवेति**। एतेन कोशा एव प्रकृतिरेवेत्याद्येककोटिनिर्णयेन पूर्वपक्षः, उत कोशाः प्रकृतिर्वेत्याद्यनिर्णयेन, अथ सर्वेऽपीति । नाद्यः । अनेकप्रापकसत्त्वे निर्धारणायोगात् । न द्वितीयः, संशयाविशेषापातात्। नान्त्यः, अनेकार्थकत्वेन वाक्यभेदापत्तेरिति निरस्तम्। अयमेवेति विशिष्यैककोट्यनिर्धारणेऽपि ब्रह्मान्यत्वेनावधारणसम्भवेन संशयाविशेषासम्भवादिति । एवमग्रेऽप्यनेककोटिकपूर्वपक्षस्थले ज्ञेयम्।

**गु०दी०**— यथा यथा वाक्येषु ब्रह्मशब्दस्वरूपमस्ति तथैव विषयत्वेनेत्यर्थलाभेन तत्र तत्र सकृत् सकृत् ब्रह्मशब्दश्रवणादिति भावेनाह **अन्नमयादीति** । यद्यप्यानन्दमये ब्रह्मशब्दाभ्यासोऽप्यस्ति तथापि असाधारणैकब्रह्मशब्दमात्रेणेह भगवद्विषयत्वसिद्धेस्तत्रापि ब्रह्मशब्दश्रवणमेव हेतुः विशिष्टस्य हेतुत्वे व्यर्थविशेषणासिद्धेः तात्पर्यावधारणायैव हि द्विर्ग्रहणम्। तच्च ब्रह्मशब्दश्रवणे एकप्रकरणत्वात् सर्वत्रापि तात्पर्यावधारकमिति श्रुतिसूत्रयोर्हृदयम् ।

**यादु०**— **विकारार्थेऽनुशासनादिति** । मयड्वैतदोर्भाषायामित्यादिना विकारावयवयोरर्थयोर्मयड्विधानादिति भावः। न च तत्र भाषायामिति वचनाद्वेदे विकारार्थे कथं तेन मयट्प्राप्तिरिति वाच्यम्। द्व्यचश्छन्दसीति वेदेऽपि विकारार्थे मयड्विधानात्। विज्ञानानन्दमययोश्च व्याङोः पार्थक्यविवक्षया द्व्यच्कतोपपत्तेः। **गौरः श्याम इत्यादिवदिति**। गौरशरीराभिमानी श्यामशरीराभिमानी देवदत्त इति वक्तव्ये गौरोऽयं श्यामोऽयमिति तदभिमानिनि तच्छब्दो यथेत्यर्थः। **अशनिरिन्द्र इति**। अशनिप्रेरक इन्द्र इति वक्तव्येऽशनिरिन्द्र इति तत्प्रेरके तच्छब्दो यथेत्यर्थः। **प्राचुर्यार्थेऽपीति**। तत्प्रकृतवचने मयडित्यनुशासनादिति भावः। **शरीरशरीरिभावेनेति**। 'तस्यैष एव शरीर आत्मे'त्युक्तत्वादिति भावः । एवमन्योऽन्तर आत्मेत्यनेनान्यत्वमान्तरत्वं चोच्यत इति द्रष्टव्यम्। **सर्वान्तरत्वादिति**। मुख्यमेव ह्यात्मानमुपदिदिक्षु शास्त्रं स्थूलतारारुन्धतीन्यायेन लोकबुद्धिमनुसर-





दन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तताम्रादिप्रतिमावत्ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वपूर्वेण समानमुत्तरमुत्तरमनात्मानं ग्राहयत्सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेश । न चान्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्माऽभिधीयते । तथा चैवं सर्वान्तरत्वादानन्दमयो मुख्यमेव ब्रह्म न द्वारमात्रमिति शङ्कार्थः । आनन्दमयस्य सर्वान्तरत्वं किं तदन्यस्यावचनेनोतान्नमयादिचतुष्कोशान्तरत्वेनोत मिलितेन तदुभयेनेति विकल्पानुपादाय दूषयति **अन्नमयाद्यन्तरत्वमात्रेणेति** । मात्रशब्दसमभिव्याहारेणात्र पक्षत्रयमप्युपात्तमित्यवगन्तव्यम् । अयमर्थः । न तावदाद्यः । यथा बलवान्देवदत्त इति वचने सजातीययज्ञदत्ताद्यपेक्षमेव बलवत्त्वं, सिंहादीनां तु ततो बलवत्त्वमनुक्तमपि गम्यते तथाऽऽनन्दमयस्येतरकोशापेक्षमान्तरत्वम् । ब्रह्म तु ततोऽप्यान्तरमनुक्तमपि गम्यत इत्यपि वक्तुं शक्यत्वेनानन्दमयस्य सर्वान्तरत्वानिश्चयात् । तेन चतुष्कोशान्तरत्वस्यैव सिद्ध्या सर्वान्तरत्वानिश्चयात् । अत एव न तृतीयोऽपीति ।

**वं०प०**— अन्नमयादौ सर्वत्र ब्रह्मशब्दप्रयोग एव सन्देहबीजमिति भावेनाह **सर्वत्र ब्रह्मशब्दश्रवणादिति** । **वचनवृत्त्येति** । आनन्दमयोऽभ्यासादितिवदन्नमयोऽभ्यासादित्यादिरूपवचनवृत्त्येत्यर्थः । **ब्रह्म पुच्छं प्रतिष्ठेतीति** । पुच्छमिति लाङ्गूलत्वभ्रमवारणाय प्रतिष्ठेति विवृतम् । प्रतितिष्ठति आभ्यामिति प्रतिष्ठापादावित्यर्थः ।

**आनन्दः**— ननु समुद्रशायिनमित्येतेन सिद्धान्तमात्रकथनमयुक्तम् । अधिकरणस्य पञ्चावयवत्वात्प्रकृते च विषयादिरूपावयवादेरप्रदर्शनादित्यत आह **तैत्तरीयक इति** । न च भाष्यटीकायां तस्माद्वा एतस्माद्विज्ञानमयादथानन्दमयपरवाक्यस्योदाहृतत्वादत्र तु अन्नरसमय इत्यन्नमयादिपरवाक्यमुदाह्रियत इति टीकयोर्विरोध इति वाच्यम् । अत्रादिमवाक्योदाहरणेन एतावता वाक्यजातस्यात्र विषयत्वमिति ज्ञापितत्वेन विरोधाभावादिसन्देहबीजाभावान्न संशय उपपन्न इत्यत आह **सर्वत्रेति** । अन्नमयादिपञ्चस्वित्यर्थः । **अन्नमयादिशब्द इति** । यद्यप्यत्र प्रकृतिभूतान्नशब्दस्य विकारवाचित्वाभावादन्नमयशब्दस्य तद्वाचित्वमयुक्तम् । तथापि प्रकृतिप्रत्यययोः प्रत्ययस्य प्राधान्यात्तस्य च विकारवाचित्वाद्विशिष्टस्यापि विकारवाचित्वमुक्तमिति ज्ञातव्यम् । **विकारस्य चेति** । न च शरीरादित्ययुक्तम् । विकारशब्दस्य शरीरप्रयोगाभावादिति वाच्यम् । अतद्गुणसंविज्ञानबहुव्रीहि-आश्रयणेन दोषाभावादिति । **प्रकृतौ वेति** । मृद्घट इतिवदित्यर्थः । तर्ह्यन्नमये विकारार्थत्वं आनन्दमये तु कुत इत्यत आह **तथा चेति** । नन्वन्नमयाद्यानन्तत्वेन सर्वान्तरत्वमनुमीयत इत्यत्राह **अन्नमयादीति** । तथा सति प्राणादेरपि सर्वान्तरत्वं स्यात्तथापि किञ्चिदातुरत्वादिति भावः ।

**श्रीनिधि०**— तस्य ब्रह्मत्वज्ञापकं किमित्यत आह **सर्वान्तरत्वादिति** । सर्वान्तर्गतत्वादित्यर्थः । तच्च प्राणमयादीनामन्नमयाद्यन्तर्गतत्वं उक्त्वा आनन्दमयान्तरस्य कस्याप्यकथनात् अवसीयत इति भावः । **विकारप्रवाहपतितत्वादिति** । ......विकारार्थकमयटा स न पठितत्वादित्यर्थः । सर्वान्तरत्वं निरवकाशमित्यत आह **अन्नमयाद्यान्तरत्वमात्रेणेति** । न हि अकथनमात्रेण वस्तुनिर्णयः शक्य इति भावः । इत्यादेरित्यनुक्त्वेत्यादि-





रूपादित्युक्तमिति । यदि एकविषयिन्येव सकृदुक्तिः स्यात् तदा इत्यादि रूपादित्युक्तिरनुपपन्ना स्यात् । इत्यादेरेवं-रूपादित्युक्तिः स्यात् । इत्यादिरूपादिति तु भिन्नप्रकारकत्वमेव ज्ञापयति । न हि समानप्रकारकेषु घटस्तिष्ठतीत्यादि वचनेषु इत्यादिरूपेष्विति व्यपदेशोऽस्तीति भावः । नयचन्द्रिकायां तु मुख्याभ्यासत्वमाश्रितं न च तद्विरोधः अभिप्रायभेदात् ब्रह्मवल्लिमात्रपक्षयेयं टीकोक्तिः । नयचन्द्रिका तु भृगुवल्लिब्रह्मवल्ल्योरेकवाक्यताभिप्रायो भृगुवल्ल्याम् अधीहि भगवो ब्रह्मेत्यादिना अन्नमयादिषु पुनरपि ब्रह्मपदश्रवणात् अस्मिन्पक्षे येऽन्नं ब्रह्मोपासते अन्नं ब्रह्मेति व्यजानाद्युक्तेः एकप्रकारत्वाभावेन इत्यादिरूपादित्युक्तिः घटत एवेति सर्वमनवद्यम् ।

**शे०वा०**— विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गत्वादधिकरणस्य भाष्यकारेण तस्यावश्य-वक्तव्यतयाऽत्राधिकरणे च तदनभिधानाद्भाष्यन्यूनत्वमित्यतः स्पष्टत्वात्तदवचनं न दोषायेत्याशयेन स्वयं विषयसंशयपूर्वपक्षानाह **तैत्तिरीयक इति** । अत्रानन्दमयस्य सूत्रे स्वशब्देनोपादानेऽपि 'येऽन्नं ब्रह्मेत्यादि-रूपादभ्यासात्' 'आनन्दमय इत्याद्यैः' इत्येतत्सूत्रीयानुव्याख्याऽनुसारेणान्नमयादीनां पञ्चानामपि विषयत्वमिति ज्ञापयितुं 'स वा एष पुरुषोऽन्नरसमयः' इत्यादिविषयवाक्योदाहरणं, किमेतेऽन्नमयादय इति संशयव्युत्पादनं च कृतम् । टीकायां तु 'आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वे'ति 'तथाऽपि न त आनन्दमयशब्देनोच्यन्ते' इति सूत्रानुसारिभाष्यानुसारेण 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' इत्यानन्दमयमात्रविषय-वाक्योदाहरणम्; अत्रानन्दमयो विषयः, स किं विष्णुरन्यो वेति संशयप्रदर्शनं च कृतमिति मन्तव्यम् । किमस्य सन्देहस्य बीजमित्यतो ब्रह्मशब्दप्रयोग एवेत्याह **सर्वत्रेति** । अन्नमयादिषु पञ्चस्वपीत्यर्थः । कुतस्तस्य संशयबीजत्वमित्यतः कोटिद्वयसाधारण्यादित्याह **तस्य चेति** । **विकारवाचिन इति** । अन्नादिविकारवाचिन इत्यर्थः । (तस्य विकारः । षष्ठ्यन्ताद्विकारेऽणादयः स्युः । अश्मनो विकारे टिलोपो वक्तव्यः । अश्मनो विकार आश्मनः । भास्मनः । मार्तिकः । अवयवे च प्राण्यौषधिवृक्षेभ्यः । चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः । मौर्वं काण्डं भस्म वा । मूर्वा तृणविशेषः । पैप्पलम् । विकारावयवार्थावधिकृतौ) किमत्र विकारस्य वाचकमित्यतो मयट्शब्द एवेति भावेन तस्य विकारार्थत्वमुपपादयति **मयट्प्रत्ययस्येति** । नन्वन्नादिशब्देभ्यो विकारार्थे मयडेव न प्राप्नोति । 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः', 'नित्यं वृद्धशरादिभ्यः' इति विकारावयवार्थमयड्विधायक-सूत्रयोर्भाषाविषयत्वात्तयोरर्थयोश्छन्दस्यप्राप्तस्य मयटो विधायकस्य द्व्यचश्छन्दसीति सूत्रस्य च द्व्यजभ्य एव शरपर्णादिप्रातिपदिकेभ्यस्तद्विधायकत्वेन तेन प्राणमनःशब्दाभ्यां विकारार्थे मयट्प्राप्तावप्यन्नरसविज्ञानानन्द-शब्देभ्यो बह्वच्केभ्यो विकारार्थे तदप्राप्तेरिति चेन्न । वृद्धशरादिसूत्रगतेन नित्यग्रहणेन तत्प्राप्तिसम्भवात् । न च वृद्धशरादिभ्यो मयटि नित्यत्वसिद्ध्यर्थं तत् । पूर्वसूत्रेण सर्वप्रातिपदिकेभ्यो विकल्पेन मयड्विधानानन्तरं वृद्धशरादि-सूत्रारम्भसामर्थ्यदिव तेभ्यस्तस्य नित्यत्वसिद्धेः । न च वाङ्मयत्वङ्मयादिरूपसिद्ध्यर्थं प्रवृत्तस्य नित्यमेकाच इति व्याकरणान्तरसूत्रस्यैकदेशभूतं नित्यग्रहणमेकदेशद्वारा तत्सूत्रस्मारणायेति योगविभागार्थं तदिति शङ्क्यम् । शरादिग्रहणे मृद्ग्रहणवैयर्थ्यापत्तेः । अतस्तदेव मृद्ग्रहणमेकाजुदाहरणैकदेशार्थत्वात् सर्वेषामेकाचां स्मारकमाश्रयितुं शक्यमिति नित्यग्रहणमतिरिच्यमानं भाषायामेव वृद्धशरादिभ्यो नित्यमित्येतदर्थकं सत् छन्दसि वृद्धशरादिभ्यो-





ऽन्येभ्यश्च प्रातिपदिकेभ्यो यथादर्शनं व्यवस्थितविकल्पार्थमित्यङ्गीकर्तुं युक्तमिति युक्त एव बह्वच्केभ्योऽपि विकारार्थे मयडिति । **प्राचुर्यार्थे मयट्त्वपीति** । 'तत्प्रकृतवचने मयडि'ति सूत्रादित्यर्थः । यद्वा । प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो लेशतोऽनुवृत्तिलाभात्प्रकृतेऽपि विकारार्थः पर्यवस्यतीत्याशयः । यद्वा । हेतुमनुष्येभ्य इत्यनुवर्तमाने मयट्चेति सूत्रेणागतार्थे मयट् । विकार इति त्वार्थिककथनमेवेति ध्येयम् । (तत्प्रकृतवचने मयट् । प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनं भावेऽधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमयम् अपूपमयम् । यवागूमयी । द्वितीयेऽन्नमयो यज्ञः । **प्राचुर्येणेति** । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढस्तथाऽपीह वचनग्रहणादयं विशेषो लभ्यते । तद्धि यादृशस्य प्रकृतस्य लोके मयटा वचनं तत्र यथा स्यादित्येवमर्थम् । **आद्य इति** । प्रथमान्तात्प्रकृते द्योत्ये प्रत्ययः । स्वार्थिकत्वात्प्रकृतितो लिङ्गम् । **द्वितीय इति** । अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम् । ल्युटोक्तमधिकरणत्वं तु मयडर्थः । अत एव विशेष्यनिघ्नता, तदाह **अन्नमयो यत इति** । अन्नं प्रकृतमुच्यते तस्मिन्नित्यर्थः । तत आगतः । स्रुघ्नादागतः स्रौघ्नः । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः । समादागतं समरूप्यम् । विषमरूप्यम् । देवदत्तरूप्यम् । पक्षे गहादित्वाच्छः समीयम् । विषमीयम् । देवदत्तीयम् । मयट् च सममयम् । विषममयम् । देवदत्तमयम् । योगविभागो यथासङ्ख्यनिरासार्थः । टो ङीबर्थः) नन्वस्त्वन्नमयादिशब्दानां विकाराभिधायकत्वं तथाऽपि विष्णोरन्नमयादित्वं किं न स्यादित्यतो विकारार्थशब्दवाच्यत्वं हि विकारत्वाद्वा तदभिमानित्वाद्वा तदधिष्ठातृत्वाद्वा भवेत् । न चैतत्प्रकारत्रयं विष्णौ सम्भवतीति वक्तुं पूर्वपक्षकोटिनिविष्टेषूक्तप्रकारेण तत्सम्भवमुपपादयन् देहादिकोशेषु विकारत्वेन तत्सम्भावयति **विकारत्वस्येति** । जडप्रकृतेरपि तदुपादयति **सर्वेति** । एवं विकारत्वेन विकारार्थशब्दवाच्यत्वं देहादीनां सम्भाव्य विकाराभिमानित्वेन जीवानामपि तत्सम्भावयति **जीवानामिति** । उपलक्षणं चैतत् । चित्प्रकृतेरपि विकाराभिमानित्वादन्नमयत्वादिकं युक्तमित्यपि द्रष्टव्यम् । ननु कथं तदभिमानित्वमात्रेण तच्छब्दवाच्यत्वमित्यतो दृष्टत्वादित्याह **गौर इति** । अधिष्ठातृत्वेन तच्छब्दवाच्यत्वं दृष्टान्तोपदर्शनेन सम्भावयति **अशनिरिति** । अशनिप्रेरके इन्द्रेऽशनिरिति शब्दो यथेत्यर्थः । ततश्च विकाराधिष्ठातृतया देवतास्वपि विकारशब्दो युज्यत इति भावः । अस्तु तर्ह्युक्तैरेव हेतुभिर्विष्णोरपि विकारार्थकशब्दवाच्यत्वमित्यत आह **न चेति** । विकारत्वमित्युपलक्षणम् । तदभिमानित्वादिकं चेत्यपि द्रष्टव्यम् । न च निर्विकारतया विकारत्वस्याभिमानाभावेन विकाराभिमानित्वस्य चासम्भवेऽप्यधिष्ठातृत्वोपपत्तेर्विष्णोरन्नमयादित्वमिति वाच्यम् । अधिष्ठातृतया आनन्दमयत्वाभिधानेनानाधिष्ठातॄणां आनन्दमयत्वप्रसङ्गेन सिद्धान्तिनैवं शङ्कितुमशक्यत्वात् । इत्यादेरित्यादिपदेनाभिमानाभावबोधकवाक्यसङ्ग्रहः **प्राचुर्येऽपीति** । तत्प्रकृतवचने मयडित्यनुशासनादिति भावः । नन्वस्तु स वा एष इति परामर्शान्यथाऽनुपपत्त्येदमित्याद्यपरोक्षनिर्देशान्यथाऽनुपपत्त्या चान्नमयस्याब्रह्मत्वं तत्र श्रुतमयटो विकारार्थत्वं च । तथाऽपि प्राणमयादीनां ब्रह्मत्वं तत्र श्रुतानां मयटां च प्राचुर्यार्थत्वं किं न स्यादित्यतस्तथा सति द्विधाकल्पनाप्रसङ्गान्नैवमित्याह **तथा चेति** । **कथमिति** । तथा सति ब्रह्मणोऽप्यनेकत्वप्रसङ्गेनैकमेवेत्यादिश्रुतिविरोधः स्यादिति भावः । **अन्यतयेत्यादि** । 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः' इत्यन्यतयाऽन्तरत्वेन च 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति शरीरशरीरिभावेन च श्रूयन्त इत्यर्थः । **न चैवमिति** । ब्रह्मण एव ब्रह्मान्यत्वस्य ब्रह्मान्तरत्वस्य





शरीरशरीरिभावस्य च विरुद्धत्वादित्यर्थः । **विकारप्रवाहपतितत्वादिति** । आनन्दमयस्य ब्रह्मत्वे तत्र श्रुतस्य मयटः प्राचुर्यार्थत्वं वाच्यमिति विकारार्थकमयट्प्रायपाठबाधः स्यादित्यर्थः । उपलक्षणं चैतत् । अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादित्यपि द्रष्टव्यम् । आनन्दमयस्य सर्वान्तरत्वमन्नमयाद्यान्तरत्वमात्रेणोत तस्मादान्तरस्यान्यस्याश्रवणादिति । नान्त्यः । तत्रापि 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति प्रकृतस्य ब्रह्मणो 'ब्रह्मपुच्छं प्रतिष्ठे'त्यानन्दमयाश्रयतयोक्तत्वेन तदसिद्धेरिति मनसि निधायाद्यं दूषयति **अन्नमयाद्यान्तरत्वमात्रेणेति** । आनन्दमयादान्तरस्य श्रवणेऽप्यन्नमयादि चतुष्कोशान्तरत्वमात्रेणानन्दमयस्य सर्वान्तरत्वनिश्चयश्चेत्तर्हि प्राणमयादेरप्यन्नमयाद्यान्तरत्वमात्रेण सर्वान्तरत्वं स्यादिति भावः । अस्तु सर्वान्तरत्वमानन्दमयस्य किं तावताऽप्याशास्यते । ब्रह्मत्वसिद्धिरिति चेन्न । ब्रह्मणस्तदवयवत्वाभिधानेनानन्दमयस्य ब्रह्मत्वासम्भवात् । न चानन्दमयावयवत्वेनोक्तस्यापरब्रह्मत्वान्न तेनानन्दमयस्याब्रह्मत्वप्राप्तिरिति वाच्यम् । 'ब्रह्मविदाप्नोति परमि'ति प्रकृतस्यैव ब्रह्मणस्तत्र पुच्छत्वाभिधानादित्याह **किञ्चेति** । **अवयवतयेति** । पादाख्यावयवतयेत्यर्थः । अस्तु तर्ह्यानन्दमयतत्पुच्छयोर्द्वयोरपि ब्रह्मत्वमित्यतस्तथा सति स्वयमेव स्वस्यावयव इत्युक्तं स्यान्न च तद्युज्यत इत्याह **न चेति** । तत्र हेतुः **विरोधादिति** । स्वस्य स्वावयवत्वस्य विरुद्धत्वादित्यर्थः । यो यदवयवः स तस्माद्भिद्यत इत्यवयवावयविनोर्भेदस्यैव सिद्धत्वादवयवस्य परमात्मत्वान्नावयविनः परमात्मत्वमिति भावः । न चानन्दमयस्याब्रह्मत्वेऽपि ब्रह्मणस्तत्पुच्छत्वोक्तिरयुक्तैव ब्रह्मणोऽन्यानवयवत्वादिति वाच्यम् । पुच्छशब्दस्याश्रयार्थत्वेन ब्रह्मण आनन्दमयाश्रयत्वस्यैव तत्राभिधानात् । न चैवमवयवत्वोक्तेरेवाभावेन बाधकाभावादानन्दमयस्य ब्रह्मत्वमेव किं नाश्रीयत इति वाच्यम् । अवयवावयविभावस्येवाश्रयाश्रयिभावस्यापि भेदनियतत्वेन स्वस्य स्वाश्रयत्वानुपपत्त्याऽऽश्रयत्वोक्तेरेवानन्दमयस्याब्रह्मत्वसाधकतायां तात्पर्यात् ।

**वा०र०— प्रयोजनरूपपञ्चाङ्गत्वादिति** । इदं च प्रयोजनान्तर्भाविनाधिकरणाङ्गपञ्चकनिरूपणं विषयो विषयश्चैवेति परोक्तिमूलकतत्तद्ग्रन्थकारीयतदङ्गीकारानुसारेण । न तु वास्तवत्वबुद्ध्या । प्रयोजनस्याधिकरणफलतया तदङ्गत्वायोगात् । सन्देहबीजस्यैव च पञ्चमस्य तदङ्गत्वात् । अत एव सन्देहबीजपूर्वस्य टीकादावेवेति । जिज्ञासाधिकरणचन्द्रिकाकारिकाव्याख्यावसरे टीकाकृतसन्देहबीजपूर्वस्येत्येतत्स्वारस्यं वर्णयता प्रयोजनानन्तर्भावमुपपाद्य सन्देहबीजमादायैव पञ्चकमिति निरूपितम् । यत्तु न्यायामृतेऽखण्डार्थताभङ्गे परमते विषयादिपञ्चकाभावादिति प्रतिज्ञातविषयाद्यभावोपपादनावसरे समन्वयाधिकरणचन्द्रिकायां च परमतनिरासावसरे प्रयोजनाभावप्रतिपादनं तत्तु योजनस्य विषयादिपञ्चकान्तर्भाव इति तदेकदेशिमतमाश्रित्य कृतम् । अत एव तन्त्रचूडामण्यामपि उक्तरूपमेकदेशिमतं प्रयोजनस्याधिकरणफलतया तदङ्गत्वाभावादिति युक्त्या प्रदूष्य सन्देहबीजं पञ्चकान्तर्गतमिति मुख्यं मतमुपन्यस्तमिति च टीकाकृता तद्व्याख्यावसर एवोक्तमिति ज्ञातव्यम् । एवमधिकारश्च तद्धानिरिति तृतीयपादीयमूलटीकायामन्यत्राप्येवंजातीयके द्रष्टव्यम् ।

मयड्विकारमुख्यवृत्त्यादिकं कल्पतरूक्तं समर्थयितुं नन्वानन्दशब्दाद्विकारार्थे मयडेव तत्र प्राप्नोतीत्यादिकमाशङ्क्येतेति चेन्न । वृद्धशरादिसूत्रगतेनेत्यादिना परिमले तत्परिहारोऽभिहितः । तदनुसारेण विकारे





मयटमुपपादयति **नन्वत्रादिशब्देभ्य इत्यादिना । मयड् वेति ।** प्रकृतिमात्रान्मयड् वा भवति भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोर्भाषायां विषय इति सूत्रार्थः । अत्र तस्य विकारः । अवयवे च प्राण्यौषधिवृक्षे इत्येतत्सूत्राभ्यां विकार इत्यस्य चानुवृत्तेर्विकल्पादिभ्योऽणित्यादौ व्याख्यानानुसारेणाभिप्रेतत्वात् प्रकृतयोस्तयोरेतयोरिति सूपपदेनोपादानम् । अश्ममयमित्याद्युदाहरणम् । पक्षे तु मौद्गः सूप इति बिल्वाद्यणन्तम् । **आच्छादनेऽनुकार्यासम्भव इति ।** अत्र कृञः पास इत्युणादिसूत्रेण कृधातोः पासप्रत्यये सार्वधातुकार्धेत्यनेन गुणे रपरत्वे जाते स्त्रीति सूत्रेण स्त्रियां ङीषि च निष्पन्नः कार्पासीशब्दो बिल्वादिगणपठितः । तस्मादवयवार्थे बिल्वादिभ्य इत्येनेनाणि यस्येति चेतीकारलोपे आदिवृद्धौ च कार्पासं वस्त्रमिति भवति । रमायां पाठव्यत्यासेऽपि विवक्षितपाठोऽत्र । अनुदात्तादेश्चेत्यञं वापित्वा बिल्वाणि कार्पासं वस्त्रमिति तु रमायामाश्रितम् । **नित्यमिति ।** वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्चोक्तविषये नित्यं मयट् भवतीति सूत्रार्थः । विकाररूपे अवयवरूपे वाऽर्थे मयटो विधायकेति वार्थः । **अप्राप्तस्येति ।** भाषाग्रहणस्यान्यत्र तन्निवर्तकत्वादिति भावः । **द्व्यच इति ।** द्व्यचः प्रातिपदिकाच्छन्दसि विषये मयट् भवतीति सूत्रार्थः । शरादिभ्यः प्राग्विहितो मयट् छन्दसि अप्राप्ते विधीयते । विकाराद्यर्थत्वादिकं तु समानम् । यस्य पर्णमयी जुहूर्भवति । दर्भमयं वासो भवतीत्याद्युदाहरणम् । नित्यग्रहणं किम् । यावता आरम्भसामर्थ्यादिति काशिकानुसारेणाशङ्क्य निराकरोति **न च वृद्धशरादिभ्य इत्यादिना ।** एकाचो नित्यं मयटमिच्छन्ति तदनेन क्रियत इति काशिकाव्याख्यावसरे नित्यं शब्दो ह्युच्यमानः पूर्वाचार्यपठितस्य नित्यशब्दस्य स्मारक इति भाववर्णनं मञ्जर्यां कृतम् । तदनुसन्धायाह **न च वाङ्मयेति ।** एवं च मयट्शब्दस्य शरादिषु पाठो अस्यैव प्रपञ्चार्थो द्रष्टव्य इति मञ्जरीवाक्यार्थलब्धं दूषणमाह **शरादिगण इति ।** 'मोषुवरुणमृन्मयं गृह्याजन्नहंगममि'ति मन्त्रे प्रयोगान्मृन्मयशब्दधातुत्वार्थं मृद्ग्रहणमतिरिच्यमानमिति । अर्थान्तरासम्भवेनानर्थकतामापन्नमित्यर्थः । **इत्येतदर्थकमिति ।** वृद्धशरादिभ्यो भाषायां नित्यमित्येतावन्मात्रार्थत्वे आरम्भसामर्थ्यदिवास्यार्थस्याभ्यनुज्ञातुं शक्यतया तद्वैयर्थ्यप्रसङ्गेऽपि भाषायामेव वृद्धशरादिभ्यो नित्यं भवतीत्युक्ते अवधारणबलादन्यत्र यथादर्शनं मयड्व्यवस्थेत्यर्थोऽपि नित्यग्रहणेन लब्ध इति ज्ञेयम् । भाषायामेवेति तु भाषाग्रहणानुवृत्तिमाश्रित्य । तदनाश्रयणे तु वृद्धशरादिभ्यो द्व्यच्केभ्यो बह्वच्केभ्योऽपि मयट् सुलभ एव । अत एवाथवेत्युक्तपक्षनिरूपणावसरे रमायां भाषाग्रहणं नानुवर्तते अनावृत्तावपि वेत्युक्तम् । **अन्येभ्यश्चेति ।** वृद्धशरादिभ्य इति विशिष्य ग्रहणानुसारेण तेभ्य एव छन्दसीति लाभ इति तु न वाच्यं पूर्वसूत्रे सर्वप्रातिपदिकेभ्यो मयड्विधाने सति नित्यमिति सूत्रेण वृद्धशरादिभ्यो भाषायामेव नित्यं भवतीत्युक्ते अवधारणबलेन छन्दसीत्यस्यैव शरादिभ्य एव भाषायामित्युक्ते अन्येभ्यस्तु यथादर्शनमित्यर्थस्यावधारणबलाद्वा शरादीनां विशेष्योपादानेन शेषनिषेधाभ्यनुज्ञानाद्वा अन्येभ्य इत्यस्यापि लाभोपपत्तेः । देवतामयो मृण्मयः पृथिवीमय इत्यादिरूपसिद्ध्यर्थं च तस्यावश्यकत्वात् । अन्यत्र तु क्वाचित्क इति रमाया अप्ययमेवार्थः । शरादिगणस्य पठितगणतया अन्येषामसङ्ग्रहात् शरादिव्यतिरिक्तान्येषां पृथगुपादानमिति स्पष्टमेवेति ज्ञेयम् ।

अत्र पक्षे द्व्यचः छन्दसीत्यादिसूत्रानारम्भप्रसङ्गस्तु इष्टापत्त्या परिहरणीयः । तथैव प्रतिपादितं रमायां अत्रोच्यत इति प्रथमपक्षे । तत्समानन्याययथाथवेतिपक्षेऽपि तथा कुतो न निरूपितं तेनेति स एव जानतु ।





रमायां यद्वा प्राचुर्ये मयडस्तीति पक्ष उक्तस्तमपि आह **यद्वेति** । **प्रकृत्यर्थेति** । ब्राह्मणप्रचुर इत्यादौ प्रकृत्यर्थ-भूतब्राह्मविरोधिशूद्रप्रतीतेर्दर्शनात् तद्वत्प्रकृते अन्नरसविज्ञानानन्दविरोध्यनन्नारसादेर्लेशतोऽनुवृत्तेर्लभादित्यर्थः । **प्रकृत इति** । अनेनान्नरसादिबहूक्तेभ्यः प्राचुर्यार्थ एव मयडित्यङ्गीकारः कृतः । विधानाभावेऽपि अन्यथानुपपत्त्या-तिस्फुटार्थकत्वप्रतीतिमात्रमित्याशयः । अत एवास्वरसात् पक्षान्तरमाह **यद्वा हेत्विति** । मयड् वेति सूत्रपाठः । **अनुवर्तमाने इति** । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य इत्यव्यवहितपूर्वसूत्रात् । देवदत्तादागतं देवदत्तमयमित्यादिव-द्विज्ञानादिभ्य आगतो ज्ञानादिमय इति आगतार्थे मयडित्यर्थः । तथा सति विकार इति मूलानुपपत्तिरित्यत उक्तं **विकार इति त्विति** । उक्तप्रकारेणेति पाठः । विकारत्वादिप्रकारेणेत्यर्थः । **उपपादयन्नित्यस्य** उपपादयिष्यन्नित्यर्थः । कोशेष्वित्यतःपरं तावदिति शेषः । **देहादीनामिति** । देहादिकोशानां जडप्रकृतेश्चेत्यर्थः । **सम्भाव्य** इत्युपलक्षणम् । उपपाद्यं चेत्यपि ज्ञेयम् । निर्विकारोऽक्षरः इत्यादि मूलम् । न चानया श्रुत्या निर्गतो विकारो यस्मादिति विकारराहित्यलाभेऽपि विकारभेदलाभः । अत एव परिणामित्वपक्षे एतच्छ्रुतिविरोधस्तत्र तत्रोक्तः । तत्कथं प्रकृतोपयोग इति न च वाच्यम् । निर्गतो विकारो विकारत्वं यस्मादिति भावप्रधानत्वाश्रयणे विकारत्वाभाव-लाभात् निरो नञर्थतयाऽन्योन्याभाव एवार्थं इति वाऽर्थान्तरमभिप्रेत्यास्योपन्यास इति ज्ञेयम् । न च निर्विकार-तयेति पाठः । **नामाधिष्ठातॄणामिति** । अभिमानिदेवानामित्यर्थः । **अभिमानाभावबोधकेति** । विष्णुत्वानभिमान इत्युदाहृतेत्यर्थः । **तत्प्रकृतेति** । सूत्रार्थस्तु वक्ष्यमाणरीत्या ज्ञेयः । कल्पतर्वनुसारेण विकल्प्य शाङ्करभाष्योक्तं दूषणं वदन्नेवोत्तरवाक्यमवतारयति **आनन्दमयस्य सर्वेति** । **सहस्रश इति** मूलम् । सङ्ख्यार्थाश्च वीप्सायामित्यनेन वीप्सायां शस्प्रत्ययः । स्पष्टं चेदमुत्तरत्र भविष्यति । सौत्राभ्यासशब्दस्य मुख्यार्थतायाः प्रकृते सम्भवादर्थान्तर-माश्रयणीयमित्याशयेन तदुभयमुपपादयति **एकविषयेति** मूलम् ।

**स०व्र०— विकारार्थानुशासनादिति** । 'प्राधान्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधे'त्युक्तत्वादिति भावः । **गौरः श्यामः इत्यादिवदिति** । गौरशरीराभिमानी देवदत्तः श्यामशरीराभिमानी देवदत्त इति वक्तव्ये गौरोऽयं श्यामोऽयमिति, तदभिमानिनि तच्छब्दो यथेत्यर्थः । **अधिष्ठात्रीणामिति** । प्रवर्तकाणामित्यर्थः । **अशनिरिन्द्र इति** । अशनिप्रवर्तक इन्द्र इति वक्तव्येऽशनिरिन्द्र इति तत्प्रवर्तके तच्छब्दो यथेत्यर्थः । **शरीरशरीरिभावेनेति** । तस्यैष एव शारीर आत्मेत्युक्तत्वादिति भावः । एवमन्योन्तर आत्मेत्यनेनान्यत्वं चोच्यत इति द्रष्टव्यम् ।

**विठ्ठल०**— सूत्रप्रसक्तिप्रतिपादकपूर्वपक्षं दर्शयन् मूलमवतारयति **तैत्तरीयकेत्यादिना** । **विकारार्थे-ऽनुशासनादिति** । मयटेतयोर्भाषाया द्व्यचश्छंदसि इति वेदेऽपि च विकारार्थे मयटोऽनुशासनादित्यर्थः । तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधेत्युक्तेश्च इति भावः । शरीरादिकोशेष्वित्यत्र शरीरकोशपदेनान्नविकार-देहग्रहणम् आदिपदेन प्राणविकारदेहसङ्ग्रहः । जीवाश्रयमञ्जूषास्थानीयान्न प्राणादिविकारभूतदेहप्रभेदेष्वित्यर्थः । **गौरः श्याम इति** । यथा शरीरस्य गौरादित्वेऽपि तदभिमानिजीवे गौर इत्यादिव्यवहार इति तथा प्रकृतेऽपीति





भावः । **अशनिरिति** । अशनिप्रेरके इन्द्रे यथा अशनिरिन्द्र इति समानाधिकरणस्तथेत्यर्थः । **प्राचुर्येऽपीति** । तत्प्रकृतवचने मयडिति प्राचुर्ये प्रस्तुतम् इत्यर्थे मयट् भवतीति पाणिनिनाऽनुशासनात् प्राचुर्यार्थ इति स्मृतेश्चेति भावः । **अपरोक्षतो निर्देशादिति** । अपरोक्षनिर्देशः शरीर एव युज्यते नान्यत्रेति भावः । **अपि चेति** । अन्योन्तर आत्मेति तस्यैष एव शारीर आत्मेति चोक्तेरिति भावः । **सर्वान्तरत्वादिति** । स्थूलारुन्धतीन्यायेन अन्नमयादिकं उत्तरोत्तरं पूर्वपूर्वान्तरतयाऽभिधाय आनन्दमयस्य सर्वान्तरत्वमुच्यते । न च तस्यान्तरोऽन्योऽभिधीयते, अतोऽसौ ब्रह्मैवेत्याशयः । **सर्वान्तरत्वानिश्चयादिति** । न चान्नमयादि चतुष्कोशान्तरत्वमात्रं ब्रह्मतानिश्चायकं अप्रयोजकत्वात्, ब्रह्मणः सर्वान्तरत्वं लिङ्गं तद्बलाद्ब्रह्मत्वनिश्चय इति चेन्न । अन्नमयाद्यन्तरत्वमात्रेण सर्वान्तरत्वानिश्चयेन लिङ्गस्य सन्दिग्धत्वात् इति भावः । **अन्य एवेतीति** । कोशादिरन्य एव यः कश्चिदानन्दमयः न ब्रह्म इत्यनिर्णयेन सिद्धान्तप्रक्षेप एव पूर्वपक्षफलमिति भावः । आनन्दमय इत्यादेः समन्वयसूत्रप्रपञ्चनरूपतया सर्वाधिकरणेष्वपि तत्सूत्रगतस्य तदिति पदस्य अनुवृत्तिरित्यभिप्रायेण ब्रह्मेति प्रतिज्ञाभाग इत्युक्तमिति ज्ञेयम् ।

**चषकः— अनुशासनादिति** । अथ कथमेतत् । विकारार्थकमयड्विधायकं 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः', 'नित्यं वृद्धशरादिभ्य' इति सूत्रद्वयम् । तत्र चाद्यसूत्रे भाषायामिति पदमेवास्ति । द्वितीयसूत्रे तु तत्पदमनुवर्तत इति तादृशसूत्रद्वयस्य छन्दस्यननुवृत्त्या छन्दसि तादृशार्थे तत्प्रत्ययविधायके द्व्यचश्छन्दसीति सूत्रे च द्व्यच्कग्रहणादन्नप्राणमनःशब्देभ्यस्तादृशप्रत्ययोत्पादेऽपि अन्नरसविज्ञानानन्दशब्दानां बह्वच्कतया तेभ्यस्तदुत्पादानिर्वाहादिति चेत् । अत्र व्याकर्तारः । वृद्धशरादिसूत्रगतेन नित्यग्रहणेन तत्प्राप्तिसम्भवात् । न च वृद्धशरादिभ्यो मयटि नित्यत्वसिद्ध्यर्थं तत् । पूर्वसूत्रेण सर्वप्रातिपदिकेभ्यो विकल्पेन मयड्विधानानन्तरं वृद्धशरादिसूत्रारम्भसामर्थ्यादेव तेभ्यस्तस्य नित्यत्वसिद्धेः । न च वाङ्मयत्वङ्मयादिरूपसिद्ध्यै प्रवृत्तस्य 'नित्यमेकाच' इति व्याकरणान्तरसूत्रस्यैकदेशभूतं नित्यग्रहणमेकदेशद्वारा तत्सूत्रस्मारणायेति योगविभागार्थं तदिति शङ्क्यम् । शरादिग्रहणेन तद्ग्रहणवैयर्थ्यापत्तेः । अतस्तदेवमृद्ग्रहणमेकाजुदाहरणैकदेशार्थत्वात्सर्वेषामेकाचां स्मारकमाश्रयितुं शक्यमिति नित्यग्रहणमतिरिच्यमानं भाषायामेव वृद्धशरादिभ्यो नित्यमित्येतदर्थकं सत् छन्दसि वृद्धशरादिभ्योऽन्येभ्यश्च प्रातिपादिकेभ्यो यथादर्शनं व्यवस्थितविकल्पार्थमित्यङ्गीकृतं युक्तमिति युक्त एव बह्वच्केभ्यो विकारार्थे मयडिति । यद्वा प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो लेशतो वृत्तिलाभात् प्रकृते विकारार्थः पर्यवस्यतीत्याशयः । यद्वा हेतुमनुष्येभ्य इत्यनुवर्तमाने 'मयट्चे'ति सूत्रेणागतार्थे मयट् । विकार इति चार्थिकार्थकथनमेवेति ध्येयमिति समादधुः । न च तत्र भाषायामिति वचनात् कथं तेन मयट्प्राप्तिरिति वाच्यमिति शङ्कमानाः द्व्यचश्छन्दसीति वेदेऽपि विकारार्थे मयड्विधानात् । विज्ञानानन्दमययोश्च व्याङोः पार्थक्यविवक्षया द्व्यच्कत्वोपपत्तेरित्यपि समादधिरे । इदमेव प्रतीकमुपाददानाः 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधे'ति सप्तमगीताभाष्योक्तेरिति भाव इत्यपि भावमाविर्भावयन्ति । **गौरः श्याम इत्यादिवदिति** । अभिमन्यमानवाचकः शब्दोऽभिमानिनि प्रयुज्यत इत्यर्थः । **अशनिरिन्द्र इतिवदिति** । अधिष्ठेयवाचकः शब्दोऽधिष्ठातरि प्रयुज्यत इति भावः । **प्राचुर्येऽपीति** । 'तत्प्रकृतवचने मयडि'त्यनुशासनादिति भावः ।





परामर्शनिर्देशानुपपत्तिभ्यामन्नमयस्याब्रह्मत्वेऽपि तत्रत्यमयटो विकारार्थत्वेऽपि च तादृशनियामकराहित्या-त्प्राणमयादीनामब्रह्मत्वं तत्रत्यमयटा विकारार्थत्वं च दुरुपगममित्याशङ्कायां समभिव्याहृतमयटां मध्ये क्वचि-द्विकारार्थं क्वचित्प्राचुर्यार्थत्वमिति द्विधाकल्पनाप्रसङ्गान्नैवमित्याह **तथा चेति** । **शरीरशरीरिभावेनेति** । तस्यैष एव शरीर आत्मेत्युक्तेरिति भावः । एवमन्योऽन्तर आत्मेत्यनेनान्यत्वमान्तरत्वं चोच्यत इति द्रष्टव्यम् । **सर्वान्तर-त्वादिति** । स्थूलताराऽरुन्धतीन्यायेन लौकिकानां प्रतीतिमनुरुन्धानं शास्त्रमन्नमयादीननात्मनो द्वारत्वेनोपदिश्यान्न-मयादिभ्य इवानन्दमयादन्योन्तर आत्मेत्यभिधानाभावेन सर्वान्तरत्वादानन्दमयो मुख्यं ब्रह्म न द्वारमित्युपदिशती-त्याशङ्कितुराशयः । **विकारप्रवाहपतितत्वादिति** । आनन्दमयस्य ब्रह्मत्वोपगमे आनन्दपदप्रकृतिकमयटः प्राचुर्यार्थताऽऽपत्त्या विकारार्थकमयट्चतुष्टयसमभिव्याहारविरोधादित्याशयः । **अन्नमयाद्यन्तरत्वमात्रेणेति** । आनन्दमयान्तरस्य ब्रह्मणः श्रवणेऽपि अन्नमयादिकोशचतुष्टयान्तरत्वमात्रेणानन्दमयस्य सर्वान्तरत्वनिश्चयोपगतौ प्राणमयाद्युत्तरोत्तरस्यापि पूर्वपूर्वान्तरत्वमात्रेण सर्वान्तरत्वनिश्चयापत्तिरिति भावः ।

**॥ अथ एतदधिकरणीयप्रथमसूत्रानुभाष्योक्तः उत्तरपक्षः -**
**अन्नमयादिशब्दवाच्यं विष्णवाख्यं ब्रह्मैव नान्यत्किञ्चित् ॥**

६ **सु०—** एवं प्राप्ते सिद्धान्तयत्सूत्रं व्याख्याति **समुद्रशायिनमिति** ।

**अनु०—** समुद्रशायिनं सर्वप्रसूतिप्रभवं श्रुतिः ।
तदेव ब्रह्म परममिति सावधृतिर्जगौ ॥
यतोऽतो ब्रह्मशब्दस्य तत्रैव नियतत्वतः ।
येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके ॥
अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ।
आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् ॥

अत्र, तैत्तिरीयके 'अन्यासु (च) चैतद्रूपासु शाखास्वपि सहस्रशः । आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम्' इत्येतावता 'आनन्दमयो ब्रह्मे'ति प्रतिज्ञाभागो व्याख्यातः । तत्र तैत्तिरीयक इत्युदाहरणवाक्यग्रहणम्, अन्यास्विति निर्णेतव्यव्यपदेशः । **एतद्रूपास्विति** गुणिसामान्यगुणवाचिनामवतीष्वित्यर्थः । तत्र हेतुरभ्यासादिति । तद्व्याख्यानं **येऽन्नमिति** । 'येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वान्, विज्ञानं ब्रह्म चेद्वेद,





**असद्ब्रह्मेति वेद चेत्' इत्यन्नमयादिविषयतयोदाहृतेषु श्लोकेषु ब्रह्मशब्दस्याभ्यासादित्यर्थः । एकविषयासकृदुक्तिर्मुख्योऽभ्यासः, न चैवमत्रास्ति, किं त्वसकृदुक्तिमात्र(मितिज्ञाप)मिति शङ्कायाम्, एकविषयताऽप्यस्तीति ज्ञापयितुमित्यादेरित्यनुक्त्वा इत्यादिरूपात् इत्युक्तम् । अन्नमयादिविषयत्वेन ब्रह्मशब्दस्य श्रुतत्वादित्युक्तं भवति, ब्रह्मशब्देन कथमयं निश्चय इत्यत आह ब्रह्मशब्दस्येति । तदपि कुत इत्यत आह श्रुतिरिति । 'तदेव ब्रह्म परमम्' इति सावधृतिः श्रुतिः विष्णुमेव ब्रह्मशब्दवाच्यं जगौ यतोऽत इति योजना । तत्रापि तदिति परामर्शविषयो विष्णुरिति कुत इत्यत उक्तं समुद्रशायिनमिति । व्याख्यातमेतत्प्रथमसूत्रे ।**

**परि०**— ''तैत्तिरीयक'' इति मूलपदस्य स्वयं विशेषणमाह **अत्रेति** । एतदुदाहरणभूत इत्यर्थः । **आनन्दमयो ब्रह्मेति प्रतिज्ञाभाग इति** । यद्यपि नास्त्यत्र ब्रह्मपदं तथाप्यस्य सर्वस्य समन्वयसूत्रप्रपञ्चनपरत्वात्तत्रेवात्र सर्वत्रापि आऽध्यायसमाप्तिसाध्यार्पकतया ब्रह्मपरामर्शकतत्पदमनुवर्तत इति भावेनेति प्रतिज्ञाभाग इत्युक्तम् । **तत्रेति** । प्रतिज्ञांशव्याख्यानपरवाक्य इत्यर्थः । **निर्णेतव्येति** । तुल्यन्यायतया निर्णेतुं योग्यवाक्यान्तरोक्तेरित्यर्थः । **गुणीति** । गुणिसामान्यवाचिनि गुणवाचीनि यानि नामानि तद्युक्तास्वित्यर्थः । **न चैवमत्रास्तीति** । अन्नमयादिभिन्नभिन्नविषयतया श्रवणादिति भावः । **असकृदुक्तिमात्रमिति** । एतच्चान्नमयादि प्रकरणपञ्चके श्रुतब्रह्मशब्दमेलनाभिप्रायेणोक्तम् । न त्वेकैकप्रकरणाभिप्रायेण विज्ञानानन्दमयप्रकरणयोरसकृच्छ्रवणेऽप्यन्नमयादिप्रकरणत्रये तदभावात् । विज्ञानमयादिप्रकरणद्वये मुख्याभ्यासस्य सत्त्वेनैवमुक्तेस्तदभिप्रायकत्वायोगाच्च । अत एवाग्रे 'इत्युक्तं भवती'ति तात्पर्यवर्णनम् । 'अयमेवाभ्यासो ब्रह्मशब्दस्य यः प्रत्यन्नमयादिशब्दमेकस्य पाठ' इति सन्न्यायरत्नावल्युक्तेश्च ।

**आनन्दः**— अत्र समुद्रशायिनमित्यादिशब्दैर्वाच्यो हरिः स्वयमित्यन्तेन सूत्रव्याख्यानं क्रियते । तत्र कस्य भागस्य किं व्याख्यानमिति न ज्ञायते । अत आह **अत्रेत्यादि** । ननु तैत्तिरीयके अन्यास्वित्यनयोर्वैयर्थ्यमाशङ्क्याह **तत्रेति** । न चैतद्रूपास्वित्यनर्थकमिति वाच्यम् । तथा सति अन्यास्वित्युक्तत्वेन सर्वशाखानामप्यत्र विषयतापातेनाधिकरणान्तरारम्भो न स्यात् । नन्वेवमुक्तौ कथं परिहार इत्यतस्तदर्थमाह **गुणिसामान्येति** । ननु येऽन्नं ब्रह्मेत्यादि रूपादभ्यासादिति सौत्रहेतुव्याख्यानं तदयुक्तम् । येऽन्नं ब्रह्मेत्युपासत इत्येवं रूपाभ्यासाभावात् तेन पञ्चकं ब्रह्मत्वसाधनस्य करणत्वाच्चेत्यत आह **येऽन्नं ब्रह्मोपासत इति** । ननु इत्यादिरिति वक्तव्ये इत्यादि रूपादिति वचनं किमर्थमित्यतस्तान्निवर्त्यां शङ्कामुत्थापयति **एकविषयेति** । **एकविषयताऽप्यस्तीति ज्ञापयितुमिति** । नन्वेतावता हि अन्नमयादिशब्दानां ब्रह्मत्वे एकविषया सकृदुक्तिरूपो मुख्योऽस्ति । इतरेषां तु ब्रह्मत्वे ब्रह्मशब्दमात्रं





हेतुरित्युक्तं भवति । ननु तर्ह्यभ्यासस्य हेतुकरणमयुक्तम् । अन्नमयादिरूपभोगासिद्धत्वादित्यत आह **अन्नमयादीति** । तथा च तत्राभ्यासशब्दो ब्रह्मशब्दस्य श्रुतत्वाभिप्राय इति भावः । अत एव भाष्ये न ते आनन्दमयशब्दे नोच्यन्ते किन्तु विष्णुरेव ब्रह्मशब्दाभ्यासादित्युक्त्वा येऽन्नं ब्रह्मोपासत इत्यादि ब्रह्मशब्दादित्येवोक्तं तट्टीकायामपि आनन्दमये ब्रह्मशब्दाभ्यासादित्युक्त्वा अन्नमयादीन्प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणादित्येवोक्तम् । न च सर्वसाधारणं ब्रह्मशब्दमात्रमेवं हेतूकर्तव्यमिति वाच्यम् । ब्रह्मशब्दमात्रं हेतुत्वेनाभिमतं विज्ञानमयानन्दमययोस्तु अभ्यासोऽप्यस्तीति स सूत्रित इति ।

**श्रीनिधि०— प्रथमसूत्रे** प्रथमसूत्रव्याख्यानावसरे ।

**शे०वा०—** 'आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम्' इत्येतावतैव सौत्रप्रतिज्ञाभागव्याख्यानात् तैत्तिरीयक इत्यादेर्वैयर्थ्यमित्यतो विषयवाक्याद्युदाहरणार्थत्वान्न वैयर्थमित्याह **तत्रेत्यादि** । **प्रथमसूत्र इति** । सौत्रब्रह्मशब्दव्याख्यानावसर इति शेषः ।

**विठ्ठल० — निर्णेतव्य इति** । समानन्यायविषयशब्दराशीनामपि निर्णेयत्वादिति भावः । **मुख्योऽभ्यास इति** । 'एकप्रकारः शब्दानाम् अभ्यासस्त्वादरार्थकः । स्वरवर्णादिमात्रं वाऽप्यन्यथा चेत्तदाऽपर' इति बृहदारण्यकभाष्ये एकविषयकैकप्रकारकशब्दावृत्तिर्मुख्योऽभ्यासः । स चादरार्थकस्तात्पर्यविशेषद्योतकः । स्वरवर्णादिमात्रमन्यथा चेत् स्वरादिमात्रेणाप्यन्यप्रकारकत्वे अपरः = अभ्यासो न भवति किं तु श्रुत्यादिरूप एवेत्युक्त्वा प्रातिस्विकार्थेऽपि भवेदभ्यासो वा । **तथास्थित इति** । तथास्थितः स्वरादिनाप्येकप्रकारोऽभ्यासः प्रातिस्विकार्थेऽपि भवेदित्येकप्रकरणे विषयभेदेऽप्येकप्रकारशब्दावृत्तेरभ्यासत्वमङ्गीकृतमित्याशयेन मुख्योऽभ्यास इत्युक्तम् । उक्तं च व्यासतीर्थीये 'यथा अन्नमयादिषु पञ्चसु वर्तमानो ब्रह्मशब्द इत्यर्थ' इति । 'न चैवम् अत्रास्ति' इति । अन्नमयादिभिन्नविषयतया श्रवणादित्यर्थः । **सकृदुक्तिमात्रमिति** । अन्नमयादिरूपे प्रातिस्विकविषयेऽसकृदुक्तिमात्रमित्यर्थः । अत एवामुख्योऽभ्यासः इति भावः । ब्रह्मशब्दस्य श्रुतत्वादित्युक्तं भवति इति तु मुख्याभ्यासाभावमपेक्ष्येति ज्ञेयम् । एतच्च अन्नमयादिप्रकरणत्रयमपेक्ष्यैव । विज्ञान(नन्द)मयप्रकरणे ब्रह्मज्येष्ठमुपासते, विज्ञानं ब्रह्म चेद्वेदेत्यन्तिमप्रकरणे च असद्ब्रह्मेति वेद चेदस्ति ब्रह्मे चेद्वेदेति मुख्याभ्यासस्यैव भावादिति ।

**॥ अथ एतदधिकरणीयप्रथमसूत्रानुभाष्योक्तोत्तरपक्षे**
**'आनन्दमयपूर्विणां शब्दानामुपलक्षणत्वम्' ॥**

**७ सु०— नन्वानन्दमय इत्येव सूत्रे प्रतिज्ञा, तत्कथमानन्दमय इत्याद्यैरिति व्याख्यानमित्यत आह उपलक्षणत्वमिति ।**

## अनु०— उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम् ।





**आनन्दमयश्चासौ पूर्वश्च, स एषामस्ति त आनन्दमयपूर्विणः, तेषाम्।**

**स्यादयं व्याख्यानव्याख्येययोर्विसंवादो यद्यत्रानन्दमयशब्दः स्वमात्रस्य ग्राहकः स्यात्। न चैवम्। किं त्वत्रानन्दमयशब्दस्य समानन्यायानामन्नमयादिशब्दानामुपलक्षक(ण)त्वम्। एवमुत्तरत्राप्याकाशादिशब्दानामपि स्वसमानन्यायशब्दान्तरोपलक्षणत्वमवगन्तव्यमिति। अजहल्लक्षणा चैषा। तेनानन्दमयस्य त्यागो न मन्तव्यः। अत एव विकारशब्दादित्याद्याक्षेपाणां तत्परिहाराणां स्वतन्त्रयुक्तीनां चोपलक्षणत्वं द्रष्टव्यम्।**

**परि०**— **इत्या(द्या)क्षेपाणामिति**। प्रागुक्तान्यत्वान्तरत्वशारीरत्वाद्याक्षेपोपलक्षकत्वं सौत्र-विकारशब्दस्य प्राचुर्यादिति परिहारस्यान्यत्वाद्याक्षेपपरिहारोपलक्षकत्वम्। 'तद्धेतुव्यपदेशाच्चे'त्या-द्यानन्दमयाद्यसाधारणयुक्तीनामन्नमयाद्यसाधारणयुक्त्युपलक्षकत्वं द्रष्टव्यमित्यर्थः। तच्च व्यक्तीकृतं चन्द्रिकायाम्।

**यादु०**— बहुव्रीहित्वे इनो वैयर्थ्यात्कर्मधारयोऽयमित्याह **आनन्दमयश्चासाविति**। **विकारशब्दादित्या-द्याक्षेपाणामिति**। अत्र विकारशब्दादित्याक्षेपः कण्ठोक्तः। तत्र विकारशब्देनान्यत्वान्तरत्वशरीरशरीरिभावा अप्युपलक्षणीयाः। आदिपदेन 'नेतरोऽनुपपत्तेः', 'भेदव्यपदेशाच्च', 'कामाच्च नानुमानापेक्षे'ति सूत्रत्रयनिवर्त्यतया अर्थादुक्ता आक्षेपा ग्राह्याः। **स्वतन्त्रयुक्तीनां चेति**। अभ्यासमन्त्रवर्णसमाख्या, तद्योगशासनरूपाणां तदुपलक्षि-तानामभेदेऽपि विशेषेणैवान्यत्वादिवचनमित्याद्यानां स्वपक्षसाधकयुक्तीनामित्यर्थः।

**आनन्दः**— ननु सूत्रभाष्ययोः व्याख्यानव्याख्येयभावो युज्यते परस्परविरुद्धार्थत्वात्। सूत्रे हि आनन्दमयमात्रस्य ब्रह्मत्वं प्रतिज्ञातं भाष्यकारेण तु सूत्रानुक्तान्नमयादीनामनेकेषां ब्रह्मत्वं प्रतिज्ञायते तत्कथमस्य भाष्यत्वमिति शङ्कते **नन्विति**। नन्वानन्दमयपूर्विणामित्ययुक्तम्। आनन्दमयः पूर्वो येषां ते आनन्दमयपूर्वा इति स्यात्। न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः इत्यत आह **आनन्दमयश्चासाविति**। नन्वानन्दमयशब्दस्योप-लक्षकत्वे तेन सर्वेषामपि शब्दानां उपलक्षणसम्भवेनाधिकारणान्तरानारम्भप्रसङ्ग इत्यत आह **समानन्यायाना-मिति**। एवं चैतदधिकरणीयन्यायविषयाणां वा शेषलक्षणमिति। नाधिकरणान्तरानारम्भ इति भावः। नन्वत्र लक्षणाश्रयणे गङ्गायां घोष इतिवत्प्रकृतेऽपि आनन्दमयोऽभ्यासो नेतरेषामेव ब्रह्मत्वं न त्वानन्दमयस्येत्यत आह **अजहदिति**। काकेभ्यो दधि रक्षतामित्यजहल्लक्षणावदिति भावः। **अत एवेति**। आनन्दमयशब्दस्योपलक्षण-त्वादेवेत्यर्थः।

**श्रीनिधि०**— आनन्दमयश्चासौ पूर्वश्चेति बहुव्रीहित्वे इनिप्रत्ययवैय्यर्थ्यापत्तिः। तदर्थस्य बहुव्रीहिणैव कथनात् न कर्मधारयात् मत्वर्थीय इति निषेधोऽस्तीति चेन्न। नञा निर्दिष्टस्यानित्यत्वात्। सामान्यन्यायानामिति





सूत्रे यो न्याय उक्तः तन्न्यायविषयत्वं येषामस्ति ते समानन्यायः । अत्र केचिद् सिद्धान्तन्यायानां उपलक्षणत्वं नाङ्गीकुर्वते तन्न बुध्यामहे सिद्धान्तप्रमाणविशेषस्वीकारस्य चोदनादरणार्थत्वादिति टीकावाक्यविरोधस्य स्फुटत्वात्। किञ्चान्नमयत्वादयो हि समानन्यायतया सम्बन्धेनोपलक्षणीया गृह्यन्ते इति अन्नमयादीनां समानन्यायत्वं टीकायां उच्यते । न्यायस्यानुपलक्ष्यत्वे (अनुपलक्षणत्वे) कथं तेषां समानन्यायत्वम् । न हि सर्वत्र गुणिसामान्यवाचिषु ब्रह्मशब्दः श्रूयते । ननु न एष दोषः, अन्नमयादीनां चतुर्णां उपलक्ष्यत्वेन टीकावाक्यस्य सावकाशत्वात्, तत्र च सर्वत्र सौत्रो ब्रह्मशब्दः श्रूयते, इत्यनुपलक्ष्यत्वेऽपि समानन्यायत्वं युज्यत इति चेन्न। चतुर्णामिव उपलक्ष्यत्वे ज्ञापकाभावात् अन्नमयादयो हीति विशिष्यग्रहणस्य प्रकृताभिप्रायत्वात्। अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमय इति प्रयोक्तव्यं स्यात् इत्यस्यापि टीकावाक्यस्य उपलक्षणत्वात् । अन्यथा चतुर्णामुपलक्ष्यत्वेऽपि सर्वशाखानिर्णया-भावात्। किञ्च चतुर्णामुपलक्ष्यत्वे गुणिसामान्यं यदि सूत्रश्रुतमात्रं गृह्यते तदा को दोष इति शङ्कायां सर्वशाखानिर्णयो न स्यादित्युच्यते । तदीक्षणस्यात्रापि साम्यात् वाचिनां गुणवाचिनां च प्रथममिति मूले सामान्योक्तिविरोधश्च । न हि गुणिसामान्यवाचिनः आनन्दमयादयः पञ्चैव । येनायं प्रयासः सार्थकः स्यात् । तर्हि सङ्कोचाभावेन सर्वेषां न्यायानां उपलक्षणत्वसम्भवे अधिकरणान्तरं व्यर्थमापद्येतेति चेत् न्यायवैषम्येन पूर्वपक्षे न्यायसाम्येन सिद्धान्तार्थ-त्वात् । नन्वेवं समानन्यायशब्दान्तरविषयाधिकरणानारम्भप्रसङ्गाबाधकः । किं वा न्यायान्तरविषयशब्दान्तर-गोचराधिकरणानारम्भ इत्युक्तम् । स्यादुपलक्षणपक्षे सर्वेषामपि समानन्यायत्वादिति चेन्न । न्यायान्तरेत्यस्य आपाततज्जन्यविषयतया प्रतीयमानेत्यर्थत्वादिति सङ्क्षेपः ।

**शे०वा०—** नन्वानन्दमयः पूर्वो येषामिति बहुव्रीहिणैव मत्वर्थलाभात् इनिप्रत्ययवैयर्थ्यमित्यतो बहुव्रीहिमाश्रित्य मतुबर्थप्रत्ययप्रयोगे वैयर्थ्यदोषेऽपि कर्मधारयमाश्रित्य मतुबर्थप्रत्ययप्रयोगे शब्दान्तरत्वान्न दोष इत्याशयेनाह **आनन्दमयश्चासौ पूर्वश्चेति** । ननु तथाऽपि कर्मधारयमत्वर्थीयाद् बहुव्रीहिरेवेष्टो लघुत्वादिति न्यायाच्छब्दान्तराश्रयणेऽपि बहुव्रीहिविवक्षयाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणं दोषः स्यादेवेति चेन्न । बहुव्रीह्यपेक्षया कर्मधारयमत्वर्थीये शब्दगौरवस्थले बहुयत्नाश्रयणस्य दोषत्वेऽपि शब्दसाम्ये तददोषत्वस्य टीकाकृदभिप्रेतत्वात्। अत एव टीकायां यद्विकारीत्यत्र कर्मधारयमत्वर्थीयमभ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः। बहुव्रीहौ कर्मधारयमत्वर्थीये चार्थगौरवाप्रसङ्गेन शब्दगौरवस्यैव लाघवन्यायविरुद्धत्वात् प्रकृते च तदभावेन अदोषत्वात् । लाघवन्यायानादरेण शब्दगौरवेऽपि न्यासादिगतकर्मधारयमत्वर्थीयप्रयोगाणाम् 'एकगोपूर्वात् ठञ् नित्यमिति' सूत्रे दुर्घटवृत्तिकृता दर्शितत्वाच्चेति सकलमकलङ्कमिति सम्प्रदायः । वस्तुतस्तु यदा कर्मधारया-न्मत्वर्थीयः क्रियते तदा स्वपदार्थप्राधान्यमाश्रित्य कर्मधारयः कर्तव्यः । तेषामेव च पदार्थानामन्यत्र गुणभाव-माश्रित्य मत्वर्थीय उत्पद्यत इति प्रतिपत्तिगौरवम् । यदा च पूर्वमेवान्यपदार्थप्राधान्यविवक्षा तदा वर्तिपदार्थानां गुणभाव आश्रीयत इति प्रतिपत्तिलाघवम् । कर्मधारयो मत्वर्थीयसहित एवान्यपदार्थस्य प्रतिपादक इति शब्द-गौरवम् । बहुव्रीहिस्त्वन्यानपेक्ष एव तत्प्रतिपादक इति शब्दलाघवं च भवतीति न कर्मधारयमत्वर्थीयाश्रयणं युक्तम् । तथाऽप्यन्यपदार्थप्राधान्यविवक्षायां बहुव्रीहेरेव प्रसङ्गेन सर्वधनी सर्वबीजी सर्वकेशी नट इत्याद्यभियुक्त-





प्रयोगानुपपत्तिप्रसङ्गात् । तदुपपादनार्थं प्रवृत्तात् 'सर्वादिः कर्मधारयादिनिः' इति भाष्यकारीयवचनाल्लाघवानाश्रयणेन वाचनिकः कर्मधारयादिनिरित्यत्र तात्पर्यमिति ।

नन्वसम्बन्धात्कथमानन्दमयशब्देनान्नमयादिशब्दानामुपलक्षणेत्यतः समानन्यायतताया एव सम्बन्धत्वान्नानुपपत्तिरित्याशयेनाह **समानन्यायानामिति** । ननु सौत्रानन्दमयाकाशादिशब्दानां समानन्यायशब्दान्तरोपलक्षकत्वे आनन्दमयाकाशादिशब्दवाच्यत्वसिद्धिर्न स्यादित्यत आनन्दमयादिशब्देषु जहल्लक्षणाऽनाश्रयणाददोष इत्याह **अजहदिति** । नानन्दमयस्य त्यागो मन्तव्य इत्युपलक्षणम् । नाकाशादित्यागो मन्तव्य इत्यपि द्रष्टव्यम् । यद्यप्युपलक्षणत्वोक्त्यैवाजहल्लक्षणात्वसिद्धेः पुनरजहल्लक्षणात्वोक्तिर्व्यर्था तथाऽपि 'उपलक्षणा च गौणी चे'त्यादौ लक्षणामात्रेऽप्युपलक्षणापदप्रयोगदर्शनेन तेन तदसिद्धेरर्थवत्तदभिधानमिति द्रष्टव्यम् । नन्वानन्दमयादिशब्दानां समानन्यायशब्दान्तरोपलक्षकत्वे 'विकारशब्दान्नेति चेदि'त्याद्याक्षेपाणां 'न च प्राचुर्यादिपरिहाराणां 'तद्धेतुव्यपदेशाच्चे'त्याद्यसाधारणयुक्तीनां चानुपपत्तिः । उपलक्षितशब्दमात्रे विकारवाचकमयट्शब्दाभावात् तत एव प्राचुर्यार्थत्वपरिहारस्याप्ययोगादसाधारणयुक्तीनां चासत्त्वादित्यत आह **अत एवेति** । सूत्रोपात्तानन्दमयाकाशादिशब्दानां समानन्यायशब्दान्तरोपलक्षकत्वादेवेत्यर्थः । विकारशब्दादित्याद्याक्षेपाणामित्यत्रादिपदेनाधिकरणान्तरीयोपदेशभेदादित्याद्याक्षेपपरिग्रहः । **स्वतन्त्रयुक्तीनां चेति** । तद्धेतुव्यपदेशाच्चेत्यसाधारणयुक्तीनामित्यर्थः ।

**वा०र०— बहुव्रीहिणैव मत्वर्थेति** । एतस्य व्याख्यानमीशतज्ज्ञानवेदाक्षजानुमामातृपूर्विण इति भक्तिपादीयानुभाष्यमूलोक्तकर्मधारयोत्तरेनिप्रत्ययव्युत्पादनपरटीकाव्याख्यानविशदतया अस्माभिः करिष्यते तदनुसारेण ज्ञेयम् । ईशादिपदस्थाने आनन्दमयशब्दनिक्षेपणं तत्रत्यसर्ववाक्यविन्यासाय । चतुष्टयरूपोऽत्र लेख्योऽस्ति । स्थलद्वयगतटीकाग्रन्थस्य लेशतोऽपि भेदाभावात् । **इनिप्रत्ययेति** । तथा चानन्दमयपूर्विणामित्युपपद्यत इति भावः । आनन्दमयशब्दः स्वमात्रस्य ग्राहक इति मूलम् । स्वं रूपं शब्दस्याशब्दसंज्ञेति न्यायेन शब्दस्यार्थद्वयमस्ति । स्वरूपं बाह्योऽर्थश्च । अत एवार्थपदार्थकत्वं व्यावर्त्य शब्दपदार्थकत्वमस्तीति दर्शयितुं आनन्दमय इत्याद्यैरित्येवमिति शब्दो भाष्ये प्रयुक्तः । तथा चात्र सूत्रे विद्यमान आनन्दमयरूपार्थवाचक इत्यस्यानन्दमयशब्दः स्वमात्रस्यानन्दमय इत्येवंरूपशब्दमात्रस्य यदि ग्राहकः स्यात् तदा आनन्दमय इत्यस्यानन्दमयशब्दवाच्य इत्येवार्थप्राप्त्येत्याद्यैः शब्दैर्वाच्य इति भाष्यस्थव्याख्यानस्य व्याख्येयविसंवादः स्यान्न चैवमित्यर्थः । यदि न स्वमात्रग्राहकस्तर्हि शब्दान्तरो लक्षणमिति वाच्यम् । तच्च वाक्यसम्बन्धाप्रतीतेर्न सम्भवतीति शङ्कते **किन्त्विति** । उत्तरमाह **अत्रानन्दमयेति** । अत्र सूत्रे विद्यमानस्यानन्दमयशब्दस्य हरौ समन्वयसाधकत्वेनोक्तब्रह्मशब्दस्वरूपन्यायविषयेऽन्नमय इत्यादिशब्दस्तेषाम् । कर्मषष्ठी चेयम् । तदुपलक्षणत्वमित्यर्थः । आनन्दमयरूपार्थोपस्थित्यर्थं सूत्रे प्रयुक्त आनन्दमय इति शब्दः समानन्यायानामन्नमयादिरूपार्थोपस्थापकानामन्नमय इत्यादिशब्दानामप्युपलक्षणया ग्राहकः समानन्यायत्वमेव शक्यसम्बन्धोऽस्तीति यावत् । एतेनैवं तर्हि सूत्रगतानन्दमयशब्देनान्नमयादि शब्दानामेव आनन्दमय इति सूत्रपदस्थाने प्राप्त्या आनन्दमयादिशब्दा अभ्यासादिति विन्यासः प्राप्नोतीति निरस्तम् । आनन्दमयशब्देन आनन्दमयवाचकत्वेन आनन्दमयशब्दस्य मुख्यवृत्त्या ग्रहणे सति लक्षणया अन्नमयादिशब्दानां





ग्रहणेऽपि ते शब्दा अन्नमयादिवाचकत्वेनैव प्राप्ता न तु तदित्यनुवृत्तस्य सम्बन्धितया प्राप्ताः । तथा च आनन्दमय इति सूत्रपदस्यानन्दमयशब्दवाच्य इत्येवार्थवदन्नमयादिरित्यस्याप्यन्नमयादिशब्दवाच्य इत्येवार्थवदन्नमयप्राणमय-मनोमयविज्ञानमयानन्दमयाः ब्रह्मेति प्रतिज्ञाभागस्यान्नमयादिशब्दैर्वाच्य इत्येवमर्थ एव पर्यवसानान्नान्नमयादि-शब्दानां ब्रह्मत्वप्राप्तिरिति सुज्ञेयत्वात् । वक्ष्यति च टीकाकारः प्राप्यत्वेन मयडित्येतद्भाष्यमूलव्याख्यावसरे ज्योतिःशब्दस्य हि स्वयमपि शक्योऽर्थ एव । स्वं रूपं शब्दस्येति पाणिनिस्मृतेः । स च लक्ष्यस्य समग्र-ज्योतिष्टोमशब्दस्यैकदेश इत्यादि । तथा काकेभ्यो दधीत्यत्र काकपदेन दध्युपघातकमार्जारादीनामिवानन्दमय-शब्देनान्नमयादिरूपार्थानां लक्षणयाऽपि विवक्षितार्थसिद्धे शब्दलक्षणद्वारा अन्नमयाद्युपस्थित्यानयनं गौरवकर-मित्यपि निरस्तम् । सूत्रस्थानन्दमय इत्यस्यापि आनन्दमयशब्दवाच्य इत्येवार्थस्वीकारेण तद्वदन्नमयादिशब्द-वाच्य इत्येवार्थप्राप्त्येतन्न्यायस्य शब्देष्वेव सञ्चारेण च तेन सम्बन्धेन शब्दलक्षणाया एव प्राप्त्या तद्वारैवार्थोप-स्थितेरावश्यकत्वादिति ज्ञेयम् ।

उपलक्षणपदाभिप्रायतयाऽजहत्स्वार्थलक्षणात्वोक्त्या च गङ्गापदस्येव शक्यार्थानुपपत्त्या लक्षणाश्रयणमत्र नेति सूचितम् । अत एवाह **नानन्दमयस्य त्यागो मन्तव्य इति** । शब्दान्तरोपलक्षणकत्वादेवेत्यर्थ इति मयट्प्रत्ययोपेतान्नमयादिशब्देषु यो विकारार्थकमयडनुपपत्तिरित्याक्षेपः कृतः स ब्रह्मशब्दरूपन्यायविषय-शब्दान्तरेषु भगवत्परत्वेनान्नमयादिषु मयडुपपत्तिप्रतिपादनं च शब्दान्तरेषु यदनुपपत्तिः तस्यार्थान्तरमादाय तदुपपत्तिः सम्भवतीति तदुपलक्षणम् । एवमत्रत्यान्नमयादिशब्दानां विष्णुपरत्वसाधकतयाऽसाधारणयुक्तयो या अभिधीयन्ते ता अपि समानन्यायशब्दान्तरेषु भगवत्परत्वसाधकीभूताः याः स्वातन्त्र्ययुक्तयो भविष्यन्ति तासामुपलक्षणम् । एवमाकाशादिशब्दस्थलेऽपीति मूलार्थ एतट्टीकासूचितो ज्ञेयः । **आकाशादिशब्दानामिति** मूले प्रकृतत्वेन तत्र सर्वत्राक्षेपादिपरसूत्रसद्भाव इति प्रतीतिनिरासाय गायत्र्यधिकरणादौ यत्राक्षेपादिपरसूत्रमस्ति । तादृशशब्दसमानन्यायशब्दान्तरेऽपि तत्र सम्भवदनुपपत्तिस्तदुपपत्तिर्युक्त्यन्तरं वोपलक्षणीयमिति विशेषणतया मूलप्रवृत्तिरित्याशयं स्पष्टयति **आदिपदेनाधिकरणान्तरीयेति** ।

**स०ना०— उपलक्षणत्वं हि शब्दानामिति** अनुव्याख्यानसुधायां **स्वमात्रस्य ग्राहकः स्यादिति** स्वविषयमात्रस्य ग्राहकः स्यात् इत्यर्थः । **अन्नमयादिशब्दानामुपलक्षकत्वमिति** । अन्नमय इत्येवमादयः शब्दा येषां ते अन्यमयादिशब्दाः अन्नमयादिशब्दवाच्यानामिति यावत् । एतेनानन्दमयशब्दस्य अन्नमयादिशब्दोप-लक्षकत्वे आनन्दमयोऽभ्यासादिति सूत्रस्य अन्नमयशब्दो विष्णुः अभ्यासादिति सूत्रार्थः स्यात् । न च तद्युक्तम् । तस्मात् शब्दोपलक्षणकत्वाभिधानमयुक्तमिति परास्तम् । आनन्दमयशब्दस्य अन्नमयादिशब्दार्थोपलक्षण-कत्वेन शब्दोपलक्षकत्वाभावात् । अन्नमयादीनामिव स सर्वशब्दानामिति । मत्वर्थे अच् वाचकत्वेन सर्वशब्दोपेतानामित्यर्थः । सर्वे आकाश इत्येव मादयः शब्दा येषां ते सर्वशब्दाः आकाशादिसर्वशब्दवाच्या इति ।

**विठ्ठल०—** बहुव्रीहित्वे इनो वैय्यर्थ्यात् कर्मधारयोऽयमित्याह **आनन्दमयश्चासाविति** । 'न कर्मधारया-न्मत्वर्थीय' इत्यस्य नञा निर्दिष्टत्वादनित्यत्वम् । **इत्याद्याक्षेपाणामिति** । आदिपदेन अन्यत्वान्तरत्वाद्याक्षेपाणां





नेतरोपपत्तेरित्यादि सूत्रनिवर्त्यतया प्राप्तानां च ग्रहणम् । **स्वतन्त्रयुक्तीनां चेति** । अभ्यासमन्त्रवर्णसमाख्या तद्योगशासनरूपाणां तदुपलक्षितानामभेदेऽपि विशेषेणान्यत्ववचनादीनां स्वपक्षसाधकानामित्यर्थः ।

**चषकः**— ननु षष्ठ्यर्थे बहुव्रीह्याश्रयणेनैव मत्वर्थभूतसंसर्गप्रतीतिनिर्वाहादिनिप्रत्ययवैयर्थ्यमित्याशङ्कायां तस्य कर्मधारयप्रकृतिकत्वोपगमान्न क्षतिरित्यभिप्रेत्य समाधत्ते **आनन्दमयश्चासौ पूर्वश्चेत्यादि** । अथ लघीयसा बहुव्रीह्याश्रयणेनैवाभिमतार्थप्रत्यायनसम्भवे गरीयसा कर्मधारयप्रकृतिकमत्वर्थीयाश्रयणेन तादृगर्थप्रत्यायनोपपादनं परीक्षकसम्प्रदायमतिशेत इति चेन्न । बहुव्रीहेर्यत्राल्पाच्कता मत्वर्थीयान्तकर्मधारयस्य तु बह्वच्कता तत्र दर्शित-क्षत्यवतारेऽपि प्रकृते द्वयोरपि तुल्याच्कतयोक्तक्षत्यनवतारात् एतदाशयेनैव टीकायां यद्विकारीत्यत्र कर्मधारय-प्रकृतिकमत्वर्थीयाऽभ्युपगमेऽप्यनादिमदित्यत्र तदनभ्युपगतिः । वृत्तिव्याख्यारूपन्यासादिगतकर्मधारयप्रकृतिक-मत्वर्थीयप्रयोगाश्च 'एकगोपूर्वाट्ठञ्नित्यमिति सूत्रे दुर्घटवृत्तिकृतोपदर्शिता चेति सर्वं समञ्जसम् । वस्तुतस्तु । कर्मधारयप्रकृतिकमत्वर्थीयचिकीर्षादशायां समासघटकपूर्वपदार्थनिष्ठाभेदसंसर्गावच्छिन्नप्रकारतानिरूपिततादृशोत्तर-पदार्थनिष्ठविशेष्यताशालिशाब्दधीतात्पर्येण कर्मधारयं विधायाभेदसंसर्गेण पूर्वपदार्थविशेषितप्रधानभूतोत्तरपदार्थानां मत्वर्थीयशक्यतावच्छेदकीभूतसंसर्गे निरूपितत्वप्रत्यासत्त्या विशेषणतामुपेत्य मत्वर्थीयो विधेय इति प्रतिपत्ति-कृतगौरवम् । बहुव्रीहिचिकीर्षायां तु तस्य समासाघटकपदार्थरूपान्यपदार्थप्राधान्येन पूर्वमेव वर्तिपदार्थानां गुणभाव आश्रीयत इति तत्कृतं लाघवं मत्वर्थीयेनान्यपदार्थे प्रतिपादनीये कर्मधारयसमभिव्याहारस्वतन्त्रताऽऽश्रयणीया बहुव्रीहिणा तस्मिन् प्रतिपादनीये तु न सेत्यपि लाघवं बहुव्रीहिकल्पे सूपपादं तथापि सर्वधनी सर्वबीजी सर्वकेशी-त्याद्यभियुक्तप्रयोगसामञ्जस्याय प्रकृतात् 'सर्वादिः कर्मधारयादिनिरि'ति भाष्यकारीयवचनाल्लाघवानाश्रयणेनैव वाचनिकः कर्मधारयादिनिरित्यत्र तात्पर्यमिति न्यभांत्सुः प्रपञ्चकाः । समानन्यायानामिति स्वसमन्वयहेतुभूत-न्यायसञ्चारविषयत्वं शक्यसम्बन्ध इत्यनेन ध्वन्यते । तेन नानन्दमयस्य त्याग इति । छत्रिणो यान्तीत्यत्रैक-सार्थवाहित्वस्य लक्ष्यतावच्छेदकत्ववत्प्रकृतेऽपि गुणिसामान्यवाचकगुणवाचकान्यतरत्वस्य लक्ष्यतावच्छेदकत्व-स्योपगमात् तस्य च शक्यलक्ष्योभयसाधारणत्वादिति भावः । **अत एव** सूत्रघटकानन्दमयपदस्योक्तधर्माव-च्छिन्नलक्षकत्वादेव । **उपलक्षणत्वमिति** । विकारशब्देनान्यत्वान्तरत्वशरीरशरीरिभावा उपलक्षणीयाः 'नेतरः, भेद, कामाच्चे'ति सूत्रत्रयनिरसनीयाक्षेपा आदिपदसङ्ग्राह्या इति हृदयम् । **स्वतन्त्रयुक्तीनामिति** । तद्धेतुसूत्राद्युक्ता-साधारणयुक्तीनामित्यर्थः।

**।। अथ आनन्दमयपूर्विणां शब्दानामुपलक्षणत्वे 'लाक्षणिकशब्दप्रयोगे प्रयोजनम्' ।।**

**८ सु०— स्यादेतत् । मुख्यार्थबाधे तद्योगे प्रयोजने च सति लक्षणा दृष्टा । तदत्र वाचकशब्दप्रयोगे सम्भवति किं लाक्षणिकशब्दप्रयोगे प्रयोजनं सूत्रकारस्य । न चेयं रूढलक्षणा, येन प्रयोजनानपेक्षा, इत्यत आह सूत्रस्येति ।**





**अनु०— सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये।**
**पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम् ॥**

**यदि मुख्य एव प्रयोगः क्रियते, तदाऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इ(ति)त्येव प्रयोक्तव्यं स्यात् । तथा च सूत्रस्याल्पाक्षरत्वलक्षणं हीयेत । श्रुत्याऽर्थाद्वा ज्ञायमानस्यार्थस्यावचनं ह्यल्पाक्षरत्वम् । अयं चार्थोऽर्थाज्ज्ञायत इति वक्ष्यामः । अतः सूत्रस्याल्पाक्षरत्वेन प्रयोजनेन लाक्षणिकप्रयोगः सूत्रकारस्येति ।**

**परि०— वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटमि'त्येतद्व्याख्यानावसर इति भावः ।

**गु०दी०— श्रुत्या अर्थाद्वा** इत्यत्र **श्रुत्या** समानश्रुत्येत्यर्थः ।

**यादु०— वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटमि'त्यत्रेत्यर्थः ।

**आनन्दः**— समानन्यायानामित्युक्तं विशदयति **ननु यथेति** । तथा च न पौनरुक्त्यं ध्येयम् । नन्वानन्दमयशब्दवत् शब्दान्तरे शब्दत्वस्य सन्दिग्धशब्दत्वस्य वा सत्त्वादनेन तदुपलक्षणं मास्त्वित्याह **शब्दत्वेनेति** । तथा लक्षणेऽतिप्रसङ्ग इत्यर्थः । सर्वेषामपि शब्दानामत्रोपलक्षणतया विषयत्वे हेतुकृतस्याभ्यासस्य तत्राभावान्न तेषां ब्रह्मत्वनिर्णयः स्यात् किं तु प्रतिज्ञामात्रं स्यात् । तावतैव पूर्तौ च समन्वयसूत्र एव प्रतिज्ञायाः कृतत्वात् उत्तरग्रन्थवैयर्थ्यं स्यादित्यत आह **तथा सतीति** । दृश्यते प्राणस्तथानुगमादित्यादौ । पुनस्तन्न्यायविषयत्वप्रदर्शनार्थत्वादिति । न चाधिकाशङ्कापरिहारेण केवलं तन्न्यायातिदेशमात्रं चेत् क्रियते । तदा विकारशब्दादिबाधकपरिहारवदभ्यासस्यापि बाधकपरिहाररूपत्वेनाधिकरणान्तरत्वं न स्यादिति वाच्यम् । तन्न्यायविषयत्वस्य न्यायान्तरविषयत्वस्य च प्रदर्शनेन न्यायभेदस्य विषयवाक्यभेदस्य च सत्त्वेनाधिकरणताया आवश्यकत्वाद्विकारशब्दो न्यायविषयवाक्ययोर्भेदाभावान्नाधिकरणान्तरत्वमिति भावः । ननु लक्षणाया जघन्यवृत्तित्वात् तदपेक्षया विश्वतोमुखत्वमेव त्यज्यतामित्यत्राह **विश्वतोमुखत्वभङ्गस्त्विति** । न चैतत्समं न्यायत्वं नामैतदधिकरणे हेतुकृताभ्यासादिमत्त्वम् । एवं च गुणविशेषवाचिनामप्यत्र विषयत्वं स्यात्तत्र च न भवदुक्तोपाधिरिति वाच्यम् । न केवलमेतदधिकरणविषयत्वे एतन्न्यायाविषयत्वमात्रं प्रयोजकं अपि तु एतन्न्यायाविषयत्वे सति गुणिसामान्यवाचित्वं तथापि न कश्चिद्दोषः । एवं पूर्वत्रापि विशेषणं देयमिति ।

**श्रीनिधि०— श्रुत्या अर्थाद्वेति** । अत्र श्रुतिपदेन शाखान्तरेऽपि श्रूयमाणानां एकप्रकाराणां आनन्दमय-आकाश इत्यादीनां ग्रहणम् । तेन न व्याहतिः ।





**शे०वा०**— उपलक्षणत्वं शब्दानामानन्दमयपूर्विणामित्येतावतैव व्याख्यानव्याख्येययोर्विसंवादाभावप्रतिपादनात्सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये इत्युत्तरवाक्यवैयर्थमित्यतो लाक्षणिकपदप्रयोगे प्रयोजनप्रतिपादकत्वान्न वैयर्थ्यमित्याशयेन लाक्षणिकपदप्रयोगे प्रयोजनस्यैवानपेक्षायां तत्प्रतिपादकतयोत्तरवाक्यसार्थक्यासम्भवात्तदुपपादनपुरःसरमुत्तरवाक्यमवतारयति **स्यादेतदिति** । **वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम्' इत्यादिनेति शेषः ।

**वा०र०**— **उत्तरवाक्यसार्थक्येति** । सार्थक्यमिति प्रतिपादनासम्भवादित्यर्थः । **तदुपपादनेति** । लाक्षणिकपदप्रयोगे प्रयोजनापेक्षाया उपपादनपूर्वकं प्रकृते प्रयोजनाभावाल्लक्षणा न सम्भवतीति शङ्कां प्रदर्श्येत्यर्थः । उत्तरेत्यतःपूर्वं तन्निवर्तकतयेति शेषः । **मुख्यार्थबाधे तद्योग इति मूले** काव्यसूत्रानुवादः । 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया' इति काव्यसूत्रमुत्तरत्र पूर्वयोगे परग्रह इत्येतद्वृत्तिविचारानुव्याख्यानमूले उदाहरिष्यते । तद्विवरणं च टीकाकृच्चैव करिष्यतीति नेह तद्विवरणाभावो दोषाय । **न चेयमिति मूलम्** । मञ्चाः क्रोशन्तीत्यादाविवेति पूरणीयम् । **श्रुत्याऽर्थाद्वेति** । यावदक्षरतां विना विवक्षितार्थासिद्धिरित्युक्तलक्षणेऽपि ततोऽधिकाक्षरानुपादानमिति विशेषणस्यावश्यकत्वात् तस्य च श्रुत्या अर्थाद्वा ज्ञायमानार्थवचनमित्यर्थकत्वमित्याशयेन श्रुत्याऽर्थाद्वेत्यादिनिर्वचनमिति न दोषः । एतेनोक्तावचनमात्रस्य विवक्षितार्थप्रतिपादकाक्षराणामवचनस्थलेऽपि सत्त्वात् तत्रातिव्याप्तिरित्यपि निरस्तम् । **इत्यादिनेतीति** । इत्येतत्तद्भाष्यमादिर्यस्य तदित्येतदादि । आनन्दमयस्य ब्रह्मत्वे हीत्यादिस्तद्भाष्यव्याख्यानग्रन्थ इति यावत्तेनेति योजना।

**स०व्र०**— **अर्थाज्ज्ञायत इति वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटमि'त्यत्र इत्यर्थः।

**विठ्ठल०**— **वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात् पञ्चरूपादिषु स्फुटम्' इत्येतद्व्याख्यानावसरे इत्यर्थः।

**चषकः**— **वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम्' इत्यत्रेत्यादिः । अन्यथोपपत्तिरुक्ता भवति । आनन्दमयेतरेषां ब्रह्मत्वव्यावृत्तिपुरस्कारेणानन्दमयस्य ब्रह्मत्वज्ञापकानन्दमयपदोपादानान्यथाऽनुपपत्तेरिति पूरणीयम् ।

**॥ अथ लाक्षणिकशब्दप्रयोगे प्रयोजने 'लक्षणानाश्रयणे बाधकम्' ॥**

**९ सु०— ननु सूत्रे यथाश्रुतमेव चेद् गृह्यते तदा कीदृशो दोषो येन लक्षणा व्याख्यातव्येत्यत आह सर्वेति । प्रवृत्तत्वादिति शेषः । यदि हि सूत्रे श्रुतमात्रं गृह्येत(ह्यते)**





तदा सूत्रशतेन वाक्यशतसमन्वय एव सिद्ध्येत्, न तु सर्वशाखानिर्णयः । सर्वशाखानिर्णयार्थं प्रवृत्तानि चैतानि, सूत्रान्तराभावात् । अतः सर्वशाखानिर्णायकत्वस्यान्यथाऽनुपपत्त्या यथाश्रुतमात्रपरित्यागेन लक्षणा व्याख्येयेति गम्यते । लक्षणाऽऽश्रयणे हि सर्वशाखानिर्णयः सिद्ध्यतीति ।

**शे०वा०**— तथाऽपि सूत्रस्याल्पाक्षरत्वेनेत्येतावतैव प्रयोजनाभिधानादुत्तरवैयर्थमित्यतो मुख्यार्थानुपपत्तिप्रतिपादनार्थत्वान्न वैयर्थ्यमिति भावेन तथा तद्वाक्यमवतारयति **नन्विति** ।

**विठ्ठल०**— 'सूत्रशतेन' इत्यत्र शतशब्दोऽनेकत्ववचनः ।

**॥ इति लक्षणानाश्रयणे बाधकम् ॥**

* * *

**॥ अथ लाक्षणिकशब्दप्रयोगे प्रयोजने 'लक्षणाश्रयणे बाधकाभावः' ॥**

१० **सु०**— ननु यथा यथाश्रुतग्रहणे बाधकमस्ति सूत्राणां विश्वतोमुखत्वासम्भवः, तथोपलक्षणाऽऽश्रयणेऽपि बाधकसद्भावः समानः, आनन्दमयशब्देनान्नमयादीनामिव सर्वशब्दानामुपलक्षयितुं शक्यत्वेनोत्तराधिकरणारम्भानुपपत्तेरिति चेत् । किं समानन्यायशब्दान्तरविषयाधिकरणानारम्भप्रसङ्गो बाधकः, किंवा न्यायान्तरविषयशब्दान्तरगोचराधिकरणानारम्भप्रसङ्गः । नाद्यः, इष्टत्वात् । न द्वितीयः, वैषम्यात् । अन्नमयादयो हि समानन्यायतया सम्बन्धेनोपलक्षणया गृह्यन्ते, तदितरेषां तूपलक्षणायां कः सम्बन्धः । न हि सम्बन्धेन विना लक्षणा दृष्टा । शब्दत्वेन सन्दिग्धत्वेन चोपलक्षणमुपप्लवः । तथा सति तत्तु समन्वयादित्यनेनैव पूर्णत्वात् ।

अथ समानन्यायविषयत्वेऽपि अधिकरणान्तरारम्भो दृश्यते, उपलक्षणपक्षे स न स्यादित्यापाद्यत इत्यत आह **पुनश्चेति** । तत्र पूर्वाधिकरणव्युत्पादितन्यायविषयेऽप्यर्थे यदधिकरणान्तरमारभ्यते तत्पूर्व(र्वाधिकरण)न्यायाच्छादका(द)धिकाशङ्कालक्षणात्पुनरधिकरणान्तरारम्भप्रापकाद्धेतोर्विद्यमान(त्व)ाद्युज्यते । इदमुक्तं भवति । समानेऽपि न्याये पुनरधिकरणान्तरारम्भान्यथाऽनुपपत्त्या यथाश्रुत एव सूत्रार्थ इति यदुक्तं तन्न, अन्यथोपपत्तेः । अधिकाशङ्कया तन्न्यायविषयत्वाभावे परेणाशङ्कितेऽधिकाशङ्कानिराकरणेन पुन-





**स्तन्न्यायविषयत्वप्रदर्शनार्थत्वादधिकरणान्तरारम्भस्य । विश्वतोमुखत्वभङ्गस्तु निरवकाश इति लक्षणाऽऽश्रयणमेव न्याय्यमिति ।**

**परि०— अधिकरणान्तरारम्भस्येति** । आकाशाधिकरणेत्यर्थः । नन्वधिकरणान्तरारम्भ इव विश्वतोमुखत्वमपि अन्यथा नीयताम् । येन तदन्यथानुपपत्त्या लक्षणाऽऽश्रयणं स्यादित्यत आह **विश्वतोमुखत्वेति** ।

**वा०र०— यदधिकरणान्तरमारभ्यत** इत्यत्र 'अत एव प्राणः' इत्याद्यधिकरणान्तरमित्यर्थः ।

**वं०प०— विश्वतोमुखत्वभङ्गस्त्विति** । समानन्यायाक्रान्तशब्दोपलक्षणत्वाभावपक्ष इति शेषः ।

**श्रीनिधि०— उपप्लव इति** । बाधक इत्यर्थः । तदेव दर्शयति **तथा सतीति** ।

**शे०वा०—** समानन्यायानामित्येतददृष्ट्वा शङ्कते **नन्विति** । समानन्यायशब्दान्तरोपलक्षणत्वाङ्गीकारान्नातिप्रसङ्ग इत्याशयेन समाधत्ते **किमिति** । तत्कथमित्यतः सम्बन्धभावाभावाभ्यामित्याह **अन्नमयादयो हीति** । ननु सम्बन्धाभावेऽपि लक्षणोपपत्तेरुक्तवैषम्यमप्रयोजकमित्यतो व्यतिरेकमुखेन सम्बन्धस्य लक्षणोपयोगमुपपादयति **न हीति** । अस्तु सम्बन्धापेक्षा तथापि न समानन्यायतैव सम्बन्ध इति नियमोऽतिप्रसङ्गात् । ततश्च समानन्यायतयाऽन्नमयादिशब्दानामिव शब्दत्वादिसम्बन्धान्तरेणान्येषामप्युपलक्षणोपपत्तेरधिकरणान्तरवैयर्थ्यमेवेत्यत आह **शब्दत्वेनेति** । उपप्लवमेवोपपादयति **तथा सतीति** । आद्यं पक्षमङ्गीकृत्य तत्रोक्तदोषमनिष्टत्वोपदर्शनेन परिहरति **अथेति** । **दृश्यत इति** । प्राणस्तथाऽनुगमादित्यादाविति शेषः ।

**वा०र०— इत्येतददृष्ट्वेति** । समानन्यायानामन्नमयादिशब्दानामिति प्रागुक्तमिति योज्यम् । एतदाशङ्कनं च समानन्यायानामिति विशेषणोपादानयोजनस्पष्टीकरणपूर्वकं तदुपर्यपि प्राप्तशङ्कोत्थापनेनोत्तरभाष्यप्रवृत्तिवर्णनार्थमिति भावः । **अतिप्रसङ्ग इति** । असन्देहस्थलेऽपि समानन्यायोपेततेति निर्णयस्य कर्तव्यत्वापातादित्यतिप्रसङ्ग इत्यर्थः ।

**स०ना०— उपलक्षणत्वं हि शब्दानामिति** मूलस्य आनन्दमयादिशब्दानां अन्नमयाद्यर्थोपलक्षकत्वमिव अन्नमयादिशब्दोदाहरणत्वमपि विवक्षितम् । पक्षद्वयेऽप्यतिप्रसङ्गं परिहरति **शब्दत्वेन सन्दिग्धत्वेन चेति** । आनन्दमयशब्दस्य शब्दत्वेन रूपेण शब्दान्तरोदाहरणत्वे उपप्लवः सन्दिग्धत्वेन च । अर्थान्तरोपलक्षणत्व उपप्लव इत्यर्थः । अयमत्र विवेकः । यदा आनन्दमयादिशब्दानां शब्दान्तरोदाहरणत्वमिति पक्षः । तदा वेदपुरुषस्य 'अग्नये त्वा जुष्टं निर्वपामी'त्यत्र 'सूर्याय त्वा जुष्टं निर्वपामी'त्यूहवत् सूत्रकारस्यापि आनन्दमयोऽभ्यासादित्यादौ अन्नमयादिशब्दऊहोऽभिमतः । अर्थलक्षणापक्षे तु आनन्दमयशब्देन अर्थयुगपदेव अन्नमयाद्यर्थानामुपस्थितत्वात् । तेषां ब्रह्मत्वसाधिते तच्छब्दानां समन्वयः सिद्ध्यतीति न पृथक् प्रयतितव्यमिति ।





**विठ्ठल०**— ननु विश्वतोमुखत्वभङ्गभयेन समानन्यायविषयशब्दान्तरोपलक्षणं क्रियत इत्ययुक्तम् । तथात्वे समानन्यायविषयेऽधिकरणान्तरारम्भानुपपत्तेरिति शङ्कायां कः परिहारोऽनेन लब्ध इत्यत आह **इदमुक्तं भवतीति**।

**॥ इति लक्षणाश्रयणे बाधकाभावः ॥**

* * *

**॥ अथ लाक्षणिकशब्दप्रयोगे प्रयोजने 'लक्षणानाश्रयणे बाधकस्य समर्थनम्' ॥**

११ **सु०**— ननु सर्वशाखानिर्णायकत्वमेवैषां सूत्राणां नास्ति । सर्वशाखानां कार्यनिष्ठत्वेनाब्रह्मविषयत्वात् । ब्रह्मनिष्ठस्तु वेदान्तभागोऽल्पीयान् विनापि लक्षणाऽऽश्रयणेन यथाश्रुतार्थैः सूत्रैः शक्यो निर्णेतुमिति किं लक्षणाऽऽश्रयणेनेत्यत आह **सर्वे वेदा इति** ।

**अनु०**— **सर्वे वेदा आमनन्ति यत्पदं त्विति हि श्रुतिः ॥**

सर्वेषामपि वेदानां ब्रह्मनिष्ठतामाहेति शेषः ।

**परि०**— श्रुतिरित्यनन्तरमपेक्षितं पूरयति **इति शेष इति**।

**॥ इति लक्षणाश्रयणे बाधकस्य समर्थनम् ॥**

**॥ इति लाक्षणिकशब्दप्रयोगे प्रयोजनम् ॥**

**॥ इति एतदधिकरणीयप्रथमसूत्रानुभाष्योक्तोत्तरपक्षे 'आनन्दमयपूर्विणां शब्दानामुपलक्षणत्वम्' ॥**

* * *

**॥ अथ एतदधिकरणीयप्रथमसूत्रानुभाष्योक्तोत्तरपक्षे**
**'अन्नमयशब्दस्थाने आनन्दमयशब्दोपादानस्य प्रयोजनम्' ॥**

१२ **सु०**— यद्यत्रोपलक्षणमभिप्रेतं स्यात्तदा प्रथमप्राप्तत्वादन्नमयशब्दमेवोपादद्यात् । आनन्दमयशब्दं तूपाददत्सूत्रकारस्तन्मात्रविवक्षां सूचयतीत्यत आह **आनन्दमयेति**।

**अनु०**— **आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः ।**
**समस्ताब्रह्मताप्राप्तेरानन्दमयनाम हि ॥**





अन्नमयादीनामब्रह्मत्वे विकारशब्दः साधारणोपपत्तिः । **आनन्दमयरूपे तु,** ब्रह्मविदाप्नोति परमित्युक्तस्य **ब्रह्मणो,** 'ब्रह्म पुच्छं प्रतिष्ठा' इति पुच्छत्वोक्त्या, **समस्तस्य** अवयविन आनन्दमयस्य **अब्रह्मत्वप्राप्तिः** अधिकाऽप्युपपत्तिरस्तीत्यतोऽत्रावहितैर्भवितव्यमिति ज्ञापयितुम् **आनन्दमयनाम** गृहीतं सूत्रकृतेत्यन्यथोपपत्तिरुक्ता भव(ती)ति । यद्वानन्दमयो ब्रह्म स्यात्तदा तदवयवस्य **समस्ताया** मुख्याया **आब्रह्मतायाः** सम्यग्ब्रह्मताया **अप्राप्तेः** इति वा । ततश्च तद्वेदनात्परप्राप्तिः श्रुता बाध्येतेति ।

नन्वन्नमयेऽप्यधिकाऽनुपपत्तिरस्ति । 'ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः' इति, 'तस्येदमेव शिरः' इति च । मैवम् । अस्यापि विकारोपपादकत्वेन तदन्तर्भावात् ।

यद्वा 'अथातो ब्रह्मजिज्ञासे'ति जिज्ञास्यतयोक्तस्य ब्रह्मणः, पुच्छत्वोक्त्या, **समस्ताब्रह्मताप्राप्तेः,** आनन्दमयविचारस्य प्रकृतेन सङ्गतत्वात्, आनन्दमयनामग्रहणमिति योज्यम् ।

**परि०— समस्तस्येत्य**नुवादः । **अवयविन** इति व्याख्या । **अवहितैः** सावधानैरित्यर्थः । मास्तु पुच्छस्य मुख्यब्रह्मत्वमित्यत आह **ततश्चेति । तद्वेदनात्** 'ब्रह्मविदाप्नोति परमि'त्युक्तब्रह्मज्ञानात् । परब्रह्मप्राप्तिर्या श्रुता सा बाधिता स्यादित्यर्थः । **अधिकानुपपत्तिरिति ।** प्राकृतान्नविकारदेहपरामर्शादिरूपेत्यर्थः । **विकारोपपादकत्वेनेति ।** अत एव पूर्वपक्षदशायामन्नमयादिशब्दे तावद्विकारार्थोऽङ्गीकार्य इत्यादिना तथैवोक्तमिति भावः । **प्रकृतेनेति ।** जिज्ञासासूत्रेणेत्यर्थः । उपलक्षणमेतत् । तत्राऽऽनन्दादयो गुणाः । ईशस्यैवेति निर्णीता इत्युपासनापादीयानुव्याख्यानसुधायामुक्तदिशा सर्वापेक्षितानन्दप्रदोपासनाविषयमहागुणवाचित्वेनाध्यायादौ मङ्गलार्थत्वाच्चेत्यपि ध्येयम् ।

**यादु०— अन्यथोपपत्तिरुक्ता भवतीति ।** तन्मात्रविवक्षाज्ञापकानन्दमयनामोपादानान्यथाऽनुपपत्तेरिति शेषः ।

**आनन्दः—** आनन्दमयशब्देन समानन्यायानां शब्दानां उपलक्षणं किमर्थमित्यपेक्षायायां सर्वशाखानिर्णायकत्वसिद्ध्यर्थं उपलक्षणमित्युक्तम् । तज्ज्ञापकाभावात्तदभावज्ञापकसत्त्वाच्चेत्याशङ्कते **यद्यत्रेति ।** तथा च आनन्दमयशब्दस्यैव ग्रहणे निमित्तान्तरसद्भावाद्युक्तमुपलक्षणमिति । तद्वेदनात् परब्रह्मज्ञानात् अधिकानुपपत्तिरस्तीति । ओषधिजनितान्नविकारादेः शरीररूपप्रत्यक्षनिर्देशरूपाच्चानुपपत्तिरधिकास्तीत्यर्थः । तदनुपपत्तिद्वयप्रतिपादकवाक्यद्वयं क्रमेणोदाहरति **ओषधीभ्य इति । विकारोपपादकत्वेनेति ।** न चैतत्कथमिति वाच्यम् ।





अन्नमय इत्यत्र मयटो विकारमात्रार्थत्वमयुक्तम् । तस्य प्राचुर्येऽपि विधानादिति विकारपरत्वानुपपत्तौ । ओषधिजनितान्नविकाररूपदेहस्य प्रकृतत्वादिदमिति प्रत्यक्षनिर्देशाच्च विकारार्थत्वमेव मयट् स्वीकर्तव्यमिति विकारोपपादकत्वेनाधिकानुपपत्तिकत्वाभावादिति । प्रकारान्तरेणानन्दमयानामग्रहणमुपपादयति **यद्वेति** । **आनन्दमयस्येति** । न च आनन्दमयस्य ब्रह्मत्वे ब्रह्मशब्दाभ्यासस्य हेतूकृतत्वात्तस्य चानन्दमयादिष्वभावात्कथं तस्याब्रह्मत्वे तत्रानैकान्त्योद्भावनमिति वाच्यम् । तस्यापि ब्रह्मत्वेन ब्रह्मशब्दस्यैव हेतूकृतत्वात् । अभ्यासप्रदर्शनं तु अभ्यासोऽप्यस्तीति भावेन न तु तस्य हेतुत्वमित्याशयेन तथा सति विशेषणवैयर्थ्यापत्तेरिति भावः ।

**श्रीनिधि०— तदा तदवयवस्येति** । ब्रह्म पुच्छं प्रतिष्ठेत्युक्तस्य ब्रह्मण इति भावः । न ह्यवयवावयविनोः उभयोरपि पूर्णत्वं युज्यते । अवयवस्यावयव्यपेक्षया अल्पत्वदर्शनादित्याशयः । **परप्राप्तिः श्रुतेति** । ब्रह्मविदाप्नोति परमिति श्रुतेत्यर्थः । न ह्यपूर्णज्ञानान् मुक्तिर्युज्यत इति भावः । **तस्येदमेव शिर इति चेति** । ब्रह्मण अप्रत्यक्षत्वात् शिरोरहितत्वाच्च इति भावः ।

**शे०वा०— अन्यथोपपत्तिरुक्ता भवतीति** । आनन्दमयमात्रविवक्षाज्ञापकानन्दमयशब्दोपादानान्यथाऽनुपपत्तेरिति शेषः । **विकारोपपादकत्वेनेति** । परामर्शप्रत्यक्षनिर्देशाभ्यामन्नविकारशरीरस्यैवात्र विवक्षणीयत्वेन मयटो विकारार्थत्वमेव न्याय्यं न प्राचुर्यार्थत्वमित्यनेन प्रकारेण विकारोपपादकत्वेनेत्यर्थः ।

**विठ्ठल०— अन्यथोपपत्तिरुक्ता भवतीति** । सूत्रे आनन्दमयपदोपादानान्यथानुपपत्त्या तन्मात्रविवक्षा सूत्रकारस्येत्याशङ्कायाम् आनन्दमयपदग्रहणस्यानन्दमयस्याब्रह्मत्वे विशेषाक्षेपसद्भावात् तद्ग्रहणमित्यन्यथोपपत्तिरुक्तेत्यर्थः । प्राक् अवयवस्य ब्रह्मत्वे अवयविन आनन्दमयस्याब्रह्मत्वमिति पूर्वपक्षप्रापकोपपत्तिप्रतिपादनपरतया व्याख्यातम् । इदानीम् आनन्दमयस्य ब्रह्मत्वाङ्गीकारे ब्रह्मपुच्छमिति तच्छेषतयोक्तस्य ब्रह्मणो मुख्यब्रह्मत्वायोगेन ब्रह्मविदाऽप्नोति परम् इति तज्ज्ञानान्मोक्षोक्तिरनुपपन्नेत्याशयेन व्याचष्टे **यद्यानन्दमय इति** । **विकारोपपादकत्वेनेति** । परामर्शप्रत्यक्षनिर्देशाभ्यामन्नविकारशरीरस्यैवात्र विवक्षणीयत्वेन मयटो विकारार्थत्वमेव न्यायमिति विकारोपपादकत्वेनेत्यर्थः । भाष्यरीत्या सङ्गतिसद्भावोपपादनपरतयापि योजयति **यद्वेति** । 'च'शब्देन अस्मिन्नस्य च तद्योगं शास्तीत्यादीनाम् इति । 'आनन्दो ब्रह्मेति व्यजानादि'त्यादौ आनन्दं ब्रह्मण इत्यादौ च श्रूयमाणानन्दादिगुणानां ग्रहणम् । अन्यथा ब्रह्मशब्दस्य हेतोस्तत्र व्यभिचारप्रसङ्गात् । आनन्दादीनामित्यस्य पक्षत्वं सूत्रकारेणाङ्गीकृतमिति ज्ञायत (इत्यत्र) आदिपदेन मन्त्रवर्णसमाख्या मोक्षसाधनज्ञानविषयत्वादि ग्रहणम् । प्राथमिकतया मान्त्रवर्णिकमेव गीयत इत्यादि हेतूनामिति वक्तव्ये तद्योगशासनलिङ्गप्राबल्यादेवमुक्तमिति ध्येयम् ।

**चषकः— विकारोपपादकत्वेनेति** । परामर्शप्रत्यक्षनिर्देशाभ्यामन्नविकारशरीरस्यैवात्र विवक्षणीयत्वे मयटो विकारार्थकत्वमेव न्याय्यमिति विकारोपपादकत्वेनेत्यर्थः ।

**॥ इति अन्नमयशब्दस्थाने आनन्दमयशब्दोपादानस्य प्रयोजनम् ॥**

* * *





**॥ अथ एतदधिकरणीयप्रथमसूत्रानुभाष्योक्तोत्तरपक्षे**
**'आनन्दमयशब्दस्य अन्नमयाद्युपलक्षणत्वे प्रयोजनम्' ॥**

**१३ सु०—** ननु सूत्राणामुपलक्षणत्वाभावे सर्वशाखानिर्णयाभावप्रसङ्गेनास्तूपलक्षणत्वम्, आनन्दमयशब्दस्यान्नमयाद्युपलक्षणत्वमित्ययं विशेषः कुत इत्यत आह **ब्रह्मशब्दस्येति।**

**अनु०— ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम्।**

**आनन्दमयस्य ब्रह्मत्वे हि हेतुत्वेन (यो) ब्रह्मशब्दाभ्यासोऽभिहितः सोऽन्नमयादिष्वपि समानः। तथा चान्नमयादीनामब्रह्मत्वेऽनैकान्तिकः कथमानन्दमयस्यापि ब्रह्मत्वं साधयेत्, अतोऽन्नमयादिसाधारणं ब्रह्मशब्दाभ्यासं हेतुत्वेन वदता सूत्रकारेण तेषामपि पक्षत्वमङ्गीकृतमिति ज्ञायते। चशब्देन 'अस्मिन्नस्य च तद्योगं शास्ती'त्यादिहेतूनामपि साधारण्यं सूचयति। आदिग्रहणादानन्दादीनां ग्रहणम्। तस्मादुक्त एव सूत्रार्थ इति।**

**परि०— ब्रह्मशब्दाभ्यासोऽभिहित इति**। ब्रह्मशब्दोऽभिहित इत्यर्थः। तथैव प्राक् 'ब्रह्मशब्दस्य श्रुतत्वादि'ति व्याख्यानात्। तथा च सोऽन्नमयादिष्वपि समान इति ग्रन्थस्साधुः। **इत्यादिहेतूनामिति**। 'अस्मिन्नि'तिसूत्रोक्तमुक्तगम्यत्व,-'मान्त्रवर्णिक'सूत्रोक्तमन्त्रवर्णोक्तत्व,-तदुपलक्षितभृगुवल्लीसमाख्यादिहेतूनामित्यर्थः।

**यादु०— विकारोपपादकत्वेनेति**। परामर्शप्रत्यक्षनिर्देशाभ्यामन्नविकारिशरीरस्यैवात्र विवक्षणीयत्वे मयटो विकारार्थत्वमेव न्याय्यमिति विकारोपपादकत्वेनेत्यर्थः। **चशब्देनास्मिन्निति**। यद्यपि 'मान्त्रवर्णिकमेव च गीयत' इत्यादिहेतूनामिति वक्तव्यम्। तथाऽपि मान्त्रवर्णिकसमाख्यायाः पञ्चरूपविषयत्वस्यास्पष्टप्रतिभासादेवमुक्तमित्यवगन्तव्यम्। आदिपदेनेतरज्ञानान्मोक्षानुपपत्तिमान्त्रवर्णिकसमाख्ययोस्तदुपलक्षितभृगुवल्लीवाधूलशाखासमाख्यादेश्च ग्रहणम्। **आदिग्रहणादानन्दादीनामिति**। 'आनन्दो ब्रह्मेति व्यजानादि'त्यादौ श्रूयमाणानामानन्दादीनामपि गुणवाचिनामत्र पक्षत्वम्। अन्यथा ब्रह्मशब्दस्य तत्र व्यभिचारप्रसङ्ग इतीममर्थमादिशब्देनाहेत्यर्थः। यद्यपि 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यत' इति वक्ष्यमाणरीत्या तेऽपि गुणवाचिन एव। तथाऽप्यन्यत्र प्रसिद्धत्वादिवदापातप्रतीत्यनुरोधेनेयमुक्तिरित्यवधेयम्।

**आनन्दः—** आनन्दमयस्य ब्रह्मत्वे पुच्छवाक्यानुपपत्तिं शङ्कते **नन्विति**।





**श्रीनिधि०— आनन्दादीनां ग्रहणमिति**। गुणवाचिनां इति भावः। तत्रापि ज्ञानानन्दो ब्रह्मेति व्यजानात् इति ब्रह्मशब्दश्रवणादिति भावः।

**शे०वा०— अस्मिन्नस्य च तद्योगं शास्तीत्यादिहेतूनामिति**। यद्यप्यत्र मान्त्रवर्णिकमेव च गीयत इत्यादिहेतूनामिति वक्तव्यम्। तस्याऽप्यन्नमयादिपञ्चकसाधारण्यात्। यद्वक्ष्यति 'अन्नमयादीनां पञ्चानामपि परब्रह्मत्वं युक्त्यन्तरेण प्रतिपादयितुं सूत्रमि'ति तथाऽपि व्युत्पादनसापेक्षत्वान्मान्त्रवर्णिकसमाख्याया अत्र अग्रहणमिति द्रष्टव्यम्। अत्रादिपदेनान्नमयादिज्ञानान्मोक्षानुपपत्त्यादिहेतूनां परामर्शः। **आदिग्रहणादिति**। आनन्दादीनामप्यत्र पक्षत्वमिति ज्ञापयितुं पंञ्चरूपादिष्वित्यत्रादिपदमित्यर्थः। अन्यथाऽऽनन्दादिसाधारण्ये-नानैकान्तिकतया ब्रह्मशब्दस्य नानन्दमयब्रह्मत्वव्यवस्थापकत्वं स्यादिति भावः। यद्यपि 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते' इति वक्ष्यमाणरीत्या तेऽपि गुणिवाचिन एव तथाऽप्यापातप्रतीत्यनुरोधेनेयमुक्तिरत एव द्वितीयपादे तथैव व्युत्पादयिष्यतीति ध्येयम्।

**वा०र०— व्युत्पादनसापेक्षत्वादिति**। वक्ष्यमाणमूलोक्तरीत्येति पूरणीयम्। **अन्नमयादिज्ञानान्मोक्षेति**। एतच्च सर्वमेव त आयुर्यन्तीत्यन्नमयज्ञानान्मोक्षः श्रुत इत्युत्तरमूलटीकायामुपपादयिष्यते। ब्रह्मविदाप्नोति परमि-त्यादिपूर्वपक्षावसरे उक्तप्रकारेण ब्रह्मविदिति श्रुतिप्रकृतब्रह्मणः पुच्छत्वोक्तिमूलका। ततश्च ब्रह्मज्ञानान्मोक्षायोग इति श्रुत्युक्तफलानुपपत्तिफलकशङ्कानिरासपरतया आनन्दमयनयप्रवृत्तिरूपानन्दमयसङ्गतिवर्णनापेक्षया प्रथमसूत्र-प्रकृतब्रह्मणः पुच्छत्वोक्त्या जिज्ञास्यत्वानुपपत्तिरिति सूत्रप्रकृतस्यैव पुच्छत्वोक्तिमूलकजिज्ञास्यत्वानुपपत्तिफलक-शङ्कावारकतया आनन्दमयप्रवृत्तिरूपतन्नयसङ्गतिवर्णनमतिस्वरसमिति मत्वा ब्रह्मजिज्ञासा कर्तव्येत्युक्तमिति सूत्रभाष्योक्तामानन्दमयनयस्य पूर्वसङ्गतिमाह **यद्वा अथातो ब्रह्मजिज्ञासेतीति**। **समस्ताब्रह्मतेति**। समस्ताया मुख्याया अब्रह्मताया सम्यक् ब्रह्मताया अप्राप्तेरिति योजनां पूर्वोक्तां सिद्धवत्कृत्य यथाश्रुतानुवाद इति ज्ञेयम्। **आनन्दादीनामप्यत्रेति**। आनन्दादिशब्दवाच्यानामित्यर्थः। अत्र पक्षविचारः स्वल्पो न हि पक्षे व्यभिचार इत्येतन्मूलव्याख्यावसरे करिष्यते। **तथैव व्युत्पादयिष्यतीति**। तथाप्यन्यत्र प्रसिद्धत्वादिवदापातप्रतीत्यनुरोधे-नेयमुक्तिरित्यदोष इति सर्वगतत्वाधिकरण इति शेषः।

**स०व्र०— आदिग्रहणादानन्दादीनामिति**। 'गुणवाचिनां च प्रथममाह देवः समन्वयम्' इत्युक्त-त्वेनात्राधिकरणे गुणवाचकानन्दादिशब्दानामपि निर्णेतव्यत्वेन 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादौ श्रूयमाणाना-मानन्दादीनामपि पक्षत्वम्। अन्यथा ब्रह्मशब्दस्य तत्र तत्र व्यभिचारप्रसङ्गादितीममर्थं आदिशब्देनाहेत्यर्थः।

**विठ्ठल०— आदिग्रहणादानन्दादीनामिति**। 'आनन्दो ब्रह्मेति व्यजानादि'त्यादौ आनन्दं ब्रह्मण इत्यादौ च श्रूयमाणानन्दादिगुणानां ग्रहणम्। अन्यथा ब्रह्मशब्दस्य हेतोस्तत्र व्यभिचारप्रसङ्गात्। आनन्दादीनाम् इत्यस्य पक्षत्वं सूत्रकारेणाङ्गीकृतमिति ज्ञायत इति पूर्वानुवृत्त्या सम्बन्धः। नन्वानन्दो ब्रह्मेत्याद्यैः कथम् आनन्दादीनां





पृथग्ग्रहणम् । (ग्रहणं) प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यत इति वक्ष्यमाणरीत्या आनन्दादिशब्दानाम् आनन्दमयादिनामेकदेशग्रहणरूपत्वादिति चेत्सत्यं, भगवति गुणगुणिनोरभेदः । गुणानामेव गुणित्वं च गुणानां द्रव्यात्मकत्वं तद्वन्ताहि विशेषतः स्वेनैव गुणी गुणः सर्वे सर्वगुणात्मानः सर्वकर्तार एव चेत्याद्यनेक-प्रमाणावगतत्वेनानन्दो ब्रह्मेत्यादौ गुणत्वविवक्षा गुणित्वविवक्षाभ्यां चास्ति । तत्र गुणित्वविवक्षया प्राप्यत्वेनोप-पत्तिः गुणत्वविवक्षया आदिशब्दादानन्दादीनाम् इत्याद्युक्तिः । अन्यथानिर्देशे च गुणवाचकैरित्युपसंहारायोग इति ध्येयम् ।

**चषकः— चशब्देनास्मिन्नित्यादि** । अन्नमयादीनां पञ्चानामपि परब्रह्मत्वं युक्त्यन्तरेण प्रतिपादयितुं सूत्रमिति ग्रन्थकृदभिधास्यमानतया मान्त्रवर्णिकगानस्यान्नमयादिपञ्चकसाधारण्यादत्र मान्त्रवर्णिकमेव च गीयत इत्यादिहेतूनामित्यभिधातव्यत्वेऽपि मान्त्रवर्णिकसमाख्यायास्तत्पञ्चकसाधारण्यस्य व्युत्पादनसापेक्षतया तन्निर-पेक्षादरात्तथाऽनभिहितिरिति ध्येयम् । आदिपदमितरज्ञानान्मोक्षानुपपत्तिमन्त्रवर्णिकसमाख्याऽऽदिसङ्ग्राहकम् । **आदिग्रहणादिति** । 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादौ श्रूयमाणानां गुणवाचिनामानन्दादिपदानां प्रकृतपक्षता-वच्छेदकाभिमतगुणवाचकगुणिसामान्यवाचकान्यतरत्वरूपधर्माक्रान्ततां ध्वनयितुं पञ्चरूपादिष्विति मौलमादि-पदोपादानमितरथा ब्रह्मशब्दस्य तत्रानैकान्त्यप्रसङ्गादिति भावः । 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यत' इत्यनुव्याकर्त्रभिधास्यमानदिशाऽनन्दादिपदानामपि गुणिवाचकत्वेऽपि लिङ्गपादे तथैव ग्रन्थकृदभिधास्यमानत्वे-ऽप्यापातप्रतीतिमनुरुध्येत्थमभिहितिरिति ध्येयम् ।

**॥ अथ आनन्दमयशब्दस्यान्नमयाद्युपलक्षणत्वे प्रयोजने**
**'आनन्दमयस्य ब्रह्मत्वे प्राप्ताया अनुपपत्तेः परिहारः' ॥**

**१४ सु०— नन्वानन्दमयस्य कथं ब्रह्मत्वम्, 'ब्रह्म पुच्छमि'ति ब्रह्मणस्तत्पुच्छत्वाभि-धानात् । न च ब्रह्मशब्दोऽन्यपरः, तथा सत्यत्रैवानैकान्त्यापत्तेः । न च निरपवादो ब्रह्म-शब्दो हेतुः न ब्रह्मशब्दमात्रमिति वाच्यम्, 'ब्रह्म पुच्छमि'त्यत्राप्यपवादाभावात् । ब्रह्मा-वयवत्वमिति चेन्न अद्याप्यानन्दमयस्य ब्रह्मत्वासिद्धेरिति ॥ अत्र प्रष्टव्यम् । किमवयवस्य पूर्णत्वेऽवयविनः पूर्णत्वं नोपपद्यत इत्यभिप्रायः, किं वा आनन्दमयस्यावयविनः पूर्णत्वे तदवयवस्य पूर्णत्वाभावापादनम्, उतावयवावयविनोर्भेदादवयवस्य परमात्मत्वे नावय-विनस्तत्त्वमिति ।**

**आद्ये दोषमाह ब्रह्मतेति ।**

**अनु०— ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वतः ॥**





यदाऽवयवेऽपि ब्रह्मता, तथा सत्यवयविनि सा स्वतोऽनायासेन स्यात्, अवयविनोऽवयवापेक्षया महत्त्वस्य दृष्टत्वात् । ततश्चावयवस्य पूर्णत्वेऽवयविनः पूर्णत्वानुपपत्तिरिति विरुद्धमेतत् ।

द्वितीये व्याप्त्यभावं दर्शयति **यथैवेति** ।

**यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ।**

एतच्च 'उद्धबर्हात्मनः केशौ' इत्यादिना पुराणे प्रसिद्धम् । **अखिला** निरुपचरिता । तथाऽऽनन्दमयावयवस्यापि भविष्यतीति शेषः ।

अत्र प्रमाणमाह **दर्शिता चेति** ।

**दर्शिता चैव पार्थाय**

पार्थदर्शनं च 'द्यावापृथिव्योरि'त्यादि तद्वाक्यादवगम्यते । चशब्दः पुराणाद्युक्तिसमुच्चयार्थः । एवशब्दस्त्वेवं प्रमितैव न वाङ्मात्रेणोच्यत इति सम्बध्यते ।

ननु लोके योऽवयवः स परिच्छिन्नो दृष्टस्तत्कथमेतदित्यतः परमेश्वरस्याघटितघटकतया सर्वत्राप्रतिबद्धया शक्त्याऽन्यत्रादृष्टमपि घटते काऽत्र कथन्तेत्याह **निःसीमा इति** ।

**निःसीमाः शक्तयोऽस्य हि ॥**

'सीमसीमे स्त्रियामुभे' इति सीमन्शब्दपर्यायसीमाशब्दोत्तरपदोऽयं समासः । सीमन्शब्दोत्तरपदत्वेऽपि 'डाबुभाभ्यामन्यतरस्यामि'ति साधु ।

तृतीयेऽप्येतदेवोत्तरम् । **निःसीमा इति** ।

**हि**शब्दो हेतौ । 'शिरो नारायण' इत्यादिप्रसिद्धिद्योतको वा ।





**परि०**— तथेति मूलपदस्यार्थमाह **तथा सतीति** । **उद्धबर्हेति** । ''उद्धबर्हात्मनः केशौ सितकृष्णौ महामुने। उवाच च सुरानेतौ मत्केशौ वसुधातले। अवतीर्य भुवो भारक्लेशहानिं करिष्यतः'' इत्यादिविष्णुपुराणे पञ्चमांशे प्रसिद्धमित्यर्थः। **अत्र प्रमाणमाहेति**। व्याप्तत्वेऽर्जुनप्रत्यक्षं प्रमाणमाहेत्यर्थः। ''द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वा'' इत्येकादशगीतास्थार्जुनवाक्यादवगम्यते पार्थप्रत्यक्षमित्यर्थः। **पुराणाद्युक्तीति**। पुराणेतिहासादौ व्याप्तत्वोक्तिसमुच्चयार्थ इत्यर्थः। ननु सीमन्शब्दस्य नकारान्तत्वेन 'ऋन्नेभ्यो ङीबि'ति प्राप्तङीप्प्रत्ययस्य 'मन' इति सूत्रेण मन्नन्तात्प्रातिपदिकात् ङीप् न भवतीति निषेधेऽपि 'निस्सीमानोऽस्य शक्तय' इति वाच्यमित्यत आह **सीमसीमे स्त्रियामुभे इतीति**। इत्यमरोक्तेरिति योज्यम्। **डाबुभाभ्यामिति**। मन्नन्तात्प्रातिपदिकादन्नन्ताच्च बहुव्रीहेर्विकल्पेन डाप्प्रत्ययो भवतीति चतुर्थाद्यपादे पाणिन्युक्त्या डाप्प्रत्ययान्तत्वात् साधुरित्यर्थः। उतावयवावयविनोर्भेदादित्यादिनोक्तपक्षं निराह **तृतीयेऽपीति**। **इत्यादिप्रसिद्धीति**। भाष्योक्तस्मृतिप्रसिद्धीत्यर्थः। तथाच ''अङ्गाङ्गित्वेन भगवान् स्वानन्दानुभवे स्थितः। स एव व्यूह्य चात्मानं पृथग्रूप इव स्थित' इत्यैतरेयभाष्योक्तदिशा नारायणवासुदेवादिरूपैर्नानारत्नविनिर्मितप्रतिमावत्पुञ्जीभूतदिव्यलक्षणरूपविशेषेण भगवत एवाङ्गत्वमङ्गित्वं चोपपन्नमिति द्वयोः परमात्मत्वं नायुक्तमिति भावः।

**गु०दी०**— **तृतीयेऽप्येतदेवोत्तरम्** इत्यत्र भगवति अवयवावयविनोर्भेद एव न। किन्त्वभेद एवेति बहिरेवोत्तरं दातव्यम्। तर्ह्यवयवावयविभावः कथमिति शङ्कायामेतदेवोत्तरमित्यादि योजनीयम्।

**यादु०**— ननु सीमन्शब्दस्य नकारान्तस्य स्त्रियां मन इति ङीप्निषेधान्निःसीमान इति भवितव्यं निःसीमा इति कथमित्यत आह **सीमसीमेति**। नान्तत्वमभ्युपेत्याप्याह **सीमन्शब्दोत्तरेति**। मन्नन्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहेश्च ङीप् वा स्यादिति सूत्रार्थः। सीमे सीमानौ बहुयज्वे बहुयज्वानामित्युदाहरणम्। तथा चानेन डापि टिलोपे चाऽऽकारान्तत्वं साध्वित्यर्थः।

**वं०प०**— ब्रह्मणस्तत्पुच्छत्वाभिधानादित्यत्र ब्रह्मण इत्यस्य जिज्ञास्यतयोक्तस्य ब्रह्मण इत्यर्थः। **ब्रह्मशब्द इति**। ब्रह्मपुच्छमित्यत्रेत्यर्थः। **अन्यपर इति**। जिज्ञास्यब्रह्मव्यतिरिक्तचतुर्मुखादिपर इत्यर्थः। **उद्धबर्हेति**। 'उद्धबर्हात्मनः केशौ सितकृष्णौ महामुने। उवाच च सुरानेतौ मत्केशौ वसुधातले। अवतीर्य भुवो भारक्लेशहानिं करिष्यत' इत्यादिना विष्णुपुराणप्रसिद्धमित्यर्थः। **अत्र** व्याप्तत्वे। **प्रमाणम्** अर्जुनप्रत्यक्षरूपं प्रमाणम्। 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्येकादशाध्यायगीतावाक्याज्ज्ञायतेऽर्जुनप्रत्यक्षमित्यर्थः। **सीमसीमे इति**। सीम च सीमा च सीमसीमे इत्यर्थः।





**आनन्दः**— ब्रह्मपुच्छमित्यत्र पुच्छस्य ब्रह्मत्वं नाम पूर्णत्वं वा परमात्मत्वं वा अत्राद्यं द्वेधा विकल्पयति **किमवयवस्येति** । पूर्णद्वयस्यादृष्टत्वादन्यशेषस्य पूर्णत्वायोगाच्चेति विकल्पवृत्तिः । तृतीयपक्षस्तु ब्रह्मत्वं परमात्मत्वमित्यनुसारेण न चान्यत्रापि कल्पेऽवयविनः परमात्मत्वेऽवयवस्य तथोपपद्यत इति कुतो न विकल्पितमिति वाच्यम् । तदन्तर्गतत्वेन सोऽप्यूह्य इति भावेन तदनुक्तेरिति भावः । ननु सीमान् शब्दस्य हलन्तत्वान्निःसीमान इति भवेत् निःसीमा इति तु कथमुपपद्यत इत्यत्राह **सीमसीमे इति** । अस्तु वा सीमन्शब्दस्यैवैतद्रूपं तथापि न दोषः डाबुभाभ्यामित्यनेन डापि सति डित्वाट्टिलोपे च सति निःसीमा इति सिद्ध्यतीत्याह **सीमन्निति** ।

**श्रीनिधि॰— डाबुभाभ्यामिति** । अन्नन्तान्नन्ताभ्यामित्यर्थः । प्रकृते मन्नन्तत्वेन डापि कृते ठेरिति टिलोपे सीमेति सिद्ध्यतीति भावः । तथात्वे चान्तोदात्तत्वेनानुदात्तं पदमेकवर्जमित्यस्य प्रसङ्गेनेति । अत्रानुदात्तं पदमेकवर्जमित्यस्य प्रसङ्गेन प्रसञ्जनेन प्राप्त्येति यावत् । अनेन निमित्तेनान्तोदात्तत्वेन प्रातिपदिकस्य स्वरित-पूर्वपदान्तता न स्यात् इति योजना । सूत्रार्थस्तु यस्यापः उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा तत्पदं अनुदात्तं भवतीति । एवञ्च समासान्तरत्वेन समासस्य । समासस्यान्त उदात्तो भवतीति अन्तस्योदात्तत्वं अतिरिक्तस्य अनुदात्तत्वम् । तथा च स्वरितपूर्वपदान्तता न स्यात् । बहुव्रीहिपक्षे तु बहुव्रीहौ प्रकृत्या पूर्वपदमिति स्वरितपूर्वपदान्तता स्यादेव इति भावः ।

**शे॰वा॰— तथा सतीति** । ब्रह्मपुच्छमित्यत्र ब्रह्मशब्दस्यान्यपरत्व इत्यर्थः । **अत्रैवेति** । ब्रह्मपुच्छ-मित्यत्र ब्रह्मशब्दश्रवणेऽपि विष्णुत्वाभावादिति भावः । **न च निरपवाद इति** । तथा च हेतोरेवानागमनान्न व्यभिचार इति भावः । **अद्यापीति** । ततश्चानन्दमयस्य ब्रह्मत्वसिद्धौ ब्रह्मावयवत्वरूपापवादसिद्ध्या निरपवादब्रह्मशब्दस्य व्यभिचाराभावसिद्धिस्तत्सिद्धौ च तेनानन्दमयस्य ब्रह्मत्वसिद्धिरित्यन्योन्याश्रय इति भावः । **व्याप्त्यभावादिति** । यो यदवयवः सोऽपूर्ण एवेति व्याप्तेरभावादित्यर्थः । पूर्णत्वेऽपि कृष्णस्यावयवत्वस्यैवासिद्धेर्न तत्र व्यभिचार इत्यत आह **एतच्चेति** । **अत्रेति** । कृष्णस्य निरुपचरितपूर्णतायामित्यर्थः । परप्रत्यक्षस्य परं प्रत्यसिद्धेः कथमेतदित्यत-स्तद्वाक्यादेव तत्सिद्धिरित्याह **पार्थदर्शनं चेति** । ननु निर्गता सीमा याभ्यस्ता इति सीमन्शब्दोत्तरपदतया, समासस्य ऋन्नेभ्यो ङीबिति प्राप्तस्य ङीपो 'मन' इति निषेधान्निःसीमान इति भवितव्यम्, निःसीमा इति तु कथमित्यत आह **सीमसीमे इति** । सीमन्शब्दोत्तरपदत्वेऽपि समासस्य न दोष इत्याह **सीमन्निति** । अत्र डाबुभाभ्यामित्येको योगः । मन्नन्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहेश्च डाप् स्त्रियां स्यादिति तदर्थः । स चार्थाद्विकल्पितः । नित्ये हि डापि न क्वचिन्नान्तमस्तीति मनोऽनो बहुव्रीहिरिति ङीप् निषेधो निर्विषयः स्यात्ततोऽन्यतरस्यामित्यपरो योगः । डाबुभाभ्यामित्यनेनोक्तौ डाप्ङीप्निषेधौ द्वावपि वा स्त इति च तदर्थः । तेन तयोरभावेनान्तलक्षणो ङीबपि भवतीत्यर्थपर्यवसानात् डापि निःसीमा इति ङीप्निषेधे निःसीमान इति, ङीपि निःसीम्न्य इति, रूपत्रयस्यापि सम्भवान्नानुपपत्तिरिति ध्येयम् । (मनः । मन्नन्तान्न ङीप् सीमा । सीमानौ । अनो बहुव्रीहेः । अन्नन्ताद् बहुव्रीहेर्न ङीप् । बहुयज्वा बहुयज्वानौ । डाबुभाभ्यामन्यतरस्याम् । सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात् । सीमा सीमे सीमानौ । दामा दामानौ दामे । नपुंसिदामेत्यमरः । बहुयज्वा) न चैवं सीमेत्यत्रापि तत्प्रसङ्ग इति वाच्यम् । अन्यतरस्यामिति





योगे मन इत्यस्य निवृत्त्याऽन्नन्तबहुव्रीहिरिव विकल्पाश्रयणेन केवलमन्नन्तात्तदप्रसङ्गात् । न च मन इति निवृत्तौ निःसीम्नी(मन्नि)ति मन्नन्तबहुव्रीहौ ङीप्विकल्पो न स्यादिति वाच्यम् । तत्र मन्नन्तङीब्विकल्पानवकाशेऽप्यन्नन्तङीब्विकल्पस्य बहुसीम्नी बहुसीमे बहुसीमानावित्यादाविवाविरुद्धत्वात् । न चैवं मन्नन्तबहुव्रीहावप्यन्नन्तङीब्विकल्पाश्रयणेनैव महानाम्नीशब्दस्य व्युत्पादयितुं शक्यत्वेन कर्मनिर्णयटीकायां मन इति ङीप्निषेधाप्रवृत्तिव्युत्पादनायानित्यत्वाद्याश्रयणमनर्थकमिति वाच्यम् । चिरन्तनरीत्याऽन्यतरस्यामिति योगविभागमनाश्रित्य तत्र तदाश्रयणादिति दिक् । **तृतीयेऽपीति** । अवयवावयविनोर्भेदादवयवस्य परमात्मत्वेन नावयविनः परमात्मत्वमिति तृतीयेऽपीत्यर्थः । **एतदेवेति** । अघटितघटकेश्वरशक्त्या नावयविनोऽवयवत्वं विरुद्धमित्याशयः । उक्तस्यार्थस्य मूलारूढतायै हिशब्दं हेत्वर्थतया व्याचष्टे **हिशब्द इति** । ईश्वरशक्त्या प्रमितस्यैव दुर्घटस्य निर्वाहोऽन्यथाऽतिप्रसङ्गात् । न चावयविनोऽवयवत्वं प्रमितं तत्कथं तया निर्वाह इत्यत आह **शिरो नारायण इत्यादीति** ।

**वा०र०— यो यदवयव इति** । यस्य पूर्णस्यावयव इत्यर्थः । यः पूर्णावयव इति यावत् । पूर्णत्वेऽपीति वाक्ये कृष्णस्येत्येतन्मध्ये मणिन्यायेन पूर्वोत्तराभ्यां सम्बध्यते । अपूर्णत्वरूपसाध्याभाववत्वेऽपि पूर्णावयवत्वस्याभावेन हेतोरेव तत्राभावान्न व्यभिचार इत्यर्थः । मूले **केशावित्यादिने**त्यादिपदेन 'सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यतः' इति तदुत्तरवाक्यपरिग्रहः । **पुराण इति** । विष्णुपुराणे पञ्चमांशे इति योज्यम् । तत्रोज्जहारात्मन इति पाठपक्षे मूलेऽर्थानुवादः । **तत्रेति मूले** तथानन्दमयेति पूरितशेषरूपार्थ इति प्रतीतिं वारयितुं पूर्वभाष्यं प्रकृतार्थे इत्यर्थकतया तन्मूलं व्याख्याति **कृष्णस्येति** । **पार्थाय दर्शिते**त्यनेन पार्थेन निरुपचरितब्रह्मता दृष्टेति पार्थदर्शनमेव प्रत्यक्षरूपं प्रमाणमुक्तं भवतीति भाष्याद्याशयं व्यक्तीकुर्वन्प्रत्यक्षप्रमाणे साधककथनपरोत्तरवाक्यमवतारयति **परप्रत्यक्षस्येति** । **इत्यादितद्वाक्यादिति** । परं ब्रह्म परं धामेत्यादि तद्वाक्यमपि गृह्णते । **पुराणाद्युक्तीति** मूलम् । श्रीकृष्णस्य निरुपचरितब्रह्मताप्रतिपादकभागवतादिस्थ 'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमि'त्यादि तत्तद्वाक्येत्यर्थः । आदिपदेन इतिहासग्रहणम् । अत्र यशोदाप्रत्यक्षं चोपलक्षणया ग्राह्यम् । वक्ष्यमाणरीत्या सीमाशब्दोत्तरपदत्वे निःसीमा इत्यस्य दुर्घटत्वमस्तीत्याशयेन तत्पक्षानुसारेण विग्रहप्रदर्शनपूर्वकं तत्रानुपपत्तिं प्रदर्श्य तन्निवर्तकतयोत्तरं वाक्यमवतारयति **ननु निर्गतेत्यादिना** । अत्र निर्गता सीमा याभ्य इत्याबन्तनिर्गतशब्दस्यैव पाठः । निर्गत इति पुल्लिङ्गपाठः क्वाचित्कस्तु लेखकागतः । सीमन्शब्देति काव्ये मूलानुसारेण सीमेत्याकारान्तशब्दव्यावृत्तनान्तत्वस्पष्टीकरणाय सीमन्शब्दोत्तरपदतयेति सम्बन्धः । तस्य च निःसीमान इति भवितव्यमित्युत्तरेण सम्बन्धः ।

ननु तत्समासपदस्य नान्तत्वादेव ङीपि निःसीमान इति रूपं प्राप्नोतीति तथारूपापत्तिः कुतो न शक्यत इत्यत उक्तं **ऋन्नेभ्य** इत्यादि **निषेधा**दित्यन्तम् । मन्नन्तात्स्त्रियां न ङीबिति मन इति सूत्रस्यार्थः । सीमा सीमानौ । आकारान्तसीमाशब्दोत्तरपदत्वाङ्ङीकाराद्युक्तो निःसीम इति प्रयोग इत्याहेत्यर्थः । अस्य योगस्य बह्वर्थसमर्पकतायै अन्यतरस्यामिति ग्रहणवैयर्थ्यवारणाय च विभागमाश्रित्यार्थमाह **अत्र डाबित्यादिना** । शेष्यनुसारेणेदम् । प्रकृतानुगुणतया अधिकं च । नन्वेतावन्मात्रे योगे विकल्पसमर्पणायोगात् तत्समर्पणार्थं विशिष्ट एव योगः





स्वीकार्य इत्यत आह **स चेति** । **अर्थादिति** । डापयोर्वचनं ङीप्निषेधवचनं च तदुभयसामर्थ्यरूपार्थादित्यर्थः । अर्थादित्युक्तान्यथानुपपत्तिमेव दर्शयति **नित्ये हीति** । **तत इति** । तदनन्तरमित्यर्थः । पूर्वप्रयोगेनैव विकल्पसिद्धेरन्यतरस्यामित्यस्य व्यर्थता आयातीत्यत इत्यर्थः । **योग** इत्यनन्तरमाश्रीयत इति शेषः । **इत्यनेनोक्ताविति** । यद्यप्यनेन योगेन डाबेवोक्तस्तथाप्यर्थतो डापो विकल्पे सति डाबभावपक्षे नान्ततया ङीप्प्रसक्तौ मन इत्यादि तन्निषेधोऽप्यभ्यनुज्ञायत इति सोऽप्युक्तप्राय इत्याशयेनोभयोरुक्तत्वोक्तिर्युक्तेति विज्ञातव्यम् । विकल्पद्वये रूपत्रयं प्राप्तमित्याह **डापीत्यादिना** । **तत्प्रसङ्ग इति** । अत्र तदित्यनेन ङीप्मात्रं गृह्यते । न तु रूपत्रयग्रहणम् । डापीव ङीबभावपक्षेऽपि रूपे विशेषाभावेन रूपत्रयस्य परामर्शयोगात् । तथाच विकल्पेन डापिपक्षे च ङीपि सीमा सीम्नीति रूपद्वयं स्यादिति भावः । एवं तदप्रसङ्गादित्युत्तरवाक्येऽपि पक्षे ङीपोऽप्रसङ्गादित्यर्थो ज्ञेयः । **मन इत्यस्येति** । डाप्ङीप्निषेधयोर्विकल्पविधानार्थेऽप्यन्यतरस्यामिति योगे मन इति ङीप्निषेधस्य वृत्त्यङ्गीकारेण तद्विषये विकल्पस्यानेन प्रतिपादनात् प्रतिपादितस्य चान्नन्तबहुव्रीहेर्ङीप्निषेधविकल्पस्य केवले मन्नन्ते अत्र वृत्त्या ङीपः पक्षे प्राप्त्या प्रसङ्गेन सीमेत्येव रूपोपपत्तेरित्यर्थः । उक्तं च रमायाम् । अन्यतरस्यामिति योगो विभज्यते तत्र मन इति निवृत्तम् । अनोबहुव्रीहेर्डाप् वा स्यात् ङीपा सह विकल्पलाभार्थमिदमित्यादि । **न च मन इतीति** । अन्यतरस्यामिति योगे मन इत्यस्यापि सत्त्वे मन्नन्तात् डाप्ङीप्निषेधयोर्विकल्पासिद्धौ तयोः सतोर्निःसीमेति रूपवत्तयोरभावे निःसीम्नीति बहुव्रीहौ रूपस्य सम्भवेऽपि मन इत्यस्य निवृत्त्याश्रयणे मन्नन्तात् डाप्ङीप्निषेधयोर्विकल्पस्यानुक्तत्वप्राप्त्या मन्नन्तात् केवलादिवत् तदन्तबहुव्रीहेरपि डाप्ङीप्निषेधयोरभावपक्षे ङीपः प्रसङ्गाभावेन निः सीम्नीति बहुव्रीहौ रूपानुपपत्तिरित्यर्थः ।

अत्र **निःसीम्नीति मन्नन्तेति** पाठः । केवलमन्नन्तसीमेत्यत्र ङीबभावव्युत्पादनप्रसङ्गेन मन्नन्तात्तदभावापत्तिशङ्काया अभिप्रेतत्वस्य स्पष्टत्वात् डाप्ङीप्निषेधयोरभावपक्षे ङीप्सम्भवसिद्धवत्कारेणाशङ्कायां ङीबुपेतस्वरूपस्यैवोदाहर्तव्यत्वाच्च । क्वचित् **निःसीमन्निति** प्रतीतिपाठः । तत्रायमाशयः । ङीप्तदभावपक्षयोः क्रमेण निःसीम्नि, निःसीमनिति च रूपयोर्दृष्टतया विकल्पेन ङीप्प्रवृत्तिस्तावदेष्टव्या । असम्बुद्ध्युदाहरणसम्भवेऽपि ङीप्निषेधवत् डाप्निषेधोऽपि स्पष्टं विज्ञायेतेत्येतदर्थं सम्बुद्ध्युदाहरणम् । अन्यथा सम्बुद्ध्यभावे डापिवत्तदभावेऽपि निःसीमेत्येव रूपस्य विद्यमानतया न तया तत्र डाप्तदभावपक्षयोः रूपे भेदस्य विज्ञातुमशक्यत्वापातात् । सम्बुद्धौ तु ङीपि हे रमेत्यादिवत् निःसीमे इत्येव रूपसत्त्वेन तदभावे च निःसीमन्निति रूपसत्त्वेन विशेषज्ञानसम्भवादिति । **बहुसीम्नीति** । असम्बुद्धिपाठे एतदुदाहरणं यथाश्रुतमेव । सम्बुद्धिपाठे तु बहुसीम्नि, बहुसीमे इत्यादिह्रस्वपाठो व्याख्येयः, उपलक्षणा वा आश्रयणीयेति ज्ञेयम् ।

**अनित्यत्वाद्याश्रयणमिति** । आदिना पदत्वपरिग्रहः । नञा निर्दिष्टमनित्यमिति वा वेदत्वाद्वाऽत्र मन इति ङीपः निषेधो न प्रवर्तत इति कर्मनिर्णयटीकायामुक्तेः । आदिपदेन संज्ञाछन्दसोरित्यस्य ङीबुपपादकस्यापि स्पष्टं कर्मनिर्णयटीकायामनुक्तस्योपलक्षणतया चाभिप्रेतत्वमिति ज्ञातव्यम् । **योगविभागमनाश्रित्येति** । अन्यतरस्यामिति योगविभागाश्रयणे हि डाबुभाभ्यामित्यनेनोक्तौ डाप्निषेधौ वा स्त इति विकल्पद्वयप्राप्तौ सीमेत्यत्रापि ङीप्प्रसङ्गवारणाय मन इत्यस्यान्यतरस्यामिति योगेन वृत्त्यङ्गीकारप्राप्त्या तन्मूलकैतच्छङ्कावकाशोऽपि तदनाश्रयणपक्षे





डाप एव विकल्पाम्नानात् तदा किमुत्तरमुक्तमिति न प्रतीयते । अतस्तद्भाष्याभिप्रेतमुत्तरं दर्शयति **अघटितेति** । **उक्तार्थस्येति** । शक्तेर्हेतुत्वसमर्पकविभक्तिश्रवणाभावेन मूलात्तदप्रतीतेरिति भावः । **दुर्घटस्येति** । प्रमितस्यैव दुर्घटस्येश्वरशक्त्या निर्वाह इति सम्बन्धः । एतच्चाहिकुण्डलाधिकरणे स्पष्टं भविष्यतीति भावः । **अतिप्रसङ्गादिति** । अप्रमितस्यापि निर्वाहाङ्गीकारे शशशृङ्गादीनामपि दुर्घटानां तया निर्वाहः स्यादिति भावः ।

**स०व्र०**— ननु सीमशब्दस्य नकारान्तत्वेन 'ऋन्नेभ्यो ङीप्' इति ङीपि निस्सीम्न्य इति भवितव्यम् । निस्सीमा इत्युक्तिस्तु कथमित्यत आह **सीमसीमे स्त्रियामित्यादिना** । तथा च नान्तत्वाभावान्न ङीपः प्राप्तिरिति भावः । नान्तत्वमभ्युपेत्याप्याह **सीमन्शब्दोत्तरपदत्वेऽपीति** । अत्र डापि टिलोपे च सति आकारान्तत्वमेव भवतीति भावः ।

**विठ्ठल०**— **निरपवाद इति** । सङ्कोचशून्या इत्यर्थः । **ब्रह्मावयवत्वमिति** । आनन्दमयरूपा ब्रह्मावयवत्वमित्यर्थः । **उद्बबर्ह इति** । 'उद्बबर्हात्मनः केशौ सितकृष्णौ महाविभुः' इति विष्णुपुराणे । आदिपदेन भगवान् सितकृष्णकेश इति भागवतादिग्रहणम् । 'च'शब्द(ः)त् पुराणादीति । ननु सीमन्शब्दस्य नकारान्तत्वेन ऋन्नेभ्यो ङीबिति प्राप्तङीप्रत्ययस्य स्त्रियां मन इति सूत्रेण मन्नन्तात्प्रातिपदिकात् ङीप् न भवति इति निषेधान्निःसीमानः शक्तयः इति स्यादित्यत आह **सीमसीमा इति** । सीमन्शब्दवत्सीमाशब्दोऽप्यमरादौ पठित इति भावः । नान्तत्वमभ्युपेत्याह **सीमन्शब्दोत्तरपदत्वेऽपीति** डाबुभाभ्यामन्यतरस्याम् । नान्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहिर्डाप्प्रत्ययो विकल्पेन भवतीति सीमन्शब्दस्य अप्प्रत्ययान्तत्वान्निःसीमा इति साधुरिति भावः । **तृतीयेऽप्येतदेवोत्तरमिति** । अघटितघटकशक्त्या एकस्यैव अवयवावयविभावो युज्यत इत्युत्तरमित्यर्थः ।

**चषकः**— **तथा सति** ब्रह्मपुच्छमिति वाक्यघटकब्रह्मपदस्यान्यपरत्वे । अत्रैव ब्रह्म पुच्छमिति वाक्यप्रतिपाद्य एव । ब्रह्मपदश्रवणेऽपि तस्य विष्णुत्वानवगतेरिति भावः । **निरपवाद इति** । निरादयः क्रान्ताद्यर्थ इत्यनुशासनादपवादापादानकनिष्क्रान्तिविशेषित इत्यर्थः । तथा च प्रकृतहेतुताऽवच्छेदकावच्छिन्नस्य तत्राभावात् द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादाविव साध्याभावाधिकरणनिरूपिताधेयतावच्छेदकीभूतहेतुतावच्छेदकवत्त्वरूपानैकान्त्यानवकाश इति भावः । उक्तार्थे विष्णुपुराणं प्रमाणयति **एतच्चेति** । 'उद्बबर्हात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यतः' इत्यादिना विष्णुपुराणे पञ्चमांशे प्रसिद्धमित्यर्थः । ननु सीमन्शब्दोत्तरपदसमासस्य नान्ततताया 'ऋन्नेभ्यो ङीबि'ति प्राप्तस्य ङीपो 'मन' इति सूत्रेण मन्नन्तात्प्रातिपदिकात् निषेधात् निस्सीमान इति विन्यासेन भवितव्यतया निस्सीमा इति विन्यासः कथं सङ्गच्छत इत्यत आह **सीमन्शब्देति** । समासस्य सीमन्शब्दोत्तरत्वोपगमेऽपि न क्षतिरित्याह **सीमन्शब्दोत्तरेति** । मन्नन्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहेश्च ङीप् वा स्यादिति सूत्रार्थः । सीमे सीमानौ । बहुयज्वे बहुयज्वानावित्युदाहरणम् । इत्थं चानेन योगेन डापि डित्वाट्टिलोपे चादन्तत्वं सङ्गच्छत इत्यर्थः ।

**॥ इति आनन्दमयशब्दस्य ब्रह्मत्वे प्राप्तायाः अनुपपत्तेः परिहारः ॥**

* * *





**॥ अथ आनन्दमयशब्दस्यान्नमयाद्युपलक्षणत्वे प्रयोजने '' 'ऋतं सत्यं' इति वाक्यमपि न रुद्रस्य ब्रह्मत्वमाह'' ॥**

**॥ तत्रादौ अस्य वाक्यस्य सङ्क्षेपेण व्याख्यानम् ॥**

**॥ तत्र एतद्वाक्यपूर्वोत्तरार्धयोर्भिन्नविषयत्वम् ॥**

१५ **सु०—** ''स्यादेतत् । ब्रह्मशब्दबलेनान्नमयादीनां विष्णुत्वं न निश्चेतुं शक्यते, 'ऋतं सत्यं परम्ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम्' इति तापनीयवाक्ये रुद्रेऽपि परम्ब्रह्मशब्दश्रवणादि''त्यतः पूर्वोत्तरार्धे भिन्नविषयतया व्याख्याति **ऋतमिति ।**

**अनु०—** ऋतं सत्यं परम्ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
विष्णवाख्यमुक्तम् अन्यत्र ह्यूर्ध्वरेतं च तत्प्रति ॥
विरूपाक्षाख्यमपरं ब्रह्मोक्तं तद्व्रते स्थितम् ।

इति पूर्वार्धे, विष्णवाख्यं परम्ब्रह्मोक्तमिति योजना । **अन्यत्र** उत्तरार्धे, विरूपाक्षाख्यमुक्तम् । इति पूर्वोत्तरार्धयोर्भिन्नविषयत्वमुक्तम् ॥ भिन्नविषयत्वेऽन्वयः कथमित्यत उक्तं तत्प्रति **ऊर्ध्वरेतमिति** । अनेन ऋतमित्यादीनि द्वितीयान्तानि, ऊर्ध्वरेतमित्यादीनि प्रथमान्तानि, इत्युक्तं भवति ।

तर्हि नपुंसकलिङ्गप्रयोगः कथमित्यत उक्तम् **अपरं ब्रह्मेति** । अमुख्यया वृत्त्या जीवेऽपि ब्रह्मशब्दसद्भावात्तदपेक्षया नपुंसकलिङ्गमिति ।

तत्प्रत्यूर्ध्वरेतमिति विवृणोति **तद्व्रते स्थितमिति** ।

**परि०—** 'कृष्णपिङ्गलं' इत्यनन्तरं 'इति पूर्वार्धे परम्ब्रह्मे'ति पदद्वयमध्याहृत्य योजयति **इति पूर्वार्ध इति** ।

**यादु०—** **तदपेक्षया नपुंसकेति** । तथा चोत्तरार्धे ब्रह्मेत्येतद्विशेष्यतयाऽनुवर्तनीयमिति भावः ।

**आनन्दः—** आनन्दमयस्य विष्णुत्वसाधकब्रह्मशब्दरूपहेतोरनैकान्तिकत्वं शङ्कते **स्यादेतदिति** । **तर्हि नपुंसकलिङ्गेति** । ऊर्ध्वरेतमित्यादि नपुंसकलिङ्गप्रयोगः कथमित्यर्थः । **अमुख्ययेति** । तथा च विशेष्यभूतब्रह्मशब्दस्य नपुंसकत्वात्तदपेक्षया नपुंसकलिङ्गप्रयोगः । ननु कथमन्यत्र ब्रह्मशब्दप्रवृत्तिरित्यत उक्तम् **अमुख्ययेति** ।





**शे०वा०**— ननु पूर्वोत्तरार्धयोर्भिन्नविषयत्ववर्णनेनैव सौत्रहेतोरव्यभिचारसिद्धेर्भाष्ये तत्प्रतीत्यधिकमित्यतो नेदं विषयभेदप्रतिपादनार्थं किं नाम पूर्वोत्तरार्धयोर्भिन्नविषयत्वे प्राप्तान्वयानुपपत्तिपरिहारायान्वयप्रदर्शनार्थमित्याशयेन तत्तथा योजयति **भिन्नेति** । तथाऽपि भाष्येऽपरब्रह्मेत्यंशस्याधिक्यमित्यतः 'उध्वरेतं विरूपाक्षं शङ्करं नीललोहितमि'त्येतेषां पूर्वार्धेन प्रथमान्ततयाऽन्वये प्राप्तानुपपत्तिपरिहारार्थं तदित्याशयेन योजयति **तर्हीति** । प्रथमान्ततया पूर्वार्धेऽन्वये ऊर्ध्वरेता इत्यादि पुंल्लिङ्गमेव स्यान्न नपुंसकमित्यर्थः । **तदपेक्षयेति** । तथा चोत्तरार्धे ब्रह्मेत्येतद्विशेष्यतयाऽनुवर्तनीयमित्युक्तं भवति । **विवृणोतीति** । तथा च न तद्व्रते स्थितमित्यंशस्यापि वैयर्थ्यमिति भावः ।

**वा०र०**— **व्यभिचारसिद्धेरिति (परिहारसिद्धेरिति)** । अनेन ऋतं सत्यमित्यादिविशिष्टवाक्यार्थकत्वेऽपीति सूचितम् । भिन्नविषयतया व्याख्यातीत्यवतारात् तदाश्रयणेनाशङ्कोत्थापनमिति ज्ञेयम् । यद्यपि भद्रंकर्णेभिरित्युपक्रम्य प्रवृत्ता तापनीयश्रुते 'ऋतं सत्यं परब्रह्म पुरुषं नृकेसरिविग्रहं' कृष्णपिङ्गलस्य उत्तरार्धगततया पाठविशेषश्रवणोपपत्तिस्तु तत्स्थऋतमित्यारभ्य लोहितमित्यन्ते नृकेसरिविग्रहमित्यंशत्यागेन यथाश्रुतस्य श्लोकरूपेण भाष्ये उक्तिः । तदनुसारेण पूर्वोत्तरार्धव्यवहारोऽपि तदुपनिषेधादिपिङ्गलमित्यन्तद्वितीयान्तं ऊर्ध्वरेतमित्यादिकं प्रथमान्तमिति योज्यमित्याशयेनेति प्रतिभाति **तत्तथेति** । तत्प्रतीतेस्तदन्यथानुपपत्तिपरिहारार्थत्वेनेत्यर्थः । **योजयतीति** । तद्व्यावर्त्यशङ्काकथनाशयकथनाभ्यां सङ्गमयतीत्यर्थः । इत्येतेषां **पूर्वार्धेनेति** । एतेषां पूर्वार्धेन प्रथमान्ततयोक्तो योऽन्वयस्तत्रेत्यर्थः । **ब्रह्मेत्येतदिति** । न तु परमित्यपीति भावः । **विवृणोतीति** । तदुपलक्षणमिति भावेन विशिष्टार्थमाहेत्यर्थः । 'तस्माद्विष्णुं परम्ब्रह्मे'त्युत्तरानुव्याख्यानमूले 'उपलक्षणमित्याशयेने'त्याद्युक्तेः ।

**विट्ठल०**— **इति पूर्वार्ध इति** । अत्र मूले इति पूर्वार्धे परम्ब्रह्मेत्येतावतोऽध्याहार इति ध्येयम् । **तदपेक्षया नपुंसकलिङ्गमिति** । तथा चोत्तरार्धेऽपि ब्रह्मेत्येतदनुषञ्जनीयं सूचितं भवति ।

**चषकः**— **तदपेक्षया नपुंसकेति** । उत्तरार्धे विशेष्यवाचकब्रह्मपदमनुषञ्जनीयमिति भावः ।

**॥ 'ऋतं सत्यं' इति वाक्यपूर्वोत्तरार्धयोर्भिन्नविषयत्वं पुनरुक्तिबलेन ॥**

**१६ सु०— एकविषयतया प्रतीयमानयोः पूर्वोत्तरार्धयोः कुतो भिन्नविषयता कल्प्यत इत्यत आह समानेति ।**

**अनु०— समानाधिकृतत्वं चेदुत्तरं नीललोहितम् ॥**
**कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति ।**





समानमेकमधिकृतमधिकरणं विषयो ययोः पूर्वोत्तरार्धयोस्ते समानाधिकृते तयोर्भावः। यदि पूर्वोत्तरार्धयोरेकविषयत्वं स्यात्तदोत्तरम् उत्तरार्धोक्तं नीललोहितम् कृष्णपिङ्गलरूपेण पूर्वार्धोक्तेन निमित्तेन पुनरुक्तं भविष्यति, कृष्णपिङ्गलनीललोहितशब्दयोरेकार्थत्वात्। अतः प्रतीतमप्येकविषयत्वं परित्यज्य भिन्नविषयत्वग्रहणं न्याय्यमिति।

वा०र०— कृष्णपिङ्गललोहितशब्दयोरेकार्थत्वादिति। अत्र लेख्यमस्ति (?)।

**॥ इति पुनरुक्तिबलेन 'ऋतं सत्यं' इति वाक्यपूर्वोत्तरार्धयोर्भिन्नविषयत्वम् ॥**

* * *

**॥ अथ उत्तरवाक्यबलेन 'ऋतं सत्यं' इति वाक्यपूर्वोत्तरार्धयोर्भिन्नविषयत्वम् ॥**

**॥ तत्र उत्तरवाक्यस्थब्रह्माधिपतिपदस्य बहुव्रीहित्वम् ॥**

**१७ सु०—** किञ्च 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरि'त्युत्तरवाक्ये ब्रह्म अधिपतिर्यस्य रुद्रस्य असौ ब्रह्माधिपतिरिति रुद्रस्य ब्रह्मा अधिपतिः प्रतीयते। यस्य चाधिपतिरस्ति कथं तस्य परब्रह्मता स्यादित्यतश्च पूर्वार्धो न रुद्रविषय इत्याशयवानाह **ब्रह्माधिपतिरिति**।

## अनु०— ब्रह्माधिपतिरित्यत्र तापनीयश्रुतौ पुरः ॥

'ऋतं सत्यमि'ति वाक्यं यद्गतम्, **अत्र** तापनीयश्रुतौ, ऋतमित्यस्मात् **पुरः** पुरतः उपरिष्टादिति यावत्। ब्रह्माधिपतिरिति रुद्रस्य पराधीनताप्रतिपादकं पदमस्तीति योजना।

स्यादेवं यदि ब्रह्माधिपतिशब्दस्य बहुव्रीहित्वं स्यात्, न चैवम्, षष्ठीतत्पुरुषे कर्मधारये वा सम्भवति बहुव्रीहित्वनिश्चायकाभावादित्यत आह **स्वरितेति**।

## अनु०— स्वरितब्रह्मशब्दान्तं बहुव्रीहित्वमेष्यति।

यस्माद्ब्रह्माधिपतिप्रातिपदिकं स्वरितब्रह्मशब्दान्तं तस्माद्बहुव्रीहित्वमेव प्राप्नोति, न समासान्तरत्वम्। तथात्वेऽन्तोदात्तत्वेन 'अनुदात्तं पदमेकवर्जमि'त्यस्य प्रसङ्गेन (पूर्वपदस्य स्वरितान्तता) स्वरितपूर्वपदान्तता न स्यात्।





**अथवोद्ग्रन्थमेव पूर्वोक्तमर्थमुक्त्वोक्तशङ्कोत्तरत्वेन समस्तोऽपि श्लोको योज्यः ।**

**यद्यपि बहुव्रीहित्वं पूर्वसिद्धमेव, तथाऽपि तन्निश्चयापेक्षयैष्यतीति प्रयोगः ।**

**ननु पूर्वपदान्तस्वरस्य स्वरितत्वेऽपि कुतो बहुव्रीहित्वमिति चेत्, उदाहरणदर्शनादित्याह स्वाहेति ।**

## अनु०— स्वाहेन्द्रशत्रुर्वर्धस्व यद्बहुव्रीहितामगात् ॥

**यद्यस्मात्स्वाहेन्द्रशत्रुर्वधस्वेत्यत्रेन्द्रशत्रुप्रातिपदिकं स्वरितेन्द्रशब्दान्तं बहुव्रीहितां प्राप्तं तस्मादिदमपि तथाविधं बहुव्रीहिरेवेति ।**

**परि०—** अत्रेति मूलपदस्यार्थमाह **ऋतं सत्यमिति वाक्यं यद्गतं अत्रेति । स्वरितेति ।** स्वरितं ब्रह्मशब्दान्तं यस्य तदिति विग्रहः । एवमग्रेऽपि । **तथात्व इति ।** तत्पुरुषादिसमासान्तरत्वे इत्यर्थः । 'समासस्येति' षष्ठाद्यपादान्तिमसूत्रेण सामान्यतोऽन्तोदात्ततया विधानादिति भावः । **अनुदात्तमिति ।** यस्योदात्तादिस्वरो विधीयते तं वर्णं वर्जयित्वाऽवशिष्टं पदमनुदात्तं भवतीत्यनुदात्तस्वरप्रसङ्गेनेत्यर्थः । पूर्वं हि पुर इत्यनन्तरं 'रुद्रस्य पराधीनत्वप्रतिपादकं पदमस्ती'त्यध्याहृत्य योजयित्वा तत्र शङ्कानिरासकत्वेनोत्तरार्धं योजितमिदानीं विनैव पदाध्याहारं योजनामाह **अथवेति ।** उद्ग्रन्थं मूलास्पृष्टमेव । किं च 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरि'त्युत्तरवाक्य इत्यादिना पूर्वार्धो न रुद्रविषय इत्यन्तेनोक्तमर्थमुक्त्वा स्यादेवं यदीत्यादिनोक्तशङ्कोत्तरत्वेन 'ब्रह्माधिपतिरि'त्यादिसमग्रश्लोको व्याख्येय इत्यर्थः । **स्वरितेन्द्रेति ।** औणादिकरन्प्रत्ययान्तस्येन्द्रशब्दस्य 'ञ्नित्यादिर्नित्यमि'त्याद्युदात्तत्वे शेषनिघाते 'उदात्तादनुदात्तस्य स्वरित' इति स्वरितान्तत्वादिति भावः ।

**गु०दी०— यस्मात्** इत्यत्र ब्रह्माधिपतिशब्दस्यान्तोदात्तत्वेन 'अनुदात्तं पदमेकवर्ज्यम्' बहुव्रीह्यतिरिक्तसमासे यस्य समासस्य अन्तः उदात्तः स्यात् तदेकं पदं वर्जयित्वा अन्यत्पदमनुदात्तं स्यात् । संहितायामुक्तस्यापि पदकालेऽनुदात्तत्वदर्शनाद्युक्तमेतत्सूत्रविषयत्वं वेदेऽपि ।

**यादु०— स्वरितब्रह्मशब्देति ।** ब्रह्मशब्दस्य मन्प्रत्ययान्तत्वेन ञ्नित्यादिर्नित्यमित्यनेन प्रकृतिरूपबृंहतेराद्युदात्तत्वे परस्य मन्प्रत्ययस्यानुदात्तं पदमेकवर्जमित्यनेनानुदात्तत्वे उदात्तानुदात्तस्य स्वरित इत्यनेन मन्प्रत्ययस्य स्वरितत्वम् । ततश्च ब्रह्मशब्दः स्वरितान्त इति ज्ञेयम् । **तथात्वेऽन्तोदात्तत्वेनेति ।** समासस्येत्यनेन





सामान्यतः समासस्यान्तोदात्तताया विहितत्वादिति भावः । **अनुदात्तं पदमिति** । यत्रान्त्यः स्वर उपात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा परिशिष्टसर्वोऽच् अनुदात्तोः भवतीति सूत्रार्थः । **पूर्वोक्तमर्थमिति** । किञ्च ब्रह्माधिपतिरित्यादिना योजनेत्यन्तेनोक्तमर्थमित्यर्थः । **उक्तशङ्केति** । स्यादेवं यदि ब्रह्माधिपतिशब्दस्येत्यादि-नोक्तशङ्कोत्तरत्वेनेत्यर्थः । **स्वरितेन्द्रशब्देति** । इन्द्रशब्दस्य रन्प्रत्ययान्तस्य निपातितत्वात् ब्रह्मशब्दवत्स्वरिता-न्तत्वं ज्ञेयम् ।

**वं०प०— कर्मधारय इति** । ब्रह्मा चासावाधिपतिश्चेति कर्मधारय इत्यर्थः । **प्रातिपदिकमिति** । समासप्रातिपदिकमित्यर्थः । **स्वरितब्रह्मशब्दान्तमिति** । बृहधातोर्मनिन्प्रत्यये अमागमे यणादेशे च सति निष्पन्नो ब्रह्मशब्दो मनिन्प्रत्ययान्तः । तथा च ञ्नित्यादिर्नित्यम् । ञिति निति च प्रत्यये परे प्रकृतेरादिरुदात्तो भवतीति सूत्रार्थः । तथा च प्रकृते बृहधातोरादेर्बृ इत्यत्रत्यऋवर्णरूपस्याच उदात्तस्वरवत्त्वे सति, तत्परतो विद्यमानस्य मनिन्प्रत्ययस्य मकारस्थिताकाररूपस्याच इति यावत् । अनुदात्तं पदमेकवर्जमिति सूत्रेणानुदात्तस्वरवत्त्वं प्राप्तम् । तथा हि । यत्रान्यः स्वर उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा परिशिष्टः सर्वोऽप्यच् अनुदात्तो भवतीति सूत्रार्थः । एवं च बृ इत्यत्र ऋवर्णस्वरस्योदात्तत्वे तद्व्यतिरिक्तस्याचो मकारस्थस्याकारस्यानुदात्तस्वरवत्त्वे प्राप्ते 'उदात्तादनुदात्तस्य स्वरितः' उदात्तात्स्वरात्परस्यानुदात्तस्वरस्य स्थाने स्वरितः स्वर आदेशो भवतीति सूत्रार्थः । तथा च मकारस्थानुदात्तस्वरस्य स्वरितत्वे ब्रह्मशब्दः स्वरितान्त इति मन्तव्यम् । **तथात्व इति** । षष्ठीतत्पुरुष-कर्मधारयरूपसमासान्तरत्व इत्यर्थः । **अन्तोदात्तत्वेनेति** । ब्रह्माधिपतिरिति समासस्येति शेषः । पूर्वपदस्यानुदात्ते पदमेकवर्जमित्यस्य प्रसङ्गेनेत्यन्वयः । **पूर्वपदस्य** ब्रह्मपदस्य । अनुदात्तं पदमेकवर्जमिति सूत्रविहितानुदात्तस्वर-वत्त्वस्य प्रसङ्गेनेत्यर्थः । स्वरितपूर्वपदान्तता ब्रह्माधिपतिरिति समासस्येति शेषः । अयमर्थः । ब्रह्माधिपति-रित्यस्य, बहुव्रीहिभिन्नषष्ठीतत्पुरुषकर्मधारयरूपसमासान्तरत्वे 'समासस्य' समासस्यान्त उदात्तो भवतीति सूत्रेण समासस्यान्ते उदात्तस्वरविधानाद्ब्रह्माधिपतिरिति समासस्यान्ते तकारस्थे इकारे उदात्तस्वरप्राप्तौ । 'अनुदात्तं पदमेकवर्जमि'ति सूत्रेण तद्व्यतिरिक्तस्य पूर्वस्याचोऽनुदात्तस्वरविधानाद्ब्रह्माधिपेत्यत्र स्थितानां चतुर्णामप्यचा-मनुदात्तस्वरवत्त्वं प्राप्तम् । तथा च ब्रह्मपदे ब्रेत्यत्रानुदात्तस्वरं हेत्यत्र मकारे च स्वरितस्वरं वैदिकाः पठन्ति तन्न स्यादिति । अधःपठ्यमानः स्वरोऽनुदात्तः । दक्षिणभागे समाहारेण पठ्यमानः स्वरः उदात्तः । ऊर्ध्वं पठ्यमानः स्वरः स्वरितः । तदूर्ध्वं पठ्यमानस्तु स्वरः प्रचय इति वैदिकसम्प्रदायः । **उद्ग्रन्थमिति** । ग्रन्थादुद्गतं ग्रन्थव्याख्यान-रूपं न भवतीत्यर्थः ।

**आनन्दः— पूर्वोक्तमर्थमिति** । किञ्च ब्रह्माधिपतिरित्यनेनोक्तमर्थमित्यर्थः । **उक्तशङ्केति** । स्यादेव-मित्युक्तशङ्केत्यर्थः ।

**श्रीनिधि०— उदाहरणदर्शनादिति** । विवक्षितार्थवत्त्वेन निश्चितस्थानः उदाहरणमित्यर्थः ।

**शे०वा०—** ब्रह्माधिपतिरित्युत्तरवाक्ये किञ्चेत्युक्तार्थस्य स्पष्टमप्रतिभासात् **इत्याशयवानित्युक्तम्** । ब्रह्माधिपतिप्रातिपदिकस्य षष्ठीतत्पुरुषत्वे ब्रह्मणोऽधिपतिरित्युत्तरवाक्येन गतार्थत्वमित्यरुचिं मनसि निधायाह





**कर्मधारये वेति । बहुव्रीहित्वनिश्चायकाभावादिति** । समासप्राबल्यादेव कर्मधारयत्वनिश्चय इति भावः । हेतुत्वसमर्पकाभावेन स्वरितब्रह्मशब्दान्तत्वस्य बहुव्रीहित्वे हेतुत्वस्यैवावगन्तुमशक्यत्वाद्यत्तच्छब्दाध्याहारेण कथञ्चित्तदवगमेऽपि विपक्षे बाधकाभावेनाप्रयोजकत्वात् कथमनेन बहुव्रीहित्वनिश्चय इत्यतो हेतूच्छित्तेरेव विपक्षे बाधकत्वान्नाप्रयोजकतेत्याह **यस्मादित्यादि** । **स्वरितेति** । ब्रह्मशब्दस्य मनिन्प्रत्ययान्तत्वेन निदन्तत्वात् । ञ्नित्यादिर्नित्यमित्यादिभूताकारस्योदात्तत्वेऽनुदात्तं पदमिति शेषभूताकारस्यानुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तस्यैव स्वरितत्वेन ब्रह्मशब्दस्य स्वरितान्तत्वादित्यर्थः । **न समासान्तरत्वमिति** । षष्ठीतत्पुरुषत्वकर्मधारयत्वरूपमित्यर्थः । **तथात्वे हीति** । समासस्येत्यनेन सामान्यतः समासान्तोदात्तताया विहितत्वादिति भावः । **पूर्वोक्तमर्थमिति** । किञ्च ब्रह्माधिपतिरित्यादियोजनेत्यन्तेनोक्तमर्थमित्यर्थः । **उक्तशङ्केति** । स्यादेतद्यदि ब्रह्माधिपतिशब्दस्येत्यादिनोक्तशङ्कोत्तरत्वेनेत्यर्थः ।

**वा०र०—– इत्युक्तार्थस्येति** । पराधीनत्वोक्तेः परब्रह्मता न सम्भवतीत्यर्थस्येत्यर्थः । त्वत्पक्षेऽपि कर्मधारयत्वनिश्चयायोग इति समानमित्यत आह **समासप्राबल्यादेवेति** । वृत्तिपदार्थप्रधानतयाऽन्यपदार्थप्रधानबहुव्रीह्यपेक्षया कर्मधारयस्य प्राबल्यमिति भावः । अशक्यत्वाद्यत्तच्छब्देति पाठः । यच्छब्दाध्याहारं सिद्धवत्कृत्य हेतूच्छित्तेरित्याद्येवोक्तम् । **नाप्रयोजकतेत्याहेति** । उपलक्षणमेतत् । ब्रह्माधिपतिरित्यस्य पूर्ववाक्यादनुवृत्तस्य ब्रह्माधिपतिप्रतिपादकरूपपक्षत्वसमर्पकत्वान्न न्यूनतेत्याशयेनेत्यपि द्रष्टव्यम् । **मनिन्प्रत्ययान्तत्वेनेति** । ब्रह्मशब्दस्य बृहितिप्रकृतिकत्वे 'अन्येभ्योऽपि दृश्यत' इत्यनेन मनिनि दृशिग्रहणसामर्थ्यादमागमे इति, बृंहिप्रकृतित्वे च बृंहेर्नोच्चेति सूत्रेण मनिनि नकारस्याकारे ब्रह्मशब्दनिष्पत्तिरिति मनसि निधाय मनिन्प्रत्ययान्तत्वेनेत्येवोक्तम् । एतच्च जिज्ञासाधिकरणे प्रागुपपादितम् । **निदन्तत्वादिति** । निदन्तस्यादिरुदात्त इत्यर्थं मनसि निधायैवमुक्तम् । यद्वा निति परत इत्यर्थोऽपि अनेनैव सङ्गृहीत इत्यर्थद्वयाभिप्रायेणेदम् । **अनुदात्तमिति** । यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं भवतीति सूत्रार्थः । तथा च ब्रह्मशब्दस्य निदन्ततयाऽऽदिभूतब्रेत्यकारस्योदात्तत्वे विहिते शिष्टो हेत्यत्रत्याकारोऽनुदात्तो जात इत्यर्थः । **उदात्तादिति** । उदात्तात्परस्यानुदात्तस्य स्वरितो भवतीत्यर्थः । कार्यं हार्यमित्यादौ स्वरितस्य विधानानन्तरं शिष्टस्यानुदात्तत्वोपलम्भात् । तथाहि कार्यमित्येतत्तावत् कृञ्धातोः ऋहलोर्ण्यदिति ण्यत्प्रत्यये णित्वादचोञ्णितीति वृद्धौ निष्पन्नम् । तत्र धातोरित्यनेन कृञः अन्तः उदात्तः आद्युदात्तश्चेति ण्यदाद्युदात्तः तथा चोभयोरुदात्तत्वे प्राप्तेऽनुदात्तं पदमेकवर्जमिति यस्योदात्तो विहितस्तं विहायान्यस्यानुदात्तत्वमिति विहितान्यानुदात्तत्वस्याप्युभयत्राविशेषेण स्वरानिर्णयप्राप्तौ सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनं प्रवृत्तम् । तदर्थस्थयस्मिन्स्वरेति विद्यमानो यः स्वरः शिष्यते विधीयते स सति शिष्ट इत्युच्यते । स पश्चात्परं वर्तमानः स्वरः पूर्वं विद्यमानप्रकृतिस्वराद्बलीयानतस्तं बाधते विकरणस्वरस्तु सति शिष्टोऽपि न बलीयान् । प्रत्ययस्वरापेक्षया बलवत्वनिषेधोऽयम् । प्रकृतिस्वरापेक्षया तु बलीयानेव । यथा चैतत्तथा स्वरमञ्जर्यां स्पष्टम् ।





धातुस्वरस्तु न बलीयान् प्रकृतिरूपधातोः क्लीबादौ प्रत्ययलोपेऽपि प्रकृत्यवस्थानवत् प्रत्ययलोपेऽप्यवस्थानेन तथाभूतधातुस्वरस्य सावकाशत्वात् । प्रत्ययस्तु व्यतिषे व्यतिषाते इत्यादौ लोपात् क्वचित्प्रकृतिपरिहारेणावस्थानेऽपि प्रायोऽवस्थानाभावेन निरवकाशतया तत्स्वरो निरवकाश एवेति । तथा च विकरणस्वरव्यतिरिक्ते सति शिष्टस्वरस्य बलीयस्त्वेन तत्र प्रत्ययस्वरस्य यथास्थितश्रवणमङ्गीकृत्य प्रकृतिस्वर एव बाधते अतः स एवानुदात्तत्वेन विहित इति सिद्ध्यति । ततस्तित्स्वरितमिति सूत्रेण तिद्भूतण्यत्प्रत्ययस्य स्वरितत्वे विहिते प्रकृतिभूतकृधातोः पुनरनुदात्तस्यैवावस्थानं प्राप्तम् । ब्रह्मशब्दे स्वरितविधानानन्तरमाद्यस्यानुदात्तत्वं अनुदात्तमिति विधानलब्धमित्युच्यते अत्र तु तद्विधानानन्तरं प्रागेव विद्यमानं दृढीकृतमिति विशेषस्तु अकिञ्चित्करः । बिल्वशब्दस्याकृतिगणविषयत्वेनाद्युदात्ततया स्वरितान्तत्वे सति तत्स्वरितस्य बिल्वविषययोः स्वरितोरेवेति फिट्सूत्रेण पक्षे उदात्तत्वे सति बिल्वभक्षवीर्याणि छन्दसीति न सूत्रेणैव छन्दसि नित्यं स्वरितान्तत्वे च सति आद्यनुदात्तत्वस्य बिल्वेत्यादावुपलम्भाच्च । एवमन्यत्रापि तत्र तत्रान्त्यस्य स्वरितत्वप्राप्त्यनन्तरमाद्यस्योदात्तत्वदर्शनमुदाहार्य तत्कथं ब्रह्मशब्दस्य स्वरितान्तत्वेऽप्याद्युदात्तत्वमिति चेत् । मैवम् । पूर्वत्रासिद्धमित्येतत्परिभाषया सपादसप्ताध्याय्यां विहितकार्ये प्रति शिष्टपादोऽनाध्यायविहितकार्यमसिद्धं भवतीत्यर्थकतया अनुदात्तं पदमेकवर्जमिति पूर्वविधौ कर्तव्ये परस्योदात्तादनुदात्तस्य स्वरिति इति स्वरितविधेरसिद्धतया अनुदात्तविधेर्निवृत्त्या आद्यनुदात्तत्वानापत्तिरिति सम्भवात् । उक्तं च प्रकाशिकादशपादीश्वरमञ्जर्योः । अस्य स्वरितस्यासिद्धत्वादनुदात्तं त्वपदमेकवर्जमित्येतन्न प्रवर्तते । तेनोदात्तः स्वरितश्च द्वावपि श्रूयेतेत्यादि । ततश्चानुदात्तविधिनिवृत्त्यनन्तरं पुनः स्वरितविधेः प्रवृत्तौ ब्रह्मशब्दस्याद्युदात्तत्वं स्वरितान्तत्वं चोपपन्नम् । न च पुनः स्वरितविधिप्रवृत्तौ तदुत्तरमनुदात्तविधिरपि प्रवर्तिष्यते एवेति वाच्यम् । पुनः स्वरितविधेरसिद्धत्वाश्रयणेनानुदात्तविधेर्निवृत्तिसम्भवात् । तन्निवृत्त्यनन्तरं च पुनः स्वरितविधिप्रवृत्तिसम्भवाच्च । यदि च पुनरनुदात्तविधिः प्रवर्तिष्यते तर्हि पुनरसिद्धवद्भावान्निवर्तते, निवृत्तश्च पुनस्तत्प्रवृत्तौ प्रवर्तते, प्रवर्ततोऽपि पुनस्तदसिद्ध्या निवर्तते पुनश्च तत्प्रवृत्तौ प्रवर्तत इत्येवं प्रवृत्तिनिवृत्त्यनवस्था स्यात् । तस्मान्न पुनरनुदात्तविधिः प्रवर्तनीयः । न च तर्ह्यपर्यवसितार्थाभिधायिता सूत्रकारस्य प्राप्तेति शङ्क्यम् । सूत्रप्रणयनरूपायाः सूत्रकारप्रवृत्तेरनवस्थापादकत्वायोगात् । किन्तु पुनस्तत्प्रवृत्तौ तत्प्रवृत्तिरिति चोद्ये तथात्वेऽनवस्था स्यादित्येवमनवस्थारूपदूषणप्रदर्शनमुखेन अनपेक्षितकार्यानिवारणपरत्वमेव तस्याः ।

तथाहि । पूर्वत्रासिद्धमिति विधिः कस्यचिद्विधेः सिद्धस्यासिद्धत्वप्रतिपादको नाङ्गीकर्तुमुचितः व्याघातप्रसङ्गात् । किन्तु यथासिद्धमविद्यमानं न किञ्चित्कार्यं प्रवर्तयतीत्येवं सिद्धोऽप्ययं विरोधी पूर्वविधिर्न प्रवर्तयतीति स्वप्रयुक्तापूर्वविधेः प्रवृत्तिं प्रतिबध्नातीति सूत्रे तात्पर्यप्रतीतेः । तथा चापरोऽपि स्वरितविधिर्न पूर्वशेषविघातं प्रयोजयतीत्यङ्गीकारे न कश्चिद्दोषः । रमायां तु तमिति स्वरितत्वमाश्रित्य शेषविधानस्तु न च सन्निपातपरिभाषया निर्वाहः । तस्या अनित्यत्वेन स्वरविधावप्रवृत्तेः । अन्यथाऽन्तोदात्तादुत्तरपदादन्यतरस्यां ह्रस्वनुड्भ्यां मतुबित्यादिभिरपि स्वरे कृते शेषनिघातो न प्रवर्तेतेत्यादिकमाक्षिप्य यथोद्देशपक्षाश्रयणेनेयं





परिभाषा त्रिपाद्यां न प्रवर्तते । तव्यत्तव्यानी यरः इति सूत्रं चेह ज्ञापकम् । परिभाषान्तराणि तु कार्यकालपक्षाश्रयात्प्रवर्तन्त एव । अतो न कश्चित्प्रागुक्तदोष इति 'अनुदात्तं पदमि'ति परिभाषायाः पादोनाष्टमाध्याये प्रवृत्तिर्नेत्यङ्गीकृत्य उदात्तानुदात्तस्य स्वरित इति स्वरितानन्तरं अनुदात्तमित्यनेन पूर्वस्य अनुदात्तत्वं नायातीति प्रतिपादनेन प्रकृतेऽपि ब्रह्मशब्दान्त्यस्य उदात्तानुदात्तस्य स्वरित इति स्वरितविधानान्तरम् अनुदात्तं पदमित्येतत्परिभाषायाः अप्रवृत्तत्वात् न शेषनिघातप्रसक्तिः । भाष्ये हि यथोद्देशं संज्ञापरिभाषमित्युक्तम् । संज्ञा च परिभाषा चेति समाहारद्वन्द्वः । संज्ञापरिभाषा च यथोद्देशं उद्देशानुसारेण यत्प्रकरणे संज्ञा वा परिभाषा वा उक्ता । तत्रैव ससंज्ञितस्थले परिभाषाविषये च स्वस्वप्रमेयावगतिहेतुभूता भवतीति तदर्थः । उक्तं च कौस्तुभे वृद्धिसूत्रे । आद्यपक्षे तु यत्र दुःखेत्यनेनेत्यादौ स्वर्गशब्दार्थावगतिवत् इहैव वृद्ध्यादिशब्दार्थावगम इति । कार्यकालं संज्ञापरिभाषमित्यपि भाष्यादावुक्तं पूर्वत्रासिद्धसूत्रीयकार्यकालसंज्ञापरिभाषत्वमासां परिभाषाणां पूर्वत्वं नास्तीति काशिकावाक्यव्याख्यावसरे 'संज्ञाः परार्था अत्यन्तपरिभाषाश्च तद्विधाः । न स्वातन्त्र्येण तास्तस्मात् कार्यावगतिहेतवः । अनेकस्य प्रधानस्य शेषभूता भवन्त्विति । एताः केवलमाचार्यः पृथग्देशा उपादिशत् । विधिवाक्यैस्तु संहृत्य तत्र तत्र स्थितैरपि । चोदयन्त्यः स्वकार्याणि नैव पूर्वा इमा इति' इति मञ्जर्युक्तरीत्या वृद्धिविधिवाक्येनैव वृद्धिसंज्ञाविशिष्टमानात् एषामवगतिः । यथा ज्योतिष्टोमराजसूयादिशब्दानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिः न तु वाक्यान्तरेण तथा अस्मिन्पक्षे वृद्ध्यादीनामपि । इति कौस्तुभे उक्तत्वात् पूर्वत्र असिद्धसूत्रे ये त्वत्र त्रिपाद्यां षष्ठीनिर्देशाः सप्तमीनिर्देशाः पञ्चमीनिर्देशाश्च तेषां षष्ठीस्थाने योगा, तस्मिन्निति निर्दिष्टे पूर्वस्य, तस्मादित्युत्तरस्य इत्यादौ कर्तव्येनासिद्धत्वं भवति । यतः पूर्वत्वमासां परिभाषाणां नास्तीति तत्र तत्रोत्त्यनुसारेण च एतत्परिभाषाया अप्यर्थो ज्ञातव्यः । 'ईदूदेद्द्विवचनं प्रगृह्यं' इति सूत्रीयकार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यं इत्यादिभाष्यतत्कैयटादौ स्पष्टमेतत् । उक्तं च कैयटे । यदाऽनुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किञ्चिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते तदा सम्भवत्येव अयं पक्षो यथा श्रुतप्रतिपत्रपेक्षः । महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्रपेक्षस्थकार्यकालपक्ष इति । एवमन्यत्रापि तत्तदुक्तयो द्रष्टव्याः । तस्माद्युक्तं ब्रह्मशब्दस्य स्वरितान्तत्वेऽपि आद्युदात्तत्वमिति स्थितम् । ननु तथापि स्वरितब्रह्मशब्दान्तमित्यनुव्याख्याने तत्सुधायां तद्व्याख्याने च इन्द्रशत्रुप्रातिपदिके इन्द्रशब्द इव ब्रह्मशब्दो ब्रह्माधिपतिप्रातिपदिके स्वरितान्तः । न तु समासप्रातिपदिकस्य समासत्वप्रयुक्तान्तोदात्तत्वे शेषनिषेधे चानुदात्तान्तः इत्याद्युक्तम् । तत्कथम् । अत्र हि दृष्टान्तत्वेनोक्तमिन्द्रशत्रुप्रातिपदिकं स्वरितेन्द्रशब्दपूर्वकम् इन्द्रशब्दस्य रनुप्रत्ययान्तत्वादित्यादिवक्ष्यमाणटीकोक्तरीत्या इन्द्रशब्दे सिद्धस्य स्वरितान्तत्वस्यानपायात् । ब्रह्मशब्दे तु ब्रह्मशब्दस्य मनिनित्याद्युक्तरीत्या प्राप्तस्य स्वरितान्तत्वस्य केवले सत्त्वेऽपि समासप्रातिपदिकान्तर्गते न तत्सम्भवः । तदन्तर्गतस्य पूर्वपदान्त्याकारोत्तरपदभूताधिपतिशब्दाद्याकारयोरेकादेशभूतसवर्णदीर्घस्यैकादेश उदात्तेनोदात्त इत्युदात्ततयोदात्तान्तत्वात् । नन्वेकादेश उदात्तेनेति सूत्रे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति पूर्वसूत्रादनुदात्तस्येति वर्तते । ततोऽनुदात्तस्योदात्तेनैवैकादेशस्योदात्तताविधानेऽपि स्वरितस्यानेकादेशस्योदात्ततताया विधानाभावात् कथमनेनोदात्तत्वमिति चेन्न । अनुदात्तस्येत्यस्या-





नुवृत्तेर्निष्फलत्वेनाकर्तव्यत्वात् । तथाहि । अग्नि वायू इत्यत्र प्रातिपदिकत्वेन फिष इत्यन्तोदात्तावग्निवायुशब्दौ । अनुदात्तौ सुप्पिताविति विभक्तिरनुदात्ता । वोश्वा इत्यत्रानुदात्तं सर्वमपदादावित्यधिकारे बहुवचनस्य वस्तसाविति विधानादित्यनुदात्तम् । 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इत्यणादिसूत्रेण अशेः क्वनिव्युत्पादिताश्वशब्दो-ऽश्वित्यादिर्नित्यमित्याद्युदात्त इत्येवमुदात्तानुदात्तयोः पूर्वोत्तरभावक्रमेण सन्धिस्थले यथानुदात्त एकादेशो दृश्यते । एवं स्वरितपूर्वे उदात्तपरे च जात एकादेश उदात्तो दृष्टः । क्वावरमित्यत्र हि किमोदिति किमोऽतिप्रत्यये क्वाती-त्यनेनातिपरतः किमः क्वादेशो यस्येति चेत्यकारलोपे च तित्स्वरितमिति क्वशब्दः स्वरितान्तः । अवरशब्दः स्वाङ्गशिटामिति सूत्रेण सर्वनामाख्यसिद्धेनाद्युदात्तः । तयोश्च स्वरितोदात्तयोर्य एकादेशस्तस्योदात्तत्वेनैव बह्वृचैः पठ्यमानत्वात् । एवं स्वरितपूर्वे उदात्तपरे गवेऽश्वायेत्यादावपि एकादेशस्योत्तरत्वं स्वरमञ्जर्यामुक्तप्रकारेणोह्यम् । तत्र चोदात्तैकादेशविधानायास्यैव प्रवृत्तिरेष्टव्या । तथा च अनुदात्तग्रहणानुवृत्तौ क्वावरमित्यादावुदात्तैकादेशा-प्रवृत्तिरिति तदनुवृत्तेर्लक्ष्यविरोधेनायोगः । उदात्तपूर्वं स्वरितोत्तरं प्रातिपदिकं तु दृश्यत एव । उदात्तपूर्वोत्तरपदस्थले सते मा स्थादित्यत्र तु आन्तरस्यादुदात्त एव । अनुदात्तपूर्वोत्तरस्थले आन्तरतम्यादनुदात्त एव स्वरितपूर्वानुदात्तो-त्तरयोरेकस्यादेशस्यान्तर्यात्स्वरित एवेत्यादेः सिद्धत्वान्न वक्तव्यता । स्पष्टं चेदं स्वरमञ्जर्यां च ।

अस्तु वाऽनुदात्तग्रहणानुवृत्तिः तथाप्युदात्त एकादेशोऽवकाशवानेव । पूर्वत्रासिद्धमित्यत्र त्रिपाद्यां विहितकार्येषु उत्तरोत्तरकार्यस्य पूर्वपूर्वकार्यं प्रत्यसिद्धत्वस्याप्यभिधानेन तत्परिभाषयोदात्तादनुदात्तस्य स्वरित इति अन्त्यपादगतस्य एकादेश उदात्तेनेति द्वितीयपादगतं प्रत्यसिद्धतया स्वरितस्थानि भूतानुदात्तस्यैवावस्थाने एकादेश उदात्तेनेति विहितोदात्तानुदात्तैकादेशलक्षणोदात्तस्यावर्जनीयत्वात् । एवं ब्रह्मपदे आद्युदात्तत्वस्यैका-देशमादाय अन्तोदात्तत्वस्य च प्रसङ्गे अनुदात्तं पदमेकवर्जमिति परिभाषाप्रवृत्तौ पूर्वस्मिन्नुदात्ते विद्यमानस्यैका-देशरूपोदात्तस्य प्रवृत्त्या तस्यैव सति शिष्टत्वेन सति शिष्टं स्वरबलीयस्त्वमिति वचनात् तस्यैव बलीयस्त्वेन तस्मिन् यथास्थिततत्वस्यैव प्राप्त्या तन्निघाताप्रसङ्गेन आद्याकारस्यैवानुदात्ततायाः प्रसक्तेः । यदि चाद्याकार-स्योदात्ततया पाठो दृश्यते तर्हि पूर्वत्र सिद्धिपरिभाषाया केवलब्रह्मपद इव समासेऽपि शेषनिघातं प्रत्युत्तर-स्यासिद्धत्वेन वा बहुव्रीहिपूर्वपदप्रकृतिस्वरत्वेनोत्तरस्येव पूर्वाकारस्यापि निघाताभावेन वा द्वयोरप्युदा-त्तत्वस्यैव तादवस्थ्यात् । एतेनैवाधिपतिशब्दस्याव्ययीभावत्वसमासस्वरेणान्तोदात्ततया नोदात्तैकादेशप्राप्तिरित्यपि निरस्तम् ।

ब्रह्मशब्दस्यान्तोदात्ततयाऽध्येतृपाठबलेनैव व्यत्ययो बहुलमिति वा परादिश्छन्दसि बहुलमिति वा बहुल-ग्रहणेन नाधिपतिशब्दस्याद्यनुदात्तत्वस्याभावोपपत्त्योदात्तपरत्वसम्भवात् । तस्माद्ब्रह्माधिपतिप्रातिपदिकस्थ-ब्रह्मशब्दस्यान्तोदात्तत्वान्न स्वरितान्तत्वोक्तिरुपपन्ना । अत एव समासानन्तर्गतयोश्चेति शेषपूरणं च टीकास्थं वक्ष्यमाणं दुर्घटमिति चेत् । अत्रोच्यते । यथावत् केवलस्य स्वरितान्तत्वेऽपि समासप्रातिपदिकान्तर्गतस्यान्तो-दात्तत्वमिति प्रतिज्ञाय तदुपपादनं चाकारि । तत्सर्वमनुमतमेवास्माभिः । अध्यापकपाठादेस्तथैव सत्त्वात् । स्वरितान्तत्वोक्तितस्तत्स्वरितस्य समासस्येत्यन्तोदात्तरूपसमासस्वरेण राजपुरुषो ब्राह्मणकम्बल इत्यपि





तत्पुरुषगतपूर्वपदस्थस्वरबाधवत् बाधो नास्तीत्यभिप्रायेण । अत एव अधीत्युपसर्गाभावे ब्रह्मपतिसमास इन्द्रशत्रुप्रातिपदिकवत्स्वरितपूर्वपदान्तमेव भवेत् । तथाच बहुव्रीहित्वप्रयुक्तोऽन्तोदात्तत्वाभावः । पूर्वपदस्य स्वरितान्तत्वेऽपि एकादेशप्रयुक्तोदात्तत्वे सति शेषनिघाते प्राप्ते आद्युदात्ततयाऽध्येतृपाठान्निघाताभावश्चेत्येव बहुव्रीह्याश्रयणफलं न तु पूर्वपदस्य स्वरितान्तत्वेनावस्थितिनियमः । एकादेशप्रयुक्तोदात्तताश्रयणाभावे बहुव्रीहेरेवाप्रसङ्गेन समासस्वरस्यैवैकादेशस्वरस्याबहुव्रीहित्वप्रयुक्तबाधस्यायोगात् । प्रयोगभेदस्वरवैषम्यं तु सुखेनाङ्गीकर्तुमुचितम् । राजकुमार इत्यादौ कर्मधारये स्वरितान्तपूर्वपदकत्वेऽपि तत्पुरुषे अन्तोदात्तत्वमेवेति दृष्टत्वात् । समासप्रयुक्तपूर्वपदप्रकृतिस्वरापवादाभावाशयेनैव स्वरितान्तब्रह्मशब्दान्तमित्याद्यनुव्याख्यानाद्युक्तीनां प्रवृत्तिः । यो हि विदितप्रकृतिप्रत्ययविभागादिः स ब्रह्माधिपतिरित्यत्र स्वरितान्तमेव ब्रह्मपदमेकादेशेन पुनरुदात्तान्तम् । न तु समासस्येत्युक्तलक्षणसारेण अनुदात्तान्तमिति बहुव्रीहित्वकार्यं विज्ञास्यत्येवेति न कश्चिद्दोषः ।

स्वामिचरणास्तु सस्वरितेऽपि अर्धमात्रोदात्तैव उदात्तानुदात्तसमाहाररूपस्वरिते को भागः उदात्तः कश्चानुदात्तः कियान्वोदात्त इत्यादि जिज्ञासायां विवेकाय प्रवृत्तेन तस्यादित उदात्तधर्मह्रस्वमिति सूत्रेणादौ विद्यमानभागस्योदात्तता उत्तरस्यानुदात्तता । आदिभागेऽपि अर्धमात्रोदात्तता । द्वितीया अर्धमात्रोदात्ततेत्यादिप्रतिपादनात् । विशदश्चायं विचारः 'तनूनयाच्छवीपतिमि'त्यादि सम्बन्धि प्रातिशाख्ये तद्भाष्ये च । तथा च ब्रह्मशब्दस्य स्वरितान्तत्वेऽपि अर्धमात्रायाः उदात्तत्वस्य स्वतःसिद्धत्वाद्वितीयार्धमात्रायास्त्वनुदात्तभूताया अधी इत्युत्तरोदात्ताकरणे सवर्णदीर्घैकरूपैकादेशस्यैकादेश उदात्तेनोदात्त इति उदात्तत्वेन स्वरव्यत्यासेऽपि तद्व्यत्यासस्य वेत्यादिवदेकादेशप्रयुक्तत्वेन समासप्रयुक्तत्वाभावात् समासप्रयुक्तस्वरव्यत्यासाभावरूपपूर्वपदप्रकृतिस्वरत्वमक्षतमेवेति भावं वर्णयांबभूवुः । 'क्व वो श्वा इत्यत्र क्वेति स्वरितान्तत्वं इत्यनुदात्तम् । संहिताकाले वसु इत्यत्र सस्य रुत्वे गुणे वो इत्येवोकारस्य अश्वा इत्यकारे औकारादेशे स्वरिते वानुदात्त इत्यनेनोकारस्य स्वरितत्वात् स्वरिते परतः पूर्वस्वरिते योऽनुदात्तभागः तस्य कम्पकाले स्पष्टत्वात् । एवमन्यत्रापीत्यादि रमायां तस्यादित उदात्तमर्धह्रस्वमिति सूत्रे स्पष्टम् । यद्यपि तैत्तरीये ऋतं सत्यमिति वाक्यस्थविरूपाक्षमित्यनन्तरं विश्वरूपाय वै नमो नम इत्यादिकः पाठः । तापनीये तु शङ्करं नीललोहितमित्यादिपाठ इति तदुभयस्थलस्य सर्वप्रकारेणैकविषयत्वायोगात् तैत्तरीये ब्रह्माधिपतिप्रातिपदिकस्य स्वरितपूर्वपदकत्वाभावेऽपि तापनीये तत्पूर्वकत्वमेव कल्पयितुं शक्यम् । अत एव मूले तापनीयेति भाष्यानुसारेण तापनीयेत्यनेकधा व्यवहृतम् । अस्ति च ब्रह्मपदस्य स्वरितान्तत्वेऽपि तदन्त्यस्य स्वरितस्योत्तरपदादिभूतोदात्ताकारस्य चान्तर्यात्स्वरित एवैकादेशः । उत्तराकारस्य निघातप्रयुक्तानुदात्तत्वे वाऽऽन्तर्यात्स्वरित एवेति स्वरितत्वप्रापकम् । तथा च सर्वेऽपि बहुव्रीहित्वादिविचारः सुलभ एवेति शक्यते वक्तुम् । तथापि तैत्तरीयेऽध्येतृपाठवत् तापनीयेऽपि ब्रह्मपदस्योदात्ततयैव पाठान्न पाठान्तरकल्पना युक्ता । तस्मात् पूर्वोक्तरीत्यैव स्वरितान्तत्वमुपपादनीयमित्यलम् ।

**समासस्येत्यनेनेति** । समासस्यान्त उदात्तो भवतीति तत्सूत्रार्थः । अस्मिन् पक्षे एकवाक्यतया प्रतीयमानस्यास्य श्लोकस्य भिन्नवाक्यत्वेन योजनीयत्वम् । अध्याहारश्च कर्तव्यतया प्राप्नोतीत्यतोऽध्याहार-





निरपेक्षमेकवाक्यत्वेन योजनान्तरमाह **अथवेति** मूलम् । **स्वरितेन्द्रशब्दान्तमिति** । स्वरितः इन्द्रशब्दस्यान्तो यस्मिन्निति स्वरितेन्द्रशब्दान्तम् । यत्र पूर्वपदभूत इन्द्रशब्दः स्वरितान्तोऽस्तीति यावत् ।

**स०व्र०— स्वरितब्रह्मशब्दान्त इति** । ब्रह्मशब्दस्य मन्प्रत्ययान्तत्वे ञ्नित्यादिर्नित्यमित्यनेन बृहतेराद्युदात्तत्वे परस्य मन्प्रत्ययस्वरस्य 'अनुदात्तं पदमेकवर्जमि'त्यनेनानुदात्तत्वे 'उदात्तादनुदात्तस्य स्वरित' इत्यनेन मन्प्रत्ययस्य स्वरितत्वम् । ततश्च ब्रह्मशब्दः स्वरितान्त इति ज्ञेयम् । स्वरितः ब्रह्मशब्दान्तो यस्मिन्समासे प्रातिपदिके तदिति विग्रहो द्रष्टव्यः । **तथात्वे अन्तोदात्तत्वेनेति** । समासस्येत्यनेन सामान्यतः समासस्यान्तोदात्तताया विहितत्वादिति भावः । **अनुदात्तं पदमेकवर्जमित्यस्येति** । यत्रान्त्यः स्वर उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा परिशिष्टः सर्वोऽनुदात्तो भवतीति सूत्रार्थः । पूर्वपदस्य इत्यस्य प्रसङ्गेनेति सम्बन्धः । स्वरितपूर्वपदान्तता समासप्रातिपदिकस्येति शेषः । **पूर्वोक्तमर्थमिति** । किञ्च ब्रह्माधिपतिरित्यादिना पूर्वार्धो न रुद्रविषय इत्यन्तेनोक्तमर्थमित्यर्थः । **उक्तशङ्कोत्तरत्वेनेति** । स्यादेवं यदि ब्रह्माधिपतिशब्दस्येत्यादिनोक्तशङ्कोत्तरत्वेनेत्यर्थः । **स्वरितेन्द्रशब्दान्तमिति** । इन्द्रशब्दस्य रन्प्रत्ययान्तस्य निपातितत्वात् ब्रह्मशब्दे कथितरीत्या स्वरितान्तत्वं ज्ञेयम् ।

**स०ना०— स्वरितब्रह्मशब्दान्तमिति** । ब्रह्मशब्दस्यान्तः ब्रह्मशब्दान्तः । स्वरितः ब्रह्मशब्दान्तो यस्मिन् तत् स्वरितब्रह्मशब्दान्तमित्यर्थः । **ननु ब्रह्माधिपतीति** । प्रातिपादिकं न स्वरितान्तपूर्वपदोपेतं किन्तु उदात्तान्तपूर्वपदोपेतम् । तथा च स्वरितपूर्वपदान्तत्वमसिद्धं हि । उदात्तान्तपूर्वपदपाठस्य स्वरितान्तत्वेन विना अनुपपद्यमानत्वेन तेन तत्सिद्धेः । तथा हि । ब्रह्मशब्दस्तावन्मनिन्प्रत्ययान्तत्वेनाद्युदात्तत्वात्तच्चरितान्तः । अधिपतिशब्दो हि उपसर्गाश्चाभिवर्जितमिति आद्युदात्तः । यदि ब्रह्माधिपतिरित्यत्र तत्पुरुषः कर्मधारयो वा स्यात् तदा समासस्येति सूत्रेण अन्तोदात्तत्वात् अनुदात्तं पदमेकवर्जमिति सर्वस्य निघातः स्यात् । ततश्च ब्रह्मशब्दान्त उदात्तो न स्यात् । यद्यत्र बहुवीहिः स्यात् तदा अन्तोदात्तत्वाभिधायकसमासस्येति सूत्रबाधेन बहुव्रीहौ प्रकृत्या पूर्वमिति प्रकृतिस्वरेण पूर्ववदस्य स्वरितान्तत्वं स्यात् । अधिपतिशब्दस्याद्युदात्तत्वापवादकाभावेनाद्युदात्तत्वमेव ततश्च ब्रह्मशब्दाकारस्य अधेरकारस्य च सवर्णे दीर्घे एकादेश उदात्तेनोदात्त इत्यनेन एकादेशस्योदात्तत्वात् उदात्तान्तपूर्वपदपाठ उपपन्नो भवति ।

**विठ्ठल०**— पुर इत्यस्य पूर्वमित्यर्थप्रतीतिनिरासाय आह **पुरतः उपरिष्टादिति** । स्वरितब्रह्मशब्दान्तमित्यस्य स्वरितः ब्रह्मशब्दस्यान्तः स्वरो यस्य प्रातिपदिकस्य न तु ब्रह्माधिपतिप्रातिपदिकं स्वरितब्रह्मशब्दान्तमिति योजना । अत्र ब्रह्मशब्दस्य मन्प्रत्ययान्तत्वेन ञ्नित्यादिर्नित्यमित्यनेन प्रकृतिरूपबृहतेराद्युदात्तत्वेन तत्परस्य मन्प्रत्ययाकारस्यानुदात्तं पदमेकवर्जं एकस्मिन् पदे यस्योदात्तादिस्वरो विधीयते तमेकमुदात्तं स्वरितं वा वर्जयित्वा अन्यत्सर्वं अनुदात्तम् इत्यनुदात्तत्वे उदात्तादनुदात्तस्य स्वरितः उदात्तात्परस्यानुदात्तस्य स्वरितादेश इति





मन्प्रत्ययाकारस्य स्वरितत्वे ब्रह्मशब्दः स्वरितान्त इति । ब्रह्माधिपतिप्रातिपदिकं स्वरितब्रह्मशब्दान्तं तस्मात् बहुव्रीहित्वमेव प्राप्नोतीति भावः । कुतः समासान्तरत्वाभाव इत्यत आह **तथात्वे इति** । समासान्तरत्वे समासस्येत्यनेन सामान्यतः समासस्यान्तः उदात्तस्वरः स्यादिति सूत्रेण सामान्यतो ब्रह्माधिपतिप्रातिपदिकान्तिमाकारस्योदात्तत्वे अनुदात्तं पदमेकवर्जम् । यत्रान्यस्वरः उदात्तः स्वरितो वा विधीयते तमेकं वर्जयित्वा परिशिष्टः सर्वोऽप्यच् अनुदात्तो भवतीति अनुदात्तत्वप्रसङ्गेन तत्पूर्वब्रह्मप्रातिपदिकस्वरस्यानुदात्तताप्राप्त्या स्वरितपूर्वपदान्तता न स्यात् । दृश्यते च स्वरितपूर्वपदान्तता । अतो बहुव्रीहिसमासत्वमेव न समासान्तरत्वमिति भावः । मूलश्लोकं अध्याहारं विनापि योजयति **अथवेति** । किञ्च ब्रह्माधिपतिरित्युत्तरवाक्य इत्यादिना योजनेत्यन्तेनोक्तमर्थं बहिरेवोक्त्वा स्यादेवं यदि ब्रह्माधिपतिशब्दस्येत्यादिनोक्तशङ्कोत्तरत्वेन समग्रश्लोको व्याख्येय इत्यर्थः । **स्वरितेन्द्रशब्दान्तमिति** । औणादिकरन्प्रत्ययान्तस्य इन्द्रशब्दस्य ञ्नित्यादिनित्यमित्याद्युदात्तत्वे अनुदात्तं पदमेकवर्जमिति दोषनिपाते उदात्तादनुदात्तस्य स्वरित इति स्वरितान्तत्वादिति भावः ।

**चषकः—** **स्वरितब्रह्मशब्दान्तमिति** । ब्रह्मशब्दस्य मन्प्रत्ययान्तत्वेन निदन्तत्वात् । 'ञ्नित्यादिर्नित्यं ञिति निति च प्रत्यये परतः आदिरुदात्तो भवतीत्यादिभूताकारस्योदात्तत्वेऽनुदात्तं पदमेकवर्जं यश्चोदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं पदमनुदात्तं भवतीति शेषांशस्यानुदात्तत्वे उदात्तादनुदात्तस्य स्वरितः उदात्तात्परस्यानुदात्तस्य स्वरितो भवतीति तस्यैव स्वरितत्वेन ब्रह्मशब्दस्य स्वरितान्तत्वाद्ब्रह्माधिपतिप्रातिपदिकं स्वरितान्तब्रह्मशब्दावयवकं भवतीति बहुव्रीहितां प्राप्नोतीत्यर्थः । **न समासान्तरत्वमिति** । षष्ठीतत्पुरुषत्वं कर्मधारयत्वं वेत्यर्थः । **तथात्वे** दर्शितसमासान्तररूपत्वे । समासस्येत्यनेन समासत्वावच्छिन्नसम्बन्धिचरमावयवस्यान्तोदात्तताया विहिततया उदात्तं पदमिति शेषनिघातापत्त्या स्वरितान्तपूर्वपदावयवकता न स्यादित्यर्थः । **पूर्वोक्तमर्थमिति** । किञ्च ब्रह्माधिपतिरित्यादिकयोजनेत्यन्तेनाभिहितमर्थमित्यर्थः । **उक्तशङ्केति** । स्यादेवं यदि ब्रह्माधिपतिशब्दस्येत्यादिकाभिहितशङ्कोत्तरत्वेनेत्यर्थः । **कुतो बहुव्रीहित्वमिति** । ब्रह्माधिपतिशब्दपक्षकबहुव्रीहित्वसाध्यकस्वरितान्तपूर्वपदावयवकत्वलिङ्गकानुमानाङ्गभूतायाः प्रकृतसाध्यनिरूपितप्रकृतसाधननिष्ठव्याप्तेर्निदर्शनाभावेन दुर्दर्शत्वादिति भावः । इदमपि ब्रह्माधिपतिप्रातिपदिकमपि । तथाविधं स्वरितान्तपूर्वपदावयवकम् । **स्वरितेन्द्रशब्दान्तमिति** । स्वरितान्तेन्द्रशब्दावयवकमित्यर्थः । रुजेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्तशुक्लगौरवन्तेरामाला इत्युणादिद्वितीयपादीयसूत्रेणैकोनविंशतिशब्दानां रन्नन्ततया निपातनात्तदन्तर्गतेन्द्रशब्दोऽपि तादृश इति ब्रह्मशब्दवत्स्वरितान्तत्वं ज्ञेयम् ।

**॥ अथ उत्तरवाक्यस्य ब्रह्माधिपतिपदस्य बहुव्रीहित्वे**
**'इन्द्रशत्रुप्रातिपदिकस्य बहुव्रीहित्वफलितता' ॥**

**१८ सु०— इन्द्रशत्रुप्रातिपदिकस्यापि कुतो बहुव्रीहित्वम् । षष्ठीसमासत्वसम्भवादित्यत आह तस्मादिति ।**





## अनु०— तस्मादस्येन्द्र एवाभूच्छत्रुरित्युत्तरश्रुतेः ॥

**यस्मादिन्द्रशब्दः स्वरितान्त उपात्तस्तस्मात् । मन्त्रस्याभिमतस्वरहीनतादोषात् । अस्य वृत्रस्येन्द्रः शत्रुः शातयिताऽभवत् । न पुनस्त्वष्टुरभिप्रायानुसारेणेन्द्रस्य शत्रुरभवत् । इत्युत्तरवाक्यबलादिदं ज्ञायते यदिन्द्रशत्रुप्रातिपदिकं बहुव्रीहिर्न तत्पुरुष इति । तथा चाहुः 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादि'ति ।**

**परि०—** शिक्षाग्रन्थश्लोकमुदाहरति **तथा चाहुरित्यादिना** । **मिथ्याप्रयुक्तः** अयथाप्रयुक्तः । **वाग्वज्रः** वाग्रूपवज्रः । **इन्द्रशत्रुः** इन्द्रशत्रुरिति मन्त्रः । **स्वरतोऽपराधात्** स्वरभ्रंशनिमित्तात् । उदाहृतश्च श्लोको महाभाष्ये पस्पशाह्निके ।

**गु०दी०— यथेन्द्रशत्रुः स्वरतोऽपराधात्** इत्यत्र यद्यपीन्द्रगुरोर्विश्वरूपाचार्यस्याधिसभं सहजस्वरं विहाय स्वरान्तरग्रहणायोगान्न श्रौतस्वरस्य व्यत्यासः सम्भवति । तथाऽपि महाव्याकरणन्यायमिममननुसन्दधानस्य तस्य बहुव्रीहित्वप्रापकपूर्वपदान्तस्वरितेऽप्यस्मिन्निन्द्रशत्रुप्रातिपदिके स्वानुकूलस्वरत्वभ्रमोऽस्ति । इदमेव स्वरतो हीनत्वं नाम । अत एव 'मिथ्याप्रयुक्तो वृथा प्रयुक्तो न तमर्थमाहे'ति 'स्वरतोऽपराधादि'ति चोक्तम् । न तु स्वर-व्यत्यासकरणादिति । न ह्याचार्यकृतेयं मीमांसा प्रागाचार्यप्रवृत्तेस्तस्यापि सिद्धा । अतो वैदिकगुरोरपि तस्योक्त-विधस्वरापराधोऽपि स्यादेवेति द्रष्टव्यम् ।

**यादु०— स वाग्वज्र इति** । सः स्वरवर्णहीनः प्रयुक्तो मन्त्रो वज्रवद्धिंसको यजमानं हिनस्ति । तत्र पुराकल्पसिद्धमुदाहरणम् **यथेन्द्रशत्रुरिति** । इन्द्रशत्रुरिति मन्त्रो यथा स्वरतो जातादपराधादित्यर्थः । त्वष्टुः पुत्रो विश्वरूपः शक्रेण हतः । स त्वष्टा इन्द्रस्य हन्तारं पुत्रं लिप्सुस्तदर्थं सोमायणमनुतिष्ठन् भागलिप्सुमपीन्द्रं नाजुहाव । इन्द्रः स्वयमेवागत्य प्रसह्य सोमरसं पपौ । त्वष्टा सोमपात्रेऽवशिष्टं सोमरसमिन्द्रस्य शातयिता पुत्रो भूयादि-त्याशंसमानः स्वाहेन्द्रशत्रो वर्धस्वेति मन्त्रेण जुहाव । तदेन्द्रशत्रुरिति शब्दे स्वाभिप्रेतफलाय तत्पुरुषस्वरोहः कर्तव्यः । तं विहाय यथास्थितो बहुव्रीहिस्वर एव तत्र प्रयुक्तः । तेन स्वरापराधेन तत्रोत्पन्नस्य वृत्रासुरस्य शत्रुः शातयिताऽभूदिति त्वष्टा हतपुत्र इत्यादि तैत्तिरीयश्रुतिसिद्धमेतदिति द्रष्टव्यम् ।

**वं०प०— इन्द्रशब्दः स्वरितान्त इति** । इन्द्रशब्दस्यापि रन्प्रत्ययान्तत्वेन 'ञ्नित्यादिर्नि'त्यमिति सूत्रेण नितिप्रत्यये परे इन्द् धातोरादेरुदात्तत्वे तत्परतः स्थितस्य रन्प्रत्ययस्थरेफस्थस्याकारस्यानुदात्तं पदमेक-वर्जमित्यनेनानुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इत्यनेन तस्य रादेशो इन्द्रशब्दः स्वरितान्त इत्यर्थः ।





**शे०वा०—कुतो बहुव्रीहित्वमिति** । दृष्टान्ताभावेन स्वरितपूर्वपदान्तत्वस्य बहुव्रीहित्वेन व्याप्त्यसिद्धेरिति भावः । **इदमपि** ब्रह्माधिपतिप्रातिपदिकमपि । **तथाविधं** स्वरितब्रह्मशब्दान्तमित्यर्थः । **स्वरितान्त इति** । इन्द्रशब्दस्य रन्प्रत्ययान्तत्वात् ञ्नित्यादिर्नित्यमित्यादिभूतेकारस्योदात्तत्वेऽनुदात्तं पदमिति शेषभूताकारस्यानुदात्तत्वे तस्यैवोदात्तादनुदात्तस्य स्वरित इति स्वरितत्वेनेन्द्रशब्दस्य स्वरितान्तत्वमिति ज्ञेयम् । **मन्त्रो हीन इति** । दुष्टः शब्दः स्वरत इत्यप्रसिद्धः पाठः । अतः प्रसिद्धस्यैवोदाहरणम् । स्वरेणेति स्वरतः । आद्यादित्वात्तसिः । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः । वागेव वज्रः वाग्वज्रः । यथेत्युदाहरणे । इन्द्रशत्रुरिन्द्रशत्रुशब्दः स्वरकृतादपराधाद्यजमानं हिंसितवान् । इन्द्रमभिचरता हतपुत्रेण त्वष्ट्रा इन्द्रशत्रुर्वर्धस्वेति मन्त्रः प्रयुक्तः । तत्र षष्ठीसमासार्थे विवक्षितेऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्तः प्रयुक्तः । तत्र बहुव्रीह्यर्थोपसंहारादिन्द्र एव शत्रुरभवत् । कः पुनर्बहुव्रीहितत्पुरुषयोरर्थभेदः । यावता यस्येन्द्रः शत्रुरिन्द्रस्याप्यसौ शत्रुरेव । सपत्नपर्यायो हि शत्रुशब्दः । नैष दोषः । क्रियाशब्दोऽत्र शत्रुशब्दः शातयिता शत्रुरिति । तथा चेन्द्रस्य शातयिता भूत्वा वर्धस्वेति षष्ठीसमासेऽर्थः । बहुव्रीहौ त्विन्द्रशातयितृक इति स्पष्ट एवार्थभेदः । कथं पुनरत्राद्युदात्तत्वस्य वा प्रसङ्गः । यावता यज्ञकर्मणीत्येकश्रुत्या भवितव्यम् । अयमप्यदोषः । तत्र हि जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयते । स्वेच्छया प्रयुज्यमानश्च मन्त्रो न भवति । यदि वैकश्रुत्यभावादेवात्र प्रत्यवायस्तथा यस्तु प्रयुङ्क्ते इत्यत्र श्लोके दुष्यति चापशब्दैरिति दोषो दर्शितः । तस्मादस्त्यपशब्दप्रयोगेऽधर्म इति ।

**वा०र०— तथाविधं स्वरितब्रह्मेति** । अत्र तथाविधमित्यनेन स्वरितेन्द्रशब्दान्तत्वस्य न परामर्शः । किन्तु स्वरितपूर्वपदकत्वसामान्यस्वरितपूर्वपदान्तत्वादेरुक्तत्वात् । तस्यापि प्रकृते पर्यवसाने तथाविधमित्यस्य स्वरितब्रह्मशब्दान्तमित्यर्थलाभ इत्याशयः । **रन्प्रत्ययान्तत्वादिति** । ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः इत्युणादिसूत्रेण रन्प्रत्ययान्तानां ऋज्रादिशब्दानां निपातनादिन्द्रशब्देऽपीदेर्धातो रन्प्रत्यये नुमि सति नोपधात्तयोपधाभावेन भूतस्येको लघूपधगुणाभावे चेन्द्रशब्दनिष्पत्तेरिति भावः । **तस्यैव** अनुदात्तस्यैव । **स्वरितत्वेनेति** । न च तथात्वे शेषनिघातेनेकारोऽनुदात्तः स्यादिति वाच्यम् । पूर्वत्रासिद्धमिति परिभाषया स्वरितत्वस्यासिद्धत्वेन वा रमाकाराश्रितस्यानुदात्तमिति परिभाषया यथोद्देशपरिभाषात्वमित्याश्रयणेन वा शेषनिघातप्रसङ्गात् । विस्तृतं चेदं पूर्वत्र । एवमेवञ्जातीयके द्रष्टव्यम् ।

ननु भाष्ये दुष्टः शब्द इति पाठात् कथं मन्त्रो हीन इति पाठोदाहरणं मूले इत्यत आह **दुष्टः शब्द इतीति** । तथा च पाठस्याप्रसिद्धत्वात् तत्परित्यागेन मन्त्रो हीन इति प्रसिद्धपाठस्यैवात्रोदाहरणमित्यर्थः । उक्तं मञ्जर्याम् । मन्त्रो हीनः स्वरतो वर्णत इति प्रसिद्धः पाठ इतीति भावः । तर्हि भाष्यकारीयं तथापाठोदाहरणं किं निमित्तकमिति चेत् । उच्यते । मन्त्रो हीन इति शिक्षाकृत्पाठे प्राप्तानुपपत्तिपरिहाराय तद्व्याख्यानकरणनिमित्तकं तथापाठोदाहरणम् । तथाहि । इन्द्रशत्रुर्वर्धस्वेति दृष्टान्तीकृतं वाक्यं न मन्त्रः । ततस्तस्य स्वरवर्णहीनत्वप्रयुक्तमर्थाप्रतिपादकत्वं न वक्तुं शक्यमिति मन्त्रशब्दोऽयं बोधकशब्दमात्रपरः । मन्त्रिगुप्तभाषण इत्यस्य धातोरर्थान्तरत्वेन मन्त्रयति बोधयतीति व्युत्पत्तेः सम्भवात् । एवं हीनशब्दस्य त्यक्तवाचितया तेन स्वरादित्यादौ निमित्तकं दुष्टत्वं लक्ष्यते । अन्यथा





मन्त्रातिरिक्तस्य स्वराद्यभावप्रयुक्ताप्रतिपादकत्ववचनायोगप्रसङ्गः । तस्मादुक्तरीत्या व्याख्येयं शिक्षाकृद्वाक्यमिति भावेन भाष्यकारो दुष्टः शब्द इति पाठान्तरमुपात्तवानिति न कश्चिद्दोष इति ।

ननु स्वरत इति तसिलात्तसिल्प्रत्ययस्य पञ्चम्यास्तसिलिति सूत्रेण विधानात् तत्र च किंसर्वनामबहुभ्योऽद्व्यादिभ्य इति तसिलादिविधिषु द्व्यादिव्यतिरिक्तकिमादीनामेवाधिकारप्रतिपादनानुसारेण किमादिभ्य इत्येव नियमात् प्रकृते च स्वरशब्दस्य किं सर्वनामबहुशब्दाभिन्नत्वेन तेन सूत्रेण तस्मात् तसिल्प्राप्तेरयोगात्। पर्यभिन्नतया पर्यभिभ्यां चेत्यनेनापि तत्प्रत्ययायोगात् । नापि स्वरत इति तसिः । प्रतियोगे पञ्चम्यास्तसिरिति प्रतियोगे विहितपञ्चभ्यां तावदेव तसेर्विधानेन प्रद्युम्नः कृष्णतः प्रतीत्यादाविव प्रकृते प्रतियोगे पञ्चम्यभावेन तसिल्प्रत्ययस्य तेन सूत्रेण अपादाने चाहीयरुहोरित्यादिसूत्राणां चान्यविषयतया एतद्विषयेऽप्रसङ्गेन सूत्रान्तरेण चानुपपत्तिरित्यतः कैयटमञ्जरीकाराभ्यामुक्तं समाधिमाह **स्वरेणेति स्वरत इति** । तथा च पञ्चम्यन्तात्तसिल् तस्योररीकारान्नोक्तदोष इत्युक्तं भवति । कथं तर्हि स्वरत इति तसिलि वा तसौ वा रूपमित्यत्रोक्ततसिप्रापकमाह **आद्यादित्वादिति** । तस्यादित उदात्तमर्धह्रस्वमित्यत्रादावित्यादित इति सूत्रनिर्देशबलात्सिद्धस्यादिमध्यपृष्ठपार्श्वादिभ्य उपसङ्ख्यानमिति वार्तिकस्य सङ्ग्रहः । आद्यादिभ्य उपसङ्ख्यानमिति वार्तिकम् । तेनाद्यादिशब्दान्तरेभ्योऽपि तसेर्विधानात् स्वरत इति तसिरुपपन्न इति भावः । इदं च मन्त्रो हीन इति वाक्यव्याख्यावसरे मञ्जर्याद्युक्तं समाधानमुक्तम् । अपादाने चाहीयरुहोरित्येतत्सूत्रीयकाशिकायां जहातेर्विकारनिर्देशभूतहीयेत्यस्योदाहरणेन सार्थाद्धीयत इत्यादौ तसिर्नेति प्रतिपाद्य कथं मन्त्रो हीनः स्वरतो वर्णतो वेति नैषा पञ्चमी किन्तु तृतीया स्वरेण वर्णेन हीन इत्यर्थ इति यदुक्तं तद्व्याख्यानरूपमञ्जर्यां तु हेतौ करणे च तृतीया । तदन्तात् हीयमानपापयोगाच्चेति सूत्रेण तसिरित्यर्थः । स्वरेण वर्णेन वा विवक्षिताद्धीन इत्यर्थः । सम्पद्यत इति समाधानान्तरं प्रतिपादितम् । तत्प्रकारोऽप्युपलक्षणया ज्ञेयः । तमर्थमिति तच्छब्दस्य यच्छब्दाथपिक्षत्वाद्यच्छब्दार्थं वदन् मिथ्याप्रयुक्त इत्येतदनूद्य व्याचष्टे **मिथ्याप्रयुक्त इत्यादि** । स्वरवर्णदोषात् प्रतिपादयन्नित्यनेन मिथ्याप्रयुक्तत्वे पूर्वोक्तो हेतुतया योजित इति ज्ञेयम् । केचित् यतो मिथ्याप्रयुक्तोऽन्यथोच्चरितः स मन्त्रस्तमर्थं प्रयोक्तृविवक्षितमर्थं नाह किन्तु विपरीतमेवार्थं ब्रूते ततः मन्त्रः स्वरतो वर्णतो वा हीन इति ज्ञेयमित्येवमपि हेतुमद्भावेन योजयन्ति । तमभिमतमिति कैयटानुसारी पाठः स्वरसः।

ननु वाग्वज्र इति न द्वन्द्वः । द्विवचनप्रसङ्गात् । एकवद्भावेऽपि नपुंसकत्वस्य प्राप्तेः । बहुव्रीहिरित्यपि न । प्रकृतदृष्टपरामर्शिना इत्यनेन सामानाधिकरण्यानुपपत्तेरित्यत आह **वागेवेति** । हिनस्तीति किं निमित्तको गौणोऽयं प्रयोग इति भावः । कैय्यटे हिंसकत्वनिमित्तको गौणेयमित्युक्तेः । अन्यथाऽन्यस्यान्यत्वायोगः । यद्यप्यत्र सिंहकत्वादित्यधिकं कैयटस्थं वक्तुमिष्टं तथा मञ्जरीग्रन्थस्यैवात्र टीकाकृता पुरस्कारात् तदनुसारेणानुवादावसरेऽधिकानुक्तिरिति ज्ञेयम् । **उदाहरण इति** । दृष्टं चैवमित्यर्थः । कुत्रेत्यत उक्तं **इन्द्रशत्रुरित्यादिकश्लोके** । तत्रेन्द्रः शत्रुर्यस्येति पुरुषविशेषवाचकत्वेन प्रतीयमानस्येन्द्रशत्रुशब्दस्योपादानं न युज्यते । दार्ष्टान्तिके शब्दस्यैवोपादानेन दृष्टान्तेऽपि तस्यैव वाच्यत्वात् । इन्द्ररूपशत्रुयुक्तपुरुषस्य स्वरभ्रंशेन यजमानहिंसकत्वायोगश्चेत्यतः इन्द्रशत्रुशब्दं शब्दपरतया व्याचष्टे **इन्द्रशत्रुरिति** । **स्वरकृतादिति** । आद्युदात्तवैशिष्ट्येनार्थान्तरप्रतिपादनादित्यर्थः । दृष्टान्ते





यजमानाप्रतीतेर्मन्त्रप्रयोगनिमित्ताप्रतीतेश्च तं विशदयति **इन्द्रमभिचरतेति** । त्वष्ट्रेति यजमानकीर्तनम् । मन्त्र-प्रयोगे आश्रयत्वेन आभिचारिकसोमयागप्रतिपादनायाभिचरतेत्युक्तम् । तद्यागानुष्ठाने निमित्तकीर्तनं **हतपुत्रेणेति** । पुरा किल त्वाष्ट्रपुत्रो विश्वरूपो दैत्येषु पक्षपाते देवानिष्टं दैत्यकार्यमपि साधयिष्यतीति बुद्ध्या देवेन्द्रेण हतः । ततः स्वपुत्रहन्तरीन्द्रे कोपेन त्वष्ट्रा पुत्रान्तरमुत्पाद्येन्द्रं घातयिष्यामीति बुद्ध्या अभिचारिकसोममनुष्ठितत्वात् तत्र त्वष्ट्रा वृतेन ऋत्विजा इन्द्रशत्रुर्वर्धस्वेति मन्त्रः प्रयुक्त इत्यर्थः । इदञ्चात्रावधेयम् । यागानुष्ठानकाले सोमनिष्प-त्त्यनन्तरम् इन्द्रे स्वभागमाकाङ्क्षति सति यदा त्वष्टा तद्भागं न प्रायच्छत् तदा इन्द्र एवागत्य बलात् स्वभागं पीतवान् । तदोर्वरितं सोमं स्वाहेन्द्रशत्रुर्वर्धस्वेति मन्त्रेणेन्द्रस्य शातयिता भूत्वा वर्धस्वेत्यभिप्रायेण हुतवान् इति । तदेतत् त्वष्टा हतपुत्रोऽपीन्द्रं स्तोममाहर तस्मिन्निन्द्र उपहवमैच्छत्तन्नोपांह्वतेत्यादिना त्वष्टानुवाके शतपथ-ब्राह्मणादौ च स्पष्टम् । ऋत्विजाप्रयुक्त इति कैय्यटे स्पष्टमभिधानात् अध्वर्युकृतादपराधाद्यजमाने प्रत्यवायः । यथा अध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिस्तथेति ज्ञेयम् । अत्रेन्द्रशत्रो वर्धस्वेति आमन्त्रणविभक्तिरूपसम्बुद्धेः प्रयोगाभावस्तु सम्बोधनविभक्तेरनुवाद्यविषयत्वादिह च इन्द्रशत्रुत्वस्य विधेयत्वेनानुवाद्यत्वाभावात् । यथा राजा भव युद्ध्यस्वेत्यत्र आमन्त्रणविभक्त्यभावः सिद्धस्यैव कार्यान्तरविधानायानुवाददर्शनेनासिद्धे तदयोगात् इति कैयटाद्युक्तं ज्ञेयम् ।

**अन्तोदात्त इति** । **समासस्येति** समासस्यान्तोदात्तताविधानादिति भावः । **आद्युदात्त इति** । व्युत्पन्न इन्द्रशब्द इति पक्षे अज्रेद्राग्रेति पूर्वोदाहृतसूत्रे रन्प्रत्ययान्तत्वेन निपातनान्निदन्ततयाश्रित्यादिरित्यनेनाद्युदात्तत्वं पूर्वमुपपादितमेव । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति' वचनानुसारेणाव्युत्पत्तिपक्षे ग्रामादीनां चेत्यादिना ग्रामादिशब्दानामाद्युदात्ततया विधानात् ग्रामादित्वेनावृषादित्वेन वाऽऽद्युदात्तत्वमित्यपि ज्ञेयम् । आद्युदात्तत्वे कस्यार्थस्य लाभ इत्यत्र उक्तं **तत्र बहुव्रीह्यर्थेति** । आद्युदात्तेन्द्रशब्दस्य पूर्वोक्तरीत्या स्वरितान्ततया प्रयोगान्तस्य च बहुव्रीहौ प्रकृत्या पूर्वपदमिति विधानानुसारेण बहुव्रीहित्वनिश्चायकत्वादिति भावः ।

बहुव्रीहितत्पुरुषयोरर्थभेदाभावाद्बहुव्रीहित्वेऽपि नेन्द्रस्यैव शत्रुत्वप्राप्तिरित्याशयेन शङ्कते **कः पुनरिति** । **सपत्नेति** । अमित्रेत्यर्थः । ततश्च बहुव्रीहितत्पुरुषयोरिन्द्रगतशत्रुत्ववृत्रगतशत्रुत्वयोर्लाभेऽपि अन्योन्यगतशत्रुत्वयो-रन्योन्यगतशत्रुत्वाविनाभावात् पक्षद्वयेऽप्येक एवार्थ इत्याशयः । **क्रियाशब्द इति** । न तु रूढो येनार्थैक्यं स्यादित्यर्थः । शातयितेति क्रियाशब्दत्वोपपादनम् । शदेर्ण्यन्तात् रुशातिभ्यां कुन्नित्यौणादिकसूत्रेण कुप्रत्यये णित्वेन तद्धितप्राप्तावपि प्रज्ञादिषु पाठेन ह्रस्वत्वे च शत्रुरिति निष्पत्तेरिति भावः । **यज्ञकर्मणीति** । यज्ञकर्मण्यजपन्यूङ्खसामस्विति सूत्रेण जपन्यूखसामपर्युदासेन स्वाध्यायकालातिरेकेण च एकश्रुतिर्विधीयते । तत्र अपां रेतांसिजिन्वतोमित्याद्युदाहरणम् । त्रैस्वर्येण पठ्यमानानां मन्त्राणां त्रैश्वर्यस्य ममाग्ने वर्चो विहवेष्वस्त्वि-त्यादिमन्त्रजपेऽपि यथास्थितत्वात् । न्यूंखशब्दाभिहितषोडशाकारेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्ताः शेषा-स्त्वनुदात्ताः इति तत्राप्येके श्रुत्यभावः । वाक्यविशेषगीतिरूपसामस्वपि । एवं विश्वं समत्रिणं दहेति स्वरपाठेन





तत्राऽप्येकश्रुत्यभावः । एवं च जपादिभिन्ने यज्ञकर्मणि एकश्रुतिरेवेन्द्रशत्रुशब्दस्य स्यान्न तु स्वरप्रसङ्ग इति भावः । अस्य दोषस्य परिहाराभावेनायं मन्त्रदोष एव न भवतीत्याह **अयमिति । मन्त्रो न भवतीति ।** ऊहस्येच्छानुसारितयोह्यमानस्य स्वेच्छानुसारेण प्रयुज्यमानस्यामन्त्रतया पूर्वमीमांसामनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागस्यादित्याधिकरणे निरूपितत्वादिति भावः । एतच्चाधिकरणशरीरं जिज्ञासाधिकरणे ओङ्कारप्रसङ्गे टीकायास्तद्व्याख्यानाच्चावगन्तव्यम् । तदधिकरणवार्तिकं त्वित्थम्— 'अभियुक्तप्रसिद्ध्या हि मन्त्रत्वमवकल्प्यते । स्वाध्यायकाले ह्येषां च समाम्नातेषु मन्त्रधीः । मन्त्रानध्यापयामोऽथ तथा मन्त्रानधीमहे । समाम्नाय बहिर्भूते ऊहादौ नास्ति मन्त्रधीः' इति । तथा च स्वाध्यायाध्ययनकालेऽपद्य(?)मानोह्यमानस्यामन्त्रतया तत्रैकश्रुतिर्न प्रसरति । जपादिपर्युदासेन तद्भिन्नतत्सदृशस्यैव प्राप्त्या मन्त्रेष्वेवैकश्रुतिविधानादिति फलितोऽर्थः । यजुर्वेदे इन्द्रशत्रुशब्द आद्युदात्ततया पठ्यते । स तु पाठो ऋत्विक्प्रयुक्तानुकरणत्वाद्वेदस्य युज्यते । संसारस्यानादित्वेनानादिभूतेनापि वेदेनानुकरणोपपत्तेरित्यादि ज्ञेयम् । वेदेनानूह्यमानस्य मन्त्रत्वायोग इत्यतो मन्त्रत्वमङ्गीकृत्यापि स्वरकृतापराधं प्रकारेण व्याख्यातुमाह **यदि वेति** । निपातसमुदायः पक्षान्तरद्योतकः । अत्र च मन्त्राभावेन तद्व्यावर्तनस्यानपेक्षितत्वेन पर्युदासमङ्गीकृत्य प्रसज्यप्रतिषेध एवाङ्गीकार्य इत्यर्थः । **श्लोक इति** । 'यस्तु प्रयुंक्ते कुशलो विशेषशब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः' इति सम्पूर्णः श्लोको भाष्ये उदाहृतो ज्ञेयः । **दोषो दर्शित इति** । अवाग्योगविदोऽपशब्दप्रयोग इति शेषः । उपसंहरति **तस्मादिति** । तथा चेन्द्रशत्रुशब्दप्रयोगेऽप्यधमदिव यजमानाभीप्सितः कार्यभाव इति तद्दृष्टान्तेन मन्त्रमात्रस्यापि स्वरापराधेन यजमानाभीप्सितसाधकत्वायोग इत्यत्र फलितं ज्ञेयम् ।

**स०व्र०— यथेन्द्रशत्रुः** इन्द्रशत्रुरिति मन्त्रः । **स्वरतोऽपराधादिति** । स्वरतो ज्ञातादपराधादित्यर्थः ।

**विठ्ठल०—** 'मिथ्याप्रयुक्तः स वाग्वज्रः स्वरवर्णहीनः प्रयुक्तो वज्रवद्धिंसको मन्त्रः यजमानं हिनस्ति' तत्र उदाहरणमाह **यथेन्द्रशत्रुरिति** । इन्द्रशत्रो वर्धस्वेति मन्त्रो यथा स्वरतोजातादपराधात् यजमानपुत्रहननायाभूदित्यर्थः । अत्रेन्द्रेण त्वष्टृपुत्रे विश्वरूपे निहते इन्द्रहन्तृसुतकामेन त्वष्ट्रा 'स्वाहेन्द्रशत्रो वर्धस्वे'ति मन्त्रेण सोमे हुते इन्द्रपदस्य स्वरितान्तत्वेन इन्द्रशत्रुप्रातिपदिकबहुव्रीहिप्राप्त्या इन्द्र एव शातयिताऽभवत् ॥ तत्पुरुषायोगेन नेन्द्रस्य शातयिता वृत्तोऽभूदिति भावः ।

**चषकः— मन्त्रो हीन इति** । मिथ्याप्रयुक्तः अयथाप्रयुक्तः । वाग्वज्रः वाग्रूपवज्रः । इन्द्रशत्रुः इन्द्रशत्रुरिति मन्त्रः । स्वरतोऽपराधात् स्वरनिमित्तभ्रंशात् । उदाजहार च भाष्यकारः स्पशायामेतच्छ्लोकम् ।

**॥ इति उत्तरवाक्यस्थब्रह्माधिपतिपदस्य बहुव्रीहित्वे**
**'इन्द्रशत्रुप्रातिपदिकस्य बहुव्रीहित्वफलितता' ॥**

* * *

**॥ अथ उत्तरवाक्यस्थब्रह्माधिपतिपदस्य बहुव्रीहित्वे**
**'पूर्वपदान्तस्वरितस्य बहुव्रीहित्वे अनुशासनम्' ॥**

१९ **सु०—** न केवलं पूर्वपदान्तस्वरितत्वे बहुव्रीहित्वमुदाहरणबलात् उदाहरणेऽप्युत्तरश्रुतिबलात् कल्प्यते; किं नामानुशासनमप्येवमस्तीत्याह **पूर्वान्तस्वरित** इति।

**अनु०—** **पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमेष्यति ॥**
**महाव्याकरणे सूत्रमिति स्वरविनिर्णये।**

**पुंसोः** पुल्लिङ्गयोः समस्यमानयोः, **पूर्वपदान्ते** स्वरे, स्वरिते सति, तत्समासप्रातिपदिकं बहुव्रीहित्वमेष्यतीति सूत्रार्थः।

अत्र केचिद्व्यभिचारमुद्भावयन्ति, तदसत्। सामान्यलक्षणप्राप्तं (हि) (पुनः) विशेषलक्षणैरपोद्यत इति व्याकरणप्रक्रिया। यथोक्तम्, 'सामान्यविशेषवता लक्षणेने'ति। तत्र विशेषलक्षणान्यपर्यालोच्य सामान्यलक्षणे व्यभिचारोद्भावनं कथं युज्यते ॥ किञ्चानेन सूत्रेण बहुव्रीहौ पूर्वपदे प्रकृतिस्वरत्वमुपलक्ष्यते, ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वात्। तथा च कुतो व्यभिचारः। यथाऽऽह पाणिनिः, 'बहुव्रीहौ प्रकृत्या पूर्वपदमि'ति। अत एव 'स्वरविनिर्णये' इत्याह। अन्यथा समासनिर्णय इत्यवक्ष्यत् ॥ अपि च सन्देहे सति स्वरेण समासनिर्णयार्थमिदमुच्यते। यथोक्तम्। असन्देहं प्रयोजनं व्याचक्षाणेन भाष्यकृता स्थूलपृषतीमनड्वाहीमालभेतेत्यत्र स्थूलपृषतीशब्दे तत्पुरुषबहुव्रीहिसन्देहं व्युत्पाद्य यदि पूर्वपदप्रकृतिस्वरत्वं तदा बहुव्रीहिः, (तदा) यदि च समासान्तोदात्तत्वं तदा तत्पुरुष इत्यादि। तथा चासन्दिग्धे व्यभिचारोद्भावनमसङ्गतमिति ॥ ननु पूर्वान्तस्वरित इति कथम्, सामर्थ्याभावेन समासानुपपत्तेरिति। मैवम्, समासप्रातिपदिके पूर्वान्तस्वरिते सतीति व्याख्यानात्। तथापि स्वरितपूर्वान्त इति स्यात्, बहुव्रीहौ विशेषणस्य पूर्वनिपातात्। न। विशेषणविशेष्यभावस्य कामचारित्वात्। आहिताग्न्यादित्वाद्वेति।

**परि०—** **पुंसोः पुंल्लिङ्गयोरिति।** 'एतच्चाश्वपते गोपते इत्यादौ पूर्वपदस्वरितान्तत्वेऽपि बहुव्रीहित्वाभावात्तत्र व्यभिचारनिरासाये'त्युक्तं नयचन्द्रिकायाम्। **व्यभिचारमिति।** 'समस्यमानपदयोः पूर्वपदान्तस्वरे स्वरिते सति तत्समासप्रातिपदिकं बहुव्रीहित्वमेष्यति' इत्यत्र अन्वयतो व्यतिरेकतश्च





वैयाकरणा व्यभिचारमुद्भावयन्तीत्यर्थः । तथाहि आर्यश्चासौ ब्राह्मणश्चार्यब्राह्मण इत्यादि कर्मधारये पूर्वपदस्य स्वरितान्तत्वेऽपि तत्र बहुव्रीहित्वाभावात् । आर्येतिपदस्य ऋ गताविति धातोः 'ऋहलोर्ण्यदि'ति सूत्रेण ण्यत्प्रत्यये निष्पन्नत्वात् । ण्यत्प्रत्ययस्य 'त्वित्स्वरितमि'ति षष्ठाद्यपादीयसूत्रेण स्वरितत्वात्तदन्तस्यार्येति पूर्वपदस्य स्वरितान्तत्वात् । न च समासस्येति सूत्रेण समासान्तोदात्तत्वे अनुदात्तं पदमेकवर्जमिति शेषनिघातेनानुदात्तत्वान्नस्वरितान्तत्वमिति वाच्यम् । 'आर्यो ब्राह्मणकुमारयोरि'ति षष्ठद्वितीयपादीयसूत्रेण ब्राह्मणकुमारशब्दयोः परयोरार्यशब्दः प्रकृतिस्वरं प्राप्नोति कर्मधारये इति प्रकृतिस्वरेण स्वरितान्तत्वात् । 'ब्रह्मचारिपरिस्पन्द' इति बहुव्रीहौ ब्रह्मचारिपदस्य स्वरितान्तत्वाभावेऽपि बहुव्रीहिदर्शनात् । अत एव बहुव्रीहौ प्रकृत्या पूर्वपदमिति षष्ठद्वितीयाद्यसूत्रे वृत्तौ ब्रह्मचारिपदं कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तमित्युक्तमिति । **सामान्यलक्षणेति** । लक्षणशब्दोऽत्र सूत्रपर्यायः । स्वरितान्तं पूर्वपदं बहुब्रीहिर्भवतीति सामान्यसूत्रम् । तस्यार्यब्राह्मण इत्यादावार्य इत्यादि विशेषणसूत्रेणापवादित्वेऽपि न दोषः । न ह्यपवादकृतव्यभिचारो दोषाय । 'व्यभिचार्यपवादेन मानमेव भविष्यती'ति वक्ष्यमाणत्वात् । पस्पशाग्रन्थे महाभाष्योक्तमाह **यथोक्तमित्यादिना** । **सामान्यविशेषवता लक्षणेनेति** । शब्दानुशासनं क्रियत इति योज्यम् । **अनेन सूत्रेणेति** । महाव्याकरणसूत्रेणेत्यर्थः । **पूर्वपदप्रकृतिस्वरत्वमुपलक्ष्यत इति** । तथा च ब्रह्माधिपतीत्यादौ तत्पुरुषादित्वे समासान्तोदात्तताप्राप्तौ शेषनिघातेन पूर्वपदस्य स्वरितान्तत्वं न स्यादिति भावः । नन्वेवं प्रकृतेऽसम्भव इत्यत आह **ब्रह्मेन्द्रशब्दयोरिति** । समासकालेऽपीति शेषः । **अत एवेति** । प्रकृतिस्वरोपलक्षकत्वादेवेत्यर्थः । **अन्यथेति** । स्वरितान्तपूर्वपदस्यैव बहुव्रीहित्व इत्यर्थः । तथा च बहुव्रीहौ पूर्वपदस्य क्वचिदन्तोदात्तत्वेऽपि स्वरिताद्यन्तत्वे च न दोषो भवतीति प्रकारान्तरेण व्यभिचारदोषं निराह **अपि चेति** । **इदमिति** । पूर्वपदान्ते स्वरिते सतीत्यादिना प्रागुक्तसूत्रमित्यर्थः । यद्वा बहुव्रीहौ प्रकृत्या पूर्वपदमित्येतदित्यर्थः । यथोक्तं पस्पशाह्निके किं प्रयोजनं व्याकरणस्येति शङ्कापरिहारार्थं 'रक्षोहागमलघ्वसन्देहाः प्रयोजनमि'त्युक्त्वा एवं वा समासः अन्यथा वेत्यादिसन्देहाभावः प्रयोजनमिति । तद्विवृतं महाभाष्यकृतेत्यर्थः । **तथा चासन्दिग्ध इति** । आर्यब्राह्मण इत्यादौ कर्मधारयत्वस्य निर्णीतत्वाद्विशेषणाभावेन व्याप्यस्यैवाभावान्न तत्र व्यभिचारोद्भावनं सङ्गतमिति भावः । **सामर्थ्याभावेनेति** । पूर्वपदान्ते स्वरिते सतीत्यर्थे पूर्वान्तस्वरितपदयोरसामर्थ्येन समर्थः पदविधिरिति समर्थाधिकारे पूर्वान्तं च स्वरितं चेति 'विशेषणं विशेष्येण बहुलमि'त्युक्तसमासानुपपत्तिरिति भावः । पूर्वान्तं स्वरितं यस्येति बहुव्रीहिमाश्रित्य समासप्रातिपदिक इति पदाध्याहारेण समाधत्ते **मैवमित्यादिना** । पुंसोः समस्यमानपुंसोः सम्बन्धिनि





समासप्रातिपदिक इति योजनेति भावः । **कामचारित्वादिति** । तथा चात्र स्वरितपदस्यैव विशेष्यत्वाददोष इति भावः। विशेषणत्वं तस्योपेत्याप्याह **आहितेति**। अहिताग्न्यादिगणे विशेषस्यापि पूर्वनिपातोक्तेः तद्गणमध्येऽस्यापि ग्रहणसम्भवादिति भावः ।

**गु०दी०**— 'प्रजापते न त्वदेतान्यन्य' इति श्रुतौ व्यभिचारपरिहाराय सूत्रे पुंसोरिति विशेषणम्। तस्यार्थः **पुंलिङ्गयोः समस्यमानयोरिति**। **अत्र केचिदिति**। अत्र पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमिति सूत्रोक्तन्याये क्वचित् 'इन्द्राग्नी एव गच्छतामि'त्यादौ व्यभिचारं चोदयन्तीत्यर्थः। इन्द्राग्नी इति द्वन्द्वसमासे संहितायां स्वरितान्तेन्द्रपदस्य पदकालेऽनुदात्तस्वरान्तत्वेन प्रकृतिस्वरत्वाभावान्न व्यभिचार इति भावेनाह **तथा च कुतो व्यभिचार इति**। **सन्देहं व्युत्पाद्य** इत्यत्र **अनड्वाही** अनडुहः सम्बन्धिनी स्थूला च सा पृषती च स्थूलपृषती तामिति वा। स्थूला पृषती यस्याः सा स्थूलपृषती तां अनड्वाही अनडुहः पत्नी गामिति वा सन्देहं व्युत्पाद्येत्यर्थः। पृषती पृष्ठभाग इत्यर्थः । स्वरितादिपदानां स्वरितस्वर उदात्तस्वर इत्यादौ विशेषणतया विशेष्यभूतस्वरपदाभावे साकाङ्क्षत्वेनासमर्थत्वात् 'समर्थः पदविधिः' इति सूत्रविहितसमासः कथमिति शङ्कते **ननु पूर्वान्तस्वरित** इति। ननु तैत्तिरीयश्रुतौ ब्रह्माधिपतिपदस्य पूर्वान्तोदात्तत्वेन वैदिकैः पठ्यमानत्वात् कथं पूर्वान्तस्वरितत्वमित्यतः तापनीयश्रुतौ इत्युक्तमाचार्यैः। एकत्र स्वरितस्वरत्वेन बहुव्रीहित्वे निर्णीते 'एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापी'ति न्यायेनात्रापि बहुव्रीहित्वनिर्णय इति भावः। यद्वा ब्रह्माधिपतिशब्दे हि ब्रह्मा अधिपतिः यस्य इति वा, ब्रह्मणः अधिपतिः इति वा, ब्रह्मा च असौ अधिपतिः इति वा समासत्रयं सम्भवति। तत्र तैत्तिरीयश्रुतौ ब्रह्मणोऽधिपति-रित्युत्तरवाक्येन 'ब्रह्मा शिवो मे अस्तु' इति तदुत्तरवाक्येन च समासद्वयार्थस्य श्रुत्यैव प्रदर्शितत्वात् ताभ्यां वाक्याभ्यां गतार्थतापरिहाराय अयं पूर्ववाक्ये उर्वरितबहुव्रीहिसमास इत्येव निर्णेतुं शक्यत्वात् सम्भवत् समासत्रिकं तापनीयवाक्यमेव स्वराख्यविशेषहेतुना निर्णीतमिति ज्ञेयम् ।

**यादु०**— **पुंसोः पुंलिङ्गयोरिति**। इदं च विशेषणं कन्याप्रियो मृदङ्गो धान्यपतिरित्यादितत्पुरुषे पूर्वपदान्तस्वरितत्वसत्त्वेऽपि बहुव्रीहित्वाभावेन व्यभिचारवारणाय। तथा हि। कन्याप्रियो मृदङ्ग इत्यत्र प्रीतौ चेति सूत्रेणातिशयितप्रीतौ गम्यमानायां सुखप्रिययोरुत्तरपदयोः तत्पुरुषसमासे पूर्वपदप्रकृतिस्वरत्वं विहितम्। तथा धान्यपतिरित्यत्र पत्यावैश्वर्य इत्यैश्वर्यवाचिपतिशब्दे परतस्तत्पुरुषसमासे पूर्वपदे प्रकृतिस्वरत्वम्। कन्याधान्यशब्दौ तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणाम् अन्तरिति फिट्सूत्रेण स्वरितान्तौ। तथा च तत्रोक्तनियमस्य व्यभिचारे प्राप्ते पुंसोरित्युक्तम्। उक्तोदाहरणयोस्तु कन्याधान्यशब्दयोरपुंस्त्वेन समस्यमानयोरुभयोः पुंस्त्वस्य विवक्षितस्याभावान्न व्यभिचार इति। **अत्र केचिदिति**। अत्र यो बहुव्रीहिः सः स्वरितपूर्वपदान्तः स बहुव्रीहिरित्युभयथाऽपि व्याप्तिरभिमता। अस्य सूत्रस्य स्वरविनिर्णयार्थतया मूले उक्तत्वाद्या व्याप्तिरत्राभिप्रेतेति गम्यते। प्रकृते समासनिर्णयार्थमुपात्तत्वाद् द्वितीयाऽपि। एवं चात्राभिमते व्याप्तिद्वये केचिद्वैय्याकरणा व्यभिचारमुद्भावयन्तीत्यर्थः। तथा हि। न तावदाद्या व्याप्तिः सम्भवति। ब्रह्मचारिपरिस्पन्द





इति बहुव्रीहिः स्वरितपूर्वपदान्तत्वाभावात् । तत्र पूर्वपदभूतब्रह्मचारिपदस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वात् । समासान्तोदात्तत्वस्य च बहुव्रीहौ प्रकृत्या पूर्वपदमित्यपोदितत्वात् । नापि द्वितीया । आर्यब्राह्मण आर्यकुमार इति कर्मधारयसमासे व्यभिचारात् । आर्यशब्दस्य ण्यदन्तत्वेन तित्स्वरितमिति स्वरितान्तत्वात् । आर्यो ब्राह्मणकुमारयोरित्यनेनात्रापि पूर्वपदप्रकृतिस्वरत्वविधानेन न समासान्तोदात्तताप्राप्तिः । ततश्चोभयथाऽपि व्याप्ति-रयुक्तेति । अत्र यद्यपि प्रकृतसङ्गतत्वात् द्वितीयैव व्याप्तिर्वाच्या । तथाऽप्याद्याया अपि सूत्रार्थतयाऽभिप्रेतत्वस्य मूले व्यक्तत्वात्साऽपि विचार्यत इत्यवगन्तव्यम् । **सामान्यलक्षणेति** । सामान्यसूत्रेणोत्सर्गतः प्राप्तं हीत्यर्थः । **विशेषलक्षणानीति** । तथा च विशेषसूत्रापोदितोदाहरणव्यतिरिक्तोदाहरणेषु प्रागुक्तव्याप्त्योरुपपत्तिः । ब्रह्माधि-पतीन्द्रशत्रुप्रातिपदिकयोश्च पूर्वपदान्तस्वरितयोर्न समासान्तरप्रापकं विशेषसूत्रमस्तीति भावः । एवं व्याप्तिद्वये शङ्कितव्यभिचारं साधारण्येन परिहृत्याद्यव्याप्तावेव समाधानान्तरमाह **किञ्चानेनेति** । नन्वेवं प्रकृतेऽसम्भव इत्यत आह **ब्रह्मेन्द्रशब्दयोरिति** । **स्वरितान्तत्वादिति** । समासकालेऽपीति शेषः । तथा च यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपद इत्येव व्याप्तिर्न तु स्वरितपूर्वपदान्त इति । अतो नोक्तव्यभिचारशङ्केति भावः । यद्यप्येवमपि बहुव्रीहो विश्वं संज्ञायामित्यादिना विश्वदेव इत्यादौ पूर्वपदप्रकृतिस्वरापवादेनान्तोदात्तताया विहितत्वाद्व्यभिचार एव । तथापि समासस्येत्यनेन विहितसमासान्तोदात्तत्वाभावस्यैव व्यापकतयाऽत्र विव-क्षितत्वान्न कुत्रापि व्यभिचार इति ध्येयम् । ननु प्रकृतानुपयुक्तेयं व्याप्तिरेतत्सूत्रार्थतया कुतोऽभिमतेति कल्प्यते । येन तद्व्यभिचारपरिहरणं सङ्गतं स्यादित्यत आह **अत एव स्वरेति** । यत इयं व्याप्तिरेतत्सूत्रार्थतया ग्रन्थकृतो-ऽभिमताऽत एवेत्यर्थः । द्वितीयव्याप्तावप्यसाधारणं समाधानमाह **अपि चेति** । **सन्देहे सतीति** । तत्पुरुषबहुव्रीहि-सन्देहे सतीत्यर्थः । **असन्देहं प्रयोजनमिति** । व्याकरणशास्त्रमनारम्भणीयं निष्प्रयोजनत्वादित्याशङ्कापरिहाराय रक्षोहागमलब्धसन्देहाः प्रयोजनमिति प्रतिज्ञातम् । सन्देहानुत्पादरूपं विवृण्वतेत्यर्थः । **इत्याद्युक्तमिति** । स्थूल-पृषतीमनड्वाहीमालभेतेत्यत्र श्रुतौ स्थूलपृषतीशब्दः कर्मधारयो बहुव्रीहिर्वेति सन्देहः । तत्र यदि कर्मधारयस्तदा पृषतीशब्देन मत्वर्थलक्षणया पृषद्वती बिन्दुमती स्थूला गौरेवाभिधीयते । बिन्दूनां स्थौल्यं सौक्ष्म्यं वा तत्र नादरः । यदा बहुव्रीहिस्तदा स्थूलत्वस्य पृषद्विशेषणत्वेन बिन्दूनां स्थौल्यमायाति, गौस्तु पृषद्वत्त्वमत्रायाति । स्थौल्ये तु नादरः । एवं च यदि स्थूलशब्दान्तोदात्तता तदा कर्मधारय इत्याद्युक्तमित्यर्थः । **तथा चासन्दिग्ध इति** । तथा च सन्दिग्धसमासत्वे सति यः पूर्वपदप्रकृतिस्वरः स बहुव्रीहिरिति द्वितीयव्याप्तौ विवक्षितम् । आर्यब्राह्मण इत्यादौ तु कर्मधारय इत्यस्य सुप्सुपेति वा साधनं कृतेति वा स्वरेण विनिर्णय इति तृतीयातत्पुरुषत्वं ज्ञातव्यम् । **सामर्थ्याभावेनेति** । समस्यमानयोः पुंसोर्मध्ये पूर्वान्ते स्वरिते सतीति ह्यत्र विवक्षितो वाक्यार्थः । न चैतदर्था-भिधानेऽयं समासः शक्तोऽस्मात्तथाऽप्रतीतेः । अतोऽत्र न सामर्थ्यम् । उक्तं हि काशिकायाम् । विग्रहवाक्या-र्थाभिमाने यः शक्तः स समर्थो वेदितव्य इति । तथा च समर्थः पदविधिरित्यधिकारात् प्रकृते च सामर्थ्याभावात् कथं समास इत्यर्थः । स्यादयं दोषो यदि पूर्वान्ते स्वरिते सतीति वाक्यार्थोऽत्र विवक्षितः स्यात् । न चैवम् । किन्तु पूर्वान्तः स्वरितो यस्य स इति वाक्यार्थस्य विवक्षणात् । नन्वेवमन्यपदार्थभूतविशेष्यप्रातिपदिकपदाभावात् साकाङ्क्षं वाक्यमपूर्णमित्यत आह **समासप्रातिपदिक इति** । तथा चाध्याहारेण वाक्यस्य निराकाङ्क्षतेति भावः ।





न चैवं पुंसोरिति निर्धारणासङ्गतिः । पुंसोः सम्बन्धिनि समासप्रातिपदिक इति विवक्षितत्वात् । **विशेषणस्येति** । चित्रगुरित्यादौ चित्रादिविशेषणपदानां पूर्वनिपातदर्शनादिति भावः । समाधानमाह **विशेषणेत्यादिना** ।

**वं०प०— पुंल्लिङ्गयोरिति** । कन्यायाः प्रियः कन्याप्रियः । धान्यानां पतिः धान्यपतिरिति षष्ठीतत्पुरुषसमासौ । षष्ठीतत्पुरुषसमासे च कन्याधान्यशब्दौ कन्याधान्यराजन्यमनुष्याणामन्तरिति फिट्सूत्रेण स्वरितान्तत्वेन निपातितौ । ब्रह्मेन्द्रशब्दयोरुक्तरीतेरत्रासम्भवात् । तथा च तत्र स्वरितपूर्वपदान्तत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचारः स्यादतः पुंलिङ्गयोरित्युक्तम् । तथाच कन्याप्रियशब्दयोरुभयोः पुंल्लिङ्गत्वाभावात् धान्यशब्दस्य नित्यनपुंसकत्वेन पतिशब्दस्य नित्यपुंल्लिङ्गत्वाभावान्न व्यभिचार इत्यर्थः । प्रकृते च ब्रह्माधिपतिशब्दयोरुभयोरपि पुंल्लिङ्गत्वादिति द्रष्टव्यम् । **अत्र केचिदिति** । यो बहुव्रीहिः स स्वरितपूर्वपदान्तः यः स्वरितपूर्वपदान्तः स बहुव्रीहिरिति व्याप्तिद्वयं विवक्षितम् । स्वरविनिर्णय इति स्वरस्य निर्णेयताया मूले उक्तत्वादाद्या व्याप्तिरभिप्रेतेति गम्यते । प्रकृते समासनिर्णयार्थमुपात्तत्वात् द्वितीयापि । एवं च व्याप्तिद्वयेऽपि केचिद्वैयाकरणा व्यभिचारमुद्भावयन्तीत्यर्थः । तथा हि न तावदाद्या व्याप्तिः सम्भवति । ब्रह्मचारी परिस्पन्दो यस्य स ब्रह्मचारिपरिस्पन्द इति बहुव्रीहिसमासे स्वरितपूर्वपदान्तत्वाभावेन व्यभिचारात् । चारिशब्दस्य इन्प्रत्ययान्तत्वात् । तस्य च कृदतिङिति सूत्रेण कृत्वोक्तेः । गतिकारकोपपदात्कृदिति सूत्रेण कृदन्तस्योदात्तस्वरविधानात् । पूर्वपदे ब्रह्मचारिपदे अन्तस्येकारस्योदात्तस्वरवत्त्वेन स्वरितस्वरवत्त्वाभावात् । ननु समासस्येति सूत्रेण समासस्यान्तोदात्तत्वोक्तेर्ब्रह्मचारिपरिस्पन्द इति समासान्तदकारस्थाकारस्योदात्तत्वे अनुदात्तं पदमेकवर्जमित्यवशिष्टस्यानुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तस्य स्वरितत्वे च स्वरितपूर्वपदान्तत्वप्राप्त्या न व्यभिचार इति चेत् । उच्यते । बहुव्रीहौ प्रकृत्या पूर्वपदम् । अत्र पूर्वपदग्रहणं पूर्वपदस्वरे उदात्ते स्वरिते वा वर्तते । तथाच बहुव्रीहौ समासे पूर्वस्य पदस्य यः स्वर उदात्तः स्वरितो वा स प्रकृत्या भवति । स्वभावेनैवावतिष्ठते । न विकारं समासान्तोदात्तत्वप्रयुक्तमनुदात्तत्वमापद्यत इति सूत्रार्थः । अयं च समासस्येति सूत्रविहितं यत्समासान्तोदात्तत्वं तत्प्रयुक्तं यदनुदात्तं पदमेकवर्जमित्यादिसूत्रविहितमनुदात्तत्वादि तदपवादः । तथा च ब्रह्मचारिपरिस्पन्द इति बहुव्रीहौ पूर्वपदे ब्रह्मचारिपदे कृदन्तत्वप्रयुक्त प्रकृतिस्वरस्योदात्तस्वरस्य स्वभावेनैवावस्थितत्वेनानुदात्तत्वादिरूपविकाराभावात् स्वरितपूर्वपदान्तत्वं नास्तीति व्यभिचारः स्यादेव । तथा यः स्वरितपूर्वपदान्तः स बहुव्रीहिरिति द्वितीयापि व्याप्तिरयुक्ता । आर्यश्चासौ ब्राह्मणश्चार्यब्राह्मण इति कर्मधारयसमासे व्यभिचारात् । तथा हि । आर्यशब्दो हि ण्यदन्तः । ऋगतावित्यस्मात् ण्यत्प्रत्यये णकारतकारयोर्लोपे ऋवर्णस्याकाररूपे गुणे तस्य च रपरत्वे णित्वादादिवृद्धौ च **सत्यामार्येति** रूपम् । एवं च ण्यत्प्रत्ययस्य तित्वात्तदन्तस्यार्यपदस्य तित्स्वरितमिति सूत्रेण स्वरितान्तत्वादार्य-**ब्राह्मण इति समासस्य** स्वरितपूर्वपदान्तत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचार इति व्यभिचारद्वयं साधारण्येन परिहरति **सामान्यलक्षणे इति** । सामान्यसूत्रेत्यर्थः । विशेषलक्षणैर्विशेषसूत्रैः । **तत्र विशेषलक्षणानीत्यादि** । तथा च पूर्वान्तस्वरिते **पुंसोर्बहुव्रीहित्वमेष्यतीति** महाव्याकरणसूत्रं सामान्यसूत्रम् । **तथा च यो** बहुव्रीहिः स स्वरितपूर्वपदान्त इत्युत्सर्गः । **ब्रह्मचारिपरिस्पन्द इत्यादौ तु** बहुव्रीहित्वेऽपि गतिकारकोपपदात्कृदिति विशेषसूत्रेणोदात्तस्वरविधानेन





अपवादसद्भावात् तद्व्यतिरिक्तस्थलेऽयं नियमः । तथा यः स्वरितपूर्वपदान्तः स बहुव्रीहिरित्यपि सामान्यव्याप्तिरुत्सर्ग एव । आर्यब्राह्मण इत्यादौ तु स्वरितपूर्वपदान्तत्वेऽपि कर्मधारयसमासप्रापक (आर्यो ब्राह्मणकुमारयोरिति कर्मधारयसमासप्रापक आर्यो ब्राह्मणकुमारयोरिति) कर्मधारयसमासविधायकविशेषसूत्रापवादसद्भावात् तद्व्यतिरिक्तस्थलेऽयं नियम इति भावः । आद्यव्याप्तौ व्यभिचारपरिहाराय समाधानान्तरमाह **किञ्चानेनेति** । पूर्वान्तस्वरित इत्यनेन बहुव्रीहौ पूर्वपदेन प्रकृतिस्वरत्वमुपलक्ष्यते । एवं च यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपद इत्येव व्याप्तिर्न तु स्वरितपूर्वपदान्त इति । प्रकृतिस्वरश्च धातुस्वरः । स च क्वचिदुदात्तः क्वचित्स्वरितः । तथा च ब्रह्मचारिपरिस्पन्द इति बहुव्रीहौ पूर्वपदे ब्रह्मचारिपदे प्रकृतिस्वरवत्त्वमस्त्येव । चारीत्यत्र चरधातोरिन्प्रत्ययान्तस्य कृदन्तत्वेनोदात्तस्वरवत्त्वात् । प्रकृते च ब्रह्माधिपतिरित्यत्रेन्द्रशत्रुरित्यत्र च बहुव्रीहौ पूर्वपदे ब्रह्मपदे इन्द्रपदे च प्रकृतिस्वरवत्त्वं वर्तत एवेति न व्याप्त्यसम्भवः । कथं प्रकृतिस्वरवत्त्वमस्तीत्यत आह **ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वादिति** । उदात्तस्वरितयोरुभयोरपि प्रकृतिस्वरत्वेनात्रोदात्तस्वराभावेऽपि स्वरितस्वरसद्भावात् प्रकृतिस्वरवत्त्वमक्षतमिति भावः । द्वितीयव्याप्तौ व्यभिचारपरिहाराय समाधानान्तरमाह **अपि चेति** । **सन्देहे सतीति** । अत्र तत्पुरुषशब्देन कर्मधारयो ग्राह्यः 'तत्पुरुषः समानाधिकरणः कर्मधारय' इति सूत्रेण समानाधिकरणतत्पुरुषस्य कर्मधारयत्वोक्तेरिति ध्येयम् । तथा चैवं सन्देहं व्युत्पाद्य पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वं यदोक्तं तदा सन्दिग्धसमासत्वे सतीति विशेषणं हेतावभिप्रेतमिति सूचितं भवति । तथा च सन्दिग्धसमासत्वे सति यः प्रकृतिस्वरोपेतपूर्वपदः स बहुव्रीहिरिति द्वितीयव्याप्तौ विवक्षितत्वात् । आर्यब्राह्मण इत्यादौ तु कर्मधारयत्वस्य निर्णीतत्वेन सन्दिग्धसमासत्वरूपविशेषणाभावेन तद्विशिष्टहेतोरेवाभावान्न तत्र व्यभिचारोद्भावनं सङ्गतमिति भावः । **विशेषणस्येति** । स्वरितेतिविशेषणस्येत्यर्थः । **कामचारित्वादिति** । तथाच पूर्वान्त इत्यस्यैव विशेषणत्वमभिप्रेतमिति भावः । **विशेषणस्येति** । स्वरितेति विशेषणस्येत्यर्थः । **कामचारित्वादिति** । तथाच पूर्वान्त इत्यस्यैव विशेषणत्वमभिप्रेतमिति भावः । **आहितेति** । आहितोऽग्निर्येनासावित्यत्राहितशब्दस्य परनिपातेनाग्न्याहित इति भवति । एवं स्वरितः पूर्वान्तो यत्रेत्यत्रापि स्वरितशब्दस्य परनिपातेन पूर्वान्तस्वरित इत्युक्तमित्यर्थः । **उत्तरवाक्यबलेन** ब्रह्माधिपतिरित्युत्तरवाक्यबलेनेत्यर्थः ।

**श्रीनिधि०— पुंसोः पुंलिङ्गयोरिति** । पुंविषययोरिति यावदिति भावः । **विशेषलक्षणान्यपर्यालोच्येति** । विशेषलक्षणानि तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्युपमानाव्यय-द्वितीया-प्रकृत्येत्यादीनि । एवञ्च पूर्वान्तस्वरित इति तु तद्व्यतिरिक्तपरं सामान्यलक्षणमिति द्रष्टव्यम् । न तु बहुव्रीहौ पूर्वपरं प्रकृतिस्वरं भवतीति व्याख्याने बहुव्रीहित्वं कथं निश्चयमित्यत आह **ब्रह्मेन्द्रशब्दयोरिति** । एवं च लक्षणान्तराभावेन बहुव्रीहित्वमेव निश्चीयत इति भावः । **असन्दिग्ध इति** । तुल्यप्रिय इत्यादौ तत्पुरुषे तुल्यार्थ इत्यादि विशेषलक्षणवत्त्वेन सन्देहाभावादिति भावः । **बहुव्रीहौ विशेषणस्य पूर्वनिपातादिति** । सप्तमीविशेषणे बहुव्रीहावित्यनेनेति भावः । बहुव्रीहौ सप्तम्यन्तं विशेषणं च प्राक् प्रयोज्यमित्यर्थः । **विशेषणविशेष्यभावस्य कामचारित्वादिति** । उपस्थित्यनुसारेण विशेष्यमेव व्यावर्तकमिति भावः । स्वरितेत्युक्ते किमित्याकाङ्क्षायां पूर्वान्त इति विशेषस्यापि व्यावर्तकत्वमिति भावः ।





तर्हि सूत्रं व्यर्थमापन्नमिति चेत् विशेषणतया यदुपस्थितं तस्य प्राक् प्रयोगः कर्तव्यः । **इत्यर्थोपपत्तेरिति** । प्राबल्यात् कारकविभक्तेरिति उपपदविभक्ते कारकविभक्तिः बलीयसीति वचनादिति भावः ।

**शे०वा०— पुंसोरिति** । अत्र पदद्वयस्यापि पुंस्त्वनियमो न विवक्षितः । अन्यथा पूर्वपक्षानुसारेण सहस्रप्रधानेष्वित्यत्र बहुव्रीहिर्न स्यात् किं चेत्युत्तरपक्षानुसारेण चानवचैरभिद्युभिरित्यत्राभिद्युभिरित्यस्य पूर्वोदाहृतस्य च पूर्वप्रकृतिस्वरत्वं न स्यादिति द्रष्टव्यम् । तथा च ब्रह्माधिपतिरित्यत्र ब्रह्मशब्दस्य नपुंसकत्वेऽपि न तद्विषये एतत्सूत्रोदाहरणासङ्गतिरिति बोध्यम् । वस्तुतस्तु ब्रह्माधिपतिर्यस्येति प्रकृते उभयोः पुंल्लिङ्गत्वेऽप्यदोषः । न च पुल्लिङ्गब्रह्मशब्दस्य न विष्णुपरत्वमिति वाच्यम् । 'स आविवेश ब्रह्मा ब्रह्माणं च चतुर्मुखम्' इत्यादौ पुंल्लिङ्गस्यापि ब्रह्मशब्दस्य विष्णौ प्रयोगादिति द्रष्टव्यम् । अत्र तत्पुरुषे तुल्यार्थेत्यादिविशेषे यतोऽनाव इत्याद्युदात्ततुल्यपूर्वपदकतुल्यश्वेत इत्यादि तत्पुरुषे । इगन्तकालेत्यादिविषये (?)ञः सङ्ख्याया इत्याद्युदात्तपञ्चपूर्वपदकपञ्चवर्ष इत्यादि द्विगौ । आर्यो ब्राह्मणेत्यादिविषये ण्यदन्तस्वरितान्तपूर्वपदके आर्यब्राह्मण इत्यादिकर्मधारये । सङ्ख्येत्यादिविषये कन्नन्ताद्युदात्तैकपूर्वपदकैकादेशेत्यादि द्वन्द्वे च स्वरितपूर्वपदान्तत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचार उक्तलक्षणस्येति केषाञ्चिद्वैयाकरणंमन्यानां भ्रान्तिं प्रतिक्षेप्तुमुद्भावयति **अत्र केचिद् व्यभिचारमुद्भावयन्तीति** । पूर्वान्तस्वरित इति सामान्यवतोऽस्य महाव्याकरणस्थलक्षणस्य समासान्तरविधायकतुल्यार्थादिविशेषवत्तत्स्थसूत्रविषये व्यभिचारोद्भावनं कर्मण्यणित्यादेरातोऽनुपसर्गे क इत्यादि विषये गोदः कम्बलद इत्यादौ व्यभिचारोद्भावनेन समासस्येत्यस्य बहुवीहौ प्रकृ(त्ये)तेत्यादिविषये व्यभिचारोद्भावनेन च तुल्ययोगक्षेममित्यसाम्प्रदायिकं वैयाकरणानामित्यभिप्रेत्य वैय्याकरणसम्प्रदायं तत्सम्मत्यैव दर्शयन् समाधत्ते **सामान्येति** । सामान्योपेतं लक्षणं सामान्यलक्षणमित्युत्तरपदलोपी तत्पुरुषः । एवं विशेषलक्षणैरित्यत्रापि द्रष्टव्यम् । शब्दानुशासनहेतुप्रकृत्यादिविभागकल्पनां प्रति करणे सामान्यविशेषवता लक्षणेनेति तृतीया । विशेषलक्षणानीति महाव्याकरणस्थानीति शेषः । एवं सूत्रस्य यथास्थितार्थमङ्गीकृत्य परन्यायेनैव व्यभिचारसमाधानमभ्यधायि । अधुना परकीयव्यभिचारशङ्काऽवकाशशून्यप्रसिद्धव्याकरणानुसारिसूत्रस्यार्थान्तरमाह **किञ्चेति** । एवं च निमित्तनैमित्तिकभावव्यत्यासं बहुव्रीहित्वशब्दार्थान्तरगतभावप्रत्ययस्य च पूर्वपदप्रकृतिस्वरत्वोपलक्षकपूर्वान्तस्वरितशब्देन सम्बन्धं चाङ्गीकृत्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं भवतीति सूत्रं व्याख्यातं भवति । ननु सूत्रस्य यथास्थितार्थकत्वे स्वरेण समासनिश्चायकत्वेनास्य प्रकृतोपयोगेऽप्यर्थान्तरपक्षे समासेन स्वरनिश्चायकत्वापत्त्या नास्य सूत्रस्य प्रकृतोपयोग इत्यतो बहुव्रीहिनिमित्तकपूर्वपदप्रकृतिस्वरत्वं विदधताऽप्यनेन पूर्वपदप्रकृतिस्वरेण कार्येण बहुव्रीहिरूपनिमित्तनिश्चयस्याभ्यनुज्ञातत्वाद्युक्तोऽस्य प्रकृतोपयोग इत्यभिप्रेत्य कथं ब्रह्माधिपतीन्द्रशत्रुसमासयोः पूर्वपदप्रकृतिस्वरत्वं येन बहुव्रीहित्वं निश्चिनुम इत्याशङ्कापरिहाराय तयोः पूर्वपदप्रकृतस्वरूपत्वमुपपादयति **ब्रह्मेन्द्रशब्दयोरिति** । ब्रह्मशब्दस्य मनिन्प्रत्ययान्तत्वेनेन्द्रशब्दस्य रन्प्रत्ययान्तत्वेन च नित्वात् ञ्नित्यादिर्नित्यमित्यादिभूताकारेकारयोरुदात्तत्वेऽनुदात्तं पदमिति शेषभूताकारयोरनुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तयोरेव स्वरितत्वे ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वादित्यर्थः । समासानन्तर्गतयोरेतत्समासान्तर्गतयोश्चेति





शेषः । नन्वेवमपि पूर्वोदाहृतेष्वेव सत्यपि पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वाभावाद्व्यभिचार इत्यतो बहुव्रीहौ प्रकृत्या पूर्वपदमिति प्रसिद्धव्याकरणेऽप्येवं निमित्तनैमित्तिकभावाश्रयणात् । यदि पूर्वपदप्रकृतिस्वरत्वं तर्हि बहुव्रीहित्वमिति वदता भाष्यकृता पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वनिश्चयस्याभिप्रेतत्वात् तत्रत्यव्यभिचार-शङ्कायाश्च सामान्यविशेषभावादिनोभयसमाधेयत्वान्नास्मान्प्रत्येव पर्यनुयोगो युक्त इत्याह **तथा चेति** । अन्यथा परस्यापीदं दूषणं समानमित्याह **यथाऽऽहेति** । एवम् अर्थान्तरवर्णनेऽनुव्याख्यानज्ञापकमाह **अत एवेति** । अस्मिंश्च पक्षे यथास्थितनिमित्तनैमित्तिकभावव्यत्यासाद्यभ्युपगमगौरवमुपलभ्य यथास्थितनिमित्तनैमित्तिकभाव-पक्षमेवाभ्युपेत्य विशेषनिर्णायकाभावेन सन्देहप्रसक्तिस्थल एव निर्णयार्थं प्रवृत्तस्य प्रकारान्तरेणासन्दिग्धे व्यभिचारोद्भावनमप्यसाम्प्रदायिकं वैयाकरणानामित्यभिप्रेत्य सन्देहस्थल एव पूर्वपदप्रकृतिस्वरत्वादिकं बहुव्रीहि-त्वादिनिश्चायकमित्येतद्भाष्यसम्मत्या द्रढयति **अपि चेति** । एतेन स्वरविनिर्णय इत्येतदप्यन्यथासिद्धमित्युक्तं भवति । एतेन द्वितीयपक्षेऽपि व्यभिचारचोदनं गर्भस्रावेणैव गतं वेदितव्यम् । **असन्देहं** सन्देहप्रागभावमित्यर्थः । वैयाकरणस्य सन्देहाभावेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यम् । **सन्देहं व्युत्पाद्येति** । स्थूला चासौ स्पृशती चेति स्थूलपृषतीति कर्मधारयः । अत्र पृशतीशब्दो मत्वर्थलक्षणया **पृषद्वर्ती** बिन्दुमर्ती धेनुमाह । स्थूला च सैव । बिन्दूनां स्थौल्यं तानवं वा गोरस्त्विति विशेषः । **यदीति** । अन्तोदात्तस्थूलशब्दस्य समासेऽपि तथैव श्रवणात् । पूर्वपदप्रकृतिस्वरेण बहुव्रीहित्वनिश्चय इति वाक्यशेषः । आदिशब्देन च सन्देहस्थल एव नियमार्थं प्रवृत्ते 'षष्ठी स्थाने योगे'त्यनेन विशेषविहितावयवषष्ठ्या निवृत्तिरिति 'षष्ठी स्थाने योगे'त्यत्रत्यभाष्यग्रन्थसङ्ग्रहः । **सामर्थ्याभावेनेति** । पूर्वान्तपदस्य पुंसोरित्येतत्सापेक्षत्वमिति भावः । **इति व्याख्यानादिति** । तथा च न तत्सापेक्षत्वमिति भावः । **बहुव्रीहाविति** । सप्तमीविशेषणे बहुव्रीहावित्यनेनेत्यर्थः । **कामचारित्वादिति** । विशेषणस्य भेदकत्वरूपत्वेन पूर्वान्तपदस्यापूर्वान्तत्वात्स्वरितव्यावर्तकत्वस्य स्वरितपदस्य चास्वरितात्पूर्वान्तव्यावर्तकत्वसम्भवेनोभयोरपि तत्त्वसम्भवादित्यर्थः । विशेषणविशेषभावस्य कामचारेऽप्युपसर्जनसंज्ञाया अन्वर्थत्वात्स्वरितशब्दस्य पूर्वान्त-निष्ठधर्माभिधायकत्वेनाप्रधानवाचित्वात् तस्यैव पूर्वनिपातेन भवितव्यम् । अन्यथा कर्मधारये गुणवाचकयोः क्रियावाचकयोर्गुणक्रियावाचकयोर्वा पूर्वनिपातनियमवद् गुणद्रव्यवाचकयोः क्रियाद्रव्यवाचकयोर्द्रव्यवाचकयोरपि बह्वल्पविषययोः पूर्वनिपातानियमः स्यादित्यस्वरसात्पक्षान्तरमाह **अहिताग्न्यादित्वाद्वेति** ।

**वा०२०— पूर्वपक्षानुसारेणेति** । पूर्वान्तस्वरितत्वेन समासनिर्णयार्थतया करिष्यमाणव्याख्यानानु-सारेणेत्यर्थः । सहस्रेण प्रधनं युद्धं येषां ते तथोक्ता इति सहस्रप्रधनशब्दे समासप्रातिपादिकं बहुव्रीहिर्भवति । तत्र सहस्रशब्दो येन पूर्वपदान्तस्वरेणोपेतः तद्रूपपूर्वपदप्रकृतिस्वरत्वमात्रे विद्यमानेऽपि समस्यमानयोः पुल्लिङ्गयोर्मध्ये पूर्वपदप्रकृतिस्वरत्वं नास्ति । पदद्वयस्यापि नपुंसकत्वात् । तथा च तत्र बहुव्रीहित्वनिश्चायकाभावेन बहुव्रीहित्वं न स्यादित्यर्थः । किं चेत्युत्तरपक्षेऽपि बहुव्रीहिना स्वरनिर्णयार्थकत्वेन करिष्यमाणयोजनानुसारेणेत्यर्थः । बहुव्रीहित्वनिमित्तेन पुल्लिङ्गसमस्यमानयोर्मध्ये पूर्वपदं प्रकृतिस्वरं भवतीत्युक्तेऽभिद्युभिरित्यत्रोपसर्गद्युशब्दयो-रनेकमन्यपदार्थ इत्येतत्सूत्रीयाव्ययानां चेति वचनादुष्टैर्मुख इत्यादाविव बहुव्रीहिसमासपुल्लिङ्गत्वाभावेन तयो-





र्मध्येऽभीत्यस्य प्रकृतिस्वरत्वनिर्णयायोगात् । बहुव्रीहिणा पुल्लिङ्गयोरेव पूर्वपदप्रकृतिस्वरनिर्णयेऽपि अतथाभूतस्थले तन्निर्णयानुपपत्तेः । अभीत्युपसर्गस्योपसर्गाश्चाभिवर्जमिति फिट्सूत्रेण अभिव्यतिरिक्तानां प्रादीनामाद्युदात्ततविधाना-दाद्युदात्तत्वायोगेनाभेः प्रातिपदिकत्वादन्तोदात्तत्वेऽन्तोदात्तप्रकृतिस्वरत्वम् । सहस्रप्रधनेष्वित्यत्र तु सहस्रशब्दस्य ग्रामादित्वेन वा स्वरितान्तत्वेन स्वरितपूर्वपदान्तत्वरूपं प्रकृतिस्वरत्वमिति विवेकः । किञ्चेति पक्षे वक्ष्यमाणरीत्या पूर्वपदप्रकृतिस्वरत्वमेव व्यापकतयाऽभिमतम् । न तु स्वरितान्तपूर्वपदकत्वमिति द्योतनाय पूर्वपदेत्युक्तम् । न केवलं द्वितीयपक्षानुसारेणाभिद्युभिरित्यत्र स्वरनिर्णयायोगोऽपि तु सहस्रप्रधनेष्वित्यत्रापि स्वरनिर्णयायोग इत्याह **पूर्वोदाहृतस्य चेति** । अत्र पूर्वोदाहृतस्य ग्रहणवत्पूर्वत्राप्यत्रोदाहृतस्य ग्रहणे कर्तव्येऽपि पूर्वत्रोक्तोप-लक्षणाभिप्रायेणैवात्र पूर्वोदाहृतस्य चेत्युक्तत्वान्न कश्चिद्दोष इति ज्ञेयम् । नियमस्याविवक्षणे प्रकृते फलं किमित्यत आह **तथा च ब्रह्मेति । पुल्लिङ्गत्वेऽपीति** ।

ननु स्वरमञ्जर्यां ब्रह्मन्शब्दो यदा पुल्लिङ्गस्तदाऽन्तोदात्तस्तत्पक्षे मिथुने मनिरिति मनिच्प्रत्ययान्तः । चित्वाश्चित्त इत्यन्तोदात्तत्वे शेषनिघातो आद्यनुदात्तस्य । यदा नपुंसकस्तदा मनिन्प्रत्ययान्त आद्युदात्तः शेष-निघातेनान्तानुदात्तत्वस्यापि प्राप्तौ उदात्तादनुदात्तस्येति स्वरितान्तः । ब्रह्मा होता, ब्रह्माऽभवदित्यादि उदाहरणं पाप्मानमपि दहति । प्रस्वाद्मानो रसानाम् । आत्मानं ते मनसेत्यादावन्यत्रापि मनिच्प्रत्ययान्तानामन्तोदात्तत्वमेव । तथा नपुंसकलिङ्गानामाद्युदात्तत्वमेव । सद्म पार्थिवं रजः । कर्मणे वां । शर्म यच्छतु इत्यादौ तथैव दृष्टेः । सत्यप्येवं नियामके क्वचित् समासे पुल्लिङ्गोऽप्याद्युदात्तः । सुशर्माणमित्यत्र सोर्मनसीति आद्युदात्तत्वविधानात् । आतोमनिन् क्वनिप् वनिपश्चेति आकारान्ताद्विहितमनिन्प्रत्ययान्तस्तु पुल्लिङ्ग एवाद्युदात्तः । सूत्रामेत्यत्राद्युदात्तस्य प्रयोगेऽपि स्वतन्त्रस्य त्रामेतिपदस्याद्युदात्तत्वेनाप्रयोगात् इति प्रतिपादितत्वेन ब्रह्मन्शब्दस्य नपुंसकत्वे मनिन्प्रत्ययान्ततया आद्युदात्तत्वेऽपि पुल्लिङ्गत्वे मिथुने मनिरिति सूत्रेण स्त्रियां पुंसि च धातुमात्रात् मनिज्विधायकेन मनिचि चित्त इत्यन्तोदात्तत्वमेव । ब्रह्मा होताध्वर्युरग्नीन् ब्रह्म ब्रह्माऽभवत्स्वयमिति नपुंसकब्रह्मशब्दस्य स्वरितान्ततया पुंलिङ्गब्रह्मशब्दस्य चान्तोदात्ततया दृष्टत्वात् । अन्ततः स आविवेश ब्रह्मेत्यत्रैव ब्रह्मशब्दोऽन्तोदात्त एव । तथा च कथं पुंलिङ्गत्वाश्रयणमिति चेत् । सत्यम् । अस्ति हि शर्म यच्छत्वित्यत्र शर्मशब्दस्याद्युदात्तत्वेऽपि सुशर्माऽसि इत्यादौ पुंलिङ्गस्यापि समासे आद्युदात्तत्वे सोर्मनसी अलोमोषसि इति सूत्रेण सोः परयोः मन्नन्तासन्तयोर्लोमोषसी वर्जयित्वा आद्युदात्तत्वविधानात् । तथा ब्रह्मशब्दस्य पुल्लिङ्गस्यान्तोदात्तत्वेऽपि समासे आद्युदात्तत्वस्याङ्गीकारे बाधकाभावात् । न च सुशर्माऽसीत्यत्रोदाहृतस्य साधकस्येव प्रकृते तदभावात् कथमेतदिति वाच्यम् । व्यत्ययेनाद्युदात्तत्वस्य परादि(?)छन्दसीति सूत्रविषये वाक्पतिरित्यादौ बहुलं दृष्टतया प्रकृतेऽपि तथैवाश्रयणा-दित्याहुः ।

वयं ब्रूमः । यदुक्तं 'ब्रह्मशब्दो नपुंसकः स्वरितान्तः, पुल्लिङ्गस्य अन्तोदात्त' इति तद्वैषम्यमात्रम् । ब्रह्म-शब्दस्य स्वरितान्तत्वोपपादनाय प्रागुक्तरीतिद्वयेऽपि नपुंसकशब्दस्योद्भूतावयवभेदकाले स्वरितान्तत्वेऽपि समासे अधिपतिपदस्थाकारेण ब्रह्मपदान्ताकारस्यैकादेशो यः सवर्णदीर्घस्तस्यैकादेश उदात्तेनेत्यनेनोदात्ततयोदात्तात्तत्वस्यैव





विद्यमानत्वेन पुल्लिङ्गत्वेऽपि ब्रह्मपदान्ताकारस्योदात्तस्योत्तरेणाद्युदात्तोपसर्गभूतादेरकारेणैकादेशससवर्णदीर्घस्याप्यान्तरतम्याद्युदात्ततयोदात्तान्तत्वस्यैव सत्त्वेन नपुंसकत्वपुल्लिङ्गत्वयोर्ब्रह्माधिपतिसमासप्रातिपदिके विशेषाभावात् । स्वरितब्रह्मशब्दान्तमित्यनुव्याख्यानं तट्टीकोक्त्यादिकं च प्रागुक्तरीत्या स्वरितान्तत्वे समासस्येत्यन्तोदात्तत्वविधिबलेन समासप्रयुक्तं स्वरापवादो न । एकादेशप्रयुक्तस्तु स्वरापवादो वर्तत एव । बहुव्रीहित्वेन समासस्येत्युक्तसमासान्तोदात्तत्वस्य एकादेशस्योदात्ततया विधानानन्तरं शेषनिघातस्य वा प्राप्तस्य आद्युदात्ततया पाठपक्षे निवारणेऽपि एकादेशप्रयुक्तस्वरस्य निवारणाभावात् इत्यभिप्रायेण दोषः । न हि कोऽपि स्वस्थात्मा इन्द्रशत्रुर्वर्धस्वेत्यत्र इन्द्रपदं स्वरितमिव ब्रह्माधिपतिप्रातिपदिकेऽपि ब्रह्मपदं स्वरितान्तमिति वक्तुं उत्सहेतापि । तथा च लिङ्गद्वयेऽपि ब्रह्माधिपतिप्रातिपदिकपूर्वपदप्रकृतिस्वरमेव । स्वरितब्रह्मेत्यादेरपि पूर्वपदप्रकृतिस्वरत्वमात्रे तात्पर्यमिति पक्षे तु न दोषशङ्कापि । किञ्चेत्युक्तद्वितीयपक्षप्रतिपादनावसरे तथैव मूले प्रतिपादयिष्यमाणं चेदम् । केचित् स्वरितस्योदात्तानुदात्तसमाहाररूपतया पुल्लिङ्गत्व इव नपुंसकत्वेऽप्युदात्तत्वसत्त्वेनोदात्तरूपपूर्वपदप्रकृतिस्वरत्वं नपुंसकपुल्लिङ्गत्वपक्षयोः समानमिति नानुपपत्तिरिति वदन्ति । तस्माद्युक्तं ब्रह्मशब्दस्य पुल्लिङ्गत्वेऽपि पूर्वपदप्रकृतिस्वरत्वमिति पुंसोरित्यंशस्य प्रवृत्तये यत्पुल्लिङ्गत्वाश्रयणं तद्युक्तमिति ।

एवं गुरूक्तब्रह्मेति शब्दपुल्लिङ्गतावचः ।<br>
व्याख्यानं गुरुसेवात्वबुद्ध्या सौख्याय धीमताम् ॥

**अत्र तत्पुरुष इत्यादि** । अत्रेत्यस्य वैयाकरणंमन्यानां भ्रान्तिमिति वक्ष्यमाणेनान्वयः । मूले सामान्यतो व्यभिचारमुद्भावयन्तीत्युक्तेऽपि स्थलविशेषाप्रतीतेस्तत्तत्स्थलोदाहरणम् । केचित्पदव्याख्यानं **वैयाकरणं मन्यानामिति** । वस्तुतो व्यभिचाराभावाद्भ्रान्तिमित्युक्तम् । तदुद्भावनोपपादनं कर्तुमियमवतारिका । अत्र च कर्मण्यणित्यत्र कर्मणीत्यस्य निमित्तत्वं अणित्यस्य च नैमित्तिकभावस्याभिप्रेततायाः स्पष्टत्वमित्यभिप्रेत्य तत्र तत्पुरुषे तुल्यार्थेत्यादिना व्यभिचारस्यैवोद्भावनमिति न दोषः । अत एव किञ्चेत्युत्तरवाक्यव्याख्यावसरे वक्ष्यति । निमित्तनैमित्तिकभावव्यत्यासमितीति ज्ञेयम् । तुल्यार्थेत्यादीत्यादिपदेन तृतीयसप्तम्युपमानाव्ययद्वितीयाकृत्या इति समग्रसूत्रोपादानम् । यद्वैकदेशोपादानेनैव समग्रसूत्रग्रहणसिद्धेरादिपदेन कृष्णसारङ्गः लोहितसारङ्गः अरुणबभ्रुरित्यादि तत्पुरुषे पूर्वपदप्रकृतिस्वरताविधायक'वर्णोवर्णेष्वनेत' इत्यादिसूत्रपरिग्रहः । तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तं उपमानवाचि अव्ययं द्वितीयान्तकृत्यान्तं च यत्पूर्वपदत्वं प्रकृत्या पूर्वपदप्रकृतिस्वरं भवतीति सूत्रार्थः । तुल्यार्थ इति तुल्यपर्यायसदृक्सदृशशब्दयोरप्युपादानम् । सदृक्श्वेतः सदृशश्वेत इत्याद्युदाहरणम् । तुल्यश्वेत इत्यत्र हि तुलया सम्मितस्तुल्य इत्यर्थे तुल्यशब्दो न वयोधर्म विषमूलसीतातुलेत्यादिना तद्धितयत्प्रत्ययान्तः । ततस्तित्स्वरितमित्यनेन प्रकृत्य स्वरभूताद्युदात्ततापवादेन स्वरितान्तत्वे प्राप्ते शेषनिघाते च तदपवादेन यतो नाव इति सूत्रेण नौशब्दात्परं यतं विना यत्प्रत्ययान्तस्य द्व्यच आदेरुदात्तताविधानात् तुल्यशब्द आद्युदात्तः ततः शेषनिघातेनान्तानुदात्तत्वे उदात्तादनुदात्तत्वे उदात्तादनुदात्तस्येति सूत्रेण स्वरितान्तः । तादृशतुल्यशब्दस्य श्वेतशब्देन गुणवाचकत्वेन विशेषणतया विशेषणं





र्मध्येऽभीत्यस्य प्रकृतिस्वरत्वनिर्णयायोगात् । बहुव्रीहिणा पुल्लिङ्गयोरेव पूर्वपदप्रकृतिस्वरनिर्णयेऽपि अतथाभूतस्थले तन्निर्णयानुपपत्तेः। अभीत्युपसर्गस्योपसर्गाश्चाभिवर्जमिति फिट्सूत्रेण अभिव्यतिरिक्तानां प्रादीनामाद्युदात्तताविधाना-दाद्युदात्तत्वायोगेनाभेः प्रातिपदिकत्वादन्तोदात्तत्वेऽन्तोदात्तप्रकृतिस्वरत्वम् । सहस्रप्रधनेष्वित्यत्र तु सहस्रशब्दस्य ग्रामादित्वेन वा स्वरितान्तत्वेन स्वरितपूर्वपदान्तत्वरूपं प्रकृतिस्वरत्वमिति विवेकः । किञ्चेति पक्षे वक्ष्यमाणरीत्या पूर्वपदप्रकृतिस्वरत्वमेव व्यापकतयाऽभिमतम् । न तु स्वरितान्तपूर्वपदकत्वमिति द्योतनाय पूर्वपदेत्युक्तम् । न केवलं द्वितीयपक्षानुसारेणाभिद्युभिरित्यत्र स्वरनिर्णयायोगोऽपि तु सहस्रप्रधनेष्वित्यत्रापि स्वरनिर्णयायोग इत्याह **पूर्वोदाहृतस्य चेति** । अत्र पूर्वोदाहृतस्य ग्रहणवत्पूर्वत्राप्यत्रोदाहृतस्य ग्रहणे कर्तव्येऽपि पूर्वत्रोक्तोप-लक्षणाभिप्रायेणैवात्र पूर्वोदाहृतस्य चेत्युक्तत्वान्न कश्चिद्दोष इति ज्ञेयम् । नियमस्याविवक्षणे प्रकृते फलं किमित्यत आह **तथा च ब्रह्मेति । पुल्लिङ्गत्वेऽपीति** ।

नन स्वरमञ्जर्यां ब्रह्मन्शब्दो यदा पुल्लिङ्गस्तदाऽन्तोदात्तस्तत्पक्षे मिथुने मनिरिति मनिच्प्रत्ययान्तः । चित्वाश्चित्त इत्यन्तोदात्तत्वे शेषनिघातो आद्यनुदात्तस्य । यदा नपुंसकस्तदा मनिन्प्रत्ययान्त आद्युदात्तः शेष-निघातेनान्तानुदात्तत्वस्यापि प्राप्तौ उदात्तादनुदात्तस्येति स्वरितान्तः । ब्रह्मा होता, ब्रह्माऽभवदित्यादि उदाहरणं पाप्मानमपि दहति । प्रस्वाद्मानो रसानाम् । आत्मानं ते मनसेत्यादावन्यत्रापि मनिच्प्रत्ययान्तानामन्तोदात्तत्वमेव । तथा नपुंसकलिङ्गानामाद्युदात्तत्वमेव । सद्म पार्थिवं रजः । कर्मणे वां । शर्म यच्छतु इत्यादौ तथैव दृष्टेः । सत्यप्येवं नियामके क्वचित् समासे पुल्लिङ्गोऽप्याद्युदात्तः । सुशर्माणमित्यत्र सोर्मनसीति आद्युदात्तत्वविधानात् । आतोमनिन् क्वनिप् वनिपश्चेति आकारान्ताद्विहितमनिन्प्रत्ययान्तस्तु पुल्लिङ्ग एवाद्युदात्तः । सूत्रामेत्यत्राद्युदात्तस्य प्रयोगेऽपि स्वतन्त्रस्य त्रामेतिपदस्याद्युदात्तत्वेनाप्रयोगात् इति प्रतिपादितत्वेन ब्रह्मन्शब्दस्य नपुंसकत्वे मनिन्प्रत्ययान्ततया आद्युदात्तत्वेऽपि पुल्लिङ्गत्वे मिथुने मनिरिति सूत्रेण स्त्रियां पुंसि च धातुमात्रात् मनिज्विधायकेन मनिचि चित्त इत्यन्तोदात्तत्वमेव । ब्रह्मा होताध्वर्युरग्नीन् ब्रह्म ब्रह्माऽभवत्स्वयमिति नपुंसकब्रह्मशब्दस्य स्वरितान्ततया पुंल्लिङ्गब्रह्मशब्दस्य चान्तोदात्ततया दृष्टत्वात् । अन्ततः स आविवेश ब्रह्मेत्यत्रैव ब्रह्मशब्दोऽन्तोदात्त एव । तथा च कथं पुंल्लिङ्गत्वाश्रयणमिति चेत् । सत्यम् । अस्ति हि शर्म यच्छत्वित्यत्र शर्मशब्दस्याद्युदात्तत्वेऽपि सुशर्माऽसि इत्यादौ पुंल्लिङ्गस्यापि समासे आद्युदात्तत्वे सोर्मनसी अलोमोषसि इति सूत्रेण सोः परयोः मन्नन्तासन्तयोर्लोमोषसी वर्जयित्वा आद्युदात्तत्वविधानात् । तथा ब्रह्मशब्दस्य पुल्लिङ्गस्यान्तोदात्तत्वेऽपि समासे आद्युदात्तत्वस्याङ्गीकारे बाधकाभावात् । न च सुशर्माऽसीत्यत्रोदाहृतस्य साधकस्येव प्रकृते तदभावात् कथमेतदिति वाच्यम् । व्यत्ययेनाद्युदात्तत्वस्य परादि(?)छन्दसीति सूत्रविषये वाक्पतिरित्यादौ बहुलं दृष्टतया प्रकृतेऽपि तथैवाश्रयणा-दित्याहुः।

वयं ब्रूमः । यदुक्तं 'ब्रह्मशब्दो नपुंसकः स्वरितान्तः, पुल्लिङ्गस्य अन्तोदात्त' इति तद्वैषम्यमात्रम् । ब्रह्म-शब्दस्य स्वरितान्तत्वोपपादनाय प्रागुक्तरीतिद्वयेऽपि नपुंसकशब्दस्योद्भूतावयवभेदकाले स्वरितान्तत्वेऽपि समासे अधिपतिपदस्थाकारेण ब्रह्मपदान्ताकारस्यैकादेशो यः सवर्णदीर्घस्तस्यैकादेश उदात्तेनेत्यनेनोदात्ततयोदात्तात्तस्यैव





विद्यमानत्वेन पुल्लिङ्गत्वेऽपि ब्रह्मपदान्ताकारस्योदात्तस्योत्तरेणाद्युदात्तोपसर्गभूतादेरकारेणैकादेशससवर्णदीर्घस्याप्यान्तरतम्याद्युदात्ततयोदात्तान्तत्वस्यैव सत्त्वेन नपुंसकत्वपुल्लिङ्गत्वयोर्ब्रह्माधिपतिसमासप्रातिपदिके विशेषाभावात् । स्वरितब्रह्मशब्दान्तमित्यनुव्याख्यानं तट्टीकोक्त्यादिकं च प्रागुक्तरीत्या स्वरितान्तत्वे समासस्येत्यन्तोदात्तत्वविधिबलेन समासप्रयुक्तं स्वरापवादो न । एकादेशप्रयुक्तस्तु स्वरापवादो वर्तत एव । बहुव्रीहित्वेन समासस्येत्युक्तसमासान्तोदात्तत्वस्य एकादेशस्योदात्ततया विधानानन्तरं शेषनिघातस्य वा प्राप्तस्य आद्युदात्ततया पाठपक्षे निवारणेऽपि एकादेशप्रयुक्तस्वरस्य निवारणाभावात् इत्यभिप्रायेण दोषः । न हि कोऽपि स्वस्थात्मा इन्द्रशत्रुर्वर्धस्वेत्यत्र इन्द्रपदं स्वरितमिव ब्रह्माधिपतिप्रातिपदिकेऽपि ब्रह्मपदं स्वरितान्तमिति वक्तुं उत्सहेतापि । तथा च लिङ्गद्वयेऽपि ब्रह्माधिपतिप्रातिपदिकपूर्वपदप्रकृतिस्वरमेव । स्वरितब्रह्मेत्यादेरपि पूर्वपदप्रकृतिस्वरत्वमात्रे तात्पर्यमिति पक्षे तु न दोषशङ्कापि । किञ्चेत्युक्तद्वितीयपक्षप्रतिपादनावसरे तथैव मूले प्रतिपादयिष्यमाणं चेदम् । केचित् स्वरितस्योदात्तानुदात्तसमाहाररूपतया पुल्लिङ्गत्व इव नपुंसकत्वेऽप्युदात्तत्वसत्त्वेनोदात्तरूपपूर्वपदप्रकृतिस्वरत्वं नपुंसकपुल्लिङ्गत्वपक्षयोः समानमिति नानुपपत्तिरिति वदन्ति । तस्माद्युक्तं ब्रह्मशब्दस्य पुल्लिङ्गत्वेऽपि पूर्वपदप्रकृतिस्वरत्वमिति पुंसोरित्यंशस्य प्रवृत्तये यत्पुल्लिङ्गत्वाश्रयणं तद्युक्तमिति ।

एवं गुरूक्तब्रह्मेति शब्दपुल्लिङ्गतावचः ।
व्याख्यानं गुरुसेवात्वबुद्ध्या सौख्याय धीमताम् ॥

**अत्र तत्पुरुष इत्यादि** । अत्रेत्यस्य वैयाकरणंमन्यानां भ्रान्तिमिति वक्ष्यमाणेनान्वयः । मूले सामान्यतो व्यभिचारमुद्भावयन्तीत्युक्तेऽपि स्थलविशेषाप्रतीतेस्तत्तत्स्थलोदाहरणम् । केचित्पदव्याख्यानं **वैयाकरणंमन्यानामिति** । वस्तुतो व्यभिचाराभावाद्भ्रान्तिमित्युक्तम् । तदुद्भावनोपपादनं कर्तुमियमवतारिका । अत्र च कर्मण्यणित्यत्र कर्मणीत्यस्य निमित्तत्वं अणित्यस्य च नैमित्तिकभावस्याभिप्रेततायाः स्पष्टत्वमित्यभिप्रेत्य तत्र तत्पुरुषे तुल्यार्थेत्यादिना व्यभिचारस्यैवोद्भावनमिति न दोषः । अत एव किञ्चेत्युत्तरवाक्यव्याख्यावसरे वक्ष्यति । निमित्तनैमित्तिकभावव्यत्यासमितीति ज्ञेयम् । तुल्यार्थेत्यादीत्यादिपदेन तृतीयसप्तम्युपमानाव्ययद्वितीयाकृत्या इति समग्रसूत्रोपादानम् । यद्वैकदेशोपादानेनैव समग्रसूत्रग्रहणसिद्धेरादिपदेन कृष्णसारङ्गः लोहितसारङ्गः अरुणबभ्रुरित्यादि तत्पुरुषे पूर्वपदप्रकृतिस्वरताविधायक'वर्णोवर्णेष्वनेत' इत्यादिसूत्रपरिग्रहः । तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तं उपमानवाचि अव्ययं द्वितीयान्तकृत्यान्तं च यत्पूर्वपदत्वं प्रकृत्या पूर्वपदप्रकृतिस्वरं भवतीति सूत्रार्थः । तुल्यार्थ इति तुल्यपर्यायसदृक्सदृशशब्दयोरप्युपादानम् । सदृक्श्वेतः सदृशाश्वेत इत्याद्युदाहरणम् । तुल्यश्वेत इत्यत्र हि तुलया सम्मितस्तुल्य इत्यर्थे तुल्यशब्दो न वयोधर्मविषमूलसीतातुलेत्यादिना तद्धितयत्प्रत्ययान्तः । ततस्तित्स्वरितमित्यनेन प्रकृत्य स्वरभूताद्युदात्ततापवादेन स्वरितान्तत्वे प्राप्ते शेषनिघाते च तदपवादेन यतो नाव इति सूत्रेण नौशब्दात्परं यतं विना यत्प्रत्ययान्तस्य द्व्यच आदेरुदात्तताविधानात् तुल्यशब्द आद्युदात्तः ततः शेषनिघातेनान्तानुदात्तत्वे उदात्तादनुदात्तत्वे उदात्तादनुदात्तस्येति सूत्रेण स्वरितान्तः । तादृशतुल्यशब्दस्य श्वेतशब्देन गुणवाचकत्वेन विशेषणतया विशेषणं





विशेष्येणेति कर्मधारये प्राप्ते पूर्वनिपातनियमार्थं प्रवृत्तेन कृत्यतुल्याख्या अजात्येत्यनेनाजातिवचनेन कृत्यप्रत्ययान्तानां तुल्यपर्यायाणां च शब्दानां तत्पुरुषसमासविधायकेन तत्पुरुषसमासः । उक्तं च काशिकायाम् । एते कृत्यतुल्याख्या अजात्येति कर्मधारया इति । मञ्जर्यामपि भोज्योष्णादावनियमे प्राप्ते पूर्वनिपातनियमार्थं वचनमिति उष्णादयः शब्दाः सर्वे गुणवचनाः सन्त्यस्मिन्योगे विशेषणमित्यादिना समासे कृते तेषां पूर्वनिपातः स्यात् । अतःपरं निपातार्थोऽयमारम्भ इति कुसुमविकासेऽपि प्रतिपादितम् । तथा च तुल्यश्वेत इति तत्पुरुषप्रातिपदिके समासस्येति सूत्रेण समासत्वप्रयुक्तान्तोदात्ते प्राप्ते तत्पुरुषे तुल्यार्थे तृतीयेति सूत्रेण समासस्वरूपापवादेन तुल्यार्थपदस्य प्रकृतिस्वरताविधानेन पूर्वपदप्रकृतिस्वरत्वे सति तुल्यपदस्य प्रागुक्तरीत्या स्वरितान्तत्वेन स्वरितान्तपूर्वपदकत्वमेव तत्समासप्रातिपदिकस्यास्तीति तत्र व्यभिचार उक्तलक्षणस्येति वक्ष्यमाणेनान्वयः । एवं आदिपदोक्तेष्वपि काशिकास्वरमञ्जर्यनुसारेण पूर्वपदस्वरितान्तत्वमुपपाद्यमिति भावः ।

**इगन्तेति** । अत्रादिपदेन कपालगभगालशरावेषु द्विगाविति सूत्रशेषस्य वा बह्वन्यतरस्यामित्यादेः बहुरन्निरित्यादौ विकल्पेन पूर्वपदप्रकृतिस्वरविधायकस्य सूत्रस्य वा ग्रहणम् । इगन्ते उत्तरपदे कालवाचिनि कपालभगालशरावेषु च द्विगौ समासपूर्वपदं प्रकृतिस्वरं भवतीति सूत्रार्थः । पञ्चवर्ष इत्यत्र पञ्चशब्दः रेफनकारान्तसङ्ख्याया आदिरुदात्तो भवतीत्यर्थक'न्रःसख्योया' इति सूत्रेणाद्युदात्तः । पञ्च वर्षाणि समाहृतानि पञ्चवर्षमिति तद्धितार्थोत्तरपदसमाहारे चेति सूत्रेण समाहारे समानाधिकरणसमासे सङ्ख्यापूर्वो द्विगुरित्यादिना द्विगुत्वादौ सति पञ्चवर्षेण निर्वृत्तमित्याद्यर्थे वर्षाल्लुक् चेत्यनेन खठञोर्विकल्पपूर्वकलुकश्च विकल्पेन विधानात्तेनोभयलुक्पक्षे निष्पन्नपञ्चवर्षे प्रातिपदिके इगन्तेति सूत्रेण कालवाचिवर्षे शब्दे परतः पूर्वस्य पञ्चपदस्य प्रकृतिस्वरे सति पञ्चशब्दस्याद्युदात्तत्वानन्तरं शेषनिघाते उदात्तादिति स्वरितत्वेन स्वरितान्तपूर्वपदकत्वमेवास्तीति तत्र व्यभिचार इति वक्ष्यमाणेनान्वयः । **आर्यो ब्राह्मणेत्यादीति** । आदिपदेन कुमारयोरिति सूत्रशेषस्य वा राजब्राह्मणः राजकुमार इत्यत्र ब्राह्मणकुमारयोः परतो राजशब्दस्य विकल्पेन प्रकृतिस्वरत्वविधायक'राजा वे'ति सूत्रस्य वा परिग्रहः । कर्मधारयाभावपक्षे राज्ञो ब्राह्मण इति समासत्वेनान्तोदात्तत्वेति कर्मधारयपक्षे राजब्राह्मण इत्यादौ स्वरितान्तत्वात् । **ण्यदन्तस्वरितान्तेति** । ऋहलोर्ण्यदिति सूत्रेणार्त्तेर्ण्यत्प्रत्यये अचो ञ्णितीति वृद्धावार्यशब्दो ण्यदन्तत्वेनेति तु भवति तित्स्वरितमित्यनेन स्वरितान्तो भवति । तथा च आर्यश्चासौ ब्राह्मणश्चेति कर्मधारये 'आर्यो ब्राह्मणे'ति सूत्रेण ब्राह्मणशब्दे उत्तरपदे आर्यपदस्य प्रकृतिस्वरत्वे सति स्वरितान्तार्येति पूर्वपदकत्वमार्यब्राह्मण इति समासप्रातिपदिकस्येति भावः । व्यभिचार इति वक्ष्यमाणेनान्वयः । ण्यदन्तात्वादेव स्वरितान्ततित्स्वरितमित्यनेन पूर्वपदमार्य इत्येतद्यस्येति योजना । **सङ्ख्येत्यादीति** । अत्र सङ्ख्येत्येव सूत्रम् । सङ्ख्यावाचिपूर्वपदं द्वन्द्वे प्रकृत्येति तदर्थः । आदिपदेन राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिष्विति सूत्रपरिग्रहः । तेन सूत्रेण राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वः सोऽन्धकवृष्णिषु वर्तते । यत्र पूर्वपदं प्रकृतिस्वरं भवतीति प्रतिपादयता शिनेरपत्येषु अभेदोपचारेण प्रयुक्तशिनिपदक शिनिवासुदेवा इत्यादौ द्वन्द्वेशिनीत्यादि पूर्वपदे प्रकृतिस्वरताविधानात्।





**कन्नन्तेति** । कन्नन्तत्वादाद्युदात्तं यदेकं पदं तत्पूर्वपदं यस्य एवंरूपो य एकादेशेति द्वन्द्वः तत्रेति विग्रहः । आदिपदात् त्रेस्त्रय इति सङ्ख्यायामुत्तरपदे त्रेस्त्रयसादेश विधायकसूत्रेण त्रयसादेशो तस्य आद्युदात्ततया विधानात् स्वरितान्ताद्युदात्तत्रयःपूर्वपदकत्रयोदशोऽपि द्वन्द्वस्य त्रः सङ्ख्याया इत्याद्युदात्तपञ्चदशेति द्वन्द्वस्य च ग्रहणम् । एकादश च मे त्रयोदश च मे पञ्चदश च म इति वैदिकोदाहरणात् । मिमते द्वादशेत्यादिस्थ द्वादशादिशब्दा अप्युदाहार्यः । अयमर्थः । इण्भीकापाशल्यतिमर्चिभ्यः कन्निति सूत्रेण इणादिधातुभ्यः कनि सति एकभेकपाककाकादिशब्दानां साधुत्वात्कन्नन्तैकशब्दस्य निदन्ततया ञ्नित्यादिर्नित्यमिति नित्स्वरेणाद्युदात्तत्वे शेषे निघाते उदात्तादनुदात्तस्य स्वरित इति स्वरितत्वे स्वरितान्तैकपदेन दशपदस्य एकं चेति इतरेतरयोगे द्वन्द्वे प्रागेकादशभ्योऽच्छन्दसीति निपातनाद्दीर्घे एकादशेति समासप्रातिपदिकम् । तत्रैकपदस्य सङ्ख्यावाचितया सङ्ख्येत्यनेन सङ्ख्यावाचिपूर्वपदके द्वन्द्वे तद्वाचिनः प्रकृतिस्वरताविधायकेन प्रकृतिस्वरतायां स्वरितपूर्वपदान्ततया तत्र व्यभिचारमुपपादयति **स्वरितेति** । अत्र व्यभिचारस्थलोदाहरणं परिप्रत्युपापा वर्ज्यमानाऽहोरात्रावयवेष्वित्येतद्विषयभूतपरित्रिगर्त्त वृष्टो देवः परिपूर्वाह्णं परिपूर्वरात्रमित्यादेः उपसर्गाश्चाभिवर्जमिति अभिव्यक्तिरिक्तानामुपसर्गाणामाद्युदात्तताविधानात् आद्युदात्तपरीत्याद्युपसर्गपूर्वपदकाव्ययीभावस्याप्युपलक्षणम् । परित्रिगर्तमित्यादौ हि वर्ज्यमानवाचिनि अहरवयव-वाचिनि चोत्तरपदे परि, प्रति, उप, अय, इत्येतच्छब्दानां पूर्वपदभूतानां प्रकृतिस्वरताविधायकपरिप्रतीति सूत्रेणाभिव्यतिरिक्ततया स्वरेणाद्युदात्ततया स्वरेणाद्युदात्तपरीत्यादि पूर्वपदस्य वर्जने परिविष्णु संसार इतिव-द्वर्ज्यमानत्रिगर्गादिवाचिनि परतः प्रकृतिस्वरत्वे सति स्वरितान्तपूर्वपदकत्वसत्त्वेन तत्रापि व्यभिचारासम्भवात् । उक्तं च परिप्रत्युपेतिसूत्रीयकाशिकादौ । तत्पुरुषे बहुव्रीहौ च सिद्धत्वादव्ययीभावार्थोऽयमारम्भ इतीति ज्ञेयम् । तदसदित्यस्यैव प्रतीकतयोपादाने कर्तव्ये प्रतिज्ञामात्रस्यासाधकतया तत्र हेतोरेवावश्यकत्वबुद्ध्या सामान्य-लक्षणेत्यादिकमेव प्रतीकमुपाददानः सामान्यविशेषवतेति भाष्यवाक्यस्य सम्मतितयोदाहरणमिति मूलार्थं सूचयंस्तद्वाक्यानुसारेण मूलस्थसामान्यादिशब्दं व्याकुर्वन् कुतः सामान्योपेतलक्षणस्य विशेषलक्षणवति व्यभिचारोद्भावनं न कार्यमित्यतस्तथात्वे स्थलान्तरे लक्षणानुपपत्तिरिति बाधकं वदन् सामान्यविशेषलक्षणयो-रुभयोरपि महाव्याकरणस्थत्वं नेति भ्रान्तिं चापाकरोति **पूर्वान्तस्वरित इति सामान्यवत इत्यादिना** । **सामान्यवत इति** । पूर्वान्तस्वरितत्वस्य बहुव्रीहितत्पुरुषादिसाधारणत्वादिति भावः । **तुल्यार्थादिति विशेषादित्यनेन** कृत्य-तुल्याख्येत्यादिसूत्रसमानार्थकमहाव्याकरणस्थविशेषसूत्रग्रहणम् । समासान्तरविधायकानि तुल्यार्थादि विशेषणवन्ति यानि तत्स्थसूत्राणि तद्विषय इति योज्यम् । यद्वा समासान्तरविधायकेत्यनेन कृत्यतुल्याख्येत्यादिप्रसिद्धसूत्राणि गृह्यन्ते । सप्तमीसमासश्चायं विधायकेषु विद्यमानो यस्तुल्यार्थादिविशेषस्तद्वतीति विग्रहः । सूत्रोपात्तस्य विशेष-त्वोक्त्या तदुपेतसूत्रस्यापि विशेषवत्तालाभात् ।

**तत्स्थेति** । महाव्याकरणस्थेत्यर्थः । प्रसिद्धसूत्रगतविशेषत्वेन विशेषसूत्रत्वप्रतिपादनं च स्पष्टत्वार्थम् । अन्यथा विशेषसूत्राकरस्येदानीमप्रतिभासेन तत्सरूपप्रतिभासायोग इति ज्ञेयम् । व्यभिचारोद्भावनमित्यस्य तुल्ययोगक्षेममिति वक्ष्यमाणेनान्वयः । **कर्मणीति** । अयमर्थः । कर्मण्यणीत्यत्र कर्मवाचकपदस्य निमित्तत्वेनाणश्च

नैमित्तिकत्वेनाभिप्रेतत्वाद्यदकर्मवाचकमुपपदं तत्र धातोरण्प्रत्यय इति प्रतिपादितायाः व्याप्तेर्गोदः कंबल इत्यादौ कर्मवाचकोपपदे सत्यपि आतोऽनुपसर्गे क इति कप्रत्ययस्यैव विद्यमानतया अणोऽभावेन व्यभिचारेण व्यभिचारोद्भावनेनेति । आद्यादिपदेन तद्गुण इत्यादि सामान्यविधेश्चाद्यादिपुरस्कारेण प्रवृत्तस्य ग्रहणम् । द्वितीयेन णश्चादिपुरस्कारेण प्रवृत्त्या विशेषो येन वृद्धिरेचीत्यादेर्ग्रहणम् । तृतीयादिपदेन कृष्णैकत्वमित्यादेर्ग्रहणमिति ज्ञेयम् । **बहुव्रीहौ प्रकृत्येत्यादीति** । आदिपदेन तत्पुरुषे तुल्यार्थेत्यादेर्ग्रहणम् । उपलक्षणं चेदम् आद्युदात्त-श्चेत्यादेस्तित्स्वरितमित्यादिविशेषवल्लक्षणविषय इत्यपि ज्ञेयम् । **विषय इति** । पञ्चाक्षरा । दशाक्षरेत्यादि-रूपेत्यर्थः । पञ्चाक्षरेत्यादौ हि पञ्च अक्षराणि यस्यामिति । बहुव्रीहौ समासस्येति समासान्तोदात्तत्वे प्राप्ते पञ्चशब्दस्य (?) न्रः सङ्ख्याया इति नान्तसङ्ख्यात्वेनाद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्येति स्वरितत्वेन स्वरितान्तपञ्चपूर्वपदकतया बहुव्रीहौ प्रकृत्येति सूत्रेण बहुव्रीहिसमासे पूर्वपदं पूर्वपदस्थ उदात्तो वा स्वरितो वा स्वरः प्रकृत्या भवति स्वभावेनावतिष्ठते न विकारमाप्नोतीत्यर्थकेन पूर्वपदप्रकृतिस्वरत्वे सति समासस्येत्यस्य व्यभिचारः । तदुद्भावनेनेत्यर्थः । तुल्ययोगक्षेममित्यनेनेदं सूचयति । कर्मण्यणित्यादेर्व्यभिचारोद्भावनं हि परस्या-प्यसाम्प्रदायिकत्वेन सम्मतम् । तद्विधेरप्रमाणत्वानङ्गीकारात् । किन्तु कर्मण्यणित्यस्य कर्मणीति धातोरिति च सामान्यवल्लक्षणत्वात् तत्प्राप्तस्य चोणः आत इति अनुपसर्ग इति च विशेषवदातोनुपसर्गे कः इति प्राप्त कप्रत्ययेनापवादेऽपि सामान्यविशेषभावादेव सामान्यलक्षणविषये गोद इत्यादौ न व्यभिचारः । एवं समासस्ये-त्यादेरपि बहुव्रीहावित्यादिविषये व्यभिचारः परिहरणीयः इत्येवं सामान्यविशेषभावाश्रयणेन व्यभिचारापरिहार एव कर्तव्यः । एवं प्रकृतेऽपि पूर्वपदान्तस्वरितत्वरूपसामान्योपेतलक्षणस्य तुल्यार्थपदादिरूपविशेषोपेतलक्षणविषये व्यभिचारपरिहारः सम्भवति । विशेषलक्षणविषये सामान्यलक्षणस्यापवादमात्रेऽपि व्यभिचाराभावात् । सत्यप्येवं व्यभिचारोद्भावने कर्मणीत्यादेरपि तदुद्भावनापत्तिरिति बहुव्याकुली स्यादिति । सामान्यविशेषवता लक्षणेनेति सम्मतिग्रन्थानुसाराय व्याचष्टे **सामान्योपेतमिति** । शाकापार्थिवादित्वादिनेति शेषः । न्यासादौ स्पष्टमेतत् ।

कथमनुशासनं प्रकृत्यादिविभागकल्पनया सामान्यविशेषवतालक्षणेनेति काशिकायामुदाहृतम् । तत्र शब्दानुशासने कल्पनाहेतुः कल्पनायां तु लक्षणं करणमिति मञ्जर्यनुसारेण व्यधिकरणे तृतीयेत्यभिप्रायं तत्र व्यञ्जयन्नाह **शब्दानुशासनहेत्विति** । सामान्यविशेषवता लक्षणेन करणभूतेन या प्रकृत्यादिविभागकल्पना तया हेतुभूतया शब्दानामनुशासनमनुशिष्टिरिति मञ्जर्यनुसारेण योज्यमिति भावः ॥ भाष्ये किञ्चित्सामान्य-विशेषवल्लक्षणं प्रवृत्तम् । येन येनाल्पेन यत्नेन महतो महतः शब्दौघान् । किं पुनस्तदुत्सर्गापवादौ । कश्चिदुत्सर्गः कर्तव्यः । कश्चिदपवाद इत्यादि ग्रन्थे सामान्यविशेषवल्लक्षणयोरुत्सर्गापवाद इत्यादिग्रन्थे स्वमान्यविशेष-रूपतयाऽभिधानं कर्मणीत्यादेरुदाहरणं च कृतमिति तदनुसारेणोत्सर्गापवादरूपे सामान्यविशेषोपेतलक्षणे इत्यर्थमभिप्रेत्य मूलेऽपोद्यत इति व्यवहारः । **महाव्याकरणस्थानीतीति** । तेषामपि तत्पुरुषे तुल्यार्थेत्यादि-वदशेषविषयत्वस्य सत्त्वेनोपवादरूपत्वादिति भावः । **यथास्थितेति** । कर्मण्यणित्यादौ निमित्तनैमित्तिका-भाववत्पूर्वान्तस्वरित इति सप्तम्यन्तपदवाच्यस्य निमित्तताया बहुव्रीहित्वस्य नैमित्तिकतायाश्च पदमर्यादया





लाभाद्यथास्थितेत्युक्तम् । **परकीयेति** । परकीया या शङ्का तदवकाशशून्येत्यर्थान्तरविशेषणं प्रसिद्धव्याकरणानुसारीति हेतुगर्भविशेषणं प्रसिद्धव्याकरणानुसारित्वाच्छङ्कावकाशशून्यत्वमिति । प्रसिद्धव्याकरणानुसार्येतस्मिन्नर्थे व्यभिचारचोदनमयुक्तम् । अन्यथा प्रसिद्धव्याकरणेऽपि तद्दोषप्रसङ्गादिति भावः । **अर्थान्तर**माहेत्यनेन पूर्वत्र स्वरितान्तपूर्वपदकत्वं व्याप्यतयोक्तम् । अत्र तु उदात्तस्वरितसाधारणपूर्वपदप्रकृतिस्वरत्वं व्यापकतयोच्यते । अत एव नाग्न्याहितादिशब्देषु उदात्तान्तपूर्वपदके व्यभिचार इत्यपि सूचितं **वक्ष्यति चोपलक्षणेत्यादि** । अर्थान्तरे पूर्वपक्षाद्योजनाभेदं दर्शयति **एवं चेति** । यत्र स्वरितान्तपूर्वपदकं तत्र बहुव्रीहित्वमिति प्राचीनपक्षे विवक्षितनिमित्तकभावापेक्षया यत्र बहुव्रीहित्वं तत्र पूर्वपदप्रकृतिस्वरो भवतीति निमित्तनैमित्तिकभावे व्यत्यासोऽस्तीति भावः । पूर्वोक्तबहुव्रीहौ समासे पूर्वपदमित्यादिव्याख्यानानुसारेण बहुव्रीहौ प्रकृत्येति सूत्रस्य बहुव्रीहिरूपे निमित्ते पूर्वपदप्रकृतिस्वरत्वे नैमित्तिकं भवतीति निमित्तनैमित्तिकभाववत् मूले किं चानेनेत्युक्तो व्यत्यस्तो निमित्तनैमित्तिकभावोऽपि बहुव्रीहित्वस्य निमित्तताश्रयणेन प्रवृत्त इति भवति प्रसिद्धव्याकरणानुसारित्वमस्येति भावः । **प्रकृतोपयोगेऽपीति** । बहुव्रीहित्वनिश्चायिकाभावादित्याशङ्कापरिहारसिद्ध्या प्रकृतोपयोगेऽपीत्यर्थः । **नास्येति** । उक्तशङ्कापरिहारकत्वाभावान्न प्रकृतोपयोग इत्यर्थः । **कार्येणेति** । पूर्वान्तस्वरे स्वरिते सतीत्यादि प्रागुक्तयोजनायां निमित्तनैमित्तिकनिश्चय आश्रितः कर्मणीत्यादिवत् करणेन कार्यानुमानं च विशिष्टमेघोन्नत्या वृष्ट्यनुमानं स्पष्टतया युक्तमेव । अत्र पक्षे कर्मणीत्यादिवदेव बहुव्रीहौ पूर्वपदप्रकृतिस्वरो भवतीति निमित्तनैमित्तिकभावव्यत्यासाश्रयणेऽपि धूमेन वह्नेरिव कार्येण कारणानुमानमिति विशेष इति ज्ञेयम् ।

**निश्चयस्येति** । दृश्यते तावत्पूर्वपदप्रकृतिस्वरत्वरूपं कार्यम् । न च तन्निर्निमित्तकम्, अकारणकार्योत्पत्तिप्रसङ्गात् । न च निमित्तान्तरमस्तीति बहुव्रीहित्वमेव निमित्तमिति निश्चयोपपत्तिरित्यर्थः । **तयोः पूर्वपदेति** । प्राचीनपक्षे पूर्वपदान्तत्वस्यैव निमित्तकत्वेऽपि इह पक्षे पूर्वपदप्रकृतिस्वरत्वोपलक्षणाश्रयणापूर्वपदप्रकृतिस्वरत्वस्य च सामान्यतया तत्र स्वरितान्तपूर्वपदत्वमुपपादकतया वक्तुं युक्तम् । एतेनाग्न्याहित इत्यादौ सत्यपि बहुव्रीहित्वे स्वरितपूर्वपदत्वाभावेन व्यभिचार इति भ्रान्तिरपि परास्ता । मूलकृतोदात्तस्वरितसाधारण्येन पूर्वपदप्रकृतिस्वरत्वमात्राभिधानेन तस्य च तत्रापि सत्त्वादिति द्रष्टव्यम् । एतत्समासप्रातिपदिकतामात्रदशायां वा समासान्ते वा तयोः स्वरितान्तत्वेनैतत्समासस्य पूर्वपदप्रकृतिस्वरत्वमुपपादयितुमलमित्यतः शेषं पूरयति **समासान्तर्गतयोरिति** । एतत्समासविग्रहवाक्ये प्रयुज्यमानयोरित्याद्यः षष्ठ्यन्तार्थः । न च इन्द्रशत्रुरित्यत्र इन्द्रशब्दस्य स्वरितान्तत्वेऽपि ब्रह्माधिपतिरित्यत्र समासे ब्रह्मशब्दस्यान्तोदात्तत्वेन प्रागुक्तरीत्या स्वरितान्तत्वापायात् कथं पूर्वपदप्रकृतिस्वरत्वमिति वाच्यम् । अत्र हि समासस्येति सामान्यलक्षणप्राप्तान्तोदात्तत्वं तत्प्रयुक्तं शेषानुदात्तत्वं न चास्तीत्येतदेव पूर्वपदप्रकृतिस्वरत्वं नाम बहुव्रीहेः तत्रैवेन्द्रशत्रुशब्दान्तर्गतेन्द्रशब्दो दृष्टान्तितः । तथा च यथेन्द्रशब्दस्य समासे समासान्तोदात्तत्वप्रयुक्तमनुदात्तं नास्ति एवं ब्रह्मशब्दस्यापीति शब्दद्वयं समानमेव । एतावांस्तु विशेषः । उपसर्गस्वरेणाद्युदात्ताधीत्युपसर्गाकारेण सवर्णदीर्घाख्यैकदेशस्येह प्रवृत्त्या तस्य चैकदेश इति लक्षणान्तरप्राप्तोदात्ततयोदात्तत्वं ब्रह्मशब्दस्य इन्द्रशब्दे तु लक्षणान्तरप्रवृत्त्यभावात् स्वरितान्तत्वमेवेति । न चेमं विशेषमाश्रित्यापि मूलकृता वा अनुव्याख्यानकृता वा इन्द्रशत्रुशब्दो दृष्टान्तीक्रियते ।





तथा सति ब्रह्माधिपतिप्रातिपदिके इन्द्रशब्दवत् ब्रह्मशब्दोऽप्यध्यापकैः पठ्यमानः स्वरितान्ततया पठ्यत इति भ्रान्तिस्तयोरङ्गीकर्तव्या स्यात् । अपठ्यमानत्वनिश्चये तु कथं नाम विशेषस्यानुव्याख्यानादौ विवक्षितत्वमिति शङ्कते वक्तुम् । तस्मात् समासान्तोदात्तत्वप्रयुक्तं शेषानुदात्तत्वाभावस्यैव मूले पूर्वपदप्रकृतिस्वरत्वाद्ब्रह्मशब्दान्त्यस्वरस्यैकादेशप्रयुक्तस्वरितत्वापायेति उदात्तत्वस्यैव सत्त्वेनानुदात्तत्वाभावात् अधीत्युपसर्गेऽपि आद्युदात्तत्वाभावाद् ब्रह्माधिपतिप्रातिपदिकस्य युक्तं पूर्वपदप्रकृतिस्वरत्वम् । टीकोक्तपुल्लिङ्गब्रह्मशब्दपक्षे तु नैषाऽनुपपत्तिरवकाशवती । ब्रह्मशब्दस्य मनिच्प्रत्ययान्तस्य पुल्लिङ्गस्यान्तोदात्ततयोदात्तस्यैव पूर्वपदान्त्यस्वरत्वात् । तस्य चैकादेशेऽप्यनपायात् । उक्तं चैतत्पक्षे पूर्वपदप्रकृतिस्वरत्वमात्रोक्तेः पुल्लिङ्गपक्षेऽपि नानुपपत्तिः । नपुंसकत्वेऽपि अनुदात्तत्वाभावमात्रेण स्वरितान्तत्वोक्तिरित्यादि प्रागेव । उदात्तानुदात्तसमाहाररूपस्वरिते पूर्वार्धह्रस्वोपदात्तत्वस्य स्वतःसिद्धत्वात् उत्तरार्धानुदात्तमात्रस्यैकादेशेन विघातेऽपि समासप्रयुक्तविघाताभावेन समासप्रयुक्तव्यत्यासाभावरूपपूर्वपदप्रकृतिस्वरितत्वमक्षतमेवेति स्वामिचरणपक्षेऽप्ययमेवार्थोऽभिप्रेत इति सकलमकलङ्कम् ।

**सामान्यविशेषभावादिनेति** । प्रागुक्तरीत्या सामान्यविशेषभावेन आदिपदात् यदि तत्र प्रकारेण व्यभिचारशङ्कां परिहरिष्यामीत्यभिमानस्तदा तदभिमतशङ्क्ष्यिमाणप्रकारान्तरेण वेत्यर्थः । स च परिहारो ममापि समान इत्याशयेनोक्तम् **उभयेति** । अनेन यत्रोभयोः समो दोष इति न्यायमभिप्रैति । वक्ष्यति च अन्यथापरव्यत्यासादीत्यादिपदेन । अन्ततः प्रथमपक्षोक्तहेतुहेतुमद्भावस्याश्रयणं तत्र प्राप्तव्यभिचारपरिहाराय प्रागुक्तसमाधानस्यैवाश्रयणं किमेतेनार्थान्तरेण वर्णितेनेत्यनुपपत्तिपरिहाराय भाष्यस्थस्वरनिर्णय इत्येतत्सामअस्यलाभवर्णनं चेत्यस्य परिग्रहः । गौरवमित्यनेन भाष्यस्यान्यथासिद्धत्वात् वृथा व्यत्यासाद्याश्रयणमयुक्तमिति सूचयति । गौरवरूपारुचिं मनसि निधायेत्यर्थः । **सन्देहेति** । बहुव्रीहितत्पुरुषसन्देहेत्यर्थः । प्रकारान्तरेण **सन्दिग्ध इति** । विशेषलक्षणैर्निर्णीत इत्यर्थः । स्वरत्वादिकमित्यत्रादिपदेनान्तोदात्तत्वपरिग्रहः । भाष्यसम्मत्येत्यनेन यथोक्तमिति मूलमत्रार्थे भाष्यसम्मतिमाहेत्यवतारितं भवति । **अनेनेति** । स्वरेण समासेति तृतीयासमासव्याख्यानेनेत्यर्थः । प्राक् तु स्वरस्य निर्णय इति षष्ठीसमासप्रतीतिमाश्रित्य साधकत्वेनोपन्यास इति हृदयम् । **एतेनेति** । सन्देहस्थले स्वरेण समासनिर्णय इति विवक्षणेन प्रथमपक्षीयनिमित्तनैमित्तिकयोरेवाव्यभिचरितत्वोपपादनेनेत्यर्थः । वेदितव्यमित्यनन्तरमिति सूचितमिति शेषः । तेनास्य प्रकृतसङ्गतिः । अयमाशयः । उक्तनिमित्तनैमित्तिकभावे व्यभिचारस्य प्रसक्तावपि विवक्षया परिहार्यत्वं द्वितीयपक्षोक्ततद्वचत्यासे तु व्यभिचारस्यैवाप्रसक्त्या तदुद्भावनस्य सर्वथाऽयोगः । अत एवोक्तं प्रागस्माभिः व्यभिचारशङ्कावकाशशून्येति । इममेव विशेषं द्योतयितुं प्राचीनपक्षे कथं युज्यत इत्युक्त्वा तृतीयपक्षे चासङ्गतमित्युक्त्वा द्वितीये कुतो व्यभिचार इत्युक्तम् । अन्यथा स्वरेण समासनिर्णयपक्षवत् समासेन स्वरनिर्णयपक्षेऽपि सन्देहरूपविशेषणेन व्यभिचारस्य परिहर्तुं शक्यतया ग्रन्थकृत्तथा परिहारं वर्णयेत् । यद्यपि बहुव्रीहौ विश्वं संज्ञायामित्यादिविषये विश्वरूपो वै त्वाष्ट्र इत्यादौ पूर्वपदान्त्यस्वरितत्वस्यापवादेनान्तोदात्ततायाः सत्त्वात् द्वितीयकल्पेऽपि व्यभिचारः शङ्क्योद्भावनस्तथापि





तस्य सामान्यविशेषभावाश्रयणेन परिहारः परस्यापि सम्मत एवेति न तदाशङ्कनं युक्तम् । अस्माभिस्तु यथोक्तनिमित्तनैमित्तिकभावे व्यभिचारस्याप्रसङ्गेऽपि प्रकृतोपयोगाश्रितपूर्वकल्पपर्यवसन्नकार्यानुमाने प्रागुक्तरीत्यैव व्यभिचारः परिहृत इति । वस्तुतस्तु एतेनेत्यस्य द्वितीयपक्षप्रापकं भाष्यमिति प्रतीतेस्तृतीयासमासाश्रयणेन मूलविघटनान्निराकरणेनेत्यर्थः । **गर्भस्त्रावेणैवेति** । तत्पक्षस्यैवानङ्गीकारेण तत्र प्रकृतोपयोगाय कार्यानुमानानङ्गीकारेण च त्वदनुमाने व्यभिचारचोदनस्य निर्विषयतया गर्भस्त्रावादेव तन्निराकृतं वेदितव्यमिति सूचितमित्यर्थान्न कश्चित्क्षुद्रोपद्रव इति ज्ञेयम् ।

असन्देहार्थं चाध्येयं व्याकरणमित्यत्र सन्देहशब्दं व्याकुर्वता कैयटेन सन्देहस्य प्रागभावोऽत्र वेदितव्यः । न तु प्रध्वंसाभावः । न हि वैयाकरणस्य संशय उत्पद्य विनश्यति इतरस्यैव तदुत्पादादिति प्रतिपादितं तदनुसारेण व्याचष्टे **सन्देहप्रागभावमित्यर्थ इत्यादिना** । अयमाशयः अभावे वर्तमानस्य नञः सन्देहशब्देन समासे सन्देहाभावमात्रलाभेऽपि प्रध्वंसस्यायोगात् प्रागभाव एव वाच्यः । तथाहि । प्रध्वंसो हि भवन्नभाववदनागतस्य तस्य निवर्तयितुमशक्यत्वात् । नाप्यतीतस्याकरणान्तरादेव तदुत्पत्तेः सिद्धत्वात् । नापि वर्तमानस्य सन्देहस्य । वर्तमानसन्देहध्वंसस्य विरोधिगुणान्तरोपनिपातमात्रसाध्यतया व्याकरणाप्रयोजनत्वात् । लोकसन्देहध्वंसस्तु व्याख्यातृपरम्परयैव सिद्ध्यति न प्रध्वंसस्य व्याकरणप्रयोजनत्वम् अपि तु प्रागभावस्यैव । न च प्रागभावस्यानादितया साध्यत्वायोगात् कथं व्याकरणप्रयोजनतेति वाच्यम् । हेतूच्छेदेषु पुरुषव्यापार इति न्यायेनोत्पत्स्यमानसन्देहप्रागभावपरिपालनस्यैव प्रागभावप्रयोजनत्वात् वादिनः प्रयोजनत्वेन विवक्षितत्वात् । परिपालनं च प्रतियोगिजनककारणविध्वंसनम् । तथाविधपरिपालनस्य प्रायश्चित्तादिना दुरितप्रागभावपरिपालनवत् प्रयोजनत्वं युक्तमिति । कर्मधारयबहुव्रीहिसन्देहप्रकारं स्पष्टत्वादनुक्त्वा अर्थतस्तत्सूचनमात्रं कुर्वन् समासद्वयेऽर्थभेदस्य सत्त्वात् सार्थको निर्णय इत्यपि दर्शयितुं तत्तत्समासस्वरूपमात्रप्रदर्शनपूर्वकं फलाभेदमात्रमाह **स्थूला चासावित्यादिना** । एतेन सन्देहप्रकारदर्शनाभावो व्याख्यानत्वव्यापकेत्यर्थ इत्यादेरभावाच्च अयुक्त इति दूषणानवकाश इति ज्ञेयम् । **पृषद्वतीमि**त्यनूद्य **बिन्दुमतीमि**ति व्याख्यानम् । **तानवं वेति** । धेन्वाः स्थूलपदेन स्थूलत्वमुक्तम् । तद्गतबिन्दूनां तु वचनाभावात् स्थूलत्वं तनुत्वं वा यथा तथास्त्वित्यर्थः । एवं गोपक्षेऽपि । विशेष इत्यनन्तरमेव सन्देहं व्युत्पाद्येत्यर्थ इति शेष इत्यपि वदन्ति । भाष्यकृता यद्यालिङ्गिततया समासज्ञापकभेदेन समासद्वयस्याभिधानेऽपि निर्णीताभिप्रेतपक्षस्यावचनेन न्यूनत्वमेव समासस्वरनिर्णयाय भाष्यप्रवर्त्यसमाससन्देहव्युत्पादनमात्रस्य भाष्यप्रयोजनत्वायोगादित्यतस्तत्पक्षसमर्पकत्वेन भाष्यं योजयितुं वाक्यशेषमाह **अन्तोदात्तस्थूलेति** । फिष इति प्रातिपदिकत्वेन स्थूलशब्दस्यान्तोदात्तत्वादिति भावः । **वाक्यशेष इति** । तत्पुरुष इति भाष्यवाक्यानन्तरं शेष इत्यर्थः । यद्यप्यत्र पूर्वान्तस्वरितत्वपूर्वपदान्तोदात्तत्वरूपनिमित्तद्वयस्य बहुव्रीहित्वज्ञापकताया बहुव्रीहौ प्रकृत्या पूर्वपदमित्यत्र परैरुक्तत्वादत्र च पूर्वान्तस्वरिते पुंसोरिति पूर्वान्तरस्वरितत्वरूपैकनिमित्तस्यैव तथात्वाभिधाने यत्र पूर्वान्तस्वरितत्वाभावस्तत्र बहुव्रीहित्वाभाव इति करणताप्रयोजकव्यतिरेकस्य वाच्यतया तत्र चैतन्निमित्ताभावेऽपि अग्न्याहित इत्यादौ पूर्वपदान्तोदात्ते बहुव्रीहित्वसत्त्वेन





तत्र व्यभिचारः स्यादित्यर्थकतया अत्र केचिदिति वाक्यं व्याख्याय द्वयनिमित्तमङ्गीकृत्यापि यत्र द्वयाभावेऽपि विश्वरूपो वै त्वाष्ट्र इत्यादौ बहुव्रीहिः तत्र बहुव्रीहौ विश्वमित्यादिविशेषवचनैरपवादस्याङ्गीकर्तव्यत्वात् एकस्य निमित्तत्वमङ्गीकुर्वता मयाऽपि पूर्वपदात्तोदात्तेऽपि यत्र बहुव्रीहिस्तस्यापवादविषयत्वाङ्गीकारान्न व्यतिरेकव्यभिचार इत्याशयकतया तदसत् सामान्येति वाक्यप्रवृत्तिमुपवर्ण्य एवं परैर्निमित्तद्वयाङ्गीकारेऽपि एकमेव निमित्तं स्वयमङ्गीकृत्य सामान्यविशेषभावाश्रयणेन व्यभिचारपरिहारः कृतः । इदानीं तु पूर्वान्तस्वरिते पुंसोरित्यत्र पूर्वान्तस्वरित इत्यनेन पूर्वपदप्रकृतिस्वरत्वस्योपलक्षणाङ्गीकारात् पूर्वपदान्तस्वरितत्वपूर्वपदान्तोदात्तत्वरूपनिमित्त-द्वयस्यापि लाभेन पूर्वपदान्तोदात्ते व्यभिचारशङ्कानवकाशात् निमित्तद्वयस्यापि सुगुरि(?)यदावभावाद्व्यभिचार इति शङ्कायाश्च बहुव्रीहौ प्रकृत्या पूर्वपदमित्यत्रापि साम्येन वैयाकरणेन तस्या अनुत्थाप्यत्वान्निमित्तद्वये परेणाभिहिते एकमात्रनिमित्ताभिधानायोग इति वैषम्यशङ्कामात्रपरिहाराय प्रवृत्तम् । अस्माभिस्तस्य अवश्यमपरिहार्यत्वाच्च नानुपपत्तिरित्याशयकतया किञ्चेतिवाक्यप्रवृत्तिरुपवर्णयितुं शक्या तथापि अपि चेति तृतीयपक्षानुसारेण न तथा तत्प्रवृत्तिरुपवर्णयितुं शक्या । तृतीयपक्षे हि प्रथमपक्ष एव विशेषणादानेन व्यभिचारः परिह्रियते । तत्र च टीकोक्तयोजनापक्षे तुल्यश्वेत इत्यादौ स्वरितपूर्वपदे यत्र स्वरितान्तपूर्वपदकत्वमित्यादि व्याप्तेर्व्यभिचारस्य सन्देहे सतीति व्याप्यकोटौ निवेशेन तत्र चासन्देहेन व्यभिचारो नास्तीति परिहारसम्भवेऽप्युक्तयोजनान्तरे यत्र स्वरितान्तपूर्वपदकत्वाभावः तत्र बहुव्रीहित्वाभाव इति व्याप्तेरग्न्याहित इत्यादौ व्यभिचारवारणं न युक्तम् । सन्देहे सतीत्यस्य प्रतियोगिविशेषणत्वे विशिष्टाभावस्य तत्रापि व्याप्तेः अभावविशेषणत्वेऽपि तत्पुरुषबहुव्रीहि-सन्देहस्य स्वरित इवोदात्तस्थलेऽप्यविशेषेण पूर्वपदान्तोदात्तकबहुव्रीहिसमासस्यापि स्वरितपूर्वपदान्तबहुव्रीहि-समासात् सन्दिग्धतया तत्र व्यभिचारशङ्कापरिहारायोगेन विशेषणदानवैयर्थ्यप्रसङ्गः । किञ्च योजनान्तरविशेषयो-रेवापवाद्यापवादकभावाश्रयणप्रसङ्गेन सामान्यलक्षणेत्यादिमूलास्वारस्यं प्रसज्यते ततस्तथाप्रवृत्तिमनुपवर्ण्य तत्पुरुषादौ व्यभिचारशङ्कादिपरत्वेनैव ग्रन्थो योजित इत्यवधेयम् । व्याख्यानान्तराणि तु टीकापर्यालोचनाया-मस्मदीयतद्व्याख्यानपर्यालोचनायां च पूतिकूष्माण्डीकृतानि भविष्यन्तीति न तन्निरासाय यतामहे इति सुज्ञामहे (?) जानन्तु ।

श्रीस्वामिचरणौ स्मृत्वा गुरुराजपदे अपि । यथाबुद्धि केचिदत्रेत्यादेर्व्याख्या विचारिता ॥
यत्नतो ह्यनुचिन्त्या सा समाहितमनस्विभिः । समाहितमनस्कस्य स्वयोग्योऽर्थः प्रकाशते ॥

**सापेक्षत्वादिति** । सापेक्षत्वे चासमर्थमतः समर्थाधिकारविहितसमासानुपपत्तिः 'सापेक्षमसमर्थमि'ति न्यायादिति भावः । एतच्च 'वृत्तौ हि राजपदमि'त्यादिना टीकायां किञ्चित् स्पष्टीभविष्यति । सापेक्षत्वोप-पादनादिकमधिकमदृश्यं तु आदिनये टीकातट्टीकयोर्व्यक्तं भविष्यतीति न तत्सापेक्षत्वमिति । अयमाशयः । 'पुंसोः पूर्वान्तस्वरिते सती'ति व्याख्याने हि सापेक्षत्वं प्रसज्यते । पुंसोरित्येतत्सामर्थ्यात् पुलिङ्गशब्दाख्य-पूर्वोत्तरभागसमर्पकं सत्तद्युक्तसमासप्रातिपदिकं लक्षणया बोधयतीति समासप्रातिपदिक एव सप्तम्यर्थान्वय इत्यभ्युपगमस्तदा समासप्रातिपदिके पूर्वान्तस्वरिते सतीति सामानाधिकरण्येन योजनाप्राप्त्या समासप्रातिपदि-





कस्य च पूर्वोत्तरभागवत्तया पूर्वान्ते पदस्येतरसापेक्षत्वाभावेन स्वरितपदेन समासो युक्त इति । एतेनैव पुंसोरित्यस्यानन्वयशङ्कापरिहाराय पुंसोः सम्बन्धिनि समासप्रातिपदिक इति सम्बन्धाङ्गीकारेण व्याख्यानं अन्यथाख्यात्यादौ कृतमपास्तं वेदितव्यम् । समासप्रातिपदिक इत्यस्य पुंसोरित्येतदर्थतया मूलेऽभिधानेन तदज्ञात्वा अध्याहारे मूलतात्पर्यं परिकल्प्यान्वयकथनायोगात् । **सप्तमीति** सप्तम्यन्तं विशेषणं च बहुव्रीहौ प्राक्प्रयोज्यमिति सूत्रार्थः । कण्डकाल इति सप्तम्यन्तोदाहरणं पीताम्बर इत्यादिकं तु विशेषणोदाहरणमिति ज्ञेयम् । **अन्वर्थत्वादिति** । लोके ह्यप्रधानमुपसर्जनमित्युच्यते । तथा चाप्रधानस्यैवोपसर्जनाख्यमहासंज्ञाकरणमिति वैयाकरणनिर्णयादिति भावः । गुणवाचकयोरित्यादौ खंजकुब्जः पाचकपाठकः खंचपाजक इत्याद्युदाहरणानि क्रमेण ज्ञेयानि । गुणद्रव्यवाचकयोरित्यादेस्तु नीलोत्पलं पाचकब्राह्मणः शिंशुपावृक्ष इत्याद्युदाहरणानि । तत्र द्रव्यविषययोरुभयोरपि प्रधानवाचितया कथं पूर्वनिपात इत्यत उक्तं **बह्वल्पविषययोरिति** । उभयोर्द्रव्यवाचकत्वाविशेषेऽपि वृक्षत्वशिंशुपात्वयोर्मध्ये वृक्षस्य व्यापकत्वात् महाविषयत्वात् दूरात् प्रथमत एवोपलम्भाच्च प्राधान्यमितरस्य तदभावादप्राधान्यमिति तच्छब्दयोरपि पूर्वनिपातनियमो युक्त इत्याशयः । बह्वल्पेति यथायोग्यं सम्भवनीयम् । किञ्चिदधिकमहिकुण्डलाधिकरणे वक्ष्यामः ।

**स०व्र०— अत्र केचिद्व्यभिचारमिति** । अत्र हि यो बहुव्रीहिः स स्वरितपूर्वपदान्तः यः स्वरितपूर्वपदान्तः स बहुव्रीहिरित्युभयथाऽपि व्याप्तिरभिमता अस्य । सूत्रस्य स्वनिर्णयार्थत्वादाद्या व्याप्तिरत्राभिप्रेतेति गम्यते । अत एव स्वरविनिर्णय इत्याहेति वक्ष्यति । प्रकृते समासनिर्णयार्थमुदाहृतत्वाद्द्वितीयापि । एवं चात्राभिमते येऽपि केचित् वैयाकरणाः व्यभिचारमुद्भावयन्तीत्यर्थः । तथा हि । न तावदाद्याव्याप्तिः सम्भवति ब्रह्मचारिपरिस्पन्द इति बहुव्रीहेः स्वरितपूर्वपदान्तत्वाभावात् । बहुव्रीहौ प्रकृत्या पूर्वपदमित्यन्तोदात्तत्वात् । नापि द्वितीया । आर्यब्राह्मणः आर्यकुमार इति कर्मधारयसमासे व्यभिचारात् आर्यशब्दस्य ण्यदन्तत्वेन स्वरितान्तत्वात् । 'आर्यो ब्राह्मणकुमारयोरि'त्यनेनैवात्रापि पूर्वपदप्रकृतिस्वरत्वविधानेन न समासान्तोदात्तत्वप्राप्तिः ततश्चोभयथापि व्याप्तिरनुपपन्नेति । अत्र यद्यपि प्रकृतसङ्गतत्वात् द्वितीयैव व्याप्तिर्विचार्या । तथाऽप्याद्याया अपि सूत्रार्थतया अभिप्रेतत्वस्योक्तत्वेन तस्यापि विचार्यतेत्यवगन्तव्यम् । **सामान्यलक्षणप्राप्तं हीति** । सामान्यसूत्रप्राप्तं हीत्यर्थः । तथा च विशेषसूत्रविहितस्थलव्यतिरिक्तस्थले प्रागुक्तव्याप्त्योरुपपत्तिः इत्यर्थः । ब्रह्माधिपतिरित्यत्रेन्द्रशत्रुरित्यत्र च पूर्वपदान्तस्य स्वरितत्वेऽपि समासान्तरप्रापकं विशेषसूत्रं न किमप्यत्रास्तीति भावः । एवं द्वयं व्यभिचारं परिहृत्याऽऽद्यप्रकारान्तरेणापि परिहरति **किं चानेन सूत्रेणेति** । **ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वादिति** । समासकालेऽपीति शेषः । तथा च यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपद इत्येव व्याप्तिर्न तु स्वरितपूर्वपदान्त इति । अतो नोक्तव्यभिचार इति भावः । यद्यप्यस्याप्यर्थस्य बहुव्रीहौ विश्वं संज्ञायामित्यादिना विश्वदेव इत्यादौ पूर्वपदप्रकृतिस्वरापवादेनान्तोदात्तता विहिताऽतो व्यभिचार एव । तथाऽपि समासस्येत्यनेन विहितसमासान्तोदात्तत्वाभावस्य व्यापकतया विवक्षितत्वान्न कुत्रापि व्यभिचार इति ध्येयम् । ननु प्रकृतानुपयुक्तेयं व्याप्तिरेतत्सूत्रार्थतया कुतोऽभिमतेति कल्प्यते येन तद्व्यभिचारपरिहारादिकं सङ्गतं स्यादित्यत आह **अत एव स्वर-**





**विनिर्णय इत्याहेति** । यत एव इयं व्याप्तिरेतत्सूत्रार्थतया ग्रन्थकृतोऽभिमता अत एवेत्यर्थः । द्वितीयेऽर्थेऽपि व्यभिचारं प्रकारान्तरेण परिहरति **अपि च सन्देहे सतीत्यादिना** । **असन्देहं प्रयोजनमिति** । व्याकरणशास्त्रं निष्प्रयोजनमिति अनारम्भणीयमित्याशङ्कायां वैदिकप्रयोगेषु सन्देहाभाव एव व्याकरणप्रयोजनमिति व्याचक्षाणेनेत्यर्थः । **तथा चासन्दिग्धे व्यभिचारोद्भावनमिति** । एवं च सन्दिग्धसमासत्वे सति यः पूर्वपदप्रकृतिस्वरः स बहुव्रीहिरिति द्वितीयव्याप्तौ विवक्षितत्वान्न कोऽपि दोषः । अत्र तत्पुरुषे तुल्यार्थेत्यादिविषये 'यतो नाव' इत्याद्युदात्ततुल्यपूर्वपदतुल्यश्वेत इत्यादि तत्पुरुषे इगन्तकालेत्यादिविषये ञः सञ्ज्ञायां इत्याद्युदात्तपञ्चपूर्वपदकपञ्चवर्ष इत्यादिद्विगौ आर्यब्राह्मणेत्यादि विषये ण्यदन्तस्वरितान्तपूर्वपदके आर्यब्राह्मण इत्यादि कर्मधारये सङ्ख्येत्यादिविषये कृन्नन्ताद्युदात्तैकपूर्वपदकैकादशेत्यादि द्वन्द्वे च स्वरितपूर्वपदान्तत्वेऽपि बहुव्रीहित्वभावात् व्यभिचार उक्तलक्षणस्येति केषाञ्चिद्वैयाकरणंमन्यानां भ्रान्तिं प्रतिक्षेप्तुमुद्भावयति **अत्र केचिदिति** । पूर्वान्तस्वरित इति सामान्यवतोऽस्य महाव्याकरणस्थलक्षणस्य समासान्तरविधायकतुल्यार्थादिविशेषवत्स्थलसूत्रे विषये व्यभिचारोद्भावनं कर्मण्यणित्यादेः आतोऽनुपसर्गे कः इत्यादि गोदः कम्बलद, इत्यादौ व्यभिचारोद्भावनेन, समासस्येत्यत बहुव्रीहौ प्रकृत्येत्यादिविषये व्यभिचारोद्भावनेन च तुल्ययोगाक्षेममित्यसाम्प्रदायिकं वैयाकरणानाम् इत्यभिप्रेत्य वैयाकरणसम्प्रदायं तत्सम्मत्यैव दर्शयन् समाधत्ते **सामान्येति** । शब्दानुशासनहेतुप्रकृत्यादिविभागकल्पनाप्रकरणे । **सामान्यविशेषवता लक्षणेनेति** । तृतीया एवं सूत्रस्य यथास्थितार्थमङ्गीकृत्य परन्यायेनैवास्य व्यभिचारसमाधानमभ्यधायि । अधुना परकीयव्यभिचारशङ्कावकाशशून्यप्रसिद्धव्याकरणानुसारिसूत्रस्यार्थान्तरमाह **किञ्चेति** । एवं च निमित्तनैमित्तिकभावव्यत्यासं बहुव्रीहित्वं शब्दान्तर्गतभावप्रत्ययस्य च पूर्वपदप्रकृतिस्वरत्वोपलक्षकपूर्वान्तस्वरितशब्देन सम्बन्धं चाङ्गीकृत्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं भवतीति सूत्रं व्याख्यातं भवति । ननु सूत्रस्य यथास्थितार्थकत्वे स्वरेण समासनिश्चायकत्वेनास्य प्रकृतोपयोगेऽप्यर्थान्तरपक्षे समासेन स्वरनिश्चायकताऽऽपत्त्या नास्य सूत्रस्य प्रकृतोपयोग इत्यतो बहुव्रीहिनिमित्तकपूर्वपदप्रकृतिस्वरत्वं विदधताप्यनेन पूर्वपदप्रतीतिस्वरेण कार्येण बहुव्रीहिस्वरूपनिमित्तनिश्चयस्याभ्यनुज्ञातत्वात् युक्तोऽस्य प्रकृतोपयोग इत्यभिप्रेत्य कथं ब्रह्माधिपतीन्द्रशत्रुसमासयोः पूर्वपदप्रकृतिस्वरत्वं येन बहुव्रीहित्वं निश्चिनुमः इत्याशङ्कापरिहाराय तयोः पूर्वपदप्रकृतिस्वरत्वमुपपादयति **ब्रह्मेन्द्रशब्दयोरिति** । ब्रह्मशब्दस्य मनिन्प्रत्ययान्तत्वेनेन्द्रशब्दस्य रन्प्रत्ययान्तत्वेन नित्वात् ञ्नित्यादिर्नित्यमित्यादिभूताकारेकारयोरुदात्तत्वे अनुदात्तं पदमेकवर्जमिति शेषभूताकारयोरनुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तयोरेव स्वरितत्वे ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वादित्यर्थः । यथास्थितनिमित्तनैमित्तिकभावव्यत्यासाद्यभ्युपगमगौरवमुपलभ्य समासानन्तर्गतयोरेतत्समासान्तगतयोश्चेति शेषः । नन्वेवमपि पूर्वोदाहृतेष्वेव सत्यपि पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वाभावाद्व्यभिचार इत्यतो बहुव्रीहौ प्रकृतेत्यादिप्रसिद्धव्याकरणेऽप्येवं निमित्तनैमित्तिकभावाश्रयणात् । यदि पूर्वपदप्रकृतिस्वरत्वं तर्हि बहुव्रीहिरिति वदता भाष्यकारेण पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वनिश्चयस्याभिप्रेतत्वात् तत्रत्यव्यभिचारशङ्कायाश्च सामान्यविशेषाभावादिनोभयसमाधेयत्वात् नास्मान्प्रत्येव पर्यनुयोगो युक्त इत्याह **तथा चेति** । अन्यथा परस्यापीदं दूषणं समानमित्याह **यथाऽऽहेति** । एवमर्थान्तरवर्णनेऽनुव्याख्यानज्ञापकमाह **अत एवेति** । अस्मिंश्च पक्षे । यथास्थितनिमित्तनैमित्तिकभावपक्षमेवा-





भ्युपेत्य विशेषनिर्णायकभावेन सन्देहप्रसक्तिस्थल एव निर्णयार्थं प्रवृत्तस्य प्रकारान्तरेणासन्दिग्धे व्यभिचारोद्भावनमप्यसाम्प्रदायिकं वैयाकरणानां इत्यभिप्रेत्य सन्देहस्थल एव पूर्वपदप्रकृतिस्वरत्वादिकं बहुव्रीहित्वादिनिश्चायकं इत्येतद्भाष्यसम्मत्या द्रढयति **अपि चेति** । एतेन स्वरनिर्णय इत्येतदप्यन्यथासिद्धमित्युक्तं भवति । एतेन द्वितीयपक्षेऽपि व्यभिचारचोदनं गर्भस्रावेणैव गतं वेदितव्यम् । **असन्देहमिति** । सन्देहप्रागभावमित्यर्थः । वैयाकरणस्य सन्देहासम्भवेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यम् । **सन्देहं व्युत्पाद्येति** । स्थूला चासौ पृषती चेति स्थूलपृषतीति कर्मधारयः । अत्र पृषतीशब्दो मत्वर्थलक्षणया पृषद्वर्ती बिन्दुमर्ती धेनुमाह । स्थूला च सैव । बिन्दूनां स्थौल्यं तानवं वा यथा तथाऽस्तु । स्थूलानि पृषन्ति यस्यामिति बहुव्रीहिः । अत्र स्थौल्यं पृषतामेव लभ्यते । स्थौल्यं तानवं वा गोरस्त्विति शेषः । **यदीति** । अन्तोदात्तस्थूलशब्दस्य समासेऽपि तथैव श्रवणात् । पूर्वपदप्रकृतिस्वरेण बहुव्रीहित्वनिश्चय इति वाक्यशेषः । आदिशब्देन सन्देहस्थल एव नियमार्थं प्रवृत्ते 'षष्ठीस्थाने योगे'-त्यनेन विशेषविहितावयवषष्ठ्या निवृत्तिरिति षष्ठी स्थाने योगेत्यत्र भाष्यग्रन्थसङ्ग्रहः । **सामर्थ्याभावेनेति** । समस्यमानयोः पुंसोर्मध्ये पूर्वपदे पूर्वान्ते स्वरिते सतीत्युक्तौ हि न वाक्यार्थो घटते । अतः कथं पूर्वान्तस्वरित इति समास इत्यर्थः । **समासप्रातिपदिक इति** । पूर्वान्तस्वरित इत्यस्य यदि पूर्वपद इति विशेष्याध्याहारः तदा परमसामर्थ्यं स्यात् । न चैवम् । किन्तु समासप्रातिपदिक इति विवक्षितत्वादिति भावः । यद्वा पूर्वान्तपदस्य पुंसोरित्येतस्यापेक्षत्वेनेति भावः । **इति व्याख्यानमिति** । विशेषणस्य भेदकत्वेन पूर्वान्तपदस्यापूर्वान्तात् स्वरितव्यावर्तकत्वस्य स्वरितपदस्य चास्वरितात् पूर्वान्तव्यावर्तकत्वसम्भवेनोभयोरपि तत्त्वसम्भवादित्यर्थः । विशेषणविशेष्यभावस्य कामचारेऽपि उपसर्जनसंज्ञाया अन्वर्थत्वात् स्वरितशब्दस्य पूर्वान्तनिष्ठधर्माभिधायकत्वेन अप्रधानवाचित्वात् तस्यैव पूर्वनिपातेन भाव्यम् । अन्यथा कर्मधारये गुणवाचकयोः क्रियावाचकयोर्गुणक्रियावाचकयोर्वा द्रव्यपूर्वनिपातानियमवत् गुणद्रव्यवाचकयोः क्रियाद्रव्यवाचकयोर्द्रव्यवाचकयोरपि बह्वल्पविषययोः पूर्वनिपातानियमः स्यादित्यस्वरसात्पक्षान्तरमाह **आहिताग्न्यादित्वादिति** ।

**स०ना०**— न हि हर्यर्थमिति प्रातिपदिकं इकारान्तपूर्वपदं न पठ्येत इत्येतावता इकारान्तपूर्वपदं न भवति । अत्र केचिद्व्यभिचारमुद्भावयन्तीति । अयं ब्राह्मण इत्यस्य ऋहलोर्ण्यदिति ण्यत्प्रत्ययान्तस्य तित्स्वरितमिति स्वरितत्वेन पूर्वपदान्तस्वरितत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचारं चोदयन्तीत्यर्थः । **सामान्यलक्षणे व्यभिचारोद्भावनमिति** । पूर्वपदान्तस्वरितत्वे बहुव्रीहित्वमित्युत्सर्गः । न चोत्सर्गे व्यभिचारं चोदयन्ति प्राज्ञाः अन्यथा अन्नमिष्टसाधनमन्नत्वादित्यत्र विषसम्पृक्ते व्यभिचारचोदनप्रसङ्ग इति भावः । बहुव्रीहौ पूर्वपदप्रवृत्तिं **स्वरत्वमुपलक्ष्यत इति** । पूर्वपदान्तस्वरितत्वं बहुव्रीहि चेत्युक्तः अपि तु बहुव्रीहिः । अत एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वमुपलक्ष्यत अन्यथा पूर्वपदप्रकृतिस्वरितत्वमित्येवावक्ष्यत् । पूर्वपदप्रकृतिस्वरत्वं हेतुर्विवक्षित इत्यर्थः । **तथा च कुतो व्यभिचार इति** । आर्यब्रह्मण इत्यत्र आर्यो ब्राह्मणकुमारयोरिति कर्मधारयमिति । तत्पूर्वपदप्रकृतिस्वरत्ववद्भावेऽपि बहुव्रीहिनिमित्तकपूर्वपदप्रवृत्तिस्वरत्वाभावान्न व्यभिचार इत्यर्थः । न हि पर्णजन्यवह्निविशेषणकारणीभूतपर्णानुमाने तृणजन्यवह्निना व्यभिचारो भवतीति भावः । न बहुव्रीहिसमाससिद्धौ





बहुव्रीहिनिमित्तकपूर्वपदप्रकृतिस्वरत्वसिद्धिः । तत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रय इति वाच्यम् । बहुव्रीहित्वसिद्ध्या विनापि स्वरशास्त्रपर्यालोचनया तत्सिद्धेः । न हि स्वर्गसाधनज्योतिष्टोमाद्यनुष्ठानेन स्वर्गत्वसाधने अन्योन्याश्रयमुद्भावयति । **अपि च सन्देहे सतीति** । वेदे समास सन्देहे सति स्वरेण समासनिर्णयार्थमिदमुच्यत इत्यर्थः । वेदे यत्पूर्वपदान्तस्वरितः स बहुव्रीहिरेवेति नियम इति भावः । स्वरेण समासनिर्णयस्तु वेद एव नान्यत्रेतीममर्थं महाभाष्यसम्मत्या दृढयति **यथोक्तमिति** । 'स्थूलपृषतीमनड्वहीमालभेते'ति वैदिकोदाहरणाद्भाष्यकाराभिप्रायः । तथा ज्ञायत इति भावः । **तथा चासन्दिग्ध इति** । अप्रयोजनत्वात् । सन्देहमुत्पाद्य विचारात्तनानार्हे लौकिकवाक्य इत्यर्थः । वेदे पूर्वपदान्तस्वरितो यः स बहुव्रीहिरित्युक्ते अवेदे व्यभिचारे चोदनमयुक्तमिति भावः । अन्यथा लोके यः कर्ता सः श्रमवानित्युक्ते ईश्वरेऽपि व्यभिचारचोदनप्रसङ्गः ।

**वतिशब्दो ज्योतिष्टोमस्याभिधायक इति** (?) । तद्वदेव अन्नमयशब्दोऽपि अन्नमयस्य वाचकः व्युत्पादनप्रकारसाम्यादिति भावः ।

**विठ्ठल०— उत्तरश्रुतिबलादिति** । तस्मादस्येन्द्रः शत्रुरभवदिति यो स्वाहेन्द्रशत्रो इत्यस्माद्धुतवानिति श्रुतिः तद्बलादित्यर्थः । **पुंसोः पुल्लिङ्गयोरिति** । अत्र समस्यमानयोः पूर्वपदान्ते स्वरितस्वरे सति तत्समासप्रातिपदिकं बहुव्रीहित्वमेतीत्येवोक्ते कन्याप्रियो मृदङ्गः धान्यपतिरित्यादौ पूर्वपदान्तस्य स्वरितत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचारः । तद्वारणाय पुंसोरित्युक्तम् । समस्यमानयोरुभयोः शब्दयोः पुल्लिङ्गत्वे एव बहुव्रीहित्वविधानात् कन्याधान्यशब्दयोः स्त्रीनपुंसकत्वान्न व्यभिचार इति भावः । कन्याधान्यशब्दौ प्रकृत्या स्वरितान्तौ 'तिल्यशिक्यमत्यकार्ष्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' इति फिट् सूत्रेण प्रकृतिस्वरितत्वविधानात् कन्याप्रिय इत्यत्र समासस्येनेन (?) अन्तोदात्ततया अनुदात्तं पदमेक वर्जमिति प्राप्तावपि प्रीतौ चेति सूत्रेण अतिशयितप्रीतौ गम्यमानायां सुखप्रिययोरुत्तरपदयोस्तत्पुरुषसमासे पूर्वपदप्रकृतिस्वरत्वविधानात् स्वरितान्तत्वमेव । एवं धान्यपतिरित्यत्रापि पत्यावैश्वर्य इति सूत्रेणैश्वर्यवाचिपतिशब्दे परतः तत्पुरुषे पूर्वपदप्रकृतिस्वरत्वविधानात् स्वरितान्तत्वं ध्येयम् । **अत्र केचिद्व्यभिचारमुद्भावयन्ति इति** । अत्रोदाहृतमहाव्याकरणसूत्रे पूर्वान्तस्वरिते बहुव्रीहित्वं भवतीति यत्र पूर्वपदान्तस्वरितस्तत्र बहुव्रीहित्वमिति व्याप्तिः प्रतीयते इति स्वरविनिर्णये इत्युक्त्या समासेन स्वरनिर्णयः कार्य इति लाभात् यत्र बहुव्रीहिः तत्र पूर्वपदान्तत्वमिति च व्याप्तिः प्रतीयते । तथा च अत्रोभयत्रापि केचिद्वैय्याकरणा व्यभिचारमुद्भावयन्तीत्यर्थः । तथाहि । आर्यब्राह्मणः आर्यकुमारः इत्यत्रार्थशब्दस्य ऋगताविति धातोः ऋहलोर्ण्यत् इति सूत्रेण ण्यत्प्रत्ययान्ततया निष्पन्नत्वात्तस्य च ण्मित् स्वरित इति स्वरितान्तत्वात् स्वरितान्तपूर्वपदत्वेऽपि कर्मधारयत्वेन बहुव्रीहित्वाभावाद्यत्र स्वरितान्तपदत्वं बहुव्रीहिरिति व्याप्तेर्व्यभिचारः । एवं यत्र बहुव्रीहिस्तत्र स्वरितान्तपूर्वपदत्वमिति व्याप्तिरपि व्यभिचारिता । ब्रह्मचारिपरिस्पन्द इत्यत्र ब्रह्मचारिण इव परिस्पन्दो यस्येति बहुव्रीहिसमासत्वेऽपि स्वरितपूर्वपदान्तत्वाभावात् । तत्र पूर्वपदभूतब्रह्मचारिपदस्य कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वात् । गतिकारिकोपपदात्कृत्गतेरुपसर्गात्कारकात् उपपदाच्च परं कृदन्तं पदं पूर्वपदप्रकृतिस्वरत्वं लभत इति बहुव्रीहौ प्रकृत्याः पदमिति चोक्तपूर्वपदस्य तत्रोदात्ततया निर्णीतत्वात् ।





तथा च उभयत्रापि व्यभिचार एवेति । **तदसदिति** । कुत इत्यतः सामान्यसूत्रानुसारेणैवेयं व्याप्तिरुक्ता यत्र तु बलवदपवादस्तत्रान्यथात्वं च । न हि क्वचिदपवादोऽस्तीत्येतावतोत्सर्गसूत्रोक्तव्याप्तेर्दुष्टत्वं भवति । व्यभिचार्यपवादेन मानमेव भविष्यतीत्युक्तेरित्याशयेन आह **सामान्यलक्षणप्राप्तं हीति** । लक्षणशब्दोऽत्र सूत्रपरः । अत्र महाभाष्यसम्मतिमाह **यथोक्तमिति** । सामान्यविशेषभावापन्नेन सूत्रेण शब्दानुशासनं क्रियत इत्यर्थः । ननु सामान्यलक्षणप्राप्तस्य विशेषलक्षणेन क्वचिदपवादे ब्रह्माधिपतीन्द्रशत्रुप्रातिपदिकयोरप्यविश्वासः स्यादित्यभिप्राय इति चेन्न, अत्रापवादकविशेषलक्षणाभावात् । अन्यथा सर्वत्राप्येवमनाश्वासप्रसङ्गेन सामान्यविशेषसूत्रैः क्रियमाणव्याकरणमर्यादोच्छित्तिप्रसङ्गात् इति भावः । एवं व्याप्तिद्वये शङ्कितव्यभिचारमुभयत्रापि साधारण्येन परिहृत्य यत्र बहुव्रीहिस्तत्र स्वरितपूर्वपदान्तत्वमिति व्याप्तौ समाधानान्तरमाह **किञ्चानेन सूत्रेणेति** । अनेन पूर्वान्तस्वरित इत्युदाहृतसूत्रेण बहुव्रीहौ पूर्वपदस्य स्वरितान्तत्वमिति न नियमः किं तु पूर्वपदप्रकृतिस्वरत्वमुपलक्ष्यते । तथा च पुलिङ्गशब्दयोः बहुव्रीहौ पूर्वपदप्रकृतिस्वरतानियमात् ब्रह्मेन्द्रशब्दप्रातिपदिकयोस्तत्पुरुषादित्वे समासस्येत्यन्तोदात्तताप्राप्तावनुदात्तं पदम् इति दोषात् स्वरनिपातेन पूर्वस्य स्वरितान्तता न स्यात् । अतो ब्रह्मेन्द्रशब्दयोः समासकालेऽपि स्वरितान्तत्वात् बहुव्रीहित्वमेव । एवं च यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपदान्त इत्येव व्याप्तेरभिप्रेतत्वेन नोक्तव्यभिचारशङ्केति भावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वमेवेत्यत्र पाणिनिसूत्रं संवादयति **यथाहेति** । बहुव्रीहिसमासे पूर्वपदं प्रकृत्या भवति प्रकृतिस्वरत्वं प्राप्नोति इति सूत्रार्थः । ननु मूलोदाहृतसूत्रे स्वरितपूर्वपदान्तत्वे बहुव्रीहिरिति व्याप्तेरेवोक्तत्वेन यत्र बहुव्रीहिस्तत्र स्वरितपूर्वपदान्तमिति व्याप्तेरनुक्तत्वात् अत्र व्यभिचारशङ्कापरिहारावसङ्गताविति । अत आह **अत एवेति** । यत इयमपि व्याप्तिरभिप्रेता अत एवेत्यर्थः । **अन्यथेति** । समासेन स्वरनिर्णयस्यानभिप्रेतत्वे स्वरेणैव समासनिर्णयाभिप्राये समासस्यैव निर्णेयतया समासनिर्णय इत्येवावक्ष्यत; न तु स्वरनिर्णय इतीत्यर्थः । **असन्देहं प्रयोजनमिति** । व्याकरणशास्त्रमनारम्भणीयं निष्प्रयोजनत्वादित्याशङ्कापरिहाराय रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति प्रतिज्ञाय एवं वा समासः अन्यथा वेति सन्देहे तदभावः प्रयोजनमित्यसन्देहं प्रयोजनमित्यस्य विवरणं कुर्वता महाभाष्यकारेण 'स्थूलपृषतीमनड्वहीमालभेते'ति श्रुतौ स्थूलपृषतीशब्दे तत्पुरुषो बहुव्रीहिर्वेति सन्देहं व्युत्पाद्य पूर्वं स्थूलपदं प्रकृतिस्वरोदात्ततयाऽवतिष्ठते तदा स्थूलपृषतीशब्दस्य बहुव्रीहित्वं, यदि च समासस्येत्यन्तोदात्तत्वं तदा पूर्वपदस्यानुदात्तं पदमित्युदात्तान्ततया तत्पुरुषत्वमिति स्वरेण सन्देहाभावो व्युत्पादित इत्यर्थः । पृषन्तीशब्देनात्र बिन्दुरुच्यते । स्थूलाः पृषत्यो यस्याः सा गौः स्थूलपृषती, तत्पुरुषपक्षे तत्पुरुषशब्देनात्र कर्मधारयो विवक्षितः पृषतीशब्दे(न) मत्वर्थलक्षणया, स्थूला च सा पृषती बिन्दुमती च गौरित्यर्थ इति ज्ञेयम् । अस्त्वेवं ततः किं इत्यत आह **तथा चेति** । तथा च सन्दिग्धसमासत्वे सति पूर्वपदप्रकृतिस्वरत्वं यत्र तत्र बहुव्रीहिरिति विवक्षितत्वात् असन्दिग्धकर्मधारयतया निर्णीत आर्यब्राह्मण इत्यादौ सन्दिग्धसमासत्वे सतीति विशेषणायोगेन व्याप्यस्याभावात्तत्र व्यभिचारोद्भावनम् असङ्गतमिति भावः । **सामर्थ्याभावेनेति** । पूर्वान्तस्वरित इत्यत्र पूर्वपदान्तस्वरे स्वरिते सतीत्यर्थो विवक्षितः । न चैवं सति पूर्वान्तं च तत्स्वरितं चेति कर्मधारयसमासो भवति । निर्णीतविशेष्यविशेषणरूपसामर्थ्याभावेन विशेषणं विशेष्येण बहुलम् इत्युक्तकर्मधारयानुपपत्तेः समर्थः पदविधिरि-

त्यधिकारसूत्रे सामर्थ्य एव समासोक्तेरिति भावः। पूर्वान्ते स्वरिते सतीति नार्थो विवक्षितः किं तु पूर्वान्तः स्वरितो यस्येति बहुव्रीह्याश्रयणात्। न चैवं सति पूर्वान्तस्वरिते इत्यस्य विशेष्याभावेन अपूर्णं वाक्यमिति वाच्यम्। समासप्रातिपदिक इति तत्राध्याहारेणोपपत्तेरित्याशयेन समाधत्ते **मैवमिति**। तथा च पुंसोः शब्दयोः समस्यमानयोः समासप्रातिपदिके स्वरितपूर्वपदान्ते सति तत्समासप्रातिपदिकं बहुव्रीहित्वमेष्यतीति मूलयोजना। **कामचारित्वादिति**। तथा चात्र स्वरितपदस्य विशेष्यतया विवक्षितत्वात् अदोष इति भावः। अस्तु वा स्वरितपदस्य विशेषणत्वं तथापि आहिताग्निष्विति सूत्रे आहितादिगणप्रविष्टस्य विशेष्यस्यापि पूर्वनिपातोक्तेः आकृतिगणत्वेन तन्मध्येऽस्यापि ग्रहणसम्भवाददोष इत्याह **आहिताग्न्यादित्वाद्वेति इति**।

**चषकः**— **पुंसोः पुंलिङ्गयोरिति**। एतच्चाश्वपते गोपते इत्यादौ पूर्वपदस्वरितान्तत्वेऽपि बहुव्रीहित्वाभावात्तत्र व्यभिचारपरिहारायेत्युक्तं नयचन्द्रिकायामिति व्याचक्षते। कन्याप्रियो मृदङ्गः धान्यपतिरित्यादितत्पुरुषस्थले पूर्वपदान्तस्वरितत्वसत्त्वेऽपि बहुव्रीहित्वाभावेन व्यभिचारवारणायेदं विशेषणम्। कन्याप्रियो मृदङ्ग इत्यत्र 'प्रीतौ च' इति सूत्रेणातिशयितप्रीतौ गम्यमानायां सुखप्रिययोरुत्तरपदयोस्तत्पुरुषसमासे पूर्वपदप्रकृतिस्वरत्वं विहितम्। धान्यपतिरित्यत्र च पत्यावैश्वर्य इत्यैश्वर्यवाचिपतिशब्दे परे तत्पुरुषसमासे पूर्वपदप्रकृतिस्वरत्वं विहितम्। कन्याधान्यशब्दौ च फिट्सूत्रेण स्वरितान्तौ। तथा च तत्रोक्तनियमस्य व्यभिचारे प्राप्ते पुंसोरित्युक्तम्। उक्तोदाहरणयोस्तु कन्याधान्यशब्दयोरपुंस्त्वेन समस्यमानयोरुभयोः पुंस्त्वस्य विवक्षितस्याभावान्न व्यभिचार इत्यपि व्याकुर्वते। अत्र पदद्वयस्यापि पुंस्त्वनियमो न विवक्षितः अन्यथा पूर्वपक्षानुसारेण सहस्रप्रधानेष्वित्यत्र बहुव्रीहिर्न स्यात्। किञ्चेत्युत्तरपक्षानुसारेणानवद्यैरभिद्युभिरित्यस्य पूर्वोदाहृतस्य पूर्वपदप्रकृतिस्वरत्वं न स्यादिति द्रष्टव्यम्। तत्र ब्रह्माधिपतिरित्यत्र ब्रह्मशब्दस्य नपुंसकत्वेऽपि न तद्विषये एतत्सूत्रोदाहरणासङ्गतिरिति ध्येयम्। वस्तुतो ब्रह्माधिपतिर्यस्येति प्रकृते उभयोः पुल्लिङ्गत्वेऽप्यदोषः। न च पुल्लिङ्गब्रह्मशब्दस्य न विष्णुपरत्वमिति वाच्यं 'स आविवेश ब्रह्मा ब्रह्माणं चतुर्मुखमित्यादौ पुल्लिङ्गस्यापि ब्रह्मशब्दस्य विष्णौ प्रयोगादिति द्रष्टव्यमित्यपि प्रपञ्चितम्।

**अत्र केचिदिति**। बहुव्रीहित्वे स्वरितान्तपूर्वपदावयवकत्वनिरूपितास्वरितान्तपूर्वपदावयवकत्वे बहुव्रीहित्वनिरूपिता च व्याप्तिर्द्वय्यभिप्रेयते। स्वोदाहृतमहाव्याकरणसूत्रस्य स्वरविनिर्णयार्थतया मूलकाराभिहिततयाऽऽद्या प्रकृते समासनिर्णयार्थं तस्य तदुदाहृततया द्वितीयापि। इत्थं च दर्शितग्रन्थकृदभिप्रेतव्याप्तिद्वये केचित्पाणिनीया अनैकान्त्यमुद्भावयन्तीत्यर्थः। ब्रह्मचारिपरिस्पन्द इति बहुव्रीहिघटकपूर्वावयवभूतब्रह्मचारिपदस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्ततया स्वरितान्तपूर्वपदावयवकत्वाभावेन सामासिकान्तोदात्तत्वस्य च बहुव्रीहौ प्रकृत्या पूर्वपदमित्यपोदिततयाद्यव्याप्तिरभांक्षीदेव। आर्यब्राह्मण आर्यकुमार इति कर्मधारयघटकपूर्वावयवभूतार्यपदस्य ऋहलोरित्यनुशिष्टण्यदन्तत्वेन तित् स्वरितमिति स्वरितान्ततया तत्र च बहुव्रीहित्वाभावेनार्यो ब्राह्मणकुमारयोरित्यनेन पूर्वपदप्रकृतिस्वरविधानेन सामासिकान्तोदात्तत्वस्याप्यप्राप्त्या द्वितीयाऽपि तथैव। प्रकृतौपयिकद्वितीयव्याप्तेरेव विचार्यतायामपि प्रथमव्याप्तिरपि सूत्रार्थतया मूलकाराभिहितेति सापि विचार्यत





इति हृदयम् । विशेषवतेत्यादिसामान्यशब्दानुशासनहेतुप्रकृत्यादिविभागकल्पना क्रियत इत्यर्थः । **सामान्यलक्षणेति** । करणसाधनल्युडन्तलक्षणशब्दोऽयं च सूत्रवचनः । उत्सर्गशास्त्रप्राप्तं हीत्यर्थः । **तत्रेति** । महाव्याकरणस्थानीत्यर्थः । **विशेषलक्षणानीति** । इत्थं च ना झलौनपदान्तद्विर्वचनआतोनुपसर्गेकइत्यादिविशेषशास्त्रापोदितस्थल एव तुल्यास्यप्रयत्नम् अचः परस्मिन् कर्मणीत्यादिकमुत्सर्गशास्त्रं चरतीति । ब्रह्माधिपतीन्द्रशत्रुप्रातिपदिकयोश्च स्वरितान्तपूर्वपदावयवयोः समासान्तरविधायकविशेषानुशासनवैधुर्येण विशेषशास्त्रानपोदिततया तत्रोत्सर्गशास्त्रमनङ्कुशं सञ्चरतीति भावः । प्राक् विशेषलक्षणापर्यालोचननिबन्धना शङ्का निर्दलेति समाधाय सम्प्रति महाव्याकरणसूत्रस्यान्यदीयानैकान्त्यशङ्कापनोदकं पाणिनीयसूत्रार्थमनुरुन्धानमर्थान्तरमभिदधान आद्यव्याप्तौ समाधत्ते **किञ्चेति** । **अनेन सूत्रेण** महाव्याकरणस्थसूत्रेण । उक्तमर्थं पक्षनिदर्शनयोः सङ्गमयति **ब्रह्मेत्यादि** । **स्वरितान्तत्वादिति** । समासदशायामपीति पूरणीयम् । इत्थं च बहुव्रीहित्वे प्रकृतिस्वरोपेतपूर्वपदावयवकत्वनिरूपिता व्याप्तिरेवोपेयते न स्वरितान्तपूर्वपदावयवकत्वनिरूपितेति नानैकान्त्यशङ्काऽवकाश इति भावः । अर्थान्तराभिधानमपि मूलकृदभिप्रेतमित्यत्र तदीयविन्यासमेव प्रमाणयति **अत एवेति** । दर्शितव्याप्तेर्मूलकृदभिप्रेतत्वादेवेत्यर्थः । श्रूयमाणसौत्रविन्यासमनुरुन्धान एव विशेषादर्शनादिघटितसामग्रीनिष्पाद्यसमासविशेषत्वतदभावकोटिकसन्देहदशायामेव पूर्वपदप्रकृतिस्वरत्वादिकं बहुव्रीहित्वाद्यवधारकमिति पस्पशायां भाष्यकृदुक्तदिशा द्रढयन् द्वितीयव्याप्तौ समाधत्ते **अपि चेति** । **सन्देहे सतीति** । तत्पुरुषः समानाधिकरणः कर्मधारय इत्यनुशासनात् कर्मधारयत्वबहुव्रीहित्वकोटिकसन्देहे सतीत्यर्थः । **यथोक्तमिति** । पस्पशायां किं प्रयोजनं व्याकरणस्येति शङ्कापनुत्तये रक्षोहागमलघ्वसन्देहाः प्रयोजनमित्यभिधाय एवं वा समास अन्यथा वेत्यादिसन्देहाभावः प्रयोजनमिति स्फुटीकृतं भाष्यकृतेत्यर्थः । अत्र व्याकर्तारः । असन्देहम् । सन्देहप्रागभावमित्यर्थः । वैयाकरणस्य सन्देहाभावेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यम् । **सन्देहं व्युत्पाद्येति** । स्थूला चासौ पृषती चेति कर्मधारयः । अत्र पृशतीशब्दो मत्वर्थलक्षणया पृषती बिन्दुमती धेनुमाह । स्थूला च सैव । बिन्दूनां स्थौल्यं तानवं वा यथा तथास्तु । स्थूलानि पृषन्ति यस्यामिति बहुव्रीहिः अत्र स्थौल्यं पृषतामेव लभ्यते । स्थौल्यं तानवं वा गोरस्त्विति विशेष इति व्याचक्षते । इत्थं व्याख्याने सन्देहे सति स्वरेण समासनिर्णयार्थमिदमुच्यत इति सौधवचनेन भाष्यकारीयेण कर्मधारयबहुव्रीहिसन्देहोत्तरकालीनस्वरविशेषानुसन्धाननिवर्त्यत्वाभिधानेन च सन्देहप्रध्वंसस्य प्रयोजनत्वाध्यवसित्या सन्देहपदं सन्देहप्रागभावार्थकतया व्याख्याय वैयाकरणस्य सन्देहाभावेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यमित्यात्मीयोक्तेरसन्देहः सन्देहप्रागभाव इति कैयटोक्तेश्च तादृक्सौधभाष्यग्रन्थाभ्यामैककण्ठ्यं विभावनीयम् । **असन्दिग्ध इति** । विशेषलक्षणार्थाधीनविशेषदर्शनदशायां सन्देहानास्कन्दित इत्यर्थः । **असङ्गतमिति** । सामानाधिकरण्यप्रत्यासत्त्या सन्दिग्धसमासत्वविशेषितपूर्वपदप्रकृतिस्वरत्वस्यैव बहुव्रीहित्वव्याप्यतोपगमेन निर्णीतकर्मधारयत्वके आर्यब्राह्मण इत्यादौ सामानाधिकरण्येनैकविशेषितापराधिकरणतायां सामानाधिकरण्यनिरूपकत्वस्य तन्त्रतया तद्राहित्यनिबन्धनहेतुताऽवच्छेदकविशिष्टाभावेन द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादाविव प्रकृतसाध्याभाववन्निष्ठाधिकरणतानिरूपतावच्छेदकहेतुतावच्छेदकवत्वरूपानैकान्त्यानवकाशादिति भावः । **सामर्थ्याभावेनेति** । पुंलिङ्गपदद्वयघटितसमासघटकपूर्वपदरूपावयवे स्वरिते सतीति

प्रकृताभिमतार्थबोधने पूर्वान्तस्वरित इत्यस्य सामर्थ्याभावादित्यर्थः । विशेष्यवाचकसप्तम्यन्तपदाध्याहारान्न क्षतिरिति समाधत्ते **समासेति** । पुंसोः समस्यमानपुंसोः सम्बन्धिनि समासप्रातिपदिक इति योजनेत्याशयः । बहुव्रीहाविति सप्तमीविशेषणे बहुव्रीहाविति योगेनेत्यर्थः । चित्रगुरित्यादौ विशेषणाभिधायकचित्रादिपदानां विशेष्याभिधायकगोपदादितः पूर्वनिपातदर्शनादित्यपि स्थितम् । **कामचारित्वादिति** । अपूर्वान्तप्रतियोगिक-स्वरितानुयोगिकभेदानुमापकत्वरूपभेदकत्वात्मकविशेषणत्वं पूर्वान्तेत्यस्य स्वरितान्तप्रतियोगिकपूर्वान्तानु-योगिकभेदानुमापकत्वरूपभेदकत्वात्मकविशेषणत्वं स्वरितेत्यस्य च सम्भवतीति प्रकृते स्वरितपदस्यैव विशेष्या-भिधायकत्वोपगमान्न क्षतिरिति भावः । तत्पदस्य विशेषणाभिधायकतामूरीकृत्यापि पाणिनीयदिशा समाधत्ते **आहितेति** ।

**॥ इति उत्तरवाक्यस्थब्रह्माधिपतिपदस्य बहुव्रीहित्वे 'पूर्वपदान्तस्वरितस्य बहुव्रीहित्वे अनुशासनम्' ॥**

**॥ इति उत्तरवाक्यबलेन 'ऋतं सत्यं' इति वाक्यपूर्वोत्तरार्धयोर्भिन्नविषयत्वम् ॥**

**॥ इति 'ऋतं सत्यं' इति वाक्यस्य सङ्क्षेपेण व्याख्यानम् ॥**

* * *

**॥ अथ 'ऋतं सत्यं' इति वाक्यस्य विस्तरेण व्याख्यानम् ॥**

**॥ तत्रादौ उपपत्तिबलात् ॥**

**२० सु०—** एवं पुनरुक्तिप्रसङ्गेनोत्तरवाक्यबलेन च 'ऋतं सत्यमि'ति पूर्वोत्तरार्धयो-र्भिन्नविषयत्वमुपपाद्य सङ्क्षेपेण व्याख्यातं वाक्यं विस्तरेण व्याख्याति **ऋतमिति** ।

**अनु०—** **ऋतं सत्यं परं ब्रह्मेत्याद्युद्देश्यद्वितीयका ॥**
**विभक्तिरूर्ध्वरेतादिः प्रथमा रुद्रगोचरा ।**

इत्यादीति 'सुपां सुलुगि'ति प्रथमाया लुक् । इत्यादिपूर्वार्धस्थं यत्पदजातं तत्रस्ये(स्थमि)ति वा । द्वितीयेत्येतावत्युच्यमाने कर्मणि द्वितीयैव प्रतीयेत, प्राबल्या-त्कारकविभक्तेः । न च तत्सम्भवति, क्रियापेक्षत्वात्कर्मत्वस्य । अत्र च क्रियाऽभावात् । अत उद्देश्यद्वितीयेत्युक्तम् । तर्हि प्रतिशब्देन भाव्यम्, सत्यम्, अध्याहरिष्यते ॥ श्रौत-प्रयोगदर्शनादकारान्तो रेतशब्दो वा समासान्तो डप्रत्ययो वाऽनुसर्तव्यः ॥ **ऊर्ध्वरेता-दिरिति** । ऊर्ध्वरेतमित्यादिपदावयवभूता । एवं रुद्रगोचरेतिवत्पूर्वं विष्णुगोचरेत्यपि द्रष्टव्यम् ।





**एवं विषयविभक्ती तदर्थं चोक्त्वा योजनामाह तस्मादिति ।**

**अनु०— तस्माद्विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः ॥**
**ऊर्ध्वरेता इति ह्येव श्रुत्यर्थोऽवसितो भवेत् ।**

**उक्तयुक्तिसमुदायात् ॥ ऊर्ध्वरेता इत्येतदुलपक्षणमित्याशयेनोक्तम् व्रते स्थित इति ।**

**परि०— उत्तरेति** । ब्रह्माधिपतिरित्युत्तरवाक्यबलेनेत्यर्थः । **सुपांसुलुगितीति** । 'सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल' इति सूत्रेणेत्यर्थः । **प्राबल्यादिति** । उपपदविभक्तित इति योज्यम् । ननूर्ध्वरेतादिरिति कथम् । रेतःशब्दस्य सकारान्तत्वेन ऊर्ध्वरेत आदिरिति भाव्यमित्याशङ्क्य समाधत्ते **श्रौतप्रयोगेति** । 'ऊर्ध्वरेतं विरूपाक्षम्' इति श्रौतप्रयोगेत्यर्थः । **उक्तयुक्तीति** । पौनरुक्त्यापत्तिवाक्यशेषबलरूपयुक्तिद्वयाद्वाक्यशेषस्य बहुव्रीहित्वद्योतकयुक्तिबलाच्चेत्यर्थः ।

**गु०दी०— क्रियापेक्षत्वात्** इत्यत्र 'कर्तुरीप्सिततमं कर्मे'ति सूत्रस्य कर्तुः क्रियया आप्तुमिष्टतमं कर्मसंज्ञं स्यादिति व्याख्यानात् क्रियाऽभावे कथं कर्मतेत्यर्थः ।

**यादु०— सुपां सुलुगिति** । 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' सुपां स्थाने सुश्च लुक्च पूर्वसवर्णश्च आ च आत् च शे च या च डा च ड्या च याच्च आल् च ते सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजाल इतीतरेतरयोगे द्वन्द्वः । एते आदेशाः स्युरिति सूत्रार्थः । ऋजवः सन्तु पन्थाः । पन्थान् इति प्राप्ते जसः सुः । आर्द्रे चर्मन् । चर्मणीति प्राप्ते लुक् । मती । मत्या इति प्राप्ते पूर्वसवर्णदीर्घः । सखाया इति प्राप्ते औकारस्य आ । नताद् ब्राह्मणम् । नतमिति प्राप्ते अम आत् । अस्मे इन्द्राबृहस्पती । न युष्मे(?) वाजबन्धवः । यूयं वयमिति प्राप्ते जसः शे । यूयवयादेशाभावश्च छान्दसत्वात् । उरुया उरुणेति प्राप्ते या । नाभा पृथिव्याः । नाभाविति प्राप्ते डा । अनुष्टुभ्याजयामसि । अनुष्टुभा इति प्राप्ते ड्या । साधुया साध्विति प्राप्ते याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् इत्युदाहरणानि । तथा चार्द्रेचर्मन्नित्यत्र यथा सप्तम्यालुक् एवमत्र प्रथमाया अलुगिति भावः । **अत उद्देश्येति** । तथा च कर्मप्रवचनीययुक्ते द्वितीयेत्यनेन द्वितीयेति भावः । **प्रतिशब्देनेति** । प्रतिशब्दश्च लक्षणेत्थम्भूताख्यानेत्यनेन कर्मप्रवचनीय इति भावः । ननूर्ध्वरेतादिरिति कथम् । रेतःशब्दस्य सकारान्तत्वेनोर्ध्वरेतआदिरिति वक्तव्यमित्यत आह **श्रौतप्रयोगेति** । ऊर्ध्वरेतं विरूपाक्षमिति श्रौतप्रयोगदर्शनादित्यर्थः । **समासान्त इति** । ऊर्ध्वरेता इति समासान्ते डप्रत्यये टिलोपे अकारान्तोपपत्तिरिति भावः । **एवं रुद्रगोचरेतिवदिति** । यथा पूर्वोत्तरार्धयोर्भिन्नविषयत्वमुपपादयितुं विभक्तितदर्थविवेचकमुद्देश्यद्वितीयकेति विभक्तिविशेषणमुक्तम् । एवं विषयविवेचकं विष्णुगोचरेत्यपि तद्विशेषणं वक्तव्यमित्यर्थः । कुत इत्यतो न्यायसूचनाय रुद्रगोचरेतिवदित्युक्तम् । एवं चात्र एवमित्यस्य वैय्यर्थ्यमिति चोद्यानवकाश इति ध्येयम् ।





**वं०प०—** कर्मणि द्वितीयैव कुतः प्रतीयेतेत्यत आह **प्राबल्यात्कारकविभक्तेरिति** । परम्ब्रह्म प्रति रुद्रो व्रते स्थित इति कर्मप्रवचनीयप्रतिशब्दयोगे कर्मप्रवचनीययुक्ते द्वितीयेति सूत्रेण द्वितीयाया विहितत्वादुपपदविभक्तिर्जाता । कर्मणि द्वितीयेति विहिता कर्मकारके द्वितीयाविभक्तिः कारकविभक्तिः । ततश्चोपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायात्कर्मणि द्वितीयैव प्रतीयत इत्यर्थः । तदर्थं विभक्त्यर्थमुद्देश्यद्वितीयारूपत्वम् । **उपलक्षणमिति** । विष्णुं परं ब्रह्म प्रति ऊर्ध्वरेता इत्यस्यान्वयाभावादुपलक्षणतया व्रते स्थित इति ग्राह्यमित्यर्थः । तथा च व्रते स्थित इति पदमध्याहार्यमिति भावः ।

**आनन्दः—** ननु ऋतं सत्यमिति वाक्यस्य पूर्वत्र तद्ब्रह्म ते स्थितमित्यनेनैव व्याख्यातत्वादृतं सत्यं परब्रह्मेत्यनेन पुरस्तद्व्याख्याने पौनरुक्त्यमत्राह **एवमिति** । ननु इत्याद्यमुद्देश्यमित्ययुक्तम् इत्यादिरुद्देश्येति भवेदित्यत आह **इत्यादीति** । **इत्यादिर्विभक्तिरिति** । उद्देश्यविशेषणतया व्याख्यायाधुना किञ्चिदध्याहारेण व्याख्याति **इत्यादि पूर्वार्धस्थमिति** । उद्देश्येत्येतन्निवर्त्याशङ्कां दर्शयति **द्वितीयेति** । **प्राबल्यादिति** । उपपदे विभक्तेः पदान्तरयोगे विधानेन पदान्तरयोगपर्यालोचनप्रतीयमानत्वेन विलम्बोपस्थितिकत्वात् कारकविभक्तेश्च तदभावेन शीघ्रोपस्थितिकत्वात्तदपेक्षया प्राबल्यमित्यर्थः । **अध्याहरिष्यत इति** । ननु तर्हि क्रममध्याहृत्य मुख्यकर्मत्वमेव विवक्षितमिति उद्देश्यपदमनर्थकमध्याहारस्योभयत्र तुल्यत्वादिति । मैवम् । अस्य पक्षान्तरत्वेन मूल एवोक्तत्वादिति । ननूर्ध्वरेतादिरित्ययुक्तं रेतःशब्दस्य सकारान्तत्वेनोर्ध्वरेत आदिरिति स्यादित्यत्राह **श्रौतेति** । ऊर्ध्वरेतादिशब्दस्य प्रथमत्वाभावादाह **ऊर्ध्वेति** । विषयविभक्तीति पूर्वार्धो विष्णुविषयः । उत्तरार्धो रुद्रविषयः पूर्वार्धस्थपदानां द्वितीयाविभक्तिरुत्तरार्धस्थपदानां प्रथमाविभक्तिरिति **विषयविभक्ति**रित्यर्थः । **तदर्थं चेति** । यद्यप्यत्रोद्देश्यत्वरूपो द्वितीयाविभक्त्यर्थ एवोक्तस्तथापि प्रथमायाः प्रातिपदिकार्थस्य स्पष्टत्वे नोक्तप्रायत्वात्तदनुक्तिरिति भावः ।

**श्रीनिधि०—** **उद्देश्यद्वितीयेति** । क्रियोद्देशविषये प्राप्ता द्वितीयेत्यर्थः । **प्रतिशब्देन भाव्यमिति** । कर्मप्रवचनीययोगे द्वितीयैव । ते च प्रत्यादयः यथा न लक्षणेत्थंभूताख्यानभागवीप्सा सुति पर्यनव इति (?) । अत्र लक्षणे प्रति कर्मप्रवचनीयः ब्रह्मोद्देशकस्थितौ विशेषणतया तस्य ज्ञापकत्वात् वृषं प्रति विद्योतत विद्युदिति तस्योदाहरणत्वादिति द्रष्टव्यम् । **समासान्तो डप्रत्यय इति** । विचित्रा हि तद्धितगतिरिति वचनादिति भावः ।

**शे०वा०—** **सङ्क्षेपेणेति** । विष्णवाख्यमुक्तमन्यत्रेत्यादिना पूर्वोत्तरार्धविषयप्रदर्शनेनोर्ध्वरेतं च तत्प्रतीत्यनेनान्वयप्रदर्शनेन चेत्यर्थः । **विस्तरेणेति** । विषयविभक्तितदर्थकथनेनेत्यर्थः । अतो न पौनरुक्त्यमिति भावः । ननु विभक्तिविशेषणत्वादित्यादिरिति भवितव्यम् । इत्यादीति तु कथमित्यत आह **इत्यादीतीति** । अत्र पक्षे विभक्तिविशेषणप्रथमायाश्छान्दसलुक्कल्पनाभिया पदजातविशेषणतामङ्गीकृत्य पक्षान्तरमाह **इत्यादीति** । अत्र पक्षे तत्रस्थेति पदाध्याहार इति ध्येयम् । **प्राबल्यादिति** । उपपदविभक्तेः सकाशादिति शेषः । अन्तरङ्गक्रियासम्बन्धापेक्षकारकनिमित्ताया विभक्तेरप्यन्तरङ्गत्वात् बलीयस्त्वमिति भावः । अत एव कर्मणि द्वितीयाया हरिं भजतीत्यादौ सावकाशत्वान्नमोयोगे चतुर्थ्याश्च नमो देवेभ्य इत्यादौ सावकाशत्वान्नमस्करोति देवानित्यादौ





द्वितीयाचतुर्थ्योः प्रसङ्गे परविप्रतिषेधेन चतुर्थ्या एव प्रसक्तावपि तस्या उपपदविभक्तित्वेन दुर्बलत्वात्कर्मणि द्वितीयायाश्च कारकविभक्तितया प्राबल्यात्तयैव चतुर्थीबाध इति ध्येयम् । **अध्याहरिष्यत इति** । ततश्च विष्णु-भक्तत्वप्रकारं प्राप्तस्य चैत्रस्य विष्णोश्च विषयविषयिभावस्य प्रतिना द्योतनादित्थम्भूताख्याने 'लक्षणेत्थम्भूता-ख्याने'ति सूत्रेण कर्मप्रवचनीयत्वात् प्रतिशब्दस्य तद्योगे कर्मप्रवचनीययुक्ते द्वितीया इत्यनेन द्वितीयावदत्रापि तद्व्रतस्थितत्वप्रकारं प्राप्तस्य रुद्रस्य विष्णोश्च विषयविषयिभावस्य प्रतिना द्योतनादित्थम्भूताख्याने कर्मप्रव-चनीयप्रतिशब्दयोगे द्वितीयेयमिति भावः । (लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः । एष्वर्थेषु विषयभूतेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञाः स्युः । लक्षणे । वृक्षं प्रति । परि । अनु वा विद्योतते विद्युत् । इत्थम्भूताख्याने । भक्तो विष्णुं प्रति परि अनु वा । भागे लक्ष्मीर्हरिं प्रति परि अनु वा । हरेर्भाग इत्यर्थः । वीप्सायां वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किं, परिषिञ्चति) । यद्वा । नायं प्रतिः कर्मप्रवचनीयः किन्तु तद्व्रते स्थितिरूपक्रियाविशेषकत्वादुपसर्गः । तथा च 'बुभुक्षितं न प्रतिभाति किञ्चने'त्यादाविवाकर्मप्रवचनीयप्रतिशब्द-योगे उभसर्वतसोः कार्येति वार्तिककृदुक्तरीत्या द्वितीयेयमित्यर्थः । (उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते । उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक्कृष्णाभक्तम् । उपर्युपरिलोकं हरिः । अध्यधिलोकम् । अभितः परितः समया निकषा हा प्रतियोगेऽपि । अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया निकषा । हा कृष्णभक्तम् । तस्य शोच्यतेत्यर्थः । बुभुक्षितं न प्रतिभाति किञ्चित् । तस्य परमाम्रेडितम् । द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । पटत्पटेति । आम्रेडितं द्विस्त्रिरुक्तमिति च । उपसर्गाः क्रियायोगे । प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । एते प्रादयः) । ननु रेतःशब्दस्य सकारान्ततया रेतआदिरिति भाष्ये भवितव्यम् । रेतादिरिति तु कथमित्यत आह **श्रौतेति** । ऊर्ध्वरेतं विरूपाक्षमिति श्रौत-प्रयोगदर्शनादित्यर्थः । **समासान्त इति** । ऊर्ध्वं रेतो यस्येति बहुव्रीहिसमासात्तद्धिता इति बहुवचनज्ञापिततद्धित-गतिवैचित्र्याड्डप्रत्यये डित्वादूर्ध्वरेतश्शब्दस्य टिलोपे च सत्यकारान्तोर्ध्वरेतशब्दनिष्पत्तिरिति भावः । एवमित्य-स्यैव विवरणं **रुद्रगोचरेतिवदिति** । यद्वा । यथा पूर्वोत्तरार्धयोर्भिन्नविषयत्वमुपपादयितुं विभक्तितदर्थविवेचक-मुद्देश्य द्वितीयकेति विभक्तिविशेषणमुक्तमेवं विषयविवेचकं विष्णुगोचरेत्यस्यापि तद्विशेषणं वक्तव्यमित्यर्थः । कुत इत्यतो न्यायसूचनाय रुद्रगोचरेतिवदित्युक्तम् । एवं चात्रैवमित्यस्य वैय्यर्थ्यमिति शङ्का निरस्ता भवति । **उक्तयुक्तीति** । कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यतीत्यादिनोक्तपौनरुक्त्यादियुक्तिसमुदायादित्यर्थः ।

वा०र०— **विषयविभक्तितदर्थेति** । विषयश्च विभक्ती च तयोर्विभक्त्योरर्थश्चेति विग्रहः । **विशेषण-प्रथमाया इति** । इत्यादिरितिविशेषणगतप्रथमाया इत्यर्थः । **यदन्नेतेति** (?) । इत्यादीत्यस्येति शेषः । पूर्वत्रा-समासोऽत्र पक्षे तु समासाश्रयणमिति विवेकः । 'नमः स्वस्ति स्वाहे'ति सूत्राय उपपदविभक्तेरित्येतत् प्रक्रिया-वाक्यसम्बन्ध्यवताख्यानशेष्यानुसारेणाह **अन्तरङ्गक्रियेति** । **तयैव चतुर्थीबाध इति** । ननु तर्हि 'नमस्कुर्मो नृसिंहाये'त्यत्र न चतुर्थी सम्भवतीति चेन्न । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनि' इति सूत्रेण तत्र चतुर्थीसम्भवात् ।





तत्र हि क्रियैव क्रियार्थासती उपपदं यस्य स्थानिनो अप्रयुज्यमानस्य तादृशस्यान्यस्यासम्भवात् (?)मनोवाण्युलोवाग्राह्यत्वातत्कर्मणि चतुर्थी। 'यथा फलेभ्यो याती'त्यत्र फलान्याहर्तुं यातीत्यर्थके आहरणक्रियार्था याति क्रियोपपदम्। आहर्तुमिति तु पुनश्चाप्रयुज्यमानत्वं गम्यमानक्रियापेक्षयापि कर्मत्वदर्शनात् फलानामेव कर्मत्वमिति कर्मणि द्वितीयाप्राप्तौ चतुर्थी विधीयते। तथा च 'नमस्कुर्मो नृसिंहाये'त्यत्र नृसिंहमनुकूलयितुं नमस्कार इत्यर्थे अनुकूलरूपक्रियार्था या नमस्करणरूपा क्रिया सोपपदं अनुकूलयितुमिति तु मनो भवतीति तत्कर्मनृसिंहे चतुर्थ्यामुक्तप्रयोगसम्भवादित्याशयः। भक्तो विष्णुं प्रतीति प्रक्रियास्थोदाहरणव्याख्यावसरे विष्णौ भक्तत्वं प्रकारं प्राप्त इत्यर्थः।

अत्र भक्तत्वप्रकारं प्राप्तस्य चैत्रस्य विष्णोश्च विषयविषयीभावः प्रत्ययादिभिर्द्योत्यत इति शेष्यामुक्तं तदनुसारेणाशयमाह **ततश्चेत्यादिना**। **लक्षणेत्थम्भूताख्यानेति**। लक्षणं चिह्नम्। अयं प्रकार इत्थं इदमस्थमुः। तं भूतः प्राप्तः इत्थंभूतः। कञ्चित्प्रकारं प्राप्त इति यावत्। वृत्तिविषयेऽव्ययार्थस्यापि दोषामन्वहः। 'दिवामनुरात्रि' इत्यादौ कर्मतादर्शनात् इत्थमिति द्वितीया युक्ता। तस्याख्यानं कथनमित्थम्भूताख्यानम्। भागोंशः। गुणक्रियाद्रव्यैरनेकेषां पदार्थानां युगपद्व्युत्पत्तुमिच्छापीप्सा। एतेष्वर्थेषु एतदर्थद्योतकाः प्रतिपर्यनवः कर्मवचनीयसंज्ञा स्युरिति सूत्रार्थः। प्रतिकृष्णामित्यत्र हि प्रतिरत्र क्रियाविशेषको न कर्मप्रवर्चनीयः। **यथा बुभुक्षितं न प्रतिभाति किञ्चनेति**। बुभुक्षितस्येत्यर्थ इति शेष्यामुपपादितं तदत्र समानमित्याशयेनाह **यद्वा नायमिति**। **वार्तिककृदुक्तरीत्येति**। तद्वार्तिकगततततोऽन्यत्रापि दृश्यत इत्येतद्विवरणरूपाभितः परितः समयानिकषाहाप्रतियोगिष्वित्यर्थे अत्र प्रतिशब्दस्योपादानात् तद्योगे षष्ठ्यर्थे द्वितीयाविधानानुसारेण द्वितीयेयमित्यर्थः। एतद्विस्तरः समुदायमृते विष्णोरिति वियत्पादभाष्यमूलटीकाव्याख्याने करिष्यते। **तद्धिता इति बहुवचनेति**। एतच्च प्रपञ्चितं ज्ञेयम्। मूले ऊर्ध्वरेता इत्येतदुपलक्षणमिति। न च प्रत्यूर्ध्वरेतमित्येतद्विवृणोतीत्येवंरूपस्तद्धत्ते स्थितमित्यस्य प्राचीनावतारोऽनेन विरुद्ध इति वाच्यम्। तत्रापि अनुष्ठीयमानव्रतेषु मध्ये रेतस ऊर्ध्वत्वरूपधर्ममात्रप्रतिपादनस्योपलक्षणत्वाश्रयणेनैव तथोक्तेरभिप्रेतत्वादिति ज्ञेयम्।

**स०व्र०**— ननूर्ध्वरेतादिरिति कथम्। रेतःशब्दस्य सकारान्तत्वेनोर्ध्वरेतआदिरिति वक्तव्यमित्यत आह **श्रौतप्रयोगदर्शनादिति**। तद्धिता इति बहुवचनेन ज्ञापितद्धितगतिवैचित्र्यादिति भावः। **समासान्त इति**। **ऊर्ध्वरेतेति**। समासान्ते डप्रत्यये टिलोपे अकारान्तोपपत्तिरिति भावः।

**विठ्ठल०— सुपांसुलुक् इति**। 'सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' सुपांसुलुक् पूर्वसवर्णे दीर्घः। आत् शे, डा ड्या अच् आल् इत्येते आदेशाः स्युरिति सूत्रार्थः। तथा चात्र प्रथमाया लुगिति भावः। **अत उद्देश्यद्वितीयेत्युक्तमिति**। कर्मणि द्वितीयानुपपत्तेः प्रकृते कर्मप्रवचनीययुक्ते द्वितीयेति भावः। **प्रतिशब्देनेति**। कर्मप्रवचनीयत्वात् प्रतिशब्दस्येति भावः। ननु रेतश्शब्दस्य सकारान्तत्वेन (कथं) ऊर्ध्वरेत आदिरिति भाष्यमित्यत आह **श्रौतप्रयोग इति**। 'ऊर्ध्वरेतं विरूपाक्षं' इति श्रौतप्रयोगानुसारित्वादिति भावः। **समासान्त इति**। ऊर्ध्वरेता इति समासान्ते डप्रत्यये टिलोपे च अकारान्तत्वोपपत्तिरिति भावः। ऊर्ध्वरेतेत्यस्य विभक्तित्वाभावादाह **ऊर्ध्वरेतादि-**





**रितीति**। एवं रुद्रगोचरेतिवत् इति यथा पूर्वोत्तरार्धयोः भिन्नविषयत्वोपपादनाय विभक्तितदर्थविवेचकमुद्देश्यद्वितीयेति विशेषणमुक्तं एवं विषयविवेचकं विष्णुगोचरेत्यपि तद्विशेषणं वक्तव्यमित्यर्थः। कुत इत्यतोऽत्र न्यायसूचनाय रुद्रगोचरेतिवदित्युक्तम्। एतेन एवमित्यस्य वैय्यर्थ्यशङ्काऽनवकाशः इति ध्येयम्। पौनरुक्त्यापत्तिं वाक्यशेषबलरूप-युक्तिद्वयाद्वाक्यशेषस्य बहुव्रीहित्वद्योतकयुक्तिबलाच्चेत्यर्थः। **उपलक्षणमिति**। व्रतान्तरस्याप्युपलक्षणमित्यर्थः।

**चषकः**— सुपामिति। 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' सुपांस्थाने सुः। लुक्। पूर्वसवर्णाः। आ। आत्। शे। या। डा। ड्या। याच्। आल्। एते आदेशाः स्युः। ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते जसः सुः। परमे व्योमन्। व्योम्नीति प्राप्ते ङेर्लुक्। धीतीमती सुष्टुती। धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णः। यासु रथा रथी तमादिविस्पृशा अश्विना। यौ सुरथौ दिविस्पृशाविति प्राप्ते आ। नताद्ब्राह्मणम्। नतमिति प्राप्ते आत्। न युष्मे राजबन्धवः अस्मे इन्द्रा बृहस्पती। युष्मासु अस्मभ्यमिति प्राप्ते शे। उरुया धृष्णुया। उरुणा धृष्णुनेति प्राप्ते या। नाभापृथिव्याः नाभाविति प्राप्ते डा। अनुष्ट्या च्यावयतात्। अनुष्ठानमनुष्ठा। आङो ड्या। साधुया। साधुनेति प्राप्ते याच्। वसन्ता यजेत। वसन्ते इति प्राप्ते आल् इति उदाहरणानि। तथा चात्र प्रथमायाः लुगिति भावः। **प्राबल्यादिति**। ग्रामं गच्छतीत्यादौ कर्मणि द्वितीयाया हरये नम इत्यादौ नमःशब्दसमभिव्याहारे चतुर्थ्याश्च सावकाशतया नमस्करोति देवान्नमस्यति देवानित्यादौ विप्रतिषेधशास्त्रेण चतुर्थ्या एव प्राप्तौ तस्या उपपदविभक्तित्वेन दुर्बलत्वात् कर्मणि द्वितीयायाश्च कारकविभक्तित्वेन प्राबल्यात्तयैव चतुर्थी बाध्यत इति हृदयम्। **उद्देश्यद्वितीयेति**। तथा च नेयं कर्मणि द्वितीयेत्यनुशिष्टा द्वितीया किन्तु कर्मप्रवचनीययुक्ते द्वितीयेत्यनेनानुशिष्टेति भावः। कर्मप्रवचनीयसमभिव्याहार-विरहात् कथं तेन सेत्यत आह **अध्याहरिष्यत इति**। भक्तो विष्णुं प्रतीत्यादौ चैत्रादिवृत्तिभक्तिविषयतामापन्नस्य विष्णोस्तद्विषयकभक्तिमत्तामापन्नस्य चैत्रादेश्च भक्तभजनीयभावसंसर्गे द्योत्ये लक्षणेत्थम्भूताख्यानेत्यनेनेव प्रकृतेऽपि रुद्रकर्तृकोपासनारूपव्रतविषयतामापन्नस्य विष्णोस्तद्विषयकोपासनाख्यव्रतकर्तृतामापन्नस्य रुद्रस्य च दर्शितसंसर्गे द्योत्ये 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव' इत्यनेन प्रतेः कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीये'त्यनेनात्र द्वितीयेति भावः। नायं प्रतिः कर्मप्रवचनीयसंज्ञः किन्तु तद्व्रते स्थितिरूपक्रियाविशेषकत्वादुपसर्गः। ततश्च बुभुक्षितं न प्रतिभाति किञ्चिदित्यादाविवाभितः परितः समयानिकषाहाप्रतियोगेऽपीत्यनेन द्वितीयेत्यपि न्यभांत्सुः। ननु भाष्यकारीय ऊर्ध्वरेतादिरिति विन्यासो न सङ्गच्छते। रेतःशब्दस्य सकारान्ततया रेतआदिरिति भवितव्यत्वादित्यत आह **श्रौतेति**। 'ऊर्ध्वरेतं' विरूपाक्षमित्यादि श्रौतप्रयोगदर्शनादित्यर्थः। **समासान्त इति**। तद्धिता इति बहुवचनज्ञापिततद्धितगतिवैचित्र्यात् बहुव्रीहिप्रकृतिकडप्रत्यये तस्य डित्वाट्टिलोपे चाकारान्ततोपपद्यत इति भावः। **एवं रुद्रगोचरेतिवदिति**। यथा पूर्वोत्तरदलद्वयस्य विषयभेदप्रत्यायनफलकं विभक्तितदर्थविवेचक-मुद्देश्य द्वितीयकेति विभक्तिविशेषणमुक्तं तद्वद्विषयविवेचकं विष्णुगोचरेत्यपि तद्विशेषणमभिधातव्यमित्यर्थः। रुद्रगोचरेतिवदिति च न्यायसूचकम्।

**॥ इति 'ऋतं सत्यं' इति वाक्यस्य उपपत्तिबलात् विस्तरेण व्याख्यानम् ॥**

* * *





**॥ अथ 'ऋतं सत्यं' इति वाक्यस्य श्रुत्यन्तरसमाख्यानात्**
**विस्तरेण व्याख्यानम् ॥**

२१ सु०— न केवलमुपपत्तिबलादेवं श्रुत्यर्थो व्याख्यायते, अपि तु श्रुत्यन्तरसमाख्यानादपीत्याह **ऋतमिति** ।

अनु०— ऋतं सत्यं परंब्रह्म प्रति विष्णुं सदाशिवः ॥
ऊर्ध्वरेता ध्यायतीह शङ्करो नीललोहितः ।
इत्यर्थमेतमेवाह नीलग्रीवश्रुतिः परा ॥
आथर्वणी परंब्रह्म तस्मादेको हरिः श्रुतौ ।

**ध्यायति** । तमेव । अनेन ध्यायतीत्यध्याहारेण कर्मणि वा द्वितीयेति ज्ञायते । आथर्वणीत्युक्ते प्रसङ्गात्तापनीयश्रुतिरित्येव प्रतिभाति, अत उक्तम् **परा** अन्येति । तर्हि किंनामधेया । नीलग्रीवश्रुतिः ।

एवं पूर्वोत्तरार्धयोर्भिन्नविषयतया व्याख्यानेन लब्धमाह **परंब्रह्मेति** । ऋतं सत्यमित्यस्यां श्रुतौ प्रतीतमिति शेषः । **तस्मात्** पूर्वार्धस्य विष्णुविषयत्वात् ।

**परि०**— परंब्रह्मेत्यस्योर्ध्वरेता इत्यनेनान्वितत्वात् ध्यायतीत्यस्य कर्मपेक्षायामाह **तमेवेति** । **अनेनेति** । समाख्याकथनेनेत्यर्थः । **कर्मणि वा द्वितीयेति** । प्रागुद्देश्यद्वितीयेत्युक्ता द्वितीयेत्यर्थः ।

**गु०दी०**— **आथर्वणीत्युक्ता** इत्यत्र तापनीयश्रुतेरप्याथर्वणीत्वस्य सम्भावितत्वादाथर्वणीत्येवोक्ते इयमपि प्रस्तुतत्वादाथर्वणीशाखास्था तापनीयश्रुतिरित्येव प्रतीतिः स्यात् । अतः **परा** अन्येत्युक्तमिति भावः । **परा** अन्या तापनीयश्रुतेरन्या आथर्वण्युपनिषद एव भागान्तरस्था नीलग्रीवश्रुतिरित्यर्थः ।

**वं०प०**— **पराऽन्येति** । परा अन्या तापनीयश्रुतिभिन्ना । आथर्वणी अथर्वणवेदोक्ता । नीलग्रीवश्रुतिर्नीलग्रीवप्रतिपादकत्वेन तन्नाम्नी श्रुतिः । तन्नामिका शाखाऽस्तीत्यर्थः ।

**विठ्ठल०**— विष्णुमित्यस्य कर्मप्रवचनद्वितीयत्वेनोर्ध्वरेता इत्यनेनान्वितत्वात् ध्यायतीत्यस्य सकर्मत्वेन कर्मपेक्षायामाह **तमेवेति** । **अनेनेति** । समाख्याबलेन तापनीयश्रुतौ ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं विष्णुं





विरूपाक्षं ब्रह्मरुद्रो ध्यायतीत्यपि योजनेति भावः । (अन्यथेत्यस्यामूलपदस्यार्थकथनम् ।) अन्या इति परा इति मूलपदस्यार्थकथनम् । **ऋतं सत्यमिति** । तच्चेत्यस्याप्राबल्यमित्यर्थः ।

**॥ इति 'ऋतं सत्यं' इति वाक्यस्य श्रुत्यन्तरसमाख्यानात् विस्तरेण व्याख्यानम् ॥**

* * *

**॥ अथ 'ऋतं सत्यं' इति वाक्यस्य 'अन्यथा बाधकान्तरात्' विस्तरेण व्याख्यानम् ॥**

**॥ तत्रादौ परस्परविरोधेनान्यतरश्रुतेरप्रामाण्यम् ॥**

२२ **सु०—** बाधकान्तरमाह **तदेवेति** ।

**अनु०— तदेवर्तमिति प्राह कथमेवान्यथा श्रुतिः ॥**
**अवधारयन्ती तस्यैव ह्यृतत्वादिकमञ्जसा ।**

'ऋतं सत्यं परं ब्रह्मे'ति पूर्वार्धोऽपि यदि रुद्रविषयः स्यात्तदा 'तदेवर्तं तदुसत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'ति **श्रुतिः तस्य** विष्णोः, ऋतत्वादिकं, कथम्, **अञ्जसा** कवीनां सम्मत्या, प्राह । परस्परविरोधेनान्यतरश्रुतेरप्रामाण्यं प्रसज्येतेति भावः ।

'ऋतमिति श्रुती रुद्रस्य ऋतसत्यब्रह्मत्वादीन्याह । तदेवेति (च) श्रुतिर्विष्णोः । तत्र श्रुतिद्वयबलाद्द्वयोरपि ऋतादिशब्दवाच्यत्वे क्वास्ति विरोध' इत्यत उक्तम् **तस्यैवेति** । तत्कथमित्यत उक्तम् **अवधारयन्तीति** । विरोधे चाऽद्यश्रुतेरेव बाधो युक्तः, तदेवेति श्रुतेः प्रबलत्वात् । तच्चैतच्छ्रुत्या आपातप्रतीतिजभ्रान्तिबाधात्मकत्वादवसीयते । न ह्यप्राप्तप्रतिषेधो युज्यते । नापि श्रुत्याभासाद्विना तत् प्रापकमस्तीति ।

**वं०प०—** **तच्चेति** । प्राबल्यमित्यर्थः । **एतच्छ्रुतीति** । ऋतं सत्यमिति श्रुतीत्यर्थः । **आपातेति** । पूर्वोत्तरार्धयोर्भिन्नविषयकत्वाननुसन्धानदशायामित्यर्थः ।

**आनन्दः—** ननु ऋतं सत्यमिति तदेवर्तमिति श्रुत्योरन्योन्यं विरोधेनान्यतरस्याप्रामाण्येऽपि ऋतमिति श्रुतिविरोधेन तदेवर्तमिति श्रुतेरेव बाधेनाप्रामाण्यमस्त्वित्यत आह **विरोधे चेति** । यद्यप्यत्रापौरुषेयत्वेन श्रुतिद्वयस्याप्याद्यत्वमस्त्येवेति । तदेवर्तमित्ययुक्तमेतत् तथापि आद्यत्वमुदाहरणापेक्षया विवक्षितम् । एवं च बाधाश्रुतेः आद्योदाहृतायाः श्रुतमिति श्रुतेरेव बाधो युक्त इत्यर्थः । विपरीतं किं न स्यादित्यत आह **तदेवेतीति** ।

नन्वस्याः प्राबल्यं कुतोऽवसीयत इत्यत आह **तच्चेति**। प्राबल्यमित्यर्थः। श्रुतेर्जाताया आपातप्रतीतिस्तज्जनितायाः भ्रान्तिस्तद्बाधात्मकत्वादित्यर्थः। श्रुत्यापातप्रतीतिजभ्रान्तेरेवानया बाध इत्येतत्कुत इत्यत्राह **न हीति**। ननु प्रसक्तिः प्रकारान्तरेण स्यादित्यत्राह **नापि श्रुत्येति**। तस्यार्थस्यान्यप्रमाणाविषयत्वादिति भावः।

**शे०वा०— क्वास्ति विरोध इति**। ततश्च नान्यतरश्रुत्यप्रामाण्यप्रसङ्ग इति भावः। नन्वस्त्वेवं परस्परविरोधेनान्यतरश्रुत्यप्रामाण्यप्राप्तिस्तथाऽपि तदेवर्तमिति श्रुतिविरोधेन ऋतं सत्यमित्यस्या एवाप्रामाण्यमिति विवक्षितार्थासिद्धिरेव। ऋतं सत्यमिति श्रुतिविरोधेन तदेवर्तमिति श्रुत्यप्रामाण्येऽपि परस्परविरोधप्रयुक्तान्यतर-श्रुत्यप्रामाण्यनिर्वाहादित्यत आह **विरोधे चेति**। **आद्यश्रुतेरिति**। प्रथममुदाहृताया ऋतं सत्यमिति श्रुतेरित्यर्थः। **तच्चेति**। प्राबल्यमित्यर्थः। **श्रुतीति**। श्रुतितात्पर्यापरिज्ञाननिमित्तकभ्रान्तिबाधात्मकत्वादित्यर्थः। ननु तदेवर्तमि-त्यस्याप्राप्तप्रतिषेधकत्वस्यैवोपपन्नत्वात् प्राप्तप्रतिषेधकत्वेऽपि वा प्रमाणान्तरेणैव तत्प्राप्तिसम्भवान्न श्रुत्यापात-प्रतीतिजभ्रान्तिबाधात्मकत्वसिद्धिरित्यतः पक्षद्वयं क्रमेण दूषयति **न हीत्यादि**। नान्तरिक्षेऽग्निश्चेतव्यो न दिवी-त्यप्राप्तप्रतिषेधवदिहापि स्यादिति चेन्न। तत्र हिरण्यं निधाय चेतव्यमिति विधिस्तुत्यर्थतया तदुपपत्तावपि प्रकृते तदभावादित्याशयः।

**वा०र०—** अन्तर्याम्यधिकरणचन्द्रिका 'नान्तरिक्षे न दिवीत्यन्तरिक्षादावप्रसक्त..(?)नेये'त्यादिका तदनु-सारेणोपपादयति **नान्तरिक्ष इति**। अधिकरणशरीरं लेख्यमस्ति।

**विठ्ठल०— बाधात्मकत्वादिति**। एवेत्यवधारणेनेतन्निषेधावगमेनेति भावः। अस्तु तदेवेत्यवधारणा-दितरस्य ऋतत्वादिप्रतिषेधः तथापि रुद्रादेरितरस्य ऋतत्वादिप्रतीतिः भ्रान्तिः। सा च ऋतं सत्यमित्यादि श्रुत्याभास-प्रतीतिजेति कुत इत्यत आह **न ह्यप्राप्तेति**।

**॥ इति 'ऋतं सत्यं' इति वाक्यस्य 'अन्यथा बाधकान्तरात्' विस्तरेण व्याख्याने परस्परविरोधेन अन्यतरश्रुतेरप्रामाण्यम् ॥**

* * *

**॥ अथ 'ऋतं सत्यं' इति वाक्यस्य विस्तरेण व्याख्याने 'अन्यथा बाधकान्तरे' रुद्रादीनामुत्पत्तिमत्त्वं विष्णोश्चातथात्वम् ॥**

**२३ सु०— ननु तर्हि रुद्रस्य विष्णवात्मकत्वेनाविरोधोऽस्तु। पुनरुक्तिपरिहारायोत्त-रार्धोक्तो विरूपाक्षस्त्वपरो भविष्यति। एवं तर्हि विष्णोरेव ब्रह्मशब्द इति क्वास्ति सौत्रस्य हेतोर्व्यभिचारः। न हि पक्षे व्यभिचारः शङ्क्यत इति ॥ किञ्च रुद्रादीनां सर्वेषां प्रलयेऽसतां**





सृष्टावीश्वराज्जन्मवतां ब्रह्मत्वं कथमुपपद्यते । जन्मादिमत्त्वमेव तेषां कुतोऽवगम्यत इत्यत आह **एक इति** ।

**अनु०— एको नारायण आसीन्न ब्रह्मा न च शङ्करः ॥**
**वासुदेवोऽग्र एवासीन्न ब्रह्मा न च शङ्करः ।**
**नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः ॥**
**इत्यादिवाक्यतो विष्णोरुत्पत्तिरवतारगा ।**

इत्यादिवाक्यतो रुद्रादीनां प्रलयेऽभावो विष्णोरुत्पत्तिश्चावगम्यते ॥ 'उत्पत्तिमत्त्वेनाब्रह्मत्वे विष्णोरपि तथात्वं स्यात्, तस्यापि रामकृष्णादिरूपस्योत्पत्तिसद्भावादि'त्यत आह **विष्णोरिति । उत्पत्तिः** उत्पत्तिवाक् । **अवतारगा** प्रादुर्भावविषया, न तु शरीरादिलाभलक्षणा । कुत एतदित्याशङ्कायाम् 'एक' इत्यादिपूर्ववाक्यं सम्बद्ध्यते । **इत्यादिवाक्यतो** विष्णोर्महाप्रलयेऽप्यवस्थानावगमादित्यर्थः । स्वरूपमात्रेणावस्थानेऽपि शरीरादिलाभलक्षणोत्पत्तिः किं न स्यादिति चेन्न, स्वरूपसत्त्वस्य ब्रह्मशङ्करादावपि समानत्वेन 'न ब्रह्मे'त्याद्यनुपपत्तिप्रसङ्गादिति ।

**परि०**— 'इत्यादिवाक्यत' इति मूलानुवादपूर्वं शेषमाह **इत्यादिवाक्यत इत्यादिना** । शङ्कते **उत्पत्तिमत्त्वेनेति** । 'एक इत्यादिपूर्ववाक्यमि'त्यस्मिन्पक्षे 'इत्यादिवाक्यतो विष्णोरुत्पत्तिरवतारगे'त्येकान्वय इति भावेनार्थमाह **इत्यादिवाक्यतो विष्णोरिति** ।

**वं०प०— उत्पत्तिश्चावगम्यत इति** । इत्यादिवाक्यत इत्युक्तत्वाद्वाक्यशेषे 'स मुनिर्भूत्वा समचिन्तयत्तत एते व्यजायन्त । विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः ।' इत्युक्तत्वादिति भावः ।

**आनन्दः**— अविरोधं शङ्कते **ननु तर्हीति** । उभयोरप्येकविषयत्वे पौनरुक्त्यमित्यत आह **पुनरुक्तेति** । परिहरति **एवं तर्हीति** । ननु रामकृष्णादिरूपेणोत्पत्तेः विद्यमानत्वान्न ब्रह्मत्वमित्युक्तेऽनुत्पत्तिरवतारगेत्युक्तं अयुक्तं शङ्कापरिहाराभावादित्यत आह **उत्पत्तिरित्यादि** । न ब्रह्मेत्यादीत्यत्रादिशब्देन विशेष्यनारायणसत्त्वकथनं ग्राह्यम् ।

**श्रीनिधि०— विष्णोरुत्पत्तिश्चावगम्यत इति** । आविष्णोरिति पञ्चमी ।



**शे०वा०— विष्णोरिति**। सकाशादिति शेषः। आदिशब्दोपात्त 'तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः' इति वाक्यबलादवगम्यत इत्यर्थः।

**वा०र०—** 'रुद्रेन्द्रा' इति वाक्ये इत्यत्रेत्यादिवाक्येत्यर्थः। अस्यैक इत्याद्यवाक्यशेषत्वात्। आदिपदेनोत्तरवाक्यशेषग्रहणम्। **शरीरादिलाभलक्षणेति** मूलम्। वियदधिकरणे शरीरलाभादिरूपचतुर्विधेत्येतः प्रतिपादनादिति भावः। **नहि पक्षे व्यभिचारः शङ्क्यते इति** मूलम्। ननु किमेतेऽन्नमयादयः परमात्मेत्यादि संशयपूर्वपक्षतदुपसंहारसिद्धान्तप्रतिज्ञाभागव्याख्यानरूपग्रन्थानुसारेण तेषामपि पक्षत्वमङ्गीकृतमिति ज्ञायत इत्यादि स्पष्टोक्त्यनुसारेण च आनन्दमयत्वादिपुरस्कारेण आनन्दमयादिरिति पक्षः विष्णुर्भवितुमर्हतीति साध्यमिति वा आनन्दमय इत्यादिशब्दैर्वाच्यो हरिरिति भाष्ये वाच्यत्वपुरस्कारात् तदाश्रयणेन आनन्दमयादि पदकाव्य इति पक्षो विष्णोरिति साध्यनिर्देश इति वा प्रयोगप्रकारस्य ग्रन्थकृदभिप्रेततायाः स्पष्टतया तत्प्रयोग एव च ब्रह्मशब्दस्य ऋतं सत्यमित्यादिश्रुतौ रुद्रेऽपि श्रवणात् तत्र च विष्णुत्वाभावाद्व्यभिचार इति शङ्कायां पूर्वोत्तरार्धयोर्भिन्नविषयत्वादिव्याख्यानेन रुद्रे ब्रह्मशब्दस्यैवाभावान्न व्यभिचार इति। प्रतिपादिता चैतावतो ग्रन्थकलापस्य प्रवृत्त्या च अन्नमयादिपदवाच्यस्य वा अन्नमयादेर्वा पक्षत्वस्थितौ विष्णुरुद्रयोर्भेदेन विरोधोऽस्त्विति शङ्का या प्राप्ता तस्याः तर्हि रुद्रे ब्रह्मशब्दस्य विष्णुत्वरूपसाध्यस्यापि सत्त्वान्न व्यभिचार इति परिहारं 'क्वास्ति व्यभिचार' इति मूलेन कृत्वापि तदुपपादनाय प्रवृत्तेन न हि पक्षे व्यभिचारः शङ्क्यत इति रुद्रस्य पक्षत्वाश्रयणेन व्यभिचाराभावकथनं कथं कृतम्। पूर्वत्र रुद्रस्य पक्षीकाराप्रतीतेरिति चेत्सत्यम्। अयमभिप्रायो ग्रन्थकारस्य। यद्यविरोधाय रुद्रस्य विष्णवात्मकत्वाङ्गीकारस्तर्हि सौत्रानन्दमयशब्देन स्वसमानन्यायान्नमयादिशब्दानामिव रुद्रविषयतया शङ्क्यमानर्तादिशब्दानामप्युपलक्षणया प्राप्तानन्दमयादयो विष्णुरित्यनुमानावसरे ऋतादिरूपो रुद्रोऽपि विष्णुरिति प्रतिज्ञार्थप्राप्तेः रुद्रस्यापि पक्षत्वमित्याशयेन पक्ष इत्युक्तेरुपपन्नत्वम्। यद्वा पक्ष इत्यस्य तत्तुल्य इत्यर्थः। ब्रह्मशब्देन विष्णुतत्त्वनिर्णयविषयतया ऋतादिरूपरुद्रस्यापि विष्णवभेदाङ्गीकारे तत्तुल्यत्वप्राप्तेः। तथा च क्वास्तीति पूर्ववाक्येन हेतुवत्साध्यस्यापि सत्त्वान्न व्यभिचार इत्युक्त्वा अन्नमयादिपक्षप्रयोगाविषयत्वेन रुद्रस्यापक्षत्वमिति भ्रान्तिं परिहर्तुं न हि पक्ष इत्यनेन रुद्रस्यापि पक्षत्वं वा पक्षतुल्यत्वं वाऽस्तीति न तत्र विष्णुरुद्रयोरभेदाङ्गीकारे साध्याभावाङ्गीकर्तुमुचित इति पूर्वोक्तस्यैवोपपादनान्न कश्चिद्दोष इति।

**विठ्ठल०—** ननु ऋतं सत्यमिति पूर्वार्धस्य रुद्रविषयत्वेऽपि तदेवर्तमिति श्रुत्या न विरोधः। रुद्रस्यापि विष्णवात्मकत्वेन तदेवेत्यवधारणेनान्यस्यैव ऋतत्वादिव्युदासादित्याशयेन शङ्कते **ननु इति**। पूर्वार्धवदुत्तरार्धस्यापि रुद्रविषयत्वे समानाधिकृतत्वं चेदुत्तरं नीललोहितं कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति इति प्रागुक्ता पुनरुक्तिः स्यादित्याशङ्कायां उत्तरार्धोक्तो विरूपाक्षो न रुद्रः किं तु रुद्रादन्यो यः कश्चिद्विकृताक्ष एव अतो न पुनरुक्तिरित्याह **पुनरुक्तीति**। परिहरति **एवमिति**। रुद्रस्य विष्णवात्मकत्वमुपादाय पूर्वार्धस्य रुद्रविषयत्वाङ्गीकारे ऋतं सत्यम् इति श्रुतौ प्रयुक्तो ब्रह्मशब्दो विष्णोरेवेति कृत्वा अन्नमयादीनां विष्णुत्वसाधकस्य सौत्रस्य ब्रह्मशब्दरूपहेतोर्व्यभिचारः क्वास्ति, न क्वापि न हि पक्षे पक्षसमे व्यभिचारः शङ्कितुमर्हः इत्यर्थः। तथा च अन्नमयादीनां विष्णुत्वनिश्चायकस्य





ब्रह्मशब्दस्य ऋतं सत्यमिति श्रुतौ रुद्रेऽपि श्रवणाद्व्यभिचार इत्युपक्रम्य विष्ण्वात्मकत्वग्रहणं विरुद्धमिति भावः। सृष्टौ सृष्टिकाले इत्यादिवाक्यत इति एको नारायण आसीदित्यादिवाक्यतः। उत्तरमूलं सङ्गमयितुं शङ्कते **उत्पत्तिमत्वेनेति**।

**।। इति 'ऋतं सत्यं' इति वाक्यस्य विस्तरेण व्याख्याने 'अन्यथा बाधकान्तरे', रुद्रादीनामुत्पत्तिमत्त्वं विष्णोश्चातथात्वम् ।।**

* * *

**।। अथ 'ऋतं सत्यं' इति वाक्यस्य विस्तरेण व्याख्याने 'अन्यथा बाधकान्तरे', ब्रह्मपदस्य मुख्यत्वार्थत्वं हरौ, अमुख्यार्थत्वं च अन्येषु इत्यङ्गीकारः ।।**

२४ **सु०—** ननु यदि ब्रह्मशब्दो विष्णोरेव तदा जीवादौ व्यवहारो न स्यात्। तथा च ब्रह्मत्वापेक्षया नपुंसकप्रयोग इति न स्यात्, ब्रह्मणोऽधिपतिरित्यपि व्याहतं स्यादित्याशङ्कां परिहरन्नुपसंहरति **मुख्यमिति**।

## अनु०— मुख्यं ब्रह्म हरिस्तस्मात्

अन्येष्वमुख्यया वृत्त्या ब्रह्मशब्दाङ्गीकारान्नोक्तदोष इति भावः। अत एवापरं ब्रह्मेति प्रागुक्तम्।

**परि०—** जीवादौ व्यवहाराभावे को दोष इत्यत आह **तथा चेति**। ऊर्ध्वरेतं विरूपाक्षमित्यादेः प्रथमान्तत्वेन नपुंसकप्रयोगः कथमित्यतो 'विरूपाक्षाख्यमपरं ब्रह्मोक्तमि'त्यत्र ब्रह्मत्वापेक्षया नपुंसक इति यदुक्तं तन्न स्यादित्यर्थः। **व्याहतमिति**। स्वस्यैव ब्रह्मत्वे स्वस्मात्स्वस्योत्तमत्वं व्याहतमित्यर्थः। **प्रागिति**। विरूपाक्षाख्यमपरं ब्रह्मोक्तमित्यत्रेत्यर्थः।

**यादु०—** **व्याहतं स्यादिति**। ब्रह्मण इत्यनेनाधिपतिशून्यस्य विष्णोरेव गृहीतत्वादिति भावः।

**आनन्दः—** **ब्रह्मत्वापेक्षया**। अमुख्यया वृत्त्या ब्रह्मशब्दसद्भावापेक्षया। अपरं ब्रह्मेत्यादाविति शेषः। **अत एवेति**। अमुख्यया वृत्त्या तदङ्गीकारादेवेत्यर्थः।

**शे०वा०—** **तथा च ब्रह्मत्वापेक्षयेति**। अपरब्रह्मत्वापेक्षया शङ्करं नीललोहितमिति नपुंसकनिर्देश इति पूर्वोक्तं समाधानमसत्स्यादित्यर्थः। **व्याहतं स्यादिति**। अधिपतियुक्तत्वपरब्रह्मत्वयोर्विरुद्धत्वादित्यर्थः। **उक्तेति**। शङ्कितेत्यर्थः।

**विठ्ठल०— नपुंसकप्रयोग इति**। ऊर्ध्वरेतं विरूपाक्षमित्यत्रेत्यर्थः। **व्याहतं स्यादिति**। ब्रह्मशब्दस्य विष्णवेकनिष्ठत्वे ब्रह्मणो विष्णो विष्णुरधिपतिरिति व्याहतमित्यर्थः॥

**॥ इति 'ऋतं सत्यं' इति वाक्यस्य विस्तरेण व्याख्याने 'अन्यथा बाधकान्तरे', 'ब्रह्मपदस्य मुख्यत्वार्थत्वं हरौ, अमुख्यार्थत्वं च अन्येषु' इत्यङ्गीकारः॥**

* * *

**॥ अथ एतदधिकरणीयप्रथमसूत्रानुभाष्योक्तोत्तरपक्षे 'अन्नमयादिशब्दवाच्यं विष्णवाख्यं ब्रह्मैव नान्यत्किञ्चित्' इत्यत्र आनन्दमयपूर्विणां शब्दानामुपलक्षणत्वे अन्नमयादीनाममुख्यब्रह्मपरताभावः॥**

**॥ तत्रादौ परब्रह्मण एव प्रसङ्गः॥**

२५ **सु०— ननु यद्यमुख्यतया ब्रह्मशब्दस्य विष्णोरन्यत्र वृत्तिरङ्गीकृता तर्ह्यन्नमयादयो-ऽप्यमुख्यब्रह्मतया कुतो न व्याख्यायन्ते। न ह्यत्र मुख्यब्रह्मत्वज्ञापकं किञ्चिदस्तीत्यत आह प्रस्ताव इति।**

**अनु०— प्रस्तावः परमित्यपि॥**

अत्र हि ब्रह्मविदाप्नोति परमिति परस्यैव ब्रह्मणः **प्रस्तावः** प्रसङ्गोऽस्ति। तेनोत्त-रेषामपि ब्रह्मशब्दानां परब्रह्मविषयत्वनिश्चयान्नात्रामुख्यार्थाऽऽशङ्का कार्या। **अपि**शब्दो वक्ष्यमाणसमुच्चयार्थः।

**परि०— परस्यैवेति**। परस्य प्राप्यत्वस्यैव श्रवणेन ब्रह्मविशेषणत्वाश्रवणेऽप्यन्यज्ञानेनान्य-प्राप्तेरयोगाद् ब्रह्मविदिति अत्रापि परब्रह्मविदिति गम्यत इति भावः। **वक्ष्यमाणेति**। मुख्यब्रह्मग्रह इति वक्ष्यमाणेत्यर्थः।

**गु०दी०—** यद्यपि ब्रह्मविदिति पदे समस्तं ब्रह्मपदं परमित्यत्र नायाति। तथापि अन्यज्ञानादन्यप्राप्त्य-योगेनार्थवशाद्विभज्य योजनीयम्। परपदस्याप्यर्थतस्तत्रान्वयः। एवं च परब्रह्मवित् परंब्रह्माप्नोतीत्यर्थलाभात् द्विःप्रस्ताव इति भावेनाह **अत्र हीति**। यद्यपि मायावादी 'ब्रह्म वेद ब्रह्मैव भवती'त्युभयत्रापि परंब्रह्मैवाङ्गीकरोति। अस्माकं तु यः ब्रह्म वेद सः मुक्तौ ब्रह्मैव जीव एव भवतीत्यर्थः।

**वं०प०— वक्ष्यमाणेति**। अनुपदमेव मुख्यब्रह्मेति मुख्यार्थे बाधकाभावरूपेत्यर्थः।





**आनन्दः— वक्ष्यमाणेति** । अङ्गीकृत्य चेत्यनेन यद्वक्ष्यमाणं तत्समुच्चयार्थः ।

**श्रीनिधि०— वक्ष्यमाणसमुच्चयार्थ इति** । मुख्यब्रह्मग्रहण इति वक्ष्यमाण इत्यर्थः ।

**शे०वा०— वक्ष्यमाणेति** । शक्तिग्रहणसामर्थ्येन प्रथमप्राप्तत्वरूपवक्ष्यमाणप्रमाणेत्यर्थः ।

**॥ इति अन्नमयादीनाममुख्यब्रह्मपरताभावे 'परब्रह्मण एव प्रसङ्गः' ॥**

* * *

**॥ अथ अन्नमयादीनाममुख्यब्रह्मपरताभावे मुख्यार्थस्य प्रथमप्राप्तत्वं बाधकाभावश्च ॥**

**२६ सु०—** अङ्गीकृत्य चेदं ज्ञापकमुक्तम्, वस्तुतस्तु शक्तिग्रहणसामर्थ्येन प्रथमप्राप्तत्वात् बाधकाभावाच्च नामुख्यार्थकल्पना युक्तेत्याह **मुख्येति** ।

**अनु०— मुख्यब्रह्मग्रहे युक्ते नामुख्यं युज्यते क्वचित् ।**
**असम्भवे हि मुख्यस्य गौणार्थाङ्गीकृतिर्भवेत् ॥**

**मुख्ययोगेऽप्यमुख्यग्रहणं किं न स्यादिति चेत् (न), मुख्यासम्भव एवामुख्याङ्गीकार इति व्याप्तेरित्याह असम्भवे हीति । यद्वा कथं तर्हि 'ब्रह्म वेद ब्रह्मैव भवती'त्यादौ ब्रह्मशब्दस्यामुख्यार्थग्रहणमित्यत आह क्वचिदसम्भवे हीति ।**

**गु०दी०—** अतोऽसम्भवेऽमुख्यार्थग्रहणमप्यस्तीति भावेनाह **क्वचिदिति** ।

**वं०प०— ब्रह्म वेदेति** । ब्रह्म वेद चेद्ब्रह्मैव जीव एव भवति न जीवभावोऽस्य गच्छतीति द्वितीयब्रह्मशब्दस्य जीवरूपामुख्यार्थस्य गृहीतत्वेन तन्न स्यात् । मुख्यस्यैवात्र ग्रहणे ब्रह्माभेदप्राप्तेरिति भावः ।

**आनन्दः— शक्तिग्रहणसामर्थ्येनेति** । नन्विदमयुक्तम् । यदि हि ब्रह्मशब्दस्यान्यत्र लक्षणं विष्णावेव शक्तिस्तदशक्तिग्रहणस्य सामर्थ्येन ब्रह्मशब्दार्थत्वेन विष्णोः प्रथमप्राप्तिः स्यात् । न चैवं शक्तेरन्यत्रापि सत्त्वस्य बृह जाति जीवेत्यभिधानसिद्धत्वादिति । मैवम् । यदि हि शक्तिग्रहणसामर्थ्येनेत्यस्य ब्रह्मणि शक्तिरन्यत्र लक्षणेति स्यात् तदेवं वक्तव्यम् । न चैवं किन्तु शक्तावेव मुख्यामुख्यभेदेनावान्तरो विशेषोऽस्ति । तत्र मुख्यशक्तिः ब्रह्मणि अन्यत्र त्वमुख्यशक्तिरस्ति । तत्र मुख्यामुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायान्मुख्यशक्तिग्रहणसामर्थ्येन ब्रह्मैव प्रथमप्राप्तमित्यर्थात् कश्चिद्दोष इति भावः । अत्र हि ब्रह्मणि शक्तेर्मुख्यत्वं नाम विद्वत्प्रसिद्धत्वं द्रष्टव्यम् ।

**शे०वा०**— नन्वेवं गङ्गायां घोष इत्यादावपि शक्तिग्रहणसामर्थ्येन प्रवाहस्य प्रथमप्राप्तत्वात्प्रवाहार्थत्वापत्त्याऽमुख्यार्थकल्पना न स्यादित्यतस्तत्र बाधकवशात्प्रथमप्राप्तस्य परित्यागेऽपि प्रकृते बाधकाभावान्न तत्परित्याग इत्याह **बाधकाभावाच्चेति**।

**॥ इति अन्नमयादीनाममुख्यब्रह्मपरताभावः ॥**

**॥ इति आनन्दमयपूर्विणां शब्दानामुपलक्षणत्वम् ॥**

**॥ इति अन्नमयादिशब्दवाच्यं विष्णवाख्यं ब्रह्मैव नान्यत्किंचित् ॥**

**॥ इति एतदधिकरणगतआनन्दमयोऽभ्यासात् इति प्रथमसूत्रस्वपक्षसाधने भाष्योक्तोत्तरपक्षसुधानुव्याख्यानानि ॥**

* * *

**॥ अथ एतदधिकरणगतस्वपक्षसाधने 'विकारशब्दान्नेति चेन्न प्राचुर्यादि' ति द्वितीयसूत्रानुभाष्यसुधाव्याख्यानानि ॥**

**॥ अथ तत्र विकारार्थकमयट्छब्दात् अन्नमयादिर्न ब्रह्म इति चेत्, न प्राचुर्यात् ॥**

**॥ तथा च अस्यां श्रुतौ वर्तमानानां सर्वेषां मयट्प्रत्ययानां प्राचुर्यार्थकत्वम् ॥**

**२७ सु०**— 'ननु नान्नमयादयः परमात्मा, विकारवाचिनो मयट्शब्दस्य श्रवणात्, परमात्मनोऽन्नादिविकारत्वानुपपत्तेः । न च ब्रह्मशब्दानुपपत्तिः, अमुख्यार्थसम्भवात् । न च प्रस्तावविरोधो मु(ख्या)ख्येऽर्थे बाधकाभावश्चेत्युक्तमिति वाच्यम्, विकारार्थस्य मयट्प्रत्ययस्य बाधकत्वात्, तत एव प्रस्तावस्याप्यपवादादि'त्याशङ्क्य तत्परिहाराय सूत्रम् **ॐ विकारशब्दान्नेति चेन्न प्राचुर्यादिति**।

**ब्र०सू०— ॥ ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥**

तत्रानन्दमयविषयावेवाक्षेपपरिहाराविति प्रतीतिनिरासाय सिद्धान्तांशं व्याचष्टे **प्राचुर्यार्थाश्चेति**।

**अनु०— प्राचुर्यार्थाश्च मयटः सर्वेऽत्र प्रतिपादिताः ।**

चशब्दोऽवधारणे। **अत्र श्रुतौ**। कुत इत्यत आह **प्रतिपादिता इति**।





**अयमर्थः । मयट्शब्दो हि विकार इव प्राचुर्येऽपि मुख्यः, 'तत्प्रकृतवचने मयडि'-त्यनुशासनात् । न च ब्रह्मशब्दोऽन्यत्र मुख्यः । न च सावकाशेन निरवकाशस्य बाधोऽस्ति, अतो निरवकाशब्रह्मशब्दबलात्सावकाशस्य मयटः प्राचुर्यार्थत्वोपपत्तेर्न तद्बलादन्नमयादीना-मपरमात्मत्वं कल्प्यमिति ।**

**एतेन विकारप्रवाहमध्यपतितत्वान्नानन्दमयशब्दः प्राचुर्यार्थ इत्येतद्गर्भस्रावेणैव गतम्, अन्नमयादिष्वपि मयटः प्राचुर्यार्थतास्वीकारात् । परेणापि हि प्राणमये न विकारार्थत्वं वक्तुं युक्तम्, प्राणानां प्राणविकारत्वासम्भवात् । यथाकथञ्चिद्विकार(त्व)(वि)कल्पने मुख्यार्थ-परित्यागात् ।**

**परि०**— तावतोक्तशङ्कानिरासः कथमित्यत आह **अयमर्थ इति । तत्प्रकृतवचन इति ।** प्राचुर्येण प्रस्तुतमित्यर्थे 'प्रथमान्तान्मयड् भवती'ति पाणिन्युक्तेरित्यर्थः । परस्यैव विकारप्रायपाठत्याग इत्याह **परेणापि हीति । प्राणानां प्राणविकारत्वेति ।** वायुविकारा हि प्राणाः । तेषामेव तद्विकारत्वा-योगादित्यर्थः । प्राणशब्दस्य वायुलक्षकत्वमुपेत्य विकारार्थत्वमुपेयत इत्यत आह **यथाकथञ्चिदिति ।**

**गु०दी०**— **तत्प्रकृतवचने मयट्** इत्यत्र **तत्** प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमत्रेत्यर्थे मयट्प्रत्ययः स्यादित्यर्थः । अत एव 'प्राचुर्यार्थे विकारार्थे' इति वचनम् । **प्राणानां प्राणविकारत्वासम्भवात्** इत्यत्र त्वक्चर्म-मांसरुधिरमेदोमज्जास्थिभेदेन सप्तधा विकृतस्य सर्वत्र तेजोबन्नमयत्वमेव । प्राणमयत्वं तु तेजोबन्नात्मकेषु चतुर्षु कोशेषु प्राणादीनां सञ्चार एव । अतः परमते प्राणानामेव प्राणमयत्वमुक्तं स्यात् । तच्चासम्भावितमित्यर्थः । **यथा-कथञ्चिद्विकारत्वकल्पने** विकृतकोशान्तर्गतत्वकल्पने इत्यर्थः ।

**यादु०**— **तत्प्रकृतवचन इति ।** इदं सूत्रं वैयाकरणैर्द्वेधा व्याख्यातम् । तदिति प्रथमासमर्थात्प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात्स्वार्थे मयट्प्रत्ययो भवतीत्येकोऽर्थः । अस्यान्नमयं यवागूमयीत्याद्युदाहरणम् । प्राचुर्येण प्रस्तुतमन्नमित्यादिस्तदर्थः । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रवाची न क्लृप्तप्राचुर्यविशिष्टप्रस्तुतवाची । तथापि प्रकृत इत्येतावति वक्तव्ये वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि यादृशस्य प्रकृतस्य मयटा वचनं प्रत्यायनं प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके च मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धमिति । अपरस्त्वर्थः । प्रकृतं प्रस्तुतमुच्यतेऽस्मिन्निति प्रकृतवचनम् । तदिति प्रथमासमर्थात्प्रकृतवचनेऽर्थे मयट्प्रत्ययो भवतीति । अस्यान्नमयो यज्ञ इत्याद्युदाहरणम् । प्रकृतमन्नमस्मिन्यज्ञ इत्यादिस्तदर्थः । अस्मिन्नर्थे प्रकृतादर्थादर्थान्तरे प्रत्ययः । प्रकृतशब्देन च प्रस्तुतमात्रमुच्यते न तु प्राचुर्यविशिष्टमिति पूर्वस्मादर्थाद्विशेषः । अत्र च न द्वितीय-व्याख्यानं प्रकृतोपयोगि, प्राचुर्यप्रत्यायकाभावात्, किन्तु, प्रथमव्याख्यानमेव । तत्रापि सूत्रोपात्तचातुर्यं शाब्दं,





आनन्दप्रचुरधर्मिपर्यन्तत्वं त्वार्थिकमित्यवगन्तव्यम् । 'अन्नमयादीनां पञ्चानामपि न ब्रह्मत्वमि'ति यत्सङ्क्षेपेणोक्तं तदुक्तातिदेशेन दूषयति **एतेन विकारेति । परेणापीति** । 'देहप्राणमनोबुद्ध्यानन्दरूपा अनात्मान एव क्रमेणान्नमयादिशब्दवाच्या' इति परस्याभिप्रेतम् । तत्तद्देहस्यान्नविकारत्वेऽपि, न प्राणादीनां प्राणादिविकारत्वम् । आत्माश्रयत्वप्रसङ्गात् । अतः स्वार्थिकत्वमेवात्र मयटामिति त्वयाऽपि वाच्यम् । सति चैवमानन्दमये प्राचुर्यर्थतास्वीकारे कथं प्रायपाठविरोधस्त्वदेकदेशिनं प्रति त्वयोक्त इति भावः । प्राणमय इत्युपलक्षणम् । प्राणमयादिष्वित्यर्थः । एवं प्राणानामित्यादिकमपि प्राणादीनां प्राणादिविकारत्वासम्भवादिति व्याख्येयम् । अत एव भामत्याम्, 'न च प्राणमयादिषु विकारार्थत्वायोगात्स्वार्थिको मयडि'त्याशङ्क्य निराकृतम् । तदीयनिराकरणमेवाभिप्रेत्याह **यथाकथञ्चिदिति** । प्राणाद्युपाध्यवच्छिन्नं ब्रह्म भवति प्राणादिविकारो, घटाकाशमिव घटविकार इति प्राणाद्युपाधिविभक्तलक्षणविकारकल्पन इत्यर्थः । **मुख्यार्थ इति** । उपाधिज्ञाप्यविभागस्य मुख्यविकारत्वाभावादेवं कल्पने मुख्यार्थपरित्याग इति भावः । यद्यप्येतन्मतमग्रे निराकरिष्यते तथाऽप्युक्तदूषणातिदेशसौकर्यायात्रापि दूषितम् । अत एवाग्रे नैतद् दूषणं वक्ष्यतीत्यवगन्तव्यम् ।

**आनन्दः**— बाधकबलेन ब्रह्मशब्दरूपहेतोरन्यथासिद्धिं शङ्कते **ननु नान्नेति । तत एव** मयट्प्रत्ययरूपबाधकसद्भावादेव । **अपवादात्** ननूत्तरकारिकायां प्राचुर्यार्थाश्च मयटः इति बहुवचनमयुक्तम् मयट एकत्वेन बहुवचनासम्भवात् । किंचेदं न सूत्रव्याख्यानं तद्विरुद्धार्थत्वादित्यतस्तात्पर्यमाह **तत्रानन्दमयविषयाविति** । समुच्चयार्थानुपपत्तेराह **चशब्द इति** । ननु मयटः प्राचुर्यर्थत्वमयुक्तं हेत्वभावादित्युक्तं प्रतिपादितम् । इत्युक्तं तदयुक्तं तावपि प्राचुर्यर्थस्यानुपपादनात् । अस्तु वा प्राचुर्यर्थत्वं तथापि प्रकृते विकारार्थत्वं किं तस्या बाधकाभावात् । न च ब्रह्मशब्द एव बाधकः । तस्यामुख्यतयाऽप्युपपत्तेरित्यत आह **अयमर्थ इति** । नन्वननुशासनान्न तस्य तत्र मुख्यत्वमित्यत आह **तत्प्रकृत इति** । तदिति प्रथमासामर्थ्यात्प्राचुर्येण प्रस्तुतमित्यर्थे मयट् स्यादिति सूत्रार्थः । ननु ब्रह्मशब्दस्य विकारार्थमयटा बाधः किं न स्यादित्यत आह **न च सावकाशेनेति** । ब्रह्मशब्दस्य च निरवकाशत्वस्योक्तत्वादिति भावः । एतेनेत्यस्यार्थमाह **अन्नमयादिष्वपीति** । परेणापि हि प्राणमयेन विकारार्थत्वं वक्तुं युक्तमिति । एतच्च यादवप्रकाशीयमतानुसारेण तेन प्राणमये मयटः स्वार्थिकत्वस्वीकारेण प्राणमयशब्देन प्राणस्यैव स्वीकृतत्वेन प्राणानामिति दूषणस्य सम्भवात् । ननु प्राणावयवित्वेन प्राणविकारत्वं किं न स्यादित्यत आह **कथञ्चिदिति** । प्राणोपाध्यवच्छिन्नत्वेन प्राणविकारत्वं चेदित्यर्थः ।

**शे०वा०— तत्प्रकृतवचने मयडित्यनुशासनादिति** । प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनं भावे ल्युट् । ततश्चायं सूत्रार्थः । तदिति प्रथमासमर्थात्प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात्स्वार्थे मयट्प्रत्ययो भवतीति । अन्नमयं यवागूमयीत्याद्यस्योदाहरणम् । प्राचुर्येण प्रस्तुता यवागूरित्यादिस्तदर्थः । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढो न क्लृप्तप्राचुर्यविशिष्टप्रस्तुतवाची तथाऽपि प्रकृत इत्येतावति वक्तव्ये वचनग्रहणादयं विशेषो लक्ष्यते । वचनग्रहणं हि लोके यादृशस्य प्रकृतस्य मयटा वचनं प्रत्यायनं प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके च मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धम् । न चैवं प्राचुर्यविशिष्टप्रकृत्यर्थमात्र-





पर्यवसितमयड्विधिरूपत्वेन आनन्दमयशब्दात् सूत्रोपात्तप्राचुर्यमात्रलाभेऽपि कथमानन्दप्रचुरधर्मिपर्यन्तत्वलाभ इति वाच्यम् । मत्वर्थीयाच्प्रत्ययान्तरत्वाश्रयणेन तल्लाभसम्भवादिति ध्येयम् । यद्वा । प्राचुर्येण प्रस्तुतं प्रकृतं तदुच्यतेऽस्मिन्निति प्रकृतवचनम् । तदिति प्रथमासमर्थाद्यथोक्तेऽभिधेये मयट्प्रत्ययो भवतीति प्रचुरतायुक्तेऽपि वस्तुनि विकारवन्मयट्स्मरणादित्यर्थः । विकारप्रवाहमध्यपतितत्वान्नानन्दमये मयटः प्राचुर्यार्थत्वं युक्तमिति प्रागुक्तं दूषणमप्यतिदेशेन परिहरति **एतेनेति** । एतेनेत्युक्तमेव विशदयति **अन्नमयादिष्वपीति** । तथा चान्नमयादीनां चतुर्णामब्रह्मत्वमङ्गीकृत्यानन्दमयमात्रस्य ब्रह्मत्ववादिनं प्रत्युक्तरीत्या प्रायपाठबाधप्रसक्तावपि मयाऽन्नमयादीनामपि ब्रह्मत्वाङ्गीकारेण तत्रत्यमयटामपि प्राचुर्यार्थत्वस्यैवाङ्गीकृतत्वान्न मत्पक्षे विकारप्रायपाठभङ्गप्रसक्तिरिति भावः । अङ्गीकृत्यैव च प्रायपाठबाधस्योद्भाव्यत्वं तत्समाधानमभिहितम् । वस्तुतस्तु तस्य परेणानुद्भाव्यत्वान्न समाधेयत्वमपीत्यभिप्रेत्य कुतस्तदित्यतः स्वं प्रत्यप्यविशिष्टत्वादित्याशयेन परं प्रति तदुपपादयति **परेणापीति** । प्राणमय इत्युपलक्षणम् । प्राणमयादिष्वित्यर्थः । **प्राणानामिति** । प्राणादीनामित्यर्थः । क्वचित्प्राणमयादीनामित्येव पाठः । **प्राणविकारत्वासम्भवादिति** । प्राणादिविकारत्वासम्भवादित्यर्थः । प्राणादीनां प्राणादिविकारत्वस्यात्माश्रयत्वप्रसङ्गेन असम्भवादिति भावः । ननु प्राणादीनां प्राणादिविकारत्वाभावेऽपि प्राणाद्युपाध्यवच्छिन्नस्य गगनस्य घटादिविकारत्वदर्शनादित्यत आह **यथाकथञ्चिदिति** । **मुख्येति** । प्राणादिशब्दानां प्राणाद्युपाध्यवच्छिन्नपरत्वेन मुख्यार्थत्यागप्रसङ्गादिति भावः ।

**वा०र०— 'तत्प्रकृतवचने मयड्'** इत्यत्र ह्यर्थद्वयम् । वचनशब्दस्य भावे ल्युडन्तत्वाश्रयणेन चापरः । तत्राद्ये प्राचुर्येण प्रस्तुतत्वरूपं प्रकृतत्वम् । 'अन्नमय' इत्याद्युदाहरणगतान्नादिकं प्रकृत्यर्थ एव । तदर्थे वर्तमानाच्च मयट्प्रत्ययः स्वार्थिकोऽपि अन्नादिप्रकृतेः प्राचुर्यविशिष्टत्वेन प्रस्तुतार्थकत्वं द्योतयति । प्रत्ययस्य स्वार्थिकत्वादेव प्रकृतिलिङ्गमेव व्यवहर्तव्यमिति शेषः । द्वितीये तु प्राचुर्येण प्रस्तुतत्वं प्रकृत्यर्थसमः । तदर्थे वर्तमानाद्विहितस्य मयटस्तत्प्रकृतमुच्यते अस्मिन्नित्यधिकरणत्वार्थकत्वम् । एवं प्रकृत्यर्थं प्रत्यधिकरणत्वार्थकत्वादेव विशेष्यनिघ्नतया विशेष्यलिङ्गमेव व्यवहर्तव्यमित्यादिर्विशेषः । तत्र तावदाद्यमर्थमाह **प्राचुर्येण प्रस्तुतमित्यादि** । **प्रथमासमर्थादिति** । प्रथमान्तस्य समर्थं च मयट्प्रत्ययद्योत्यप्रकृतत्वाधारत्वमिति हरदत्तः । **अर्थे वर्तमानादिति** । ननु भावे ल्युडन्तत्वमाश्रित्य वचनशब्दः प्रथमत एव व्याख्यातः । तथाच तदनन्तरप्रवर्तितसूत्रार्थे तस्यापि प्रवेशेन भाव्यम् । प्राचुर्येण प्रस्तुतं वस्तु, तस्य प्रतिपादन इति तत्कथं तदनुक्तिरिति चेत् । न । यतोऽत्र प्रथमं सौत्रपदयोजनामात्रमभिहितम् । सूत्रार्थस्तु वचनपदार्थानन्तर्भावेणैवोच्यते । तर्हि तद्वैयर्थ्यमिति तु न शङ्कनीयम् । यद्यपि कृते प्रत्युत्तरटीकायां तत्सार्थक्यस्य प्रयोजनान्तरप्रतिपादनेन वर्णनादिति ज्ञेयम् । यत्तु रमायां प्रकृते द्योत्ये प्रत्यय इति । तन्न । भावे ल्युडन्तत्वपरिग्रहानुसारेणाप्रकृतस्य द्योतन इत्येव वाच्यत्वेन कर्मणि ल्युडङ्गीकारेण द्योतनस्य प्रधानतयोपस्थित्यापादकव्याख्यानस्य आद्य इतीति ल्युट्पक्षपरिहारार्थक कौमुदीवाक्यप्रतीकोपादानविस्मरणमूलकत्वात् । अन्यत्र तु भावे प्रत्ययानाश्रयणाद्योत्ये इत्युक्तिरुपपन्ना । प्रकृतत्वं तस्य द्योत्यमिति मञ्जरीशेषीवाक्ययोस्तु वचनग्रहणलब्धार्थानुवादेऽपि वचन इत्यस्य द्योत्य इत्यर्थकथनान्न दोषः । तथा च वैय्यर्थ्य-





त्यागं प्रक्रियाकारपक्षे दूषणमुद्भावयन् स्वयं प्रत्ययार्थं त्यक्तवानिति दुष्यत्येव किञ्च यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढ इत्यादिना आशङ्कासमाधानाभ्यां वचनग्रहणप्रयोजनान्तरं स्वयमभिदधता भावे ल्युट्पक्षे मयटः स्वार्थिकत्वमेव स्वीकृतं स्यादिति प्रकृत इत्येतावत एव सूत्रार्थे प्रवेशस्य त्वद्व्याख्यानेऽपि प्राप्त्या वचनपदार्थपरित्यागे तवापि समाने सति परदूषणयोगः। त्वदुक्तप्रयोजनान्तरवत्वं तु प्रक्रियायामपि प्राचुर्येणेति विशेषणेन सूचितं तट्टीकाया-मस्पष्टीकृतमेवेत्यास्तां तावत्। अन्नमयमित्यादौ मयटः स्वार्थिकतया अन्नादिप्रकृतिलिङ्गमेवेत्याशयेनाह **प्राचुर्येण प्रस्तुता यवा गूरिति**। आदिपदेन प्राचुर्येण प्रस्तुतमन्नमित्यर्थपरिग्रहः। क्रमस्याविवक्षितत्वमित्याशयेन पश्चा-दुक्तस्यादि प्रथमं व्याख्यानम्। मञ्जर्यनुसारेण प्रकृतपदार्थमाशङ्कासमाधानाभ्यामुपपादयति **यद्यपि प्रकृतेत्यादिना**। शेष्याद्युक्तरीत्या लोके यादृशस्येत्येतत्प्रकृते योजयति **लोके चेति**। परिमलग्रन्थोऽप्यत्रास्तीति वचनमित्यनूद्य प्रत्यायनमिति व्याख्यानेन ल्युडपि योजितः। अन्नमयादिशब्दैरित्यत्र पदेन यवागुमयीत्यादि शब्दग्रहणम्। एवं व्याख्यानाय प्रवृत्तपरिमलकृतोऽपि भावे ल्युडित्यनुक्तिर्युक्तेति बोध्यम्। 'अन्नमयो यज्ञ' इत्यन्नप्रचुरो यज्ञ उच्यत इति तदीयोदाहरणानुसारेणानन्दमयशब्दे आनन्दप्रचुरधर्मिपर्यन्तत्वस्य विवक्षिततया अवगतस्याद्यव्याख्याने लडा-भावादनुपयुक्तमाद्यव्याख्यानमिति कल्पतरूक्तं दूषयितुमाह **न चेति**। **मात्रपर्यवसितेति**। स्वार्थिकस्य मयटः प्राचुर्यविशिष्टान्नादिमत्वप्रतिपादकत्वाभावादिति भावः। **मत्वर्थीयेति**। प्राचुर्येण प्रस्तुतानन्दार्थकानन्दमयशब्दा-नन्दमयोऽस्यास्तीत्यर्थे अर्शादित्वेन मत्वर्थेऽच्प्रत्यय इत्यर्थः। स्वार्थिकत्वे वैयर्थ्यमित्यरुच्या 'प्राचुर्यार्थाश्च मयट' इति अनुव्याख्यानस्वारस्याय च अधिकरणे ल्युडङ्गीकारेण प्रवृत्तप्रागुक्तद्वितीयार्थानुसारेणाह **यद्वेति**। यद्यपि अधिकरणे ल्युडङ्गीकारेण प्रवृत्तद्वितीयपक्षस्य काशिकादौ प्रतिपादनावसरे वचनग्रहणसामर्थ्यलब्धार्थमनाश्रित्य प्रस्तुतमात्रमेव प्रकृतपदार्थतयाऽभिहितमिति तथैव वक्तुमुचितम्। तथापि भावाधिकरणार्थत्वाभ्यां ल्युटि विशेषे मयटि स्वार्थिकत्वादेः प्राप्तावपि प्रथमव्यर्थत्वादेव वचनपदसामर्थ्याश्रयणम्। द्वितीये तु वचनपदप्रयोगेणाधिकार्थ-लाभ इत्येवं वैषम्यप्राप्तावपि वचनपदसामर्थ्यस्योभयत्रापि वर्णयितुं शक्यत्वेऽत्र तथार्थवर्णनाभावस्यार्धजरतीया-पादकत्वेन युक्तत्वमिति हृदि निधाय प्राचुर्येणेत्यधिकोक्तिः। अत एवाधिकरणे ल्युडङ्गीकारेण प्रवृत्तप्रक्रियाव्याख्याने प्राचुर्येण प्रस्तुतमत्रेत्यर्थः इत्येवोक्तम्। सिद्धान्तकौमुद्यामपि प्राचुर्येण प्रस्तुतं प्रकृतम्। तस्य वचनं प्रतिपादनं भावोऽधिकरणे वा ल्युडिति पक्षद्वयेऽपि प्राचुर्यप्रवेशः। अत एव च शेषीकृता 'अन्नमयो यज्ञ' इत्येतदन्नं प्राचुर्येण प्रस्तुतमत्रेति विग्रह इत्युक्तम्। एतेनैव रमादौ प्राचुर्यपदप्रवेशाभावोऽप्यपास्तः। एतेनैवैतद्योजनायामानन्दप्राचुर्यस्य भगवत्यप्राप्तिरिति कल्पतरूक्तं निरस्तम्। प्राचुर्यस्यापि प्रकृतपदार्थत्वाङ्गीकारात्। तथा प्राचुर्येणेत्युक्तयोजनायां प्राचुर्यस्यानन्दे प्राप्तावप्यानन्दप्राचुरत्वस्य भगवत्यप्राप्तिरिति शङ्कामात्रमप्यपास्तम्। प्राचुर्यस्यानन्दविशेषणत्व-विशेषत्वयोरर्थानतिरेकात्। वक्ष्यति च मूलकारः। **प्रचुरान्नादिनिमित्तवानिति**। **अस्मिन्निति**। व्युत्पत्तिदर्शने-नैवाधिकरणे ल्युडिति प्रतिपादनलाभान्न तथा पृथगुक्तिः। अधिकरणे ल्युडन्तत्वादेव विशेष्यालिङ्गत्वं च युक्तमिति प्रागेवोक्तमित्यवधेयम्। **यथोक्तेऽभिधेय इति**। प्राचुर्येण प्रकृतं यत्रोच्यते तद्रूपाधिकरणोऽभिधेय इत्यर्थः। अत्र प्रकृत्यर्थभूतान्नादिव्यतिरिक्तमेवाधिकरणं मयडर्थ इति न स्वार्थिकत्वम्। **प्रचुरतायुक्तेऽपीति**। अधिकरणे ल्युट्पक्षे लब्धेन प्रचुरान्नापूपादियुक्ते धर्मिणीत्यनेन लब्धस्यान्नापूपादि प्रचुरो यो धर्मी तस्य भावोऽन्नादिप्रचुरता तद्युक्ते





धर्मिणीत्यस्यैकदेशेव प्रकृतानुसारेण कीर्तिताः । विकारार्थत्वप्रतिकक्ष्या तथैकदेशोक्तिमात्रेण पूर्तिरिति ज्ञेयम् । भवतीति प्रचुरतेत्यत्र भवतीत्यतःपरं सूत्रार्थ इति शेषः । तदनन्तरं मूलं योजितम् **प्रचुरतेति** । सूत्रव्याख्यानद्वयानन्तरं मूलयोजनया व्याख्यानद्वयोऽपि प्रत्येकमेतद्वक्तव्यमिति सूचयतीति केचित् । वस्तुतस्तु प्राचुर्येणेत्यारभ्येत्यर्थ इत्यन्तमेव वाक्यं मूलवाक्यार्थकथनरूपम् । इत्यनुशासनादित्यस्येत्येवमनुशासनादित्यर्थं दर्शयितुमुक्तमिति प्रचुरतेति । उत्तरयोजनायां मूलयोजनेनैव पूर्वत्रापि तथा योजनमिदमेव बुद्ध्या विवेकेनेति सूचयति । व्याख्यानस्यासमाप्तत्वादेव मूलशेषव्याख्यानं प्राक् न कृतमिति ज्ञेयम् । एवं च व्याख्यानद्वयेऽपि प्रकृतानुपयोगाद्विकारशब्दान्नेति चेदिति द्वितीयसूत्रोपात्तप्राचुर्यप्रतीत्युपयोगितया प्रथमव्याख्यानं कल्पतरूकृतमिति परिमलोक्तं खण्डितं भवति । व्याख्यानद्वयस्याप्युपयोगस्य प्रागुक्तरीत्या लाभात् । एतेनैतदपि निरस्तम् । आनन्दमयादिपदे मयटो विशेष्यत्वेनान्वयायोग इति । विद्वत्तम इत्यादावतिशयेन विद्वान् इत्यादिरूपेण प्रत्ययार्थस्य विशेषणत्वेन योजनावत् प्रकृतेऽप्युपपत्तेः । विस्तृतं चेदमानन्दमयाधिकरणतत्त्वप्रकाशिकाप्रपञ्चेऽस्माभिः । कल्पतरावाद्यव्याख्यानमात्राश्रयणेऽपि द्वितीयानुपयोगं प्रतिपाद्य प्रथमव्याख्यानोपयोगाय प्रागुक्तरीत्या आनन्दप्रचुरधर्मिपर्यन्तत्वस्योपपादनीयतया द्वितीयस्यापि व्याख्यानस्य प्रागुक्तरीत्या उपपादनस्य उपलक्षणायाऽभिप्रेततया वा वक्तव्यतया व्याख्यातारंमन्येन तथा प्रयत्नाकरणे निमित्ताभावाच्च ।

एवं परिमळाद्युक्तव्याख्यानानुपयोगकम् । निर्वर्त्य सूत्रं व्याख्यातं गुरुराजेन तत्र हि ॥
यथाशक्त्यवबुध्येयमभिप्रायः प्रकाशितः । तद्युक्तगुरुराजीयव्याख्यां गृह्णन्तु सूरयः ॥

न च प्राणमयादिषु विकारार्थत्वायोगादिति प्राणाद्युपाध्यवच्छिन्नेति भामतीवाक्यम् । तद्व्याख्यानं चानुसन्धायाह **प्राणमय इत्युपलक्षणमिति** । एतदेव प्राणादीनामिति व्याख्याने मूलम् । एतत् प्रपञ्चनीयमस्ति ।

**स०व्र०— तत्प्रकृतवचने मयडितीति** । तदिति प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमित्यर्थे मयडिति सूत्रार्थः । उदाहरणं त्वत्रान्नमयो यज्ञ इति द्रष्टव्यम् । **परेणापि प्राणमय इति** । परेण हि प्राणेन्द्रियादिसङ्घात एव शरीरम् अन्नमयादिशब्दाभिधेयमित्युच्यते । तस्य चान्नविकारित्वेनान्नमयत्वेऽपि शरीरशब्दार्थनिविष्टप्राणानां प्राणविकारत्वासम्भवादित्यर्थः । एवं मनोमयेऽपि न विकारार्थत्वं वक्तुं युक्तम् । शरीरशब्दार्थनिविष्टमनसो मनोविकारत्वासम्भवादिति परेणासङ्गतोक्तिरित्याभाति । तथापि यादवप्रकाशीयमतानुसारेणेयमुक्तिः । तेन प्राणमयमनोमययोः मयटः स्वार्थिकत्वाङ्गीकारादित्यदोषः । **प्राणानां** इन्द्रियाणाम् । **यथाकथञ्चिदिति** । प्राणसम्बन्धेन प्राणविकारो मयडर्थत्वेन गौणो व्याख्यायते प्राणानां प्राणसम्बन्धश्च तादात्म्यादिरूपः कश्चन भविष्यतीति कल्प्यते । प्राणशब्देनेन्द्रियावयवादिग्रहणेन वा तद्विकारित्वकल्पने मयटः प्राणशब्दस्य च मुख्यार्थपरित्यागप्रसङ्गादिति भावः ।

**विठ्ठल०—** ननु मयटो विकारार्थकत्वे शङ्किते प्राचुर्यार्थाः प्रतिपादिता इत्युक्तम् । कथमनेनोक्तशङ्कापरिहारः । अत्र प्राचुर्यार्थत्वमेव न विकारार्थत्वमित्यत्र विशेषनियामकाभावादित्यतस्तदुपपादयितुमाह **अयमर्थ**





**इति** । तत्प्रकृतवचन इति प्राचुर्येण प्रस्तुतमित्यर्थे प्रथमान्तात् मयट् भवतीति सूत्रार्थः । अन्नमयादिषु मयटो विकारार्थत्वात् । तत्प्रवाहगतानां पञ्चानामपि न ब्रह्मत्वमिति यत्परेणोक्तं तदुक्तातिदेशेन दूषयति **एतेनेति** । परस्यैव प्रायपाठविरोध इति भावः । अत्र प्राणमय इत्यादि मनोमयाद्युपलक्षणं ज्ञेयम् । प्राणादिविकारत्वं प्राणाद्यवच्छिन्नस्यात्मन उपचारेणोपपद्यते विकारिघटावच्छिन्नस्याकाशस्य विकारित्ववत् । अन्तः प्राणमयशरीरावच्छिन्नो जीवः प्राणमयः प्राणविकार इति तदवच्छिन्नविषय उपपद्यत इत्यत आह **यथाकथञ्चिदिति** । वस्तुतः प्राणानां प्राणविकारत्वाभावात् यथाकथञ्चिदित्युक्तम् ।

**चषकः— तत्प्रकृतवचने मयडित्यनुशासनादिति** । तदिति प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमिदमित्यर्थे मयट्प्रत्ययो भवतीति सूत्रार्थः । अन्नमयं यवागूमयीत्याद्युदाहरणम् । प्राचुर्येण प्रस्तुतमन्नमित्यादिस्तदर्थः । प्रकृतशब्दस्य प्रस्तुतमात्रनिरूपितसमुदायवृत्तिकत्वेन क्लृप्तप्राचुर्यविशिष्टप्रस्तुतवाचकत्वविरहेऽपि प्रकृत इत्येवाभिधातव्ये वचनग्रहणसामर्थ्यादीदृशार्थाधिगतिर्भवति । यादृशस्य प्रकृतस्य मयटा वचनं लोके प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धम् । न चैवं प्राचुर्यविशिष्टप्रकृत्यर्थमात्रपर्यवसितमयड्विधिरूपत्वेनानन्दमयशब्दात्सूत्रघटकप्राचुर्यमात्रलाभेऽपि कथमानन्दप्रचुरधर्मिपर्यन्तत्वलाभ इति वाच्यम् । मत्वर्थीयाच्प्रत्ययान्तत्वाश्रयणेन तल्लाभसम्भवादिति व्याचक्षते । यदभ्यधात्सङ्करोऽन्नमयादीनां पञ्चानामपि न ब्रह्मत्वमिति तदुक्तातिदेशेन प्रतिविधत्ते **एतेनेति** । **प्राणानामिति** । आत्माश्रयप्रसङ्गेन प्राणादीनां प्राणविकारत्वस्य दुरुपगमत्वादिति भावः । प्राणादीनां प्राणादिविकारत्वस्योक्तदिशा दुरुपपादत्वेऽपि घटाद्युपहितगगनस्य तत्तदुपाधिविकारत्वस्येव प्राणाद्युपहितचैतन्यस्य प्राणादिशब्देन ग्रहणेन प्राणाद्युपाधिविकारत्वस्य सूपपादत्वादिति भामत्युक्तसमाहितिं प्रत्याख्याति **यथाकथञ्चिदिति** । **मुख्यार्थेति** । प्राणादिशब्दानां तदुपहितपरत्वे मुख्यार्थपरित्यागप्रसङ्गादिति भावः ।

**॥ अथ एतच्छ्रुत्युक्तसर्वमयटां प्राचुर्यार्थकत्वे**
**'अन्नादिशब्दानामप्रसिद्धार्थपरत्वात्तत्प्राचुर्यं हरेर्युज्यते' ॥**

**२८ सु०— स्यादेतत्, अन्नविकारत्ववदन्नप्राचुर्यमपि नेश्वरस्य सम्भवति, तद्धि पार्थिवशरीराणामन्नोपजीविनां स्यादिति चेन्न, अत्रान्नशब्दस्य प्रसिद्धान्नार्थत्वाभावात् । स्वयमेव हि श्रुतिः 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इत्यन्नशब्दं निर्वक्ति । अदिधातोः कर्मणि कर्तरि च क्तप्रत्यये सति रूपमेतत् । न च भूतात्तृत्वं प्रसिद्धान्नस्य सम्भवति । तस्मादन्नशब्दोऽयं भावप्रधानो भूताद्यत्वं भूतात्तृत्वं च वक्ति ।**

तथाऽपि न तत्प्राचुर्यं परमेश्वरस्य युज्यते, भूतात्तृत्वस्य संहर्तृत्वेन सम्भवेऽपि भूताद्यत्वस्य कथमप्यसम्भवादित्यत आह **भोग्यत्वमिति** ।

**अनु०— भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेः ॥**

**अत्राद्यत्वं नाम गौण्या वृत्त्या भोग्यत्वमेव । भोग्यत्वं च हरेः सर्वभूतोपजीव्यतया युज्यते । एवं प्राणमनोविज्ञानशब्दानामपि वाग्वन्तःकरणबुद्धिलक्षणप्रसिद्धार्थतां परित्यज्य प्राणा(णनाव)बोध(न)विज्ञानार्थतामुपादाय तत्प्राचुर्यमशरीरेऽपि परमात्मन्युपपादनीयम्, तत्रोदाहृतश्लोकार्थानां प्रसिद्धार्थेऽनुपपत्तेरिति ।**

**मयटः प्राचुर्यार्थत्वेऽपि नान्नमयादित्वं परमात्मनो युज्यते, तत्प्रचुर इत्युक्ते तद्विरुद्ध-स्याप्यल्पस्य प्रसक्तेः । ब्राह्मणप्रचुरोऽयं ग्राम इति यथा । न हि परमात्मन्यज्ञानदुःखादि-लेशोऽप्यस्ति । मैवम्, विरुद्धार्थप्राप्तेरशाब्दत्वात् । तत्प्रचुरशब्दो हि तस्य तस्मिन्महत्त्व-मात्रमाह, विरुद्धसद्भावस्तु प्रमाणान्तरगम्यः, अन्यथाऽन्नप्रचुरो मखः प्रकाशप्रचुरः सविते-त्युक्ते मखे सवितरि च दुर्भिक्षान्धकारलेशप्रसङ्गात् ।**

**परि०— अदधातोरित्यादि** । 'अद भक्षण' इत्यतः अद्यत इति वा अत्तीति वाऽर्थे क्तप्रत्यये 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति नत्वेऽन्नमितिरूपमित्यर्थः । **अयमिति** । मयडन्तोऽन्नशब्द इत्यर्थः । **प्राणनेति** । चेष्टेत्यर्थः । **इति यथेति** । तत्र शूद्राल्पताप्रतीतेरिति भावः ।

**गु०दी०— अदधातोः कर्मणि कर्तरि च** इत्यत्र 'रदाभ्यां निष्ठातो नः पूर्वस्य च द' इति सूत्रेणादधातोः कर्मणि कर्तरि च क्तप्रत्यये कृते सति 'क्तक्तवतूनिष्ठे'ति वचनान्निष्ठातः क्तप्रत्ययतकारस्य नकारो भवति । ततः पूर्वस्य धात्वन्तदकारस्य च नकारो भवतीति सूत्रार्थपर्यवसानात् श्लिष्टोच्चारणे कृते सत्यन्नशब्दनिष्पत्तिरित्यर्थः । **भोग्यत्वं च हरेस्सर्वभूतोपजीव्यतयेति** उपलक्षणम् । सर्वभूतोपजीव्यतयेत्यनेनोक्तमुपजीव्यत्वमपि भोग्यत्वम् । 'महाभोक्ता महाभोग्य' इति भाष्यकृतो वचनात् । प्रलयकाले महाप्रचुरं जगदाख्यभोग्यं यस्य स महाभोग्यः तस्य भोग्यस्य महान् भोक्ता प्राचुर्येण भोक्ता अनवशेषेण भोक्ता महाभोक्तेति यथास्थितार्थोऽपि द्रष्टव्यः । **दुर्भिक्ष** इत्यत्र अन्नाभाव इत्यर्थः ।

**यादु०— क्तप्रत्यये सतीति** । 'रदाभ्यां निष्ठातो नः पूर्वस्य च द' इत्यनेन तकारदकारयोः नकारे च सतीति शेषः । **अन्यथाऽन्नप्रचुरो मख इति** । अनेन प्रचुरप्रकाशः सवितेत्यादौ प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईशदनुवृत्तिप्रतीतिनियमाभावेऽपि विशेष्यत्वे तन्नियमः । ब्राह्मणप्रचुरो ग्राम इत्यादौ दर्शनात् । आनन्दमय इत्यत्र प्राचुर्यं विशेष्यमिति कल्पतरूक्तमिति निरस्तं वेदितव्यम् । अन्नप्रचुर इत्यादौ प्राचुर्यस्य विशेषत्वेऽपि तद्विरुद्धा-प्रतीतेः ।





**वं०प०— अन्नशब्दस्य** अन्नमयशब्दे विद्यमानस्यान्नशब्दस्य। हरेरुपजीव्यत्वं च नारायणानिरुद्धरूपेण भोज्यवस्तुषु स्थित्वा तर्पकत्वादिति ध्येयम्। **अशरीरेऽपीति**। तथाच तद्धि पार्थिवशरीराणामित्युक्तमप्रयोजकमित्याशयः। **प्रमाणान्तरगम्य इति**। ब्राह्मणप्रचुर इत्यादौ शूद्रादिसद्भावप्रापकप्रत्यक्षरूपमानान्तरवत्प्रकृते परमात्मनि विरोधिदुःखादिप्रापकं मानान्तरं नास्तीत्याशयः। **अन्यथा** विरुद्धार्थप्रतीतेः शाब्दत्वे।

**आनन्दः— भावप्रधानः** अन्नत्वप्रधानः। तथापि प्राणादिशब्दानां वाय्वादिपरत्वान्न तत्प्राचुर्यं परमात्मनि सम्भवतीत्यत आह **एवं प्राणेति**। कुत एवं प्रसिद्धार्थं परित्यज्याप्रसिद्धार्थकल्पनमित्यत आह **तत्रेति**। अन्नमयादावित्यर्थः। **अन्यथेति**। प्राचुर्य इत्यनेन तद्विरुद्धाल्पप्रतीत्यङ्गीकार इत्यर्थः।

**श्रीनिधि०— अन्नशब्दोऽयं भावप्रधान इति**। अन्यथा तेनाद्यत्ववतो अत्तृत्ववतश्च कथनात् स्वप्राचुर्यं स्वस्योक्तं स्यात्। न च तद्युज्यत इति भावः। **अद्यत्वं नाम गौण्येति**। महाभोक्तेत्यनुसारेण भोग्यत्वं इत्युक्तं भाष्येऽपीदं विवक्षितमिति ज्ञेयम्। अद्यत्वं वर्यत्वं भोक्तृत्वं तु अनुभवविशेषविषयत्वमिति तयोर्भेदः। तदपि गौणमित्याह **सर्वभूतोपजीव्यतयेति**। **तत्रोदाहृतश्लोकार्थानाम् इति**। यतो वा निवर्तन्त इत्याद्युदाहृतश्लोकार्थानां अवाङ्मनसगोचरत्वादीनामित्यर्थः।

**शे०वा०— पार्थिवशरीराणामिति**। ईश्वरस्य चाप्राकृतविग्रहत्वान्न पार्थिवशरीरत्वमिति भावः। **अदिधातोरिति**। अद्यत इति कर्म्यण्यत्तीति कर्तरि चादिधातोर्निष्ठाक्तप्रत्यये 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इत्यनेन दकारात्परस्य दकारस्य च नत्वे श्रौतत्वादन्नाणण इत्यत्रान्नादिति निर्देशाच्च जग्ध्यादेशाभावे च सत्यन्नमिति रूपनिष्पत्तिरिति ज्ञेयम्। **वक्तीति**। ततश्चान्नप्राचुर्यमीश्वरस्य सम्भवतीति भावः। **प्रसिद्धार्थ इति**। वाय्वन्तःकरणबुद्धिलक्षणप्रसिद्धार्थ इत्यर्थः। कुतस्तत्प्रचुर इत्युक्त्या तद्विरुद्धस्याल्पस्य प्रतीतिरित्यतस्तथा दृष्टत्वादित्याह **ब्राह्मणेति**। ब्राह्मणप्रचुरशब्देन ब्राह्मणविरुद्धशूद्रादिसद्भावसिद्धिदर्शनादित्यर्थः। विरुद्धार्थप्रतीतेरशाब्दत्वे कथं ब्राह्मणप्रचुरो ग्राम इत्यतस्तत्सिद्धिरित्यतो न तत्र शब्दात्तत्सिद्धिः किन्तु मानान्तरादेवेत्याह **विरुद्धेति**। विरुद्धार्थप्राप्तेः शाब्दत्वमेवास्तु किं मानान्तरगम्यत्वकल्पनयेत्यतो बाधकमाह **अन्यथेति**। अत्र प्रचुरप्रकाशो रविरितिवदिति भाष्यानुसारेण प्रचुरप्रकाशः सवितेत्युदाहरणेन विवक्षितसिद्धावपि तथाऽनुदाहृत्य प्रकाशप्रचुरः सवितेत्याद्युदाहरणेनैतदपि निरस्तं भवति। यदाह कल्पतरुकारः प्रचुरप्रकाशः सवितेत्यादौ प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिप्रतीतिनियमाभावेऽपि विशेष्यत्वे तन्नियम एव। ब्राह्मणप्रचुरो ग्राम इत्यादौ तद्दर्शनात्। आनन्दमय इत्यादौ च प्राचुर्यस्य विशेष्यत्वादिति। अन्नप्रचुरो मखः प्रकाशप्रचुरः सवितेत्यादौ प्राचुर्यस्य विशेष्यत्वेऽपि तस्मिंस्तद्विरुद्धार्थाप्रतिभासात्।

**वा०र०— निष्ठाक्तेति**। आदिकर्मणि क्तः कर्तरि चेत्यनेनादिकर्मणि युक्तः स कर्तरि भावकर्मणोश्च भवतीति प्रतिपादनादिति भावः। **रदाभ्यामिति**। रेफदकाराभ्यां परस्य निष्ठा। तकारस्य नकारो भवति। पूर्वदकारस्य च नकार इति सूत्रार्थः। शधातो श्र्युकः कितीति इण्निषेधे ॠता इद्धातोरिति इत्वे रपरत्वे च शीर्णमिति रेफे उदाहरणान्धकारे तु भिन्न इति। ननु अदो जग्धिर्ल्यप्तिकितीति ल्यपितादौ किति चादौ जग्ध्यादेशविधानाददे-





र्धातोः क्तप्रत्यये जग्ध्यादेशे आदेशसम्बन्धीकारलोपे जग्धत इति स्थिते झषस्तथोर्धोऽध इति सूत्रेण तकारस्य धत्वे झरो झरि सवर्णे इत्यनेन पूर्वधकारलोपे जग्धमित्येव भवितव्यमिति अन्नमितिरूपनिष्पत्त्यनुपपत्तिरित्यतोऽन्नाण्ण इति चतुर्थस्य चतुर्थीयसूत्रे अन्नशब्दनिपातनादन्नमिति । काशिकां अन्नमिति संज्ञायां तु जग्ध्यादेश इत्यादि धातुवृत्तिं च मनसि कृत्वा तत्रेवात्राप्युक्तादेशाभावं इत्याशयेनाह **अन्नाण्ण इत्यत्रेति** । अन्नं लब्धेत्यर्थे अन्नशब्दाण्णप्रत्यये णिति वृद्धौ आन्न इति रूपम् । उपलक्षणं चेदम् । अदोऽन्न इति अदेर्विट्प्रत्ययविधायकसूत्रे अन्नशब्दप्रयोगोऽपि ज्ञेयः । आधातृरूपधर्मिपरस्यान्नशब्दस्य धर्मार्थकत्वमुपपादयितुं **भावप्रधान इति** मूले उक्तम् । **इत्यतो बाधकमिति** । इत्यत इत्यनन्तरं तस्याः शाब्दत्व इति शेषः । **विरुद्धेति** । यदपि परिमळे घनतुहिनाद्याच्छादनाभावकाल एव प्रचुरव्यवहारात् तत्राप्यारोपिततमसोऽल्पत्वमिति प्रतिपादितम् । तन्न । ब्राह्मणप्रचुर इत्यादौ वास्तवविरोध्यल्पत्वेनैव प्रचुरव्यवहारस्य दृष्टत्वेन आरोपितविरोध्यङ्गीकारानुपपत्तेः ।

**स०व्र०— अदधातोरिति** । रदाभ्यामित्यनेन नत्वे अन्नमिति रूपनिष्पत्तिर्द्रष्टव्या ।

**विठ्ठल०—** प्रसिद्धार्थपरित्यागे किं निमित्तमित्यतः श्रौतनिर्वचनसद्भावादित्याह **स्वयमेवेति** । **अदधातोरिति** । अदभक्षण इत्यतोऽद्यत इति कर्मण्यत्तीति कर्तरि चार्थे विवक्षिते क्तप्रत्यये च सति रदाभ्यां निष्ठातो नः पूर्वस्य च द इति तकारदकारयोर्नत्वेऽन्नेति रूपसिद्धिरिति भावः । **श्लोकार्थानामिति** । देवानुप्राणनभूतायुष्ट्वमनोगोचरानन्दवत्त्वदेवोपास्यत्वादीनाम् इत्यर्थः । **इति यथेति** । तत्र शूद्राद्यल्पताप्रतीतेरिति भावः । विरुद्धाल्पसद्भावस्य शब्दार्थत्वाभावेऽपि आक्षेपात्सिद्धेस्तदपेक्षया ।

**चषकः— क्तप्रत्यये सतीति** । तयोरेव कृत्यक्तेति कर्मणि अदेः सकर्मकत्वेऽपि धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिये'ति वचनादत एव नेह पच्यते नेह भुज्यत इत्यादौ भावे लकार इति हरदत्ताद्युक्त्या पच्यादिवददेरपि प्रकृतेऽविवक्षितकर्मतया गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चेति सूत्रे तादृशानामपि पीता गावो भुक्ता ब्राह्मणा इत्याद्यनुरोधेनाकर्मकपदेन गृहीततया तादृशाददेः कर्तरि च क्तप्रत्यये रदाभ्यां निष्ठातो नः पूर्वपद इति प्रकृतिप्रत्ययावयवदकारतकारयोर्नत्वे च सतीदं रूपं निष्पद्यत इति भावः । अदो जग्धिर्ल्यप्तिकितीति प्रकृते तादिकित्परत्वात् । जग्धिरित्यादाविव जग्धादेशेन भवितव्यमिति शङ्का तु अन्नाण्ण इति सूत्रे अन्नादिति निर्देशेन तदभावज्ञापनान्निरसनीया । **भूताद्यत्वं** भूतकर्तृकादनक्रियाकर्मत्वम् । भूतात्तृत्वं भूतकर्मकादनक्रियाकर्तृत्वम् । **अशाब्दत्वात्** । ब्राह्मणविरुद्धाल्पगोचरप्रतीतेर्ब्राह्मणपदसमभिव्याहृतप्रचुरपदशक्तिप्रतिसन्धानानधीनत्वात् । प्रमाणान्तरगम्यः प्रत्यक्षादिजनिताधिगतिविषयः । प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिनियमाभावेऽपि विशेष्यत्वे तन्नियमः ब्राह्मणप्रचुरो ग्राम इत्यादौ दर्शनात् । आनन्दमय इत्यत्र प्राचुर्यं विशेष्यमिति कल्पतरुकारोक्तिं तस्य विशेष्यत्वेऽपि तद्विरुद्धाप्रतीतेरनुभूयमानत्वेन प्रतिविधत्ते **अन्नप्रचुरो मख इत्यादि** ।

**॥ इति एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे 'अन्नादिप्राचुर्यं हरेर्युज्यते' ॥**

* * *

॥ अथ एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे 'अन्नमयादिशब्दानां विवक्षिततात्पर्यार्थोक्तिः' ॥

२९ **सु०**— 'ननु प्राचुर्यं प्रतियोग्यपेक्षयैव भवति । सत्यम् । पदार्थान्तरगताल्पतद्धर्मापेक्षयोपपत्तेरि'त्याशयवान्यथा विरुद्धप्रतीत्यवकाशो न भवेत्तथाऽन्नमयादिशब्दतात्पर्यार्थानाह **महाभोक्तेति** ।

**अनु०**— **महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत् ।**
**महाप्राणो महाबोधो महाविज्ञानवानपि ॥**

**अन्नमये** परमेश्वरे, अन्नमयशब्देनोक्त इति शेषः । **महाप्राणो** महाव्यापार इति प्राणमयशब्देनोक्तार्थो भवेदिति योज्यम् ।

मनु अवबोधन इत्यस्माद्भावेऽसुन्प्रत्यये मनो बोधः । अत्रापि इत्यर्थो मनोमयशब्दस्य विज्ञानमयशब्दस्य भवेदिति योज्यम् । अपिशब्दान्महानन्द इत्यानन्दमयशब्दार्थो भवेदिति ग्राह्यम् ।

**परि०**— अशब्दार्थत्वेऽप्याक्षेपात्तद्विरुद्धस्य लाभ इति शङ्कते **ननु प्राचुर्यमिति** । **पदार्थान्तरेति** । विजातीयसमानाधिकरणाल्पापेक्षया ब्राह्मणप्रचुरो ग्राम इतिवन्नक्षत्रादिपदार्थान्तरगताल्पप्रकाशापेक्षया प्रचुरप्रकाशो रविरिति प्रयोगोपपत्तेरित्यर्थः । तथा च ब्रह्मणि दुःखादिप्रसक्तेरभावेऽपि जीवरूपपदार्थान्तरगताल्पसुखाद्यपेक्षयाऽऽनन्दमयो ब्रह्मेत्यादि प्रयोगोपपत्तिरिति भावः । **यथा विरुद्धेत्यादि** । प्राचुर्यस्य विशेषणत्वे विरुद्धधीर्नेति परैरप्यङ्गीकाराद्विशेषणतया तात्पर्यार्थानाहेत्यर्थः ।

**यादु०**— **ननु प्राचुर्यमिति** । प्रतियोगिभूतं चाल्पत्वं समानाधिकरणविजातीयगतमेव ब्राह्मणप्रचुरो ग्राम इत्यादौ दृष्टम् । तथा च प्राचुर्यवत्समानाधिकरणगतप्रतियोग्यपि शब्दात्प्रतीयत इति कल्पनीयम् । न चान्नप्रचुरो मख इत्यादावपि तत्प्रतीतिप्रसङ्ग उक्त इति वाच्यम् । इष्टत्वात् । तत्रापि शब्दाद्विरोध्यनुवृत्तिः प्रतीयते । मानान्तरेण तु तदभावावगम इति शङ्कितुराशयः । **पदार्थान्तरगतेति** । तथा च प्रतियोगी विजातीयसमानाधिकरणगत एव सर्वत्र वाच्य इति नियमोऽसिद्धः । दृश्यते हि ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेनैव प्रचुरप्रकाशः सवितेत्यादौ व्यधिकरणस्य सजातीयस्य नक्षत्रादिप्रकाशस्याल्पत्वेनापि प्राचुर्यम् । पदार्थान्तरे चाल्पत्वस्य प्रतियोगिनः प्रतीतिः प्रमाणान्तरजन्यैवानुभूयत इति न तस्याः शाब्दत्वमिति भावः ।





**वं०प०— प्रतियोग्यपेक्षयेति** । प्राचुर्यस्य प्रतियोगिनिरूपकत्वमल्पत्वम् । तथा च प्राचुर्यं हि स्वसमानाधिकरणस्वनिरूपकविजातीयाल्पत्वं यत्तदपेक्षया दृष्टम् । ब्राह्मणप्रचुरो ग्राम इत्यत्र, ब्राह्मणप्राचुर्यं स्वसमानाधिकरणस्वनिरूपकब्राह्मणविजातीयशूद्राल्पत्वापेक्षया दृष्टम् । एवमानन्दप्रचुरो विज्ञानप्रचुरो मनःप्रचुर इत्यादावप्यानन्दप्राचुर्यं स्वसमानाधिकरणस्वनिरूपकानन्दादिविजातीयदुःखाद्यल्पत्वापेक्षयैव वक्तव्यम् । तथा च ब्रह्मणि दुःखादिकं वाच्यमिति भावः । **पदार्थान्तरगतेति** । स्वभिन्नजीवगताल्पसुखादिधर्मपेक्षयेत्यर्थः । अयं भावः । प्राचुर्यं स्वसमानाधिकरणस्वनिरूपकविजातीयाल्पत्वापेक्षया यथा दृष्टम् एवं स्वसमानाधिकरणस्वनिरूपक-सजातीयाल्पत्वापेक्षयाऽपि दृष्टम् । यथा प्रचुरप्रकाशः सवितेत्यत्र प्रकाशप्राचुर्यं व्यधिकरणस्वनिरूपकप्रकाश-सजातीयनक्षत्रादिप्रकाशाल्पत्वापेक्षया भवति । नक्षत्रादिप्रकाशापेक्षया प्रचुरप्रकाशः सवितेत्युच्यते । एवमानन्द-प्रचुर इत्यादावप्यानन्दादिप्राचुर्यं व्यधिकरणस्वनिरूपकानन्दादिसजातीयजीवानन्दाल्पत्वापेक्षयाऽपि सम्भवति । जीवानन्दापेक्षयेश्वरः प्रचुरानन्दो जीवज्ञानापेक्षयेश्वरः प्रचुरज्ञान इत्यादि । विनिगमकं तु दुःखाद्यङ्गीकारे 'निरनिष्टो निरवद्यो', 'यः सर्वज्ञः', 'सुखसुख' इत्यागमविरोध एवेति ध्येयम् । **असुनिति** । नकारलोपे मनस् इति प्रातिपदिकम् ।

**आनन्दः—** अन्नमयेऽन्नमयशब्दे इत्यर्थो भवेदित्ययुक्तम् । शब्देऽर्थसम्भवादित्यत आह **अन्नमय इत्यादि** । उक्तमर्थमन्यत्रातिदिशति **महाप्राण इति** । ननु मनःशब्देन बाधव्याख्यानमयुक्तं दूष्यभावादित्यत आह **मन्विति** ।

**श्रीनिधि०— भावे असुन्प्रत्यय इति** । औणादिक इत्यर्थः ।

**शे०वा०—** ननु प्राचुर्यस्य समानाधिकरणप्रतियोग्यल्पत्वापेक्षत्वाद् ब्रह्मण्यानन्दादिविरुद्धदुःखादिरूप-प्रतियोगिनोऽल्पस्याभावात्कथं तन्निरूप्यानन्दादिप्राचुर्यसिद्धिरित्याशङ्कते **नन्विति** । प्राचुर्यस्य प्रतियोग्यल्पत्वा-पेक्षत्वेऽपि न प्रतियोगिनः सामानाधिकरण्यनियमः । ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीय-शूद्रादेरल्पत्वेनेव प्रचुरप्रकाशः सवितेत्यादौ व्यधिकरणस्य सजातीयस्य नक्षत्रादिप्रकाशस्याल्पत्वेनापि प्राचुर्यस्य दर्शनात् । प्रकृते च सैषानन्दस्येत्यादिश्रुत्यैव व्यधिकरणस्य सजातीयस्य जीवानन्दस्याल्पत्वमुक्त्वा ब्रह्मानन्दस्य यतो वाच इत्यादिना महत्त्वोक्तेरित्याशयवानाह **सत्यमित्यादिना** ।

**वा०र०— समानाधिकरणप्रतियोगीति** । यदपेक्षया प्राचुर्यन्तस्य प्राचुर्यनिरूपकस्याल्पस्य समाना-धिकरणताया ब्राह्मणप्रचुर इत्यादौ दृष्टत्वादिति भावः । **दुःखादीति** । आनन्दादेस्समानाधिकरणयदपेक्षया प्राचुर्यं वाच्यं तादृशं दुःखादिव्यतिरिक्तं किमपि नास्ति । बलशक्त्यादि सर्वधर्माणामानन्दादिपदसङ्ग्राह्यत्वात् । न च दुःखादिकं तत्रास्तीति भावः । **सामानाधिकरण्येति** । विजातीयत्वनियमेनेत्यपि ज्ञेयमिति सर्वमवदातम् ।

**स०व्र०— ननु प्राचुर्यं प्रतियोग्यपेक्षयेति** । तथा च प्राचुर्यवशात्समानाधिकरण एव प्रतियोग्यल्पता शब्दात्प्रतीयते इति कल्पनीयमिति भावः । **पदार्थान्तरगतेति** । पदार्थान्तरे च तत्प्रतीतेः प्रमाणान्तरजत्वसम्भवेन





न शाब्दत्वमिति भावः । **प्राणमयशब्देनोक्तार्थो भवेदिति योज्यमिति** । प्राणशब्दस्य चेष्टामात्रार्थकत्वेन प्राणमयशब्दस्य महाचेष्टकत्वार्थलाभात् महाव्यापार इत्यस्य साक्षात्तदर्थत्वाभावात् । प्राणमयशब्देनोक्तो भवेदित्युक्तमिति ध्येयम् । **विज्ञानमयशब्दस्येति** । तस्य साक्षाच्छब्दार्थत्वादिति भावः ।

**विठ्ठल०**— प्राचुर्यमिति प्राचुर्यस्य प्रतियोगिनिरूप्यत्वादिति शङ्कते **ननु प्राचुर्यमिति** । पदार्थान्तर-गतेति समानाधिकरणविरुद्धधर्मापेक्षयैव प्रचुरशब्द इति न नियमः किं तु यथा प्रचुरप्रकाशो रविरिति प्रयोगेन नक्षत्रादिरूपपदार्थान्तरगताल्पप्रकाशापेक्षया प्रचुरशब्दोपपत्तिः तथा ब्रह्मणि स्वसमानाधिकरणविरुद्धधर्माभावेऽपि जीवस्वरूपपदार्थान्तरगताल्पसुखरूपधर्मापेक्षया आनन्दमय इति प्रयोगोपपत्तेर्नाक्षेपादपि विरुद्धदुःखादिप्रसक्तिरिति भावः।

**चषकः**— ननु प्राचुर्यस्य समानाधिकरणप्रतियोग्यल्पतानिरूप्यत्वस्य ब्राह्मणप्रचुर इत्यादौ दर्शनात् प्रकृते च ब्रह्मणि तादृशविरोधिभूतदुःखादिलेशाभावेन कथं तन्निरूप्यमानन्दादिप्राचुर्यं सिद्ध्यतीत्याशङ्कते **नन्विति** । प्राचुर्यप्रतियोगिभूताल्पसामानाधिकरण्यं न नियतं वैयधिकरण्यस्थलेऽपि प्रकाशप्रचुरः सवितेत्यादौ नक्षत्रादिप्रकाशाल्पत्वेनापि तद्दर्शनात् इत्थं च प्रकृते सैषानन्दस्येत्यादिमीमांसितजीवानन्दाल्पत्वेनापि निरूप्यता ब्रह्मानन्दप्राचुर्ये सङ्गच्छत इत्याशयेन समाधत्ते **सत्यमिति** ।

**।। इति एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे**
**'अन्नमयादिशब्दानां विवक्षिततात्पर्यार्थोक्तिः' ।।**

* * *

**।। अथ एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे**
**'निर्भेदस्यापि हरेर्विशेषसामान्यतया आनन्दमयाद्यनेकोक्तिः' ।।**

**३० सु०— नन्वन्नमयादित्वे परमात्मनोऽनेकत्वप्रसङ्गात् 'एकमेवे'ति श्रुतिविरोधः स्यात्। तथा विज्ञानं प्रचुरमस्मिन्नानन्दः प्रचुरोऽस्मिन्निति विज्ञानादीनां परमेश्वरस्य च भेदप्रसङ्गेन 'विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतिविरोधः स्यात्। तथा मनश्शब्दस्यावबोधार्थत्वे मनोविज्ञान-शब्दयोरेकार्थत्वेन विज्ञानमयो मनोमय इति पृथगुक्तिर्नोपपद्यत इत्यत आह विशेषेति।**

**अनु०— विशेषसामान्यतया विज्ञानं मन इत्यपि ।**
**एकस्य ज्ञानरूपस्य हरेरुक्तिर्विभागतः ।।**





**अत्रैवं विवक्षाभेदेन परिहारत्रयं द्रष्टव्यम् । एकस्य निर्भेदस्यापि हरेर्विशेषबलेनानेकत्वसङ्ख्यावत्त्वाद्विभागतोऽन्नमयाद्यनेकत्वोक्तिर्युज्यते । एवं ज्ञानरूपस्य ज्ञानानन्दाद्यात्मकस्यापि हरेर्विशेषशक्त्यैव विभागतस्तद्वत्त्वेनोक्तिर्युज्यते । एवं मनश्शब्दस्यावबोधार्थत्वेऽपि (विज्ञानं) विज्ञानमय इति मनोमय इत्यपि विभागतः पृथगुक्तिर्युज्यते । कथम् । विशेषसामान्यतया विशेषसामान्यविषयतया । विज्ञानशब्दो हि विशेषज्ञानमाह, 'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः । देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितमि'ति वचनात् । मनःशब्दस्तु ज्ञानमात्रवाची विज्ञानशब्द(स्य )सहपाठबलात्सामान्यज्ञाने पर्यवस्यति । विद्येते हि परमार्थतः सामान्यविशेषाकाराविति समस्ततद्विषयज्ञानमुपपन्नमेवेश्वरस्येति ।**

**परि०— सामान्यैः** साधारणगुणपुरुषैः । **इति वचनादिति** । गीताभाष्योक्तवचनादित्यर्थः ।

**गु०दी०— विद्यते हि परमार्थत** इत्युपलक्षणम् । विचित्रानन्तपदार्थगतसामान्याकाराणामप्यनन्तत्वात् तज्ज्ञानमपि सर्वज्ञत्वपर्यवसायीत्यपि द्रष्टव्यम् ।

**यादु०— सामान्यैरिति** । साधारणैः पुरुषैरित्यर्थः । **मम गोचरा** मज्ज्ञानगोचराः । **विद्येते हीति** । भगवज्ज्ञानस्य च विद्यमानसर्वविषयकत्वमावश्यकम् । अन्यथा सार्वज्ञहानेरिति भावः ।

**वं०प०— सामान्यैरिति** । प्रमाणं विज्ञानशब्दस्य विशेषज्ञानार्थत्वमात्र एवेति द्रष्टव्यम् । अन्यथा देवादीनामित्यसङ्गतेः । सामान्यविशेषाकारौ जगतीति शेषः ।

**श्रीनिधि०— सामान्यैर्ये त्वविज्ञेया इति** । **सामान्यैः** = साधारणैः, **तज्ज्ञानं** = तेषां ज्ञानम् । इदं सामान्यज्ञानातिरिक्तविशेषज्ञानमस्तीत्यत्र वचनम् । ननु सामान्यादेर्मिथ्यात्वेन तदज्ञाने परमेश्वरस्य अङ्गीक्रियमाणे भ्रान्तत्वं स्यादित्यत आह **विद्येते हीति** ।

**शे०वा०—** कुत एतदित्याह **सामान्यैरिति** । साधारणैः पुरुषैरित्यर्थः । **विद्येते हीति** । भगवज्ज्ञानस्य च विद्यमानसर्वविषयकत्वमावश्यकमन्यथा सार्वज्ञ्यहानेरिति भावः ।

**स०व्र०— सामान्यैरिति** । साधारणैः पुरुषैरित्यर्थः । **विद्येते हि परमार्थत इति** । भगवज्ज्ञानस्य च विद्यमानसर्वविषयकत्वमावश्यकम् । अन्यथा सार्वज्ञ्यहानेरिति भावः ।





**विठ्ठल०**— अत्र एकस्यानेकत्वं विरुद्धमिति गुणगुणिभावेन भेदप्रतीतेः श्रुत्यनन्तरविरोध इति मनोमय-विज्ञानमयशब्दपौनरुक्त्यमिति शङ्कात्रयस्य कथमनेन श्लोकेन परिहारो लभ्यत इत्यत आह **अत्रैवमिति** । सामान्यैरित्यस्य साधारणैः पुरुषैरित्यर्थः । प्रमेयदीपिकायामुक्तः मम विशेषास्सर्वशास्त्रगोचरा इत्येके, मम गोचरा मत्तो ज्ञाता इत्यपरे । **विद्येते हीति** । भगवज्ज्ञानस्य विद्यमानाशेषार्थविषयत्वमावश्यकम्, अन्यथा सार्वज्ञहानि-प्रसङ्गात् । विद्यते च सर्वपदार्थेषु वनतरुदेहादिषु सामान्याकारः चूतपनसशाखोपशाखपर्णपादरेखोपरेखादि-विशेषाकारश्च । अतः सामान्यज्ञानं विशेषज्ञानं ब्रह्मणीति भावः ।

**चषकः**— **सामान्यैः** साधारणपुरुषैः ।

**॥ इति एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे 'निर्भेदस्यापि हरेर्विशेषसामान्यतया आनन्दमयाद्यनेकोक्तिः' ॥**

* * *

**॥ अथ एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे 'हरौ विशेषबलाद्भेदव्यवहारसत्वेनान्नमयादित्वोपपत्तिः' ॥**

**॥ तत्रादौ 'अनुव्याख्याने यतिभङ्ग'शङ्का तन्निरासश्च ॥**

**३१ सु०— तथाऽपि नान्नमयादयः परमात्मा। 'तस्माद्वा एतस्मादन्नरसमयात्, अन्योऽन्तर आत्मा प्राणमय' इत्यादिनाऽन्नमयादीनामन्योन्यमन्यत्वावगमात्। परमात्मनि तु भेदाभावा-दित्यत आह अभेदेऽपीति।**

## अनु०— अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः।

**भेदप्रतिनिधितया भेदकार्यनिर्वाहकेण विशेषेणैव, न तु भेदेन, येन विरोधः स्यादित्यर्थः।**

**न चात्र यतिभङ्गः शङ्कनीयः, 'पूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवत्। द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्' इति वचनात्।**

**परि०**— **न चात्र यतिभङ्ग इति** । यतिस्वरूपमुक्तं प्राक् । **पूर्वान्तवत्स्वर इति** । स्वरोऽजक्षरमुच्यते । अचः स्वरा इति प्रसिद्धेः । प्रकृते च विशेषेणैवेत्यत्र एवशब्दावयवभूत एकार-रूपोऽच् । स च 'वृद्धिरेची'ति वृद्ध्यैकारभावं गतः परस्यैव शब्दस्यादिभूतोऽपि पूर्वस्यान्तवद्भवति यतिचिन्तायाम् । अतः पदमध्ये विच्छेददोषो नेत्यर्थः । यणादेशः पूर्वभक्तोऽपि परादिवद्भवति । तस्योपयोगोऽग्रे ध्येयः ।





**गु०दी०— पूर्वान्तवत्स्वरस्सन्धौ** इत्यत्र **स्वरः** अजाख्यस्वरः पूर्वान्तवत् अपरपदस्यादिभूतोऽपि पूर्वपदस्यान्तवद्भवतीत्याद्यस्य 'अभेदेऽपि विशेषेणैवान्य' इत्युदाहरणम् । उत्तरपदादिभूतैवकारस्य पूर्वपदान्ते स्थितत्वात् 'आसमुद्रक्षितीशानामानाकरथवर्त्मनामि'ति द्वितीयस्योदाहरणम् । आमिति स्वरस्यान्तर्भूतमकारस्य परपादस्यादौ स्थितत्वात् 'यणादेशः परादिवदि'त्यस्य 'सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमान' इत्युदाहरणम् । पूर्वपदाभिभूतणित्करणस्य परपदादौ प्रविष्टत्वात् । इदं च न वैकल्पिकं किन्तु नियतमेवेत्यर्थः ।

**यादु०— पूर्वान्तवत्स्वर इति** । स्वर एकादेशरूपः सवर्णदीर्घादिः स्वयं परादिरपि पूर्वस्यान्तवत्क्वचिद्भवति । 'यथा धर्मविश्वसितो धर्मास्पदं भवति पूरुष' इति । क्वचिच्च स्वयं पूर्वान्तोऽपि परस्यादिवद्भवति । यथा 'अधर्मनर्मचतुरस्यात्मा स्याद् दुःखभाजनम्' इति । अत्र स्वरस्य परादिभावे व्यञ्जनमपि परादिवद्भवति । तद्भक्तत्वात् । यणादेशः पूर्वान्तोऽपि परस्यादिवदेव भवति । यथा 'सम्भूतानि यतो भूतान्याकाशादीनि पूरुषात्', 'दिनाधीशं त्रियामा विम्बालोचनमुपैति तमि'ति । प्रकृते चैकादेश ऐकारः पूर्वान्तवज्जात इति भावः ।

**आनन्दः— पूर्वान्तवदिति** । यतिचिन्तायां सन्धौ कर्तव्येश्वरः पूर्वान्तवत् क्वचिदेव परादिवद् द्रष्टव्यः । यणादेशः परादिवद् द्रष्टव्यः इत्यन्वयः ।

**श्रीनिधि०— येन विरोध इति** । एकमेवाद्वितीयमिति श्रुतिविरोध इत्यर्थः । क्वचिदपवादः **मुक्तादिषु** ।

**शे०वा०— यतिभङ्ग इति** । **यतिः** विरतिः । यतिर्विच्छेदसंज्ञित इत्युक्तेः । **तद्भङ्गः** पदमध्ये विरामादिति भावः । पूर्वान्तवत्स्वरः सन्धावित्यस्यायमर्थः । योऽयं पूर्वापरयोरेकादेशः स्वरः सन्धौ सवर्णदीर्घादिः स प्रायः पूर्वान्तवद् द्रष्टव्यः । यथा 'कस्ते दारिद्र्यदावानल वदतु यशो वावदूकोऽपि दाने' इति । यथा वा 'धर्मविश्वसितो धर्मास्पदं भवति पूरुषः' इति । क्वचिदेव परादिवच्च द्रष्टव्यः । यथा 'अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुने'ति । यथा वा 'अधर्मनर्मचतुरस्यात्मा स्याद् दुःखभाजनम्' इति । अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद्भवति तद्भक्तत्वात् । यणादेशः पूर्वान्तोऽपि परादिवदेव द्रष्टव्यः । यथा 'सप्ताकूपारपारे प्रथितपृथुयशस्यर्थिसार्थे कृतार्थः' इति । यथा वा 'सम्भूतानि यतो भूतान्याकाशादीनि पूरुषादि'ति । यथा वा 'दिनाधाशं त्रियामा विम्बालोचनमुपैति तमि'ति । अत्रापि व्यञ्जनस्य परादिवद्भाव इष्यत इति । प्रकृते चैकादेशस्यैकारस्य पूर्वान्तवद्भाव इति भावः । **वचनादिति** । वृत्तरत्नाकरे सम्मतितयोदाहृतवचनादित्यर्थः ।

**वा०र०— पदमध्य इति** । पदान्ते पदमध्य इत्यर्थः । प्रागुक्तं चेदम् । नारायणभट्टयनुसारेण प्रतिज्ञाय व्याकुर्वन्नेवोदाहरणमप्याह **पूर्वान्तवदित्यादिना** । व्याख्येयं चैतद्विशेषतोऽस्ति । **एकादेशः** सवर्णदीर्घादिस्वर इति सम्बन्धः । **सन्धौ** इत्यस्य स्वरसन्धावित्यर्थः । अन्तादिवच्चेति षष्ठाद्यपाणिनीयं सूत्रं चार्थसाधकम् । मानमस्तित्वमपि चेत्यत एव चोपमेत्यधिकरणीयानुभाष्यमूलसम्बन्धिटीकायां तदुदाहरणात् । अन्यत्रापि । यत्र पदान्ते पदमध्ये विरतिस्तत्रैव समुद्रसादावपि(?) पदमध्ये विरतिर्दोष एव । परन्तु क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेदिति विशेषात् क्वचिदेव विरतावपि प्रायो विरत्यभाव एवावश्यकः । ततोऽन्यत्रापि क्वचि-





द्विरतिश्चेत् पूर्वान्तवदित्युपलक्षणस्थल एव स्वीकार्या । **नान्यत्रेति** । निरूपणायेदं प्रवृत्तमिति नयतिः सर्वत्रेत्या-द्युक्तस्यैतस्य च विरोधः । शिष्टमुक्तं प्रतिपादानुव्याख्यानमूलटीकादौ द्रष्टव्यम् । आनन्दमय इत्यादिनेत्यत्रेव अर्थाविरोधेन दोषो नेत्यत्र समाधानं ज्ञेयम् ।

**स०व्र०— पूर्वान्तवत्स्वरः सन्धाविति** । केचित्तु योऽयं पूर्वापरयोरेकादशः स्वरः सन्धौ सवर्ण-दीर्घादिः स प्रायः पूर्वान्तवत् क्वचिदेव क्वचित्परादिवच्च द्रष्टव्य इत्याहुः । स्वरः एकादशः स्वयं परादिरपि पूर्वस्यान्तवत् भवति यथा धर्मविश्वसितेः शर्मास्पदं भवति पूरुष इति क्वचिच्च स्वयंपूर्वान्तोऽपि परस्यादिवद्भवति यथा अधर्मनर्मचतुरस्यात्मा स्याद् दुःखभाजनमिति । अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद्भवति तद्भक्तत्वात् । यणादेशः पूर्वान्तोऽपि परस्यादिवदेव भवति यथा 'सम्भूतानि यतो भूतान्याकाशादीनि पूरुषाद् । दिनाधीशं त्रियामाविम्बालोचनमुपैति तम्' इति प्रकृते चैकारः पूर्वान्तवज्जात इति भावः । व्यञ्जनस्यापि परादिवद्भाव इष्यते यथा इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाच इति ।

**विठ्ठल०— पूर्वान्तवदिति** । अचः स्वराः । यतिचिन्तायां पादविरतिचिन्तायां स्वरः सवर्णदीर्घवृद्ध्यादि-रूपः । क्वचित्सन्धौ पदादिरपि उत्तरपादस्थाद्यपदादिरपि पूर्वान्तवत् पूर्वपदान्तस्वरवद् द्रष्टव्यः पूर्वपादान्तपद एव अन्तर्भूतमिव भवति । पदसन्धौ एवेत्येवकारो वृद्धिरेचीत्यैकारभावमापन्नः पूर्वान्तत्वं प्राप्तः तत्पद एवान्तर्भूत इति यतिभङ्गदोषानापादक इति । क्वचित्तु पूर्वान्तोऽपि स्वरः परस्यादिवद् द्रष्टव्यः । यथा 'अधर्मनर्मचतुरस्यात्मा स्याद् दुःखभाजनम्' इत्यत्र चतुरस्येति पूर्वपादान्तिमपदान्तगतः अकारः परपदाकारेणै(वए)कादेशसवर्णदीर्घत्वं प्राप्तः परादिपदेऽन्तर्भूतः । अतः स्वरस्य पदादित्वे तद्घटितसकारयकारात्मकव्यञ्जनमपि परादिवज्जातं तद्गतत्वात् । पृथग्व्यञ्जनस्योच्चारणायोगेन व्यञ्जनस्वरसंश्लेषेण स्वरभागत्वात् इत्यर्थः । यणादेशः पूर्वपदान्तिमपदान्तिमत्वं प्राप्तोऽपि परपादस्यादिवद्भवति । तत्पादादिमपद एवान्तर्भूततया यतिभङ्गदोषं परिहरति **यथा सम्भूतानि** । यतो भूतान्याकाशादीनि पुरुषादित्यत्र आकाशेत्युत्तरपादीयाचि परतो भूतानीति इकारस्य यणादेशो स्थानिभक्त-नकारस्यापि पादादित्वमपि तदर्थतः ।

**चषकः— यतिभङ्गः** यतिर्विच्छेदसंज्ञित इति वचनाद् विच्छेदो यतिः । पदमध्ये विरामात्तद्भङ्ग इति भावः । **पूर्वान्तवत्स्वर इति** । अस्यायमभिसन्धिः । 'एकः पूर्वपरयोरि'त्यधिकृत्य विहितः सवर्णदीर्घादिरूप-स्वरपदाभिधेयाज्वर्णः परस्याद्यावयवभूतोऽपि पूर्वस्य चरमावयवो भवतीति वृत्तरत्नाकरादौ सिद्धान्तिततया प्रकृते च तदधिकृत्य विहितो वृद्धिसंज्ञक ऐकारः परस्यैवशब्दस्याद्यावयवतामापन्नोऽपि पूर्वस्य चरमावयवतामापद्यते इति पदमध्ये विच्छेदरूपोक्तक्षत्यनवकाश इति ।

**॥ इति एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे, हरौ विशेषबलाद्भेदव्यवहारसत्वेनान्नमयादित्वोपपत्तौ, 'अनुव्याख्याने यतिभङ्ग' शङ्का तन्निरासश्च ॥**

* * *





**॥ अथ एतच्छ्रुत्युक्तमयटां प्राचुर्यार्थकत्वे,**
**हरौ विशेषबलाद्भेदव्यवहारसत्वेनान्नमयादित्वोपपत्तौ,**
**विशेषस्य 'हरौ भेद'व्यवहारनिर्वाहकत्वे प्रमाणसद्भावः ॥**

३२ **सु०—** विशेषो भेदकार्यं व्यवहारादिकं निर्वहतीति पूर्वमेवोक्तम् । अत्र विशेषनिष्ठमागमं चाह **भेदशब्दा** इति ।

**अनु०— भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम् ॥**
**ब्रूयुः**

भेदनिमित्ता अन्यादिशब्दा **भेदशब्दाः** ।

'हरौ विशेषं ब्रूयुरि'त्यस्यापवादमाह **हरेरिति** ।

**अनु०— हरेर्जीवजडैरपि भेदं हि मुख्यतः ।**

एवम् 'अन्यत्र भिन्नताम्' इत्यस्यापि क्वचिदपवादो द्रष्टव्यः ।

**ब्रह्मतर्कवचोऽप्येवम्**

'न केवलं पूर्वोक्तोपपत्तिर्ब्रह्मतर्कवचोऽप्येवमावेदयती'त्यपेरर्थः ।

**परि०—** भेदकार्यकरत्वं कथं तस्येत्यत आह **विशेषो भेदकार्यमिति** । **पूर्वमेवेति** । 'अभिन्नेऽपि विशेषोऽयमि'त्यादिना जन्माधिकरणे । **विशेषनिष्ठं** विशेषविषयकम् । इह विषयवाक्ये भेदशब्दाभावादाह **भेदनिमित्तेति** ।

**इत्यस्यापि क्वचिदपवाद इति** । व्यतिरेको गन्धवदित्यादावंशांशिगुणगुण्यादिस्थले प्रयुक्तो भेदशब्दो न भिन्नतां वक्ति । किन्तु विशेषमित्येवंरूपापवाद इत्यर्थः । **पूर्वोक्तोपपत्तिरिति** । जन्माधिकरणोक्तभेदनिषेधभेदकार्यदर्शनोभयान्यथानुपपत्तिरूपोपपत्तिरित्यर्थः ।

**गु०दी०—** **क्वचिदपवाद** इत्यस्य **क्वचित्** पटशौक्ल्यघटघटत्वादावित्यर्थः ।





**यादु०— पूर्वमेवेति**। द्वितीयाधिकरण इत्यर्थः। **भेदनिमित्ता इति**। अन्यथा प्रकृतासङ्गतेरिति भावः। **क्वचिदिति**। गुणगुण्यादावित्यर्थः।

**वं०प०— अत्र विशेषनिष्ठमिति** । पूर्वमभिन्नेऽपि विशेषोऽयं बलादापततीति व्यवहारान्यथाऽनुपपत्तिः प्रमाणत्वेनोक्ता । अत्र तु पुनर्विशेषप्रतिपादकमागमरूपं प्रमाणमुच्यत इत्यर्थः । मूले हरौ हरिरूपविषये प्रवर्तमानभेदप्रवृत्तिनिमित्तकान्यादिशब्द इत्यर्थः । मूलेऽन्यत्र भिन्नतामित्यत्र हरेरन्यत्र । जीवो जडादन्यदिति प्रयोग इति शेषः । हरेर्जीवजडभेदं हीत्यत्र मूले हरिर्जीवान्यो जडान्य इति प्रयोग इति शेषः । **क्वचिदिति** । खण्डितत्वशून्ये गुणगुण्यादौ गुणौ गुणिनोऽन्य इति प्रयोगेऽन्यशब्देन विशेष एव ग्राह्य इति भावः ।

**आनन्दः— पूर्वमेवोक्तमिति**। जन्माधिकरण इति शेषः। तत्र साधिका युक्तिरप्युक्तेति शेषः। अत एवाग्रे समुच्चायकश्चशब्दप्रयोग इति भावः । **अत्र विशेषनिष्ठमिति** । भेदशब्दस्य भेदप्रतिनिधिविशेषपरत्व इत्यर्थः । भेदशब्दस्य विशेषपरत्वेऽपि प्रकृते भेदशब्दाभावात्कथम् अन्यशब्दस्य विशेषपरत्वमित्यत आह **भेदशब्दा इति** । **अन्यत्रेति** । गुणगुण्यादावित्यर्थः । ब्रह्मतर्कवचोऽप्येवमित्यपिशब्देन ब्रह्मतर्कवचनमग्रे उदाह्रियत इति प्रतीतिं वारयन् अपिशब्दार्थमाह **न केवलमिति** ।

**शे०वा०— पूर्वमेवेति**। जन्माधिकरण इत्यर्थः। **उक्तमिति**। 'अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः' इत्यादिनेति शेषः । **अत्रेति** । भगवतीत्यर्थः । **विशेषनिष्ठमिति** । भेदशब्दानां भेदप्रतिनिधिविशेषपरत्वप्रतिपादकमित्यर्थः। अन्यादिशब्दानां विशेषनिष्ठत्वालाभायाह **भेदेति**। अनेन मूले मध्यमपदलोपी समास इत्युक्तं भवति । **क्वचिदिति** । गुणगुण्यादावित्यर्थः । **पूर्वोक्तोपपत्तिरिति** । अभेदेऽपि विशेषेणैवान्य इत्यादिनोक्तोपपत्तिरित्यर्थः । ब्रह्मतर्कवचोऽपीत्यपिशब्दो न केवलं पूर्वोक्तोपपत्तिर्ब्रह्मतर्कवचोऽप्येवमावेदयतीति व्याख्यातः ।

**स०व्र०— अत्र विशेषनिष्ठमिति**। विशेषार्थज्ञापकमित्यर्थः।

**विठ्ठल०— पूर्वमेवेति**। जन्माधिकरण इत्यर्थः। प्रकृते भेद इति शब्दाभावादाह **भेदनिमित्ता इति**। **क्वचिदिति**। यावद्द्रव्यभाविगुणगुण्यादावित्यर्थः। **पूर्वोक्ता** जन्माधिकरणोक्ता अभेदप्रमितिभेदकार्यदर्शनोभयान्यथानुपपत्तिरूपा।

**चषकः— पूर्वमेवेति**। जन्मादिनय इत्यर्थः। **भेदनिमित्ताः शब्दा इति**। समानाधिकरणाधिकारे शाकपार्थिवादीनां वोत्तरपदलोपो वक्तव्य इति कात्यायनवचनादिति भावः ।

**॥ इति विशेषस्य 'हरौ भेद'व्यवहारनिर्वाहकत्वे प्रमाणसद्भावः ॥**

* * *





**॥ अथ 'निर्भेदस्यापि हरेर्विशेषसामान्यतया आनन्दमयाद्यनेकोक्तिः' इत्यत्रापि विशेषबलमेवोपपत्तिः ॥**

**३३ सु०—** यदुक्तं प्रागेकस्यापि विभागत उक्तिरिति, न तत्रोपपत्तिरभिहिता । एतामेवोपपत्तिं प्रतिज्ञामात्रेणोक्ते तत्राप्यतिदिशति **अत इति** ।

**अनु०— अत एकः स पञ्चधा ॥**

**उक्तोऽन्नमय इत्यादि**

**विशेषबलादेवेति।**

**परि०— एतामेवेति।** विशेषबलादित्येवंरूपाम्।

**गु०दी०— प्रतिज्ञामात्रेणोक्त** इति स्वकृतव्याख्यानानुसारेणोक्तम्। वस्तुगत्या 'अभेदेऽपि विशेषेणे'त्यस्य देहलीदीपन्यायेनोभयत्राप्यन्वयसम्भवान्न प्रतिज्ञामात्रम्। 'अत एकस्स पञ्चधे'त्युक्तोपसंहार इति द्रष्टव्यम्।

**वं०प०— एतामेवेति** । एकस्यापि हरेरन्योन्यत्वोपपादनायाभेदेऽपीत्यादिनोक्तां विशेषरूपामुपपत्ति-मेकस्यापि विभागोक्तिर्युज्यत इति प्रतिज्ञामात्रेणोक्तेऽर्थेऽतिदिशतीत्यर्थः । तत्र हेत्वनुक्तेरत्रोक्तं विशेषं तत्र हेतुत्वेनातिदिशतीति भावः ।

**३४ सु०— एकोऽपीति वा अपिशब्दसम्बन्धः।**

**इत्यादीति क्रियाविशेषणम्।**

**परि०—** व्यवहितेन समुच्चयेऽरुचिं मत्वाह **इति वापिशब्दसम्बन्ध इति**।

**श्रीनिधि०— इत्यादीति क्रियाविशेषणमिति**। इत्यादि यथा भवति तथोक्त इत्यर्थः। अन्नमयत्वादि-रूपेणोक्त इति यावत्। तस्योत्तरानुवाकोक्तस्य उपपादयिष्यते। अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकमित्यादिनेति भावः।

**शे०वा०—** भिन्नक्रमतया प्रकारान्तरेणापि तं व्याचष्टे **एकोऽपीति वेति**।





**क्रियाविशेषणमिति** । साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययत्व-विधानादव्ययादाप्सुप इति सुब्लोपे इत्यादीत्युपपन्नमिति भावः ।

**वा०र०**— 'उक्तोऽन्नमय इत्यादी'त्यत्र 'एकः अन्नमय इत्यादि पञ्चधोक्त' इत्येवमुक्तिक्रियां प्रति 'इत्यादी'त्युक्तवाक्यानां करणत्वाकरणे तृतीयायाम् 'इत्यादिभिरि'ति स्यात् । तत्कथम् 'इत्यादी'त्यविभक्तिको निर्देश इत्यतः 'इत्यादी'त्यस्य 'इत्यादि यथा स्यात् तथा उक्त' इत्येवमुक्तिरूपक्रियाविशेषणत्वाभ्युपगमान्न तृतीयाश्रवणप्रसङ्ग इत्याशयेन **इत्यादीति क्रियाविशेषणम्** इत्युक्तं मूले । अत एव तथात्मशक्त्यैवेत्युपासना-पादीयानुव्याख्यानमूलेऽव्ययीभावत्वे सति तस्याव्ययीभावश्चेत्यव्ययत्वादव्ययादाप्सुप इति तृतीयाया लुका भवितव्यमित्युक्तम् । अत एव च भेदोऽमुनेत्यादि च सम्यगुक्त इत्येतच्चतुर्थतुरीयपादगतानुव्याख्यानमूलगत-क्रियाविशेषणं चैतदित्येतद्वाक्यटीकायां करणभूतवाक्यविवक्षयेत्यादिनेति तृतीयया भवितव्यमित्याशङ्कोक्त-वाक्यव्यावर्त्यतया दर्शिता । उक्तमूले च क्रियाविशेषणत्वं नाम किमिति न प्रतीयते, कथं च तदाश्रयणेन तृतीयाप्राप्तिनिरास इत्यतो दैवमेवापरे यज्ञमित्येतच्चतुर्थगीताभाष्यस्थयज्ञमिति क्रियाविशेषणमित्येतद्वाक्य-व्याख्यानरूपसाधनं परित्यज्येत्यादिप्रमेयदीपिकानुसारेण क्रियाविशेषणत्वं तावन्निर्वक्ति **साधनं परित्यज्येति** । क्रियां प्रति यत्कर्तृकरणादिकं तत्साधनशब्देनोच्यते । 'ससाधनां क्रियामि'ति निर्णयटीकाव्याख्याने कर्त्रादि-साधनसहितेति प्रत्ययोत्पत्तौ साधनं यत्कर्तृकर्मादि तत्सहितेति चोक्तेः । तद्वाचकप्रत्ययादिर्वा । पूर्वं धातुः साधनेन युज्यते इत्यादौ तथात्वदर्शनात् । तुल्यास्यप्रयत्नमिति सूत्रीयप्रपूर्वाद्यततेर्भावसाधनो नप्रत्यय इत्येतद्भाष्य-व्याख्यानकैय्यटे भावेऽभिधेये नप्रत्ययः क्रियते, तेन नशब्दस्य भावः साधनमित्युक्तेश्च । **तत्परित्यज्य** तद्विशेषणमभूत्वा, धात्वर्थस्यैव विशेषणं यत्, क्रियाविशेषणं नामेत्यर्थः ।

ननु क्रियाविशेषणत्वाश्रयणेन वाक्यलिङ्गमात्रव्यावृत्तावपि विभक्तिश्रवणस्यावर्जनीयतयेत्यादिभिरिति तृतीयाप्रसङ्गतादवस्थ्यमित्यत आह **ततश्चेति** । अव्ययीभावश्चेति द्वितीयचतुर्थगतसूत्रे पूर्ववदश्ववडवावित्येतत्सूत्रे च काशिकायां क्रियाविशेषणानां चेत्येवोक्तावपि क्रियाद्वारेणेत्यादेरधिकस्य मञ्जर्यामुक्तत्वात् तथा तत्प्रत्यनु-पूर्वमीपलोमकूलमिति चतुर्थाध्यायचतुर्थपादगतसूत्रोक्तक्रियाविशेषणकर्मद्वितीयान्तप्रत्यादि(प्रतिपादि)-शब्देभ्य ष्ठग्विधानं लिङ्गमित्यादि भास्कराद्युक्तरीत्या तत्सूत्रज्ञापितायां परिभाषायां क्रियाविशेषणानां कर्मत्वं नपुंसकता चेत्युक्तावपि तावता 'मृदु पचति', 'शोभनं पचती'त्यादौ क्लीबत्वैकवचनान्तत्वनिर्वाहकरणेऽपि 'कमनीयं प्रातः', 'शोभनं प्रातः' इत्यादावव्ययविशेषणस्थले तन्निर्वाहाकरणात् तस्यापि निर्वाहसिद्ध्यभिप्रायेण कर्मक्रियायां क्रियाव्ययानां भेदकान्नेकत्वेऽपीत्यमरोक्तिं लिङ्गानुशासनस्थं 'पथः सङ्ख्याव्ययादेरि'त्येतत्सूत्रीय 'क्रियाव्यय-विशेषणानां चे'ति वार्तिकोक्तिं च मूलीकृत्य क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमित्यधिक-प्रतिपादनानुसारेणाव्ययविशेषणानामित्यधिकांशस्योदाहरणमित्यदोषः । क्षीरस्वामिनापि क्रियाविशेषणान्यव्यय-विशेषणानि च तृतीये एकवचनान्तानि च भवन्ति । मृदुपचति, शोभनं पचतीत्यादेरुक्तेः । ननु चोक्ता(म?)-





वार्तिकप्रक्रियावाक्येषु नपुंसकत्वैकवचनान्तत्वयोरेव वाच्यतया विधानात् तथैव टीकायामनुवादश्च तदनुसारेणोत्तरत्रापि क्लीबत्वैकवचनान्तत्वविधानादित्येव वक्तव्यतयाऽव्ययत्वस्यानुक्तस्य विधेयकोटौ गणनायोगः । किं चाव्ययत्वं हि अव्ययापादाप्सुप इत्यनेन सुब्लोपार्थं वाच्यम् । न च तत्सम्भवति 'दैवमेवापरे यज्ञं', 'असंशयं समग्र'मित्यादिगीतादौ जैनाद्यधिकरणस्थस्वप्रभमित्यादौ च क्रियाविशेषणतया भवदुक्तरीत्याऽव्ययत्वेऽपि सुब्लोपाभावात् ।

एतेनैतदपि परास्तम् । यथा काशिकादिवाक्यस्याभियुक्तप्रयोगसंरक्षणाय प्रवृत्तत्वेन क्रियाविशेषणमात्रस्य नपुंसकत्वाद्युक्तिमात्रेण च बहुस्थलनिर्वाहाभाव इति मत्वा प्रक्रियाकारेणोपलक्षणया काशिकाद्यभिप्रेतमव्ययविशेषणमपि स्वयं सङ्गृहीतमित्युच्यते । तथा तावतापि सार्वत्रिकप्रयोगनिर्वाहाभाव इत्यतस्तन्निर्वाहाय अव्ययत्वमपि विधेयकोटौ निवेश्यतयाऽभिप्रेतं काशिकाप्रक्रिययोरपीति व्यक्तमेव । अन्यथाऽर्धजरतीयापातः । तथा च तदुक्त्ययोग इति । उक्तस्थलेषु सत्यप्यव्ययत्वे सुब्लोपाभावेन तस्य तदप्रयोजकत्वादिति चेदत्र ब्रूमः । अव्ययत्वस्याभियुक्तप्रयोगसंरक्षणायेत्युक्तरीत्या काशिकाद्यभिप्रेतत्वमिति सिद्धवत्कृत्य टीकाकृता व्याकरणसिद्धान्तरहस्यं वक्तुकामेन श्रौतलाक्षणिके सकलविधेयानां कीर्तनेन दोषाभावः । अत एव 'प्रथमे श्रवणादि'तिसूत्रीयतत्त्वप्रकाशिकायामयं हिशब्दोऽजहल्लक्षणयाऽश्रद्धयाभिश्च युक्तं जीवमाहेत्युक्तम् । तथा पृथक्त्वनिवेशः स्यात् सङ्ख्याया कर्मभेदः स्यादिति । द्वितीये सप्तमाधिकरणे 'अग्नीषोमीयं पशुमालभेत । हृदयस्याग्रेऽवद्यती'त्यादि विधिस्थले श्रुतानुमितैकदेशनिष्पन्नमहावाक्येऽवदानसंस्कृतेन हृदयेन यजेतेत्यादाविति शङ्करभट्टीये युक्तिपादे नविलक्षणत्वनये प्रमाणानि लक्षितानामित्युक्तिरनुक्ता आगमलक्षणस्यापि भाष्यकाराभिप्रेतत्वमात्रेणेत्यस्य सिद्धत्वाच्च । न चाव्ययत्वस्य तल्लोपं प्रति प्रयोजनकत्वमेव कुतः, कथं च उक्तव्यभिचारपरिहार इति वाच्यम् । अधिहरि अधिस्त्रीत्याद्यव्ययीभावे तदव्ययीभावश्चेति प्रथमाध्यायसूत्रेणाव्ययत्वं विधीयते । तत्प्रयोजनं च अव्ययादाप्सुप इत्यनेन सुब्लोप इति तत्र तत्राकरे यथात्मशक्त्यैवेत्येतन्मूलादौ च प्रागुदाहृते स्पष्टम् । एवं यथाऽव्ययीभावे सुब्लोपं प्रति निमित्तत्वेनोक्ताव्ययत्वस्याधिहरीत्यादाविवोपकृष्णमित्यादावपि सत्त्वेऽपि नाव्ययीभावादतोम्त्वपञ्चम्या इत्यपवादात् तत्र तल्लोपाभावः । किन्तु पञ्चमीं विनाऽमेव तथा प्रकृतेऽप्यव्ययत्वेनेत्यादिभिरित्यादि तृतीयादिप्रसङ्गस्थले सुब्लोप एव । अधियज्ञमित्याद्यव्ययीभावे तु नाव्ययीभावादित्यनेनादन्तत्वात् अम्प्राप्त्या तल्लोपाभावोपपत्त्या व्यभिचाराभावश्च । यत्रापि क्रियाविशेषणे यज्ञं समग्रमित्यादावव्ययीभावः तत्रापि नपुंसकत्वैकवचनान्तत्वयोरपि विहिततया तत्स्वीकारेणाव्ययत्वप्रयुक्ततल्लोपाभावः । 'स्वमोर्नपुंसकादि'ति प्राप्तस्वमोर्लोपाभावस्त्वतोमबाधात् । अत एव टीकाकृतापि स्वप्रभमिति जैनाधिकरणे 'शक्तिस्ताः प्रेरयत्यज' इत्यत्राभावाश्चेति सूत्रीयप्रयोगस्थले असंशयं समग्रमिति गीतायां 'निराशीर्यतचित्तात्मे'त्येतद्भाष्यस्थानभिमानमिति प्रयोगस्थले चान्यत्रापि तत्र तत्र क्रियाविशेषणत्वं व्याख्याय ततश्च क्रियाव्ययविशेषणानामित्यादि वाक्यविन्यासकालेऽव्ययत्वकार्याभावादव्ययत्वं विधेयकोटौ न निवेशितम् । स्त्रीलिङ्गत्वबाधेन क्लीबत्वादीत्याद्येव नोक्तम् । अत एव सानन्दमतीत्येतदपि यज्ञमित्येतत्तुल्यमिति न तत्राव्ययत्वेन सुब्लोपशङ्का कस्यचिदुपपन्ना





यत्र च 'येऽन्नं ब्रह्मे'त्याद्युपासा न हि भृत्यस्य विजयिशब्दस्तावदित्यादौ प्रकृते च तत्कार्यसद्भावस्तत्रैवाव्ययत्वपर्यन्तधावनं कृतम् । तथा च 'हुतमस्मिन् जगद्यत' इत्येतन्मूलोक्तकृन्मेजन्त इत्यव्ययत्वमित्यस्य सुब्लोपार्थतयोक्तत्वस्य सर्वसम्मतत्वेन टीकाकृतापि तत्र तथैवोक्त्या 'यथात्मशक्त्यैवेत्येतन्मूले स्पष्टमि'त्युक्तत्वेन चाव्ययत्वस्य सुब्लोपं प्रति प्रयोजकतया बुद्धिसहितत्वात्प्रकारान्तरेण च तल्लोपनिर्वाहाभावात् अव्ययत्वस्य काशिकाद्यभिप्रेतत्वाशयेन मुखतस्तदनभिहितस्यापि लाक्षणिकात् सङ्कलनेनात्राभिधानं युक्तमेव ।

एतेनैव मुनित्रयानुक्तत्वात् अव्ययत्वस्य क्रियाविशेषणस्य अव्ययत्वाश्रयणं न युक्तमिति शङ्कनमुमर्जीकबौद्धकृतमपि परास्तम् । तत्त्रयानुक्तस्याप्यभियुक्तप्रयोगसंरक्षणाय काशिकाद्यभिप्रेतस्य स्वयमभिधानोपपत्तेः । निलयनशब्दविचारस्थलीयभवदुदाहृतानिषिद्धमनुमतं भवतीति न्यायेन भाष्यकाराद्यनुमतत्वोपपत्तेश्च । अत एव नित्कटारिका(?)स्थ'भाष्यानुक्ता न वेहोक्ता' इत्येतत् 'सिद्धान्तकौमुदीरमादावनुक्ताः न तु प्रत्याख्याताः । तथा च भाष्यमप्युपलक्षणयानेयमि'ति प्रतिपादितम् । तथा 'अस्मदो द्वयोश्चे'त्येतत्सूत्रकाशिकायां युष्मदिगुरावेकेषामिति युष्मदर्थवाचकशब्दाद्गुरुशब्दाच्च बहुवचनं भवतीति प्रतिपादितं यत्तदुपपादयितुं मञ्जरीकृता भाष्यवार्तिककाराभ्यामनुक्तप्रयोगसंरक्षणायोक्तमित्युक्तं मणीवादेर्ने(?)त्यस्यापि मुनित्रयानुक्तस्यापि प्रयोगसंरक्षणायोक्तिरिति शेष्यादौ (?), अङ्गीकृतश्चायं समाधिर्मूलकृता, 'नदं व ओदतीनामि'त्येतन्मन्त्रसम्बन्धि 'व इति गुरुत्वादीश्वरं प्रत्येव वा बहुवचनमि'ति कर्मनिर्णयटीकायां युष्मदि गुरावेकेषामिति वचनादिति भाव इत्युक्तेः । युष्मदि गुरावेकेषामित्येतत् सूत्रमिति प्रतिपादनं च केषाञ्चित् कर्मनिर्णयटीकाव्याख्यातॄणां किंमूलकमिति न जानीमः । अस्य काशिकावाक्यत्वात् । एवमेकपदे लक्षणे चेति धातुसम्बन्धिप्रक्रियायां काशिकाकारमतमुक्त्वा सूत्रकारादिमुनित्रयमतस्योक्तिः, पृथग्विना नानाभिरिति योगविभागः कार्यो द्वितीयार्थ इति वृत्तिमञ्जर्यामसत्यपि मुनित्रयवचने प्रयोगबाहुल्यादेवं व्याख्यानमित्युक्तिश्च, अङ्गगात्रवध इत्येतत्सूत्रीयशेष्यां (?) भाष्यानुक्तमपीत्यादेरुक्तिश्च । अधिकमुमर्जीकबौद्धादिकारे ज्ञेयम् । तस्मान्मुनित्रयानुक्तत्वस्याप्रयोजकत्वान्न तेनायुक्तत्वशङ्कोपपन्ना।

इदं पुनरत्रावधेयम् । शोभनं पचतीत्यादौ क्रियाविशेषणस्य क्लीबत्वाश्रयेण स्त्रीलिङ्गव्यावृत्तिमात्रं भवति । अतो माचस्वमोरित्यस्यानवकाशः । मृदु पचतीत्यादौ तु नपुंसकत्वमात्रेण स्वमोर्लोपसिद्धेस्तावत एव प्रयोगः । शोभनं पचतीत्यादि बह्वादिक्रियास्थलेऽप्येकवचनान्तत्वेन बह्वादिवचनस्यापि व्यावृत्तिरित्येवं व्यवस्थया तत्तत्कार्यस्वीकारवद्यत्र नपुंसकत्वैकवचनान्तत्वयोः काशिकादौ मुखतः उपात्तयोः स्वीकारेऽपि तृतीयादि सुब्लोपनिर्वाहस्तत्र तदर्थमव्ययत्वस्यापि काशिकाद्यभिप्रेतस्य स्वीकारः । एतेन नपुंसकत्वाश्रयणेनैव सुब्लोपसिद्ध्या अव्ययत्वाश्रयणमनर्थकमिति मूर्खप्रलापोऽपि गर्भस्रावेणैव निरस्तः । तृतीयादिप्रसक्तेः प्रागुपवर्णनेन तत्र क्रियाविशेषणत्वेन कर्मत्वे द्वितीयान्तत्वप्राप्तेः । ण्वुलन्तासिकादिशब्दस्य कृदन्ततया कृदभिहितो भावो द्रव्यवत् प्रकाशत इति भाष्योक्तेर्द्रव्यधर्मसङ्ख्यादियोगित्वेऽप्यास्यन्त इत्यत्र बहुवचनसिद्ध्यर्थमेकवचनं वेति प्रायिकमित्यादि तत्त्वबोधिन्युक्तरीत्या एकवचनमिति प्रायोवाद इत्यादि रमोक्तरीत्या च हलशायिकाः शय्यन्ते





उष्ट्रासिका आस्यन्ते इत्यादौ भाष्यकारप्रयुक्ते आस्यन्तो शय्यन्ते इत्याभ्यां चयनानि आसनानीत्युक्ता या क्रिया तद्विशेषणयोः शायिका आसिका इत्यनयोर्बहुत्वावधारणादेकवचनाभावः स्त्रीत्वावधारणान्नपुंसकत्वाभावश्चेति सिद्ध्यप्रकृतेऽप्यन्नमय इत्यादि वाक्येष्वित्यादीनीति बहुवचने प्राप्ते तन्निवृत्त्यर्थमव्ययत्वस्यानुसर्तव्यम् ।

क्वचिदेकवचनस्यापि तत एव निवृत्तिरित्यङ्गीकारोपपत्तेः । दृष्टं चाव्ययीभावोदाहरणे निर्मक्षिकमित्यादावप्यव्ययीभावश्चेति द्वितीयाध्यायसूत्रेण नपुंसकत्वविधानात् तेन च 'ह्रस्वो नपुंसक' इत्यनेन ह्रस्वत्वसिद्धिवत् उपाग्नि अनुमति इत्यादि सुब्लोपस्थले स्वमोर्लोपस्यापि सिद्धत्वेऽपि तदितरतृतीयाद्येकवचनादि सुब्लोपाप्राप्तेस्तल्लोपार्थमव्ययीभावश्चेति प्रथमगतसूत्रेणाव्ययत्वमपि विधेयतया स्वीकृत्य अधिहरीत्यादि निर्वाहः क्रियत इति । अन्यथोक्तस्थलेऽप्यव्ययत्वविधानमनर्थकम् । नपुंसकत्वेनैवाधिहरीत्यादौ स्वमोर्लोपसिद्धेः । तदितरसुब्लोपार्थत्वाश्रयणे सुब्मात्रलोपार्थकाव्ययत्वस्य स्वमोरंशेऽनुपयोगप्रसङ्ग इत्यादि प्रस्थानप्रसङ्गः । अथापि स्यात् । अव्ययीभावस्याव्ययसंज्ञाप्रयोजनकथनपरलब्मुखरोपचारा इति काशिकाव्याख्यानमञ्जर्यां मुखरोपचारशब्दौ तन्निवृत्तिलक्षकावित्याश्रित्योपाग्नीत्यादौ लुक् । उपाग्निमुखमित्यत्र 'मुखं स्वाङ्गमि'ति सूत्रविहितस्योत्तरपदान्तोदात्तस्य निवृत्तिः । उपपयः काम इत्यादौ विसर्जनीयस्थाने विहितसत्त्वादिलक्षणोपचारनिवृत्तिः प्रयोजनमिति पाद्यापि लुग्ग्रहणप्रत्याख्यानं च कृतम् । नाव्ययीभावादतोत्वपञ्चम्या इत्यत्रादन्तादव्ययीभावात्परस्य सुपो न लुगित्यर्थोऽपि सिद्धः । न हि सामान्यतोऽव्ययीभावाल्लुगभावे तत्प्रतिषेधेन तद्विशेषादन्तादमु(?)विधिः सम्भवति । अतः सप्रतिषेधो ज्ञापयति भवति अव्ययीभावात् सामान्यात् लुगिति । ततो न तुग्ग्रहणेन कृत्यमिति । ततश्च कथं लुकोऽव्ययसंज्ञाप्रयोजनत्वेनाभिधानमिति चेत्सत्यम् । तथापि तत्रैव मुखरनिवृत्तिमात्रप्रयोजनमव्ययसंज्ञायाः । परन्तु तदर्थं कृतयाव्ययसंज्ञया लुगपि सिद्ध्यतीति वस्तुस्थितिकथनतया अव्ययत्वस्य लुगुपयोग इत्युक्तत्वेन कथञ्चिदपि तल्लोपसाधकत्वस्थितेः अव्ययत्वस्योपादानं युक्तमेव । वस्तुतस्तु सूत्रवार्तिकपरिभाषादिकमनुसृत्यापि ग्रन्थकृतां तत्र तत्र प्रवृत्त्यनुपलम्भात्प्रकृतेऽपि तदनुसारेण अदोषः । अन्यथा भाष्याद्युक्तप्रत्यवस्थानमाश्रित्य अनभिहितादिसूत्राणां प्रवृत्तिस्थले तिङानभिहितत्वात् द्वितीयेत्याद्युपपादनपरबहुग्रन्थोपप्लवप्रसङ्ग इत्यलं प्रसक्तानुप्रसक्त्या । अधिकमनुपदं वक्ष्यामः ।

**क्रियाद्वारेणेति** । ननु स्त्रीलिङ्गापवादतया पुल्लिङ्गादिकं प्रसिद्धम् । तदिहाव्ययत्वं कथं तदपवादतयोक्तमिति चेन्न । त्रिषु लिङ्गेषु सदृशत्वादव्ययस्य लिङ्गविशेषशून्यतया स्त्रीलिङ्गापवादकतयाऽव्ययत्वोक्तिसम्भवात् । तथापि क्रियायाः स्त्रीलिङ्गत्वादित्युक्तम् । धातुभगवाच्यक्रियाया अद्रव्यत्वेन लिङ्गाभावादित्यादि वदति कश्चित् । तन्न नपुंसकत्वविधायकाव्ययीभावश्चेति सूत्रीय 'क्रियाविशेषणानां चे'ति काशिकायां क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते वचनमिति ह्युक्तम् । तदनुवादस्य टीकायां प्रकृतत्वेन दोषाभावात् । यदि मञ्जरीवाक्यस्थक्रियाद्वारेणेत्यस्या सत्त्वभूताया अपि क्रियायाः सन्दर्शनप्रार्थनादिना आप्यमानत्वात् पारिभाषिककर्मत्ववदेकवचनस्यौत्सर्गिकतया अव्ययादिव प्रथमादि सति अविभक्त्यैकवचनवन्मतान्तरे द्वितीयैकवचनवच्च स्त्रीलिङ्गस्यापि सम्भवः । अत एव तद्धितश्चासर्वविभक्तिरिति कौस्तुभादौ अव्ययात् सति अविभक्तिवचनत्रयमिति सत्यानामेकवचनमात्रमित्यादि-





पक्षचतुष्टयंविचारः । कथञ्चिदपि विभक्तिरस्तीति प्रतिपादनलाभात् । 'ङ्याप् प्रातिपदिकादि'तिसूत्रीयमञ्जर्यां क्रियाविशेषणस्यैव लिङ्गेन योगः 'पचतिरूपमि'त्यादावपि रूपबाद्यन्तवाच्यायाः क्रियायाः स्वभावतो लिङ्गेन योगः । तत्रापि नपुंसकेनेत्यादेः प्रतिपादनात् । तत्रापि नपुंसकेनेति स्त्रीलिङ्गबाधेन नपुंसकविधानबलादेव स्त्रीलिङ्गप्राप्तिश्चेत्यभिप्रायः कल्प्यते । तर्हि प्रकृतेऽपि क्रियायाः स्त्रीलिङ्गत्वात् तद्विशेषणस्यापि स्त्रीलिङ्गत्व-मित्येवार्थोऽस्तु । यदि च मञ्जरीवाक्यस्य क्रियाविशेषणत्वप्रयुक्ते स्त्रीलिङ्गे प्राप्त इत्यर्थः । पूर्वादिनिरिति सूत्रमञ्जर्यादौ पूर्वं गतमनेनेति पूर्वीत्यत्र क्रियाविशेषणात् द्वितीयान्ताप्रत्यय इति पूर्वमिति क्रियाविशेषण-त्वात् द्वितीयान्तम् । ततः प्रत्ययः । नित्यसापेक्षत्वात्सामर्थ्यं चेत्याद्युक्तेः । तथा अथशब्दोऽधिकारार्थ इत्येतन्महाभाष्यकैय्यटेऽधिकारः प्रस्तावो द्योन्त्यत्वेनाथशब्दस्य प्रयोजनमित्यर्थः । निपातकानां च द्योतकत्वं वाक्यपदीये निर्णीतमित्युक्तस्य व्याख्यानादवसरे गूढार्थदीपिकायां चाप्रयोजनपदत्वे सति केवलाः । प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यत इति वाक्यपदीयकारिकामुपादाय चादयो न वाचकाः । पदत्वे सति केवलानामप्रयुक्तत्वात् । ये वाचकास्ते पदत्वे सति केवलाः प्रयुज्यन्ते । यथा गवादयः । प्राप्तव्यभिचारवारणाय **पदत्वे सतीति** । किञ्च वाचकत्वे सति चादीनां समुच्चयाद्यभिधायित्वात् यथा समुच्चयादिपदयोगे षष्ठी भवति वृक्षस्य समुच्चयः प्लक्षस्य समुच्चय इति एवं वृक्षश्च प्लक्षश्चेत्यादि विषये वृक्षस्य प्लक्षस्य चेति प्राप्नोति । अथ समुच्चिताभिधायित्वं निष्कृष्टसमुच्चयानभिधायकत्वान्न भेदनिबन्धना षष्ठीति । एवमपि सत्त्वार्थत्वादसत्त्व इति निपातसंज्ञानिषेधात् अनव्ययत्वाद्विभक्तिश्रवणप्रसङ्गः ।

ननु शब्दशक्तिस्वाभाव्यात् समुच्चिता अपि असत्त्वभूता अभिधीयन्त इति चेत् । उक्तं च 'असत्त्वभूतो भावश्च क्रियान्येनाभिधीयत' इति । समुच्चितोऽप्यभिधीयमानोऽभावः पदार्थः असत्त्वभूतो अभिधीयते । यथाऽन्येन पचतीत्यादिना भावः धात्वर्थः क्रियारूपोऽसत्त्वरूपोऽभिधीयते, स एव पाकादिशब्दैर्भावरूपः सिद्धरूपोऽभिधीयते । न च समुच्चितस्य वृक्षादेकशब्दद्वारा शोभनादि विशेषणे च अर्थस्यासत्त्वभूतत्वात् समानाधिकरणस्य शोभनादेरप्यसत्त्वार्थत्वादलिङ्गासख्यत्वेन विभक्त्यभावे शोभन च वृक्ष इति स्यात् । यथा पञ्चाला जनपदो रमणीय इत्यादौ रमणीयानां जनपदोपनिपाते एकवचनान्तत्वम् । यद्वा क्रियाविशेषणाव-च्छब्दशक्तिस्वाभाव्याच्छोभनादिना स एव चार्थः सलिङ्गः ससङ्ख्यश्चाभिधीयत इति विभक्त्युपपत्तौ शोभनं च वृक्ष इति प्राप्नोति । केवलानां प्रयोगाभावात् विशेषणेनासम्बन्धात् । उक्तं च समुच्चिताभिधानेऽपि विशिष्टा-र्थाभिधायिनां 'गुणैः पदानां सम्बन्धः परतन्त्रास्तु चादाय' इति । विशिष्टार्थाभिधायिनां स्वतन्त्राणां पदानां गुणैर्विशेषणैः सम्बन्धो भवति । चादीनां तु नित्यपरतन्त्रत्वाद्विशेषणैरसम्बन्ध इत्यर्थ इति प्रतिपादनात् ।

एवं ङ्याप् प्रातिपदिकादित्यादिसूत्रवृत्त्यादिग्रन्थोक्तामपि साधकं धिक्कारे उदाहृतं द्रष्टव्या ततश्चा-व्ययार्थस्य सत्त्वरूपत्वेऽपि शब्दशक्तिस्वाभाव्यात् शोभनादिपदेः स लिङ्गस्य ससङ्ख्यस्याभिधाने क्रिया-विशेषणस्य दृष्टान्तीकरणेन तदन्यथानुपपत्त्या क्रियाया असत्त्वरूपत्वेऽपि तद्विशेषणत्वेन निमित्तेन सलिङ्ग-ससङ्ख्यार्थाभिधायित्वमिति प्रतिपादनलाभेन च क्रियाविशेषणत्वप्रयुक्तं लिङ्गादीति सिद्धत्वादिति मन्यसे तर्हि





प्रकृतेऽपि तदनुवादरूपे टीकावाक्ये क्रियाद्वारेणास्य क्रियाविशेषणप्रयुक्त इत्येवार्थोऽस्तु। तत्पक्षे च इति स्पष्टमेव। एतत्पक्षे च क्रियायाऽस्त्रीलिङ्गत्वादिति परकृतोऽन्यथानुवादोऽप्यज्ञानमूलः। एतेनैव लिङ्गसङ्ख्यान्वितं द्रव्यमिति शाब्दिकोक्तिं मूलीकृत्य लिङ्गसङ्ख्यान्वितस्यैव द्रव्यत्वात् क्रियायस्थस्थूनायाया:(?) स्त्रीलिङ्गानुपपत्तिरिति दूषणं गर्भस्रावेणैव निरस्तमित्यपि सिद्धम्। उक्तमञ्जर्याद्यनुसारेण असत्त्वरूपाया अपि क्रियायास्तथा विद्यते विशेषणस्य च लिङ्गसङ्ख्ययोः सिद्ध्या द्रव्यत्वप्राप्तेः। तथाकरणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्येति सूत्रीया-सत्त्ववचनस्येति किम्। क्रियाविशेषणे कर्मणि मा भूदिति काशिकामञ्जर्यामाख्याते न हि क्रियासाध्यमानव-स्थोच्यते। चलति चलनं करोतीति। पुनस्तद्विशेषणं स्तोकादिकर्म भवति। स्तोकं जलनं करोतीति। एवं तु विशेष्यवचनः स्तोकशब्दो द्रव्यवचन इति नात्र प्रसङ्ग इत्यादिमञ्जरीतत्कुसुमविकासपर्यालोचनयापि क्रियाया द्रव्यत्वप्राप्तिः। शेषां तु स्तोकं चरतीत्युपादाय क्रिया न द्रव्यमिति तद्विशेषणमपि न द्रव्यमिति वदन्ति। तच्चिन्त्या क्रियाया विशेष्यत्वे द्रव्यत्वावश्यंभावात्। विशेष्यं द्रव्यमिति लक्षणादित्युक्तम्। विश्वकर्म्यामपि विशेष्यं द्रव्यमिति मतान्तरमित्युक्तम्। स्तोकं पचतीत्यत्र क्रिया न द्रव्यमिति प्राच्यां ग्रन्थ इत्याद्युक्त्वा न च विशेष्यत्वे तदनुपपत्तिः। कृदभिहितभाववल्लिङ्गसङ्ख्याद्ययोगित्वमात्रेण तदुपपत्तेरित्यादिका पञ्चमी निरूपा-णान्तादिस्थलीयरमोक्तिरपि लिङ्गसङ्ख्ययोरभावं वदन्तः प्रतिकूलैव। हतशायिका इत्यादौ सङ्ख्यायाः पचति भवतीत्यादौ कर्तृत्वकर्मत्वादेश्चासत्त्वरूपायामपि क्रियायां तत्राङ्गीकारस्य स्फुटत्वात्। अधिकं धिक्कारे ज्ञेयम्। तस्मात् क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्त इति मञ्जर्यनुवादरूपटीकावाक्यस्य क्रियायाः स्त्रीलिङ्गत्वतद्विशेषणस्यापि स्त्रीलिङ्गत्वे प्राप्त इत्यर्थे वा क्रियाविशेषणस्य क्रियाविशेषणत्वप्रयुक्ते तस्मात् प्राप्त इत्यर्थे वा विवक्षिते असत्त्व-रूपत्वं न बाधकमिति सूत्रीयरमाग्रन्थपर्यालोचनायां युक्तमित्युक्तस्थल एवोपपादितम्।

अथवोक्त इति क्तप्रत्ययवाच्यक्रियाविशेषणत्वमिति अत्र विवक्षितमिति पक्षेऽसत्त्वात्तल्लिङ्गानुपपत्तिरिति दोषस्याप्रसक्तिः। अव्ययकृतो भाव इति शाब्दिकवचनेनाव्ययकृतीभावाभिधायकत्वप्राप्तेः प्रत्ययवाच्यक्रियाया द्रव्यत्वस्य तवापि सम्मतत्वात्स्त्रीलिङ्गत्वोपपत्तेः भवदीयक्तप्रत्ययवाच्यक्रियायाः द्रव्यत्वाशङ्कोपपत्त्यर्थं साध्यत्वेन क्रिया तत्रेति कारिकास्थघञादीत्यादिपदस्य क्तप्रत्ययसङ्ग्राहकत्वस्यापि अभ्युपगन्तव्यत्वेनाव्ययकृत्प्रत्यय-व्यतिरिक्तत्वेन घञादेर्विशेषणस्यायुक्ततया क्तक्रियाया अपि द्रव्यत्वाद्युपपत्तेः। अव्ययीभावस्येव लिङ्गकारकादि-योगेऽपि वचनादव्ययत्वमित्यङ्गीकारोपपत्तेश्च। अन्यथा त्त्वातोसुन् कसुनः अव्ययीभावश्चेति सूत्रद्वयस्य निर्निबन्धनो विषयभेदः कल्पनीयः स्यात्। एवं तद्धितश्चासर्वविभक्तिरिति सूत्रीयमञ्जर्यादावसत्त्ववचनेभ्यो-ऽप्यव्ययेभ्यः सप्तानामपि विभक्तीनां सप्ताप्येकवचनान्युत्पद्यन्ते इत्यादेः प्रतिपादनेन लिङ्गकारकादियोगस्यापि प्राप्तेश्च। अथशब्दोऽधिकारार्थ इति महाभाष्यसम्बन्धिकैयटव्याख्यावसरे गूढार्थदीपिकायां अव्ययार्थस्य सत्त्व-रूपत्वेऽपि क्रियाविशेषणवच्छब्दशक्तिस्वाभाव्यात् शोभनादिपदैः सलिङ्गस्य ससङ्ख्यस्याभिधानमिति प्रागुक्तरीत्या प्राप्तेश्च। क्रियायाः पारिभाषिककर्मत्वपक्षे लिङ्गाद्युपपत्तेरपि प्रागुक्तरीत्याऽसिद्धत्वाश्रित्यालं प्रसक्तानुप्रसङ्गेन। प्रकृतमनुसरामः। कर्मत्वमेकवचनान्तत्वमित्युक्त्यैव द्वितीयैकवचनान्तत्वमित्यर्थः सूचितः।





एतत्सर्वमभिप्रेत्यैव सत्रावृषं जठरमावृषस्वेत्येतन्मन्त्रगतसत्रेत्येतदुपपादनपरकर्मनिर्णयटीकायां सहस्राणेनेति सूत्रेति पर्यवसानमाश्रित्य सूत्रेति क्रियाविशेषणं द्वितीयायाश्चाकारादेश इत्युक्तम् । कर्मत्वाद्यभावे द्वितीयाया एवाप्राप्त्या तस्याः आकारादेशमाश्रित्य सूत्रेत्याकारान्तरूपसाधुत्वोपपादनानुपपत्तिप्रसङ्गात् । 'दैवमेवापरे यज्ञमि'ति गीता-भाष्यवाक्यतट्टीकयोरप्ययमेवाभिप्रायः । कर्मत्वादेव 'त्वमग्रे प्रथमो अङ्गिरस्तम' इत्येतदृग्भाष्यटीकायां प्रथम इति क्रियाविशेषणमित्युक्तं प्रथमान्तस्य क्रियाविशेषणत्वं च युक्तम् । ज्योतिष्टोमेन भक्तिपूर्वं यजेतेति प्रागुदाहृते भक्तिपूर्वमित्यस्य क्रियाविशेषणस्य प्रथमान्ततया रमादावुक्तेः ।

क्रियाविशेषणव्याख्या टीकास्था सूपपादिता।
तेन प्रीतोऽस्तु गुरुगः श्रीनिवासोऽरिमर्दनः ॥

**॥ इति 'निर्भेदस्यापि हरेर्विशेषसामान्यतया आनन्दमयाद्यनेकोक्तिः' इत्यत्रापि विशेषबलमेवोपपत्तिः ॥**

* * *

**॥ अथ उत्तरानुवाकसंवादाद्ब्रह्मशब्दाच्चान्नमयादिपञ्चानां ब्रह्मत्वं तस्माच्च मयटां प्राचुर्यार्थकत्वोपपत्तिः ॥**

३५ **सु०—** किञ्चोत्तरस्मिन्ननुवाके, वरुणो भृगोः, एतस्मिन्ननुवाके प्रतिपादितमेव वस्तु ब्रह्मत्वेनोपदिशति, अतश्चान्नमयादिकं परं ब्रह्मेत्याह **भृगोरिति**।

**अनु०—** **भृगोश्चैतद्वदिष्यति।**

**अनुवाकस्योत्तरत्वेन वदिष्यतीत्युक्तम्। तस्य च ब्रह्मत्वमुपरिष्टादुपपादयिष्यते।**

**तथा च ब्रह्मशब्दादुत्तरानुवाकसंवादाच्चान्नमयादीनां पञ्चानामपि ब्रह्मत्वे सिद्धे मयट्-प्रत्ययादीनां प्राचुर्यार्थत्व(द्यर्थतया)व्याख्यानं युक्तमिति।**

**परि०—** भृगोश्चेति चशब्दार्थमाह **किञ्चेति**। अर्थं वदन्नेवावतारयति **उत्तरस्मिन्नित्यादिना**। **उपरिष्टादिति**। 'अधीहि भगवो ब्रह्मेत्युक्त' इत्यत्रेत्यर्थः। मयट्प्रत्ययादीनां मयट्प्रत्ययान्यत्वान्तरत्व-शरीरशरीरित्वावयवावयवित्वादीनामित्यर्थः।

**यादु०—** **मयट्प्रत्ययादीनामिति**। अत्राद्येनादिपदेनान्यशब्दादेर्द्वितीयेन विशेषरूपार्थस्य सङ्ग्रहः।





**वं०प०— उत्तरस्मिन्निति**। तस्मा एतत्प्रोवाच अन्नं प्राणमित्यादावित्यर्थः।

**शे०वा०— उपरिष्टादिति**। 'अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकमि'त्यादिनेति शेषः। मयट्-प्रत्ययादीनामित्यादिपदेनान्यशब्दादेः सङ्ग्रहः। प्राचुर्याद्यर्थतयेत्यादिशब्देन विशेषपरिग्रह इति द्रष्टव्यम्।

**विट्ठल०**— भृगोश्चेति उत्तरमूलमर्थं वदन् अवतारयति **किञ्चेति**। चशब्दार्थः किञ्चेति।

**॥ इति उत्तरानुवाकसंवादाद्ब्रह्मशब्दाच्चान्नमयादिपञ्चानां ब्रह्मत्वं तस्माच्च मयटां प्राचुर्यार्थकत्वोपपत्तिः॥**

* * *

**॥ अथ पूर्वानुवाके प्राप्यत्वेन अन्नमयादिमयडुक्तिः उत्तरानुवाकेऽपि प्राप्यत्वेनैव अन्नादिब्रह्मोक्तिः॥**

**३६ सु०— नन्वत्रान्नमयादिशब्दाः श्रूयन्ते, उत्तरत्र (तु) मयट्प्रत्ययहीना अन्नादिशब्दा एव। शब्दभेदे च निमित्तभेदेनाभिधेयभेदेन चावश्यं भवितव्यम्। न चान्नमयादिशब्दा अन्नादिशब्दपर्याया इति युक्तम्, प्रत्ययार्थस्याधिकस्य विद्यमानत्वात्। न च 'भीमसेनो भीमो, बलभद्रो बलः, सत्यभामा सत्या, पुनर्नवा नवा, काचमाची माची'त्यादिवत्स्यादिति वाच्यम्, वैषम्यात्। भीमादिशब्दा हि प्रत्येकं तद्वाचकाः। न चान्नशब्दमात्रमन्नमयस्य वाचकम्, प्रत्ययस्य स्वार्थिकत्वप्रसङ्गात्, प्राचुर्यार्थश्च मयडित्युक्तम्। न ह्यन्नमयो यज्ञ इति वक्तव्येऽन्नशब्दमात्रं प्रयुज्यते। तस्मात्तत्रात्र च पृथग्वस्तुप्रतिपादनात्कथं तत्संवादेनात्रापि ब्रह्मप्रतिपादनमित्युच्यते। किं त्वत्रान्नमयादयः कोशास्तत्र तु ब्रह्मेत्यत आह प्राप्यत्वेनेति।**

## अनु०— प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते॥

**एतमन्नमयमात्मानमुपसङ्क्रम्येत्यादिप्राप्यत्वेन निर्देशो मयटः स्पष्टोक्तेस्तत्रा(त्रा)पि नान्यदुच्यते।**

**परि०— पुनर्नवेति**। औषधविशेषस्य नाम। 'काचमाची'त्यपि वस्तुविशेषस्य नाम। 'काचमाचीति तु वायस' इत्यभिधानम्। शाब्दिकादिमतमाह **भीमादिशब्दा हीति**। भीमशब्दो भीमसेनशब्द इत्यर्थः। तत्रापीत्यपिपदसमुच्चेयमाह **अत्रापीति**। भृगुवल्ल्यां ब्रह्मवल्ल्यां चेत्यर्थः।





**यादु०— पुनर्नवा नवेति**। काचमाची माचीति चौषधविशेषयोः संज्ञा। **प्रत्येकं तद्वाचका इति**। रूढ्या भीमत्वादिमात्रवाचका इत्यर्थः।

**वं०प०—** अस्तु स्वार्थिकत्वमित्यत आह **प्राचुर्यार्थश्चेति**। अर्थान्तरासम्भवे हि स्वार्थिकत्वं कल्प्यम्। न चात्र तदसम्भवोऽस्तीति भावः।

**श्रीनिधि०— तत्रापि नान्यदुच्यत इति**। एतदनुवाकोक्तमेवोच्यत इत्यर्थः।

**शे०वा०— शब्दभेदे चेति**। अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरित्यादौ संज्ञाभेदस्य निमित्ताभिधेयभेदाविनाभावदर्शनादिति भावः। ननु पर्यायेषु व्यभिचारान्नोक्तोऽविनाभाव उपपन्न इत्यतः पर्यायव्यतिरिक्तत्वेन शब्दविशेषणान्न व्यभिचार इत्यभिप्रेत्य स्वरूपासिद्धिं परिहरति **न चेति**। ननु पर्यायसामान्यत्वाभावेऽपि तद्विशेषत्वं किं न स्यादित्याशङ्क्य निषेधति **न चेति**। पुनर्नवानवेतिशब्दाभ्यां नेत्ररोगपरिहारकद्रव्यविशेषोऽभिधीयते। काचमाचीमाचीशब्दावप्यौषधविशेषस्य वाचकौ ज्ञेयौ। प्रत्येकं तद्वाचका इति। (कल्पकप्रत्ययप्रयोगयोरभावान्न तदिति भावेन प्रत्ययाभावं तावदुपपादयति **न चेति**)। अन्नशब्दस्यैवान्नमयवाचकत्वे किं बाधकमत्राह **प्रत्ययस्येति**। इष्टापत्तिं परिहरति **प्राचुर्यार्थश्चेति**। **उक्तमिति**। प्राचुर्यादिति सूत्रखण्डेन प्राचुर्यार्थाश्च मयट इत्यादि तद्भाष्येण चेति शेषः। कल्पकस्य प्रयोगस्याभावादपि न प्रत्येकं तयोस्तद्वाचकत्वमित्याह **न हीति**। **तस्मादिति**। व्यभिचारासिद्ध्योरुक्तरीत्याऽप्रसङ्गादित्यर्थः। मयटः श्रवणादित्युपलक्षणमेतत्। अत्रापि 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादौ मयटोऽश्रवणाच्चेत्यपि द्रष्टव्यम्। ततश्च न मयटः श्रवणाश्रवणाभ्यामनुवाकद्वयस्य भिन्नविषयत्वसिद्धिरिति भावः।

**वा०र०— अथैष ज्योतिरिति**। द्वितीयाध्यायद्वितीयपादे संज्ञा चोत्पत्तिसंयोगादित्यष्टमाधिकरणे संज्ञाभेदेनाभिधेयभेदनिरूपणादित्यर्थः। अधिकरणशरीरं च व्याख्यानान्तस्थशब्दान्तरन्यायेनेत्युत्तरमूलव्याख्यानटीकायां प्रदर्शयिष्यते। अधिकमुपपादयिष्यते च भक्तिपादे टीकाकारेणैवेति ज्ञेयम्। **न चेतीति**। ननु सिद्धे शब्दार्थसम्बन्धशास्त्रारम्भकगतस्य सिद्धशब्दस्य व्याख्यानाय प्रवृत्तेन महाभाष्यकृता सिद्धशब्दस्य नित्यार्थकतां व्याख्याय सिद्धा द्यौः सिद्धमाकाशमितिवत्सिद्धः रूपः सिद्धवोदन इत्यपि प्रयोगानित्यर्थकत्वावधारणायोग इत्याशङ्कापरिहाराय शब्दः कार्यो वा सिद्धो वेति सङ्ग्रहे कार्यप्रतिद्वन्द्वितया सिद्धशब्दप्रयोगानित्यार्थकत्वावधारणमित्येकं समाधिमभिधायाअब्भक्षोवायुभक्ष इति वैदिकपदानामप्यवधारणानां सत्त्वादिहापि सिद्ध एव न साध्य इत्यवधारणानित्यार्थकत्वमिति द्वितीयं च समाधिमभिधायाथवा पूर्वपदलोपोऽत्र द्रष्टव्यः। अत्यन्तः सिद्धः सिद्ध इति। तद्यथा देवदत्तो दत्तः सत्यभामा भामेतीति तृतीयसमाधिं चाभिधाय व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति परिभाषामुक्त्वामित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्याम इति चतुर्थोऽपि समाधिरभिहितः। तेषु तृतीयसमाधौ यद्यप्यन्तसिद्धः सिद्ध इत्यादौ पूर्वपदतोपविधानाश्रयणमात्रमुक्तम्। तथापि





लोपः पूर्वपदस्येत्येव विधिरत्र न विवक्षितः । पञ्चमाध्यायतृतीयस्थ'ठाजादावूर्ध्वं द्वितीयादच' इति सूत्रीयवार्तिकश्लोके 'चतुर्थादनजादौ च लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्ट उवर्णाल्लि इलस्य च' इत्येवंरूपे लोपः पूर्वपदस्य चेत्यंशस्य ठाजादावनजादौ च प्रत्यये पूर्वलोपविधायकत्वात् । उदाहृतं च दत्तिकः दत्तिय इत्यादि । अपि तु तत्रत्याप्रत्यये तथा चेष्ट इत्येव रूप एव विधिर्विवक्षितः । तद्वाक्यस्य विनापि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषालोपो वक्तव्य इत्यर्थकत्वात् । उदाहृतं च देवदत्तो दत्तः । देवः । इति वेत्यादि । तेनैवात्यन्तसिद्ध इत्यत्रापि पूर्वपदलोपसम्भवात् । तद्विधेरुभयलोपविधायकत्वेऽपि प्रकृतेत्यन्तपदलोपप्रतिपादनमात्रस्य विवक्षितत्वात्पूर्वपदेत्येवोक्तिश्च युज्यते । एवं च देवदत्तो दत्तो देव इति प्रयोगत्रयसाधुत्वानुशासनेऽपि त्रयाणां पर्यायविशेषत्वाभाववद्भीमो भीमसेन इत्याद्युदाहृतेष्वपि क्वचिदुत्तरपदस्य क्वचिच्च पूर्वपदस्य लोपौ सति प्रयोगानेकत्वप्राप्तावपि पर्यायविशेषत्वाभाव एव । तत्कथं एवं पर्यायत्वम् । अत भीमो भीमसेन इत्यादेः पर्यायविशेषत्वे दृष्टान्तत्वाभिप्रायो व्याख्यायत इति चेन्मैवम् । दत्तदेवपदयोरपि व्याकरणस्मृत्या प्रयोगार्हताप्राप्तयोः देवदत्तशब्दसामान्यपर्यायत्वाभावेऽपि तद्विशेषपर्यायताया अभ्युपगमेन तद्वदेव प्रकृतेऽपि विशेषविपर्यायत्वाश्रयणोपपत्तेः । अत एवोक्तं टीकायां पर्यायसामान्यत्वाभावेऽपि तद्विशेषत्वमिति । अपेक्षितं चान्नमयादिशब्देष्वपि विशेषत एव पर्यायत्वम्, अत एव च देवदत्तशब्दप्रयोगविषये केवलदत्तादिपदप्रयोगे सति व्युत्पन्नस्य देवदत्तबुद्धिरेव भवति यथा तथाऽनुवाकद्वयस्थानान्नमयशब्दविषये केवलान्नशब्दप्रयोगेऽपि विशिष्टबुद्धिरेव भविष्यतीति न दोषः । भीम इत्याद्युदाहृतेष्वपि पूर्वोत्तरलोपो व्यवस्थया प्रयोगानुसारेण वाच्यः । सत्यभामेत्युदाहरणे भामेत्येव सत्येत्येव च प्रयोगवत् भीम इत्युदाहरणे सेन इत्येव बल इत्युदाहरणे च भद्र इत्येव पुनरित्याद्युदाहरणे च पुनरित्येव च प्रयोगादर्शनात् । भीम इत्यादौ प्रयोगद्वयस्यैव सत्ताभिप्रायेणेव तत्प्राये सत्यभामा सत्येत्येवं प्रयोगद्वयमेवोदाहृतं मूल इत्यदोष इति ज्ञातव्यम् ।

वैद्यनिघण्टुगतव्याख्यानं मनसि कृत्वाह **औषधविशेषस्येति** । माचीत्यादिपदेन रामचन्द्रो रामः वेदव्यासो व्यासः, बलरामो रामः बल इत्यादेर्ग्रहणम् । काशिकायां वेदव्यासो व्यास इत्युदाहरणात् । टजादौ ऊर्ध्वं द्वितीयापच इत्युक्तसूत्रीयाप्रत्ययोऽपि पूर्वोत्तरपदलोपविधायकेन तलोपाश्रयणमाश्रित्य प्रत्येकं तस्मिन्नर्थे प्रयोगप्रत्ययसद्भावेनार्थबाधे विशेषाभावात् भीमादिशब्देषु पर्यायत्वोपपत्तेरित्याशयं स्पष्टयति **भीमादीति** मूलम् । ननु भीमसेनादिशब्दानामिव कथं भीमादिशब्दानामपि वृकोदरादि वाचकत्वम् । भीमसेनादिशब्दे हि नियतवर्णानुपूर्वीकपदसङ्घातरूपे संज्ञात्वेन विनियुक्ते भीमाद्येकदेशः प्रयुज्यते । तत्तु संज्ञाविनियोगकाले भीमाद्येकदेशोऽपि पृथक्संज्ञात्वेन भीमः बल इत्यादिरूपेणेति न युक्तः । भीमसेनो बलभद्र इत्यादिरूपेणैव संज्ञाकरणात् तथा च भीमसेन इत्यादिसंज्ञाशब्दस्यैकदेशो लुप्ते सति संज्ञ्यवगमायोगेन प्रत्येकं तद्वाचकत्वस्य भीमादिशब्देष्वाश्रयणानुपपत्तिः । एतेन वेददत्तादिशब्दा अपि व्याख्याता इति चेदत्र वदन्ति । विषाणे गोरनुमानमिवैकदेशे समुदायस्यानुमानम् । स चानुमितः समुदायोऽर्थस्य वाचक इति अथवा समुदाय एकदेशेन स्मर्यमाणो वाचको भविष्यतीति । यदत्रोक्तं कैय्यटे उक्तसिद्धशब्दविचारावसरे श्रुतिपथमवतीर्णाः शब्दा वाचका इति प्रसिद्धेरुच्चार्यमाणः शब्द एवार्थ





प्रत्याययति । न प्रतीयमान इति । तत्रेदं वक्तव्यम् । स्मृत्यनुमिता श्रुतिः किं नार्थं प्रत्याययति । प्रत्याहारेषु वा मध्यवर्तिनोः किं सवर्णान्न प्रत्याययन्ति । किं चाशक्तिजैः शब्दैः साधूनां शब्दानां स्मरणानन्तरं तेभ्यः श्रोतारो नार्थं प्रतियन्ति । तद्यथा कुत आगतमिति प्रश्ने पाटिलपुत्रेणेति मूर्खेणोक्ते श्रोतारः पाटिलपुत्रादिति स्मृत्या तदर्थं प्रतियन्ति । तथा गात्यादिशब्दे गोवाचकतया प्रयुक्ते सति श्रोतारस्तेन गोशब्दस्मरणानन्तरं तदर्थं प्रतियन्ति । उक्तं च— अशक्तिजैरप्रंशैः साधवः स्मारिता यथा । शब्दाः प्रत्याययन्त्यर्थं तथात्रापि भविष्यति' इति ।

एवं चानुमितानां स्मर्यमाणानां चार्थप्रत्यायकत्वोपलम्भात्प्रकृतेऽपि भीमाद्येकदेशेन समुदायानुमितौ स्मरणे वा तेन समुदायेनार्थप्रतिपत्तिरित्येतदेव प्रत्येकं वाचकत्वमिति । तत्र ब्रूमः । तथा सति मूले मुखतः प्रत्येकं वाचकत्वोक्तेः परित्यागप्रसङ्गात् । समुदायद्वारार्थप्रत्यायकत्वाभ्युपगमे भीमाद्येकदेशानामर्थाभावप्राप्त्या अर्थवत्वाधीनपदत्वाभावेन प्रयोगायोगश्च । ननु विशिष्टानुपूर्वीकभीमसेनादिसंज्ञाशब्दनिष्ठैकदेशसदृश एव भीमादि-शब्दात् पुनरेकदेशत्वेति न पदत्वाद्यनुपपत्तिः तेभ्यश्च भीमसेनादिसङ्घातस्मृतौ स्मर्यमाणसङ्घातात् अर्थप्रति-पत्तिरिति चेन्न । एकदेशसदृशभीमादिपदस्य समुदायेन सादृश्याभावेन तत्स्मारकत्वानुपपत्तेरिति । कथं तर्हि प्रत्येकं वाचकत्वमुपपाद्यमिति चेत् । शृणु । यदुक्तं नियतानुपूर्वीकभीमादिपदसङ्घात एव संज्ञात्वेन विनियुक्त इति । तत्तथैवेति वदामः । किन्तु तत्समुदायस्य मांसे पिण्डे संज्ञात्वेन विनियोगकाले समुदायैकदेशा अपि संज्ञात्वेन विनियुज्यन्ते । तेषामपि समुदायवत्समकालमेव संज्ञिसम्बन्धित्वेन निष्पत्तेः । अतोऽर्थचत्वात्पदत्वाद्युपपत्तिः ।

न चैवं समुदायगतपदानामिव वर्णानामप्यर्थात्संज्ञात्वप्राप्तिरूपात् निष्पत्तिसाम्यात् वर्णानामपि पदवत्प्रत्येकसंज्ञिप्रत्यायकत्वापत्तिरिति वाच्यम् । ठाजादावूर्ध्वमित्यादिरूपलोपविधायकशास्त्रेण साधुत्वेनानु-स्मरणेन भयङ्करसूर्यसहितादिरूपपदार्थान्तरप्रयुज्यमानभीमादिपदसदृशावयवपदानां संज्ञात्वेन विनियोगप्रयुक्ते संज्ञिप्रत्यायकत्वे विद्यमानेऽपि वर्णानां कथञ्चिच्छास्त्रो साधुत्वेनानुस्मरणाभावान्न संज्ञिप्रत्यायकत्वं मञ्जर्यादौ देवदत्त इत्येतत्संज्ञाशब्दे देवो दत्तो देवदत्त इति त्रयस्यापि साधुत्वं पूर्वोत्तरपदलोपेन प्रतिपादितं समर्थयितुं संज्ञाशब्दैकदेशस्य संज्ञिप्रत्यायकत्वानुपपत्तिशङ्कापरिहारस्य तथैव कृतत्वात् । 'तुल्यायामनुनिष्पत्तौ ज्येन्द्राखा इत्यसाधवः । न ह्यन्वयाख्यापके शास्त्रे दत्तादिवदनुस्मृतिरि'त्यस्य सम्मतित्वेनोदाहरणाच्च । एतेनैतदपि परास्तम् । यदि संज्ञाविनियोगकालेऽवयंवा । अपि संज्ञात्वेन विनियुज्यन्ते तर्हि टाजादावित्यादि लोपविधायकमनर्थकं स्यादिति । न हि व्याकरणदत्तादिशब्दान् स्वातन्त्र्येण निष्पादयति । किन्तु ये अवयवा अर्थसंज्ञात्वं प्राप्ताः तेषामेकदेशलोपि प्रणाल्या साधुत्वमन्याख्यापयति । एवं सति कुतो वैयर्थ्यम् । तेनैव तत्संज्ञागतवर्णानां साधुत्वेनानुशिष्टत्वाभावादेवासाधुत्वमित्यपि सिद्धमेवेति न तेषां वाचकत्वप्रसङ्ग इत्यपि सिद्ध्यति । लोपविधान-सामर्थ्यदिव महासंज्ञायामन्योन्यसम्बन्धत्वेऽपि पृथक्करणप्राप्त्या समुदयात् कथं पृथक्करणमित्यपि शङ्का नाव-काशहता । तस्मात् भीमसेनादि नियमतानुपूर्वीकि पदसङ्घातरूपसंज्ञाविनियोगकाले तद्गतपदानामपि संज्ञात्वेनानु-निष्पन्नत्वात्संज्ञिप्रत्यायकत्वं तेषामप्युपपन्नमेव । अवयवपदेषु लोपादिना साधुत्वेनानुशासनरूपविशेषादेव वर्णानां संज्ञिप्रत्यायकत्वप्रतिबन्ध्या अपि नावकाशः । ततो युक्तं भीम इत्याद्येकदेशानामपि प्रत्येकं वाचकत्वमिति





साधूक्तम् । भीमादिशब्दा हि प्रत्येकं तद्वाचका इत्यादिकं मूलतट्टीकयोरित्यलं प्रसक्तानुप्रसक्त्या । **कल्पकस्येति** । प्रकृतेऽन्नमयादिशब्दानामन्नमयादौ प्रयोगप्रत्ययप्राचुर्यवदन्नादिशब्दानां तत्र प्रयोगप्रत्ययप्राचुर्याभावान्न प्रत्येक-वाचकत्वमित्यर्थः । उक्तरीत्या संज्ञाशब्दगतैकदेशलोपकल्पनाया अपि प्रयोगाद्यधीनत्वेन तदभावे तदनवकाश इति ज्ञेयम् । मयटः स्पटेतीति (?) प्रतीकोपादनो पाठः । श्रवणादितीति चन्द्रिकापाठदर्शनमूलकम् । चन्द्रिका-नुसारेणाह **उपलक्षणमेतदिति** । शङ्कितवैषम्यस्यान्यथासिद्धिः प्राप्तेत्याह **ततश्चेति** ।

**स०व्र०**— ननु यत्र शब्दभेदः तत्र निमित्तभेदः अभिधेयभेदश्चेत्यनुपपन्नं पर्यायेषु व्यभिचारा-दित्याशङ्क्य पर्यायव्यतिरिक्तत्वं हेतुविशेषणमभिप्रेत्य तदसिद्धिं परिहरति **न चेति** । ननु पर्यायसामान्यत्वा-भावेऽपि तद्विशेषत्वं किन्न स्यादित्याशङ्क्याह **न च भीमेति** । **पुनर्नवा नवेत्यादि** । औषधविशेषसंज्ञेयम् ।

**विठ्ठल०**— उपरिष्टाद्ब्रह्म कथं तन्नेत्यत्र मयट्प्रत्ययादीनामित्यत्र आद्येन आदिशब्देन अन्यत्वां रत्व-शरीरिशरीरत्वादिकं गृह्यते । द्वितीयेन विशेषरूपार्थस्य ग्रहणं पर्यायत्वान्न शब्दभेददोष इत्याशङ्क्याह **न चेति** । पुनर्न वा प्राकृतभाषया पुनर्नवगणजलु । **कामाची** । काचीति औषधविशेषः । काचि इति दाक्षिणात्या औत्तराहास्तु माचीत्याहुः । भीमादिशब्दा अपि भीमसेनादिशब्दवत्प्रत्येकं रूढा इति वैय्याकरणप्रक्रियामाश्रित्याह **भीमादिशब्दा हीति** । भवतु स्वार्थिकमित्यत आह **प्राचुर्यार्थश्चेति** । भीमादिशब्दवदन्नादिशब्दस्यापि प्रत्येकं तद्वाचकत्वं किं न स्यादित्यत आह **न हीति** ।

**चषकः**— **प्रत्येकं तद्वाचका इति** । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपवृत्तिपञ्चकघटका अपि तत्र प्रयोगप्रत्ययदर्शनाद्भीमत्वाद्यवच्छिन्नवाचका इत्यर्थः ।

**॥ अथ प्रचुरान्नादित्वादेव हि अन्नान्नमयादिशब्दतया ब्रह्मणो वचनम् ॥**

३७ **सु०— एतद्विवृणोति प्रचुरान्नादिरेवेति ।**

**अनु०— प्रचुरान्नादिरेवातो ह्यन्नमन्नमयेत्यपि ।**
**उच्यते ह्यविशेषेण नान्यत्किञ्चिदिहोच्यते ॥**

**यथा हि ज्योतिष्टोमाधिकारे वसन्ते वसन्ते ज्योतिषा यजेतेति कालविशेषविधिपरे वाक्ये ज्योतिश्शब्दो ज्योतिष्टोमस्याभिधायकः । न हि तत्र शब्दयोः पर्यायत्वम्, राज-शब्दस्यापि राजपुरुषशब्दपर्यायत्वप्रसङ्गात् । ज्योतिषां स्तोमो हि ज्योतिष्टोमः । अत एव न प्रत्येकं वाचकत्वं, किं त्वधिकारबलादेकदेशोत्कीर्तनेन समग्रशब्दलक्षणामङ्गीकृत्य**





**निमित्ताभिधेयैक्यमङ्गीकरणीयम् । एवमत्राप्यन्नप्राणाद्येकदेशोत्कीर्तनेनान्नमयशब्दादि-लक्षणयाऽन्नादिशब्दानामन्नमयादिशब्दानां चैक्यमङ्गीकृत्य (तन्नि)निमित्ताभिधेयैक्यम-(ङ्गीक्रि)भ्युपेयते, प्राप्यतयोक्तिस्थाने मयट्प्रयोगसामर्थ्यात् । न ह्यन्यविद्ययाऽन्यप्राप्ति-र्युक्तेति भावः ।**

**अन्नमयेति प्रातिपदिकमात्रग्रहणम् । इतिशब्द आद्यर्थे, प्रत्येकं चाभिसम्बद्ध्यते ।**

**तथा च अतः प्राप्यत्वेन मयट्प्रोक्तिसामर्थ्यात्, अन्नमित्यादीनां अन्नमयमित्यादीनां च शब्दानाम्, अविशेषेण स्वरूपैक्येन कारणेन तैः शब्दैः प्रचुरान्नादिशब्दैः, प्रचुरान्नादि-निमित्तवान्परमात्मैव उच्यते, न पुनरनुवाकद्वये प्रतिपाद्यभेदमङ्गीकृत्य इह अनुवाके ब्रह्मणो अन्यत्किञ्चित् शरीरादिकोशरूपम् उच्यत इति योजना ।**

**आद्यो हिशब्दो न ह्यन्यविद्ययाऽन्यप्राप्तिर्युक्तेति न्यायसूचनार्थः, द्वितीयस्तु शब्दैक्ये निमित्ताभिधेयैक्यप्रसिद्धेर्द्योतकः ।**

**परि०—** दृष्टान्तपूर्वकमेकदेशेन समग्रशब्दार्थप्रतीतिप्रकारमाह **यथा हीत्यादिना** । **ज्योति-ष्टोमाधिकारे** ज्योतिष्टोमप्रकरणे । **कालविशेषविधिपरे इति** । वसन्तरूपकालविशेषेत्यर्थः । ज्योति-षेतिपदेन पूर्वप्रकृतज्योतिष्टोमानुवादेन वसन्तरूपकालस्य विधानादिति भावः । **ज्योतिषां स्तोमो हीति** । यद्यपि 'त्रिवृत्पञ्चदशसप्तदशएकविंशा एतानि वा व तानि ज्योतींषि य एतस्य स्तोमा' इति ज्योतींषि स्तोमा यस्मिन्निति ज्योतिष्टोम इति विग्रह इति प्रसिद्धस्तथाप्यवयवविभागप्रदर्शन एव तात्पर्यमित्येके । अन्ये तु एवमेव विग्रहः । बहुव्रीहिप्रसिद्धिस्त्वन्यथा नेयेत्याहुः । **अत एवेति** । राजशब्दस्यापि राज-पुरुषवाचकत्वप्रसङ्गादेवेत्यर्थः । **अधिकारेति** । प्रकरणबलादित्यर्थः । **एकदेशेति** । समग्रेति च लक्षणाबीजोपपादनम् । **निमित्तेति** । प्रवृत्तिनिमित्तैक्यमभिधेयैक्यमित्यर्थः । यत्तु पस्पशाह्निके कैयटे 'सिद्धे शब्दार्थसम्बन्धे' इत्येतद्भाष्यव्याख्यानावसरे एकदेशोत्कीर्तनेन प्रतीतस्य समग्रशब्दस्य नार्थप्रत्यायकत्वमुच्चार्यमाणस्यैवार्थप्रत्यायकत्वादि'त्युक्तं तन्न । अनुच्चार्यमाणस्यापि मनसानुसंहितस्य शब्दस्यार्थप्रत्यायकत्वानुभवात् । सामर्थ्यादित्युक्तं व्यनक्ति **न हीति** ।

**गु०दी०— अन्नमित्यादीनां अन्नमयमित्यादीनां च शब्दानामविशेषेण** इत्यत्र प्रकरणद्वयेऽप्यन्न-मयादीनां प्रतिपाद्यत्वेऽप्युत्तरानुवाकेऽन्नादिशब्दैरेवोत्कीर्तनं, गुणवाचिनां च समन्वयसूचनार्थमिति द्रष्टव्यम् ।





**यादु०**— ननु ज्योतिष्टोमशब्दस्य यागविशेषे रूढस्य कथं राजपुरुषशब्दसमानत्वमित्यतो यौगिकोऽप्ययमित्याह **ज्योतिषां स्तोमो हीति**। हिशब्देनेदं हि निर्वचनं चिरन्तनमीमांसकप्रसिद्धमिति सूचयति। अत आधुनिकैरित्थमनङ्गीकारात् कथमेतदिति शङ्काऽनवकाशः। **अत एवेति**। राजशब्दस्यापि राजपुरुषवाचकत्वप्रसङ्गादेवेत्यर्थः। **प्रत्येकमिति**। ज्योतिर्ज्योतिष्टोमशब्दयोरिति शेषः। **अधिकारबलादिति**। प्रकरणबलादित्यर्थः। **एकदेशेति समग्रेति** च शक्यसम्बन्धोपपादनाय। ज्योतिःशब्दस्य हि स्वं रूपं शब्दस्येति वचनेन स्वयमपि शक्योऽर्थः। स च समग्रो यो ज्योतिष्टोमशब्दो लक्ष्यस्तदेकदेशरूपो भवति। अतोऽत्र शक्यसम्बन्ध उपपद्यत इति। अत्र यद्यपि लक्षणया ज्योतिःशब्देन ज्योतिष्टोमरूपोऽर्थो ज्ञातुं शक्यत इति न शब्दलक्षणाऽङ्गीकारार्हा। तथाऽपि निमित्ताभिधेयैक्यलाभाय शब्दलक्षणैव युक्ता। अन्यथा संज्ञाभेदप्रसङ्गेन कर्मान्तरपरत्वशङ्कापातादिति द्रष्टव्यम्। एवं दार्ष्टान्तिकेऽप्यन्नप्राणादिशब्दैरन्नमयादिशब्दलक्षणैव युक्ता। न प्रचुरान्नादिरूपार्थलक्षणा। निमित्ताभिधेयैक्यालाभेन प्रमाणसिद्धसमाख्यात्वभङ्गप्रसङ्गात्। अन्नादिशब्दानां लक्षणया प्रचुरान्नादिपरत्वे तस्य समन्वयत्वासम्भवाच्च। योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वय इत्युक्तेरित्यवगन्तव्यम्। **प्रातिपदिकमात्रेति**। वस्तुतस्त्वन्नमय इति वक्तव्यमिति भावः।

**वं०प०**— **राजपुरुषेति**। राज्ञः पुरुषो राजपुरुष इति षष्ठीव्युत्पत्त्या भृत्यवाचकराजपुरुषशब्दस्य राजशब्दपर्यायित्वाभावादित्याशयः। अधिकारो ज्योतिष्टोमेन यजेतेति प्रकरणम्। तथाऽपि कथं निमित्ताभिधेयैक्यलाभ इत्यत आह **न हीति**। अन्नादिज्ञानेनान्नमयादिप्राप्त्यसम्भवादिति भावः।

**आनन्दः**— नन्वन्नानन्दमयशब्दयोरेकार्थत्वे पर्यायत्वं स्यादित्यत आह **यथा हीति**। **तत्रेति**। ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वे सतीत्यर्थः। **शब्दयोः** ज्योतिर्ज्योतिष्टोमशब्दयोः। ननु ज्योतिर्ज्योतिष्टोमशब्दयोरपि पर्यायत्वं स्यादेव एकार्थत्वादित्यत आह **राजशब्दस्यापीति**। राजपुरुषमानयेत्यत्र राजशब्दस्यापि स्वसम्बन्धकथनद्वारा राजपुरुषपरत्वेन कथञ्चिदेकार्थत्वात्पर्यायित्वं स्यादित्यर्थः। तथा च यथा तत्र सत्यप्येकार्थत्वेन पर्यायित्वं तथा प्रकृतेऽपीति भावः। ननु तत्र समासान्तर्गत्या राजशब्दस्य राजपुरुषपरत्वेऽपि न केवलं राजशब्दस्य तत्परत्वं प्रकृते तु केवलस्यापि ज्योतिःशब्दस्य ज्योतिष्टोमपर्यायित्वमिति वैषम्यात् प्रकृते पर्यायित्वं स्यादेवेत्यत आह **ज्योतिषां स्तोम इति**। तथा च प्रकृतेऽपि समासान्तर्गत्या ज्योतिःशब्दस्य ज्योतिष्टोमपरत्वान्न वैषम्यमिति भावः। न चैवमपि प्रकृते केवलं ज्योतिःशब्दस्य ज्योतिष्टोमपरत्ववत्प्रकृते केवलराजशब्दस्य न तत्परत्वमिति वाच्यम्। राजपुत्रे प्रिये भृत्ये वा पूजिते राजा पूजित इति सार्वजनीनप्रयोगसद्भावेन केवलराजशब्दस्यापि राजपुरुषपरत्वात्। ननु ज्योतिष्टोमशब्दयोरुभयोरपि ज्योतिष्टोमे समप्रयोगसद्भावेन वाचकत्वमस्त्वित्यत आह **अत एवेति**। राजशब्दस्य राजपुरुषशब्दपर्यायित्वाभाववत् ज्योतिःशब्दस्य ज्योतिष्टोमशब्दः पर्यायित्वाभावादेवेत्यर्थः। तर्हि प्रयोगोपपत्तिः कथमित्यत्राह **किंत्विति**। **अधिकारिबलात्** ज्योतिष्टोमप्रकरणबलात्। एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिकमुपपादयति **एवमत्रापीति**। नन्वैक्यं कुत इत्यत्राह **न हीति**।





**श्रीनिधि०— अधिकारे** = प्रकरणे । **अधिकारबलात्** = प्रकरणबलात् । मयटः प्रयोगसामर्थ्यात् उत्तमानुवाक इति शेषः । तथाप्यन्नादिकं अन्यदस्त्वित्यत आह **न ह्यन्यविद्ययेति** । सम्बुद्धित्वभ्रमनिरासायाह **प्रातिपदिकग्रहणमात्रमिति । स्वरूपैक्येनेति** । लक्षितशब्दापेक्षया बहोर्लोप इति । पृथ्वादिभ्य इम चेति । बहुशब्दादिमनिजन्तस्य च भूरित्यादेशः । प्रत्ययादेश्च लोपः इत्यर्थः । ऐक्यादैक्यविवक्षया मुख्य एव न तु उपचार इति भावः । पूर्ण एवोऽच्यत न तु पूर्तिरित्यर्थः ।

**शे०वा०—** एकदेशोत्कीर्तनेन समग्रशब्दलक्षणामङ्गीकृत्य निमित्ताभिधेयैक्यमङ्गीकरणीयमिति पक्षं दृष्टान्तप्रदर्शनेनोपपादयितुमाह **यथा हीति** । ननु ज्योतिषेति कर्मान्तरविधानान्न ज्योतिश्शब्दोऽत्र ज्योतिष्टोमस्याभिधायक इत्यत उक्तम् **कालविशेषविधिपर इति** । वसन्तकालगुणसङ्क्रान्तत्वान्न कर्मान्तरविधिरित्यर्थः । ज्योतिष्टोमे कालविशेषविधिपरत्वं कुत इत्यतस्तस्य प्रकृतत्वादित्याह **ज्योतिष्टोमाधिकार इति** । वसन्ते वसन्ते ज्योतिषा यजेतेति ज्योतिष्टोमानुवादेन कालरूपगुणविधिः कर्मान्तरविधिर्वेति संशये कर्मान्तरविधिपक्षे द्रव्यदेवतात्मकरूपकल्पनेन गौरवापत्त्या कालविशेषलक्षणगुणविधिरेवेति सिद्धान्तितमित्याशयः । अस्तु ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वं किं तावतेत्यत एकदेशोत्कीर्तनेन समग्रशब्दलक्षणामङ्गीकृत्य निमित्ताभिधेयैक्यस्याङ्गीकरणीयत्वं सिद्धमित्याशयेन पर्यायत्वादिनैव ज्योतिष्टोमाभिधायकत्वोपपत्तेर्नोक्तप्रकारकल्पनायास्तत्रावकाश इत्याशङ्कापरिहाराय पर्यायत्वं तावन्निराकरोति **न हीति । तत्रेति** । ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वसिद्धावित्यर्थः । पर्यायत्वे बाधकमाह **राजशब्दस्यापीति** । यदि ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वमात्रेण ज्योतिर्ज्योतिष्टोमशब्दयोः पर्यायत्वं स्यात्तदा राजपुरुषशब्दान्तर्गतराजशब्दस्यापि राजपुरुषवाचकत्वेन राजपुरुषशब्दस्यापि राजशब्दपर्यायत्वं स्यादित्यर्थः । अयमाशयः । वृत्तौ हि राजपदं राजानमभिधाय न तावति पर्यवस्यति किन्तु पुरुषमप्याचष्टे । यथा गङ्गायां घोष इत्यत्र गङ्गापदं तीरम् । यदि तु तावत्येव पर्यवस्येत्ततो यथा वाक्ये राज्ञोऽश्वश्च पुरुषश्चेति द्वाभ्यां सम्बन्धो भवति तथा राजपुरुषोऽश्वश्चेत्यपि स्यात् । विशेषणसम्बन्धोऽपि भवेत् । यथा वाक्ये ऋद्धस्य राज्ञः पुरुष इति । अतो वृत्तौ राजपदस्य राजपुरुषाभिधायकत्वाद्राजशब्दस्यापि राजपुरुषशब्दपर्यायत्वं स्यादिति । ननु राजपुरुष इत्यत्र राजशब्दस्य तदेकदेशत्वेन राजपुरुषशब्दपर्यायत्वाभावेऽपि प्रकृते ज्योतिष्टोमाभिधायकस्य ज्योतिःशब्दस्य तदेकदेशत्वाभावात् पर्यायत्वं स्यादेवेत्यतो ज्योतिःशब्दस्यापि तदेकदेशत्वमाह **ज्योतिषामिति** । ननु त्रिवृत्पञ्चदश सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा इति वाक्यशेषबलाज्ज्योतिर्नामिकाः स्तोमा यस्येत्येव तन्निर्वचनं मीमांसकाभिमतम् । बहुव्रीहित्वप्रयुक्तपूर्वपदप्रकृतिस्वरदर्शनाच्चेदमेव युक्तम् । तत्कथं ज्योतिषां स्तोमो ज्योतिष्टोम इति श्रुत्यादिविरुद्धं तन्निर्वचनाश्रयणमिति चेन्न । श्रुतौ स्तोमशब्दस्य स्तोत्रपरत्वात् । अत्र टीकायां तु समुदायपरत्वेनाविरोधोपपत्तेः । पूर्वपदप्रकृतिस्वरत्वं तु न बहुव्रीहित्वाविनाभूतम् । तत्पुरुषे तुल्यार्थेत्यादिविषये यतो नाव इत्याद्युदात्ततुल्यपूर्वपदकतुल्यश्वेत इत्यादितत्पुरुषे इगन्तकालेत्यादिविषयेऽत्र सङ्ख्याया इत्याद्युदात्तपञ्चपूर्वपदकपञ्चवर्ष इत्यादिद्विगौ आर्यो ब्राह्मणेत्यादिविषये ण्यदन्तस्वरितान्तपूर्वपदके आर्यब्राह्मण इत्यादिकर्मधारये सङ्ख्येत्यादिविषये कन्नन्ताद्युदात्तैकपूर्वपदकै-





कादेशेत्यादिद्विन्द्वे च व्यभिचारादित्यधस्तादावेदितमिति दिक् । पर्यायसामान्यत्वाभावेऽपि पर्यायविशेषत्वा-ज्ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वमस्त्वित्यत आह **अत एवेति** । राजशब्दस्यापि प्रत्येकं वाचकत्व-प्रसङ्गादेवेत्यर्थः । परिशेषयितुं शङ्कते **किं त्विति** । **अधिकारेति** । प्रकरणबलादित्यर्थः । एकदेशेति समग्रेति च शक्यसम्बन्धोपपादनाय । ज्योतिःशब्दस्य हि स्वयमपि शक्योऽर्थ एव । स्वं रूपं शब्दस्येति पाणिनिस्मृतेः । स च लक्ष्यस्य समग्रस्य ज्योतिष्टोमशब्दस्यैकदेशो भवति । अतोऽत्र शक्यसम्बन्धिसमग्रशब्दलक्षणोपपद्यत इति । अत्र यद्यपि ज्योतिःशब्देन ज्योतिष्टोमरूपोऽर्थ एव लक्षयितुं शक्यते तथाऽपि शब्दलक्षणानङ्गीकारे संज्ञाधिकरणन्यायेन कर्मान्तरविधिपरत्वापत्त्या निमित्ताभिधेयैक्यलाभाय समग्रशब्दलक्षणाङ्गीकार इति द्रष्टव्यम् । ननु तत्र ज्योतिष्टोमाधिकारसामर्थ्यात् ज्योतिःशब्दस्य तदेकदेशोत्कीर्तनेन समग्रलक्षणया ज्योतिष्टोमवाचकत्वं न्याय्यम्, अन्यथा अधिकारविरोधात् प्रकृते तु किं सामर्थ्यात् तथा स्यादित्यत आह **प्राप्यतयेति** । सामर्थ्य-मेवोपपादयति **न हीति** । **प्रातिपदिकमात्रेति** । अन्यथाऽन्नमय इत्येव वक्तव्यत्वादित्याशयः । **प्रत्येकं चेति** । अन्नमित्यादिनाऽन्नमयमित्यादिना चेति प्रत्येकमित्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाह **तथा चेति** । हिशब्दद्वय-वैयर्थ्यमर्थभेदकथनेन परिहरति **आद्य इत्यादि** ।

**वा०र०— एकदेशोत्कीर्तनेनेत्यादि** मूलम् । लक्षणामङ्गीकृत्येत्यस्य अन्नादिशब्दवाचकान्नादिशब्दै-रन्नमयादिशब्दानां लक्षणायाश्रुतलक्ष्यशब्दयोरैक्यमङ्गीकृत्येत्यर्थः । उक्तं च प्राङ्मूले यद्यप्यत्रानन्दमयशब्दः स्वमात्रग्राहकः स्यादित्यादि । वक्ष्यति च मूले **लक्षणयान्नादिशब्दानामन्नमयादिशब्दानां चैक्यमङ्गीकृत्येति** । शब्दानामविशेषेण स्वरूपैक्येन कारणेनेति च । **उपपादयितुमाहेति** । अनेन अन्नान्नमयादिशब्दैक्यानिमित्ता-भिधेयैक्यमिति प्रतिपादनानन्तरं दृष्टान्तस्य वक्तव्यत्वमिति शङ्कापि निरस्ता । उपोद्धातेन दृष्टान्तस्य प्रथमं कीर्तनात् । तदेतदुक्तं **दृष्टान्तप्रदर्शनेनेति** । कालविधिपर इत्येतत्कल्पतरौ व्याख्यातम् । तदनुसारेणाह **वसन्तकालेति** । एकदेशोत्कीर्तनेनेत्यादि वदतैव पूर्वं भीमसेनादिशब्दावयवभूतभीमादिशब्देषु पूर्वोत्तरपदविलोप-विधायकानुसारेण तल्लोपे निष्पन्नेषु प्रत्येकं संज्ञात्वात्प्रत्येकं वाचकत्वमिति यत् उत्पादितं तत्प्रकारस्य सिद्धान्ते-ऽनुसरणं नास्तीति प्रतिपादितं भवति । अत्र हि यतो वर्णानुपूर्वीकान्नमयादिशब्दानामेव वाचकत्वं अन्नादिशब्दै-रन्नमयादिशब्देषु लक्षितेषु तेऽन्नादिशब्दाः अन्नमयादिशब्दत्वं प्राप्त इति तेषां चैकत्वेनैकार्थप्रतिपादकत्व-मित्यस्योक्तत्वात् । तत्र तु पूर्वपदादिलोपे निष्पन्नरूपस्यैव विशिष्टे संज्ञाविनियोगे काले संज्ञात्वेन विनियोगात् संज्ञिप्रत्यायकत्वं पृथगेवेत्युक्तत्वात् । अत एव पूर्वमूले भीमादिशब्दा हि प्रत्येकं तद्वाचका इत्याद्युक्तम् । अत्र चोत्तरमूलेऽत एव न प्रत्येकं वाचकत्वमिति प्रागुक्तप्रत्येकवाचकत्वस्य निषेधः क्रियते । तथा चोत्तरपद-लोपादिविधायकव्याकरणोक्तप्रकारं परित्यज्य मीमांसकसम्मतलक्षणापक्षाश्रयणेन वाचकत्वोपादानस्यात्र क्रिय-माणत्वेऽपि परोक्तरीत्या भीमादिशब्देषु तद्व्युत्पादनेऽपि न दोष इति सूचयता लोपपक्षेऽर्थप्रत्यायकत्वोप-पादनप्रयासवदिह स नास्तीति प्रतिपादितं भवति । ननु लक्षणापक्षे एकदेशस्य विशिष्टार्थप्रत्यायकत्वानभ्युपगमेन तत्प्रयुक्तविशिष्टसंज्ञाविनियोगकालेऽवयवपदानां संज्ञात्वाश्रयणादिप्रयासाभावेऽपि तत्प्रयासाश्रयणनिमित्तभूत-





स्यैकदेशेन विशिष्टसंज्ञानुमानतत्स्मरणपक्षयोरुक्तस्योच्चार्यमाणशब्दस्यैव प्रत्यायकत्वेन प्रतीयमानस्य तदभावादिति कैय्यटाद्युक्तदोषस्य तादवस्थ्यमिति चेन्न । स्मृत्यनुमितश्रुतेरर्थप्रत्यायकत्ववत् प्रत्याहारान्तर्गतमध्यमवर्णाना-मनुच्चार्यमाणाभावेऽपि लक्षितशब्दस्य प्रत्यायकत्वोपपत्तेः । श्रुतिलिङ्गादिषु लिङ्गादीनां श्रुत्याद्यनुमापकत्वेन प्रामाण्येन श्रुत्यादेरुच्चारणयोगस्य तदभावेऽप्यर्थप्रत्यायत्वदर्शनाच्च । अर्थवादानां स्तुतिरूपाणां विध्युन्नायकतयोन्नेयविधेरपि तद्दर्शनाच्च । अशक्तिजापभ्रंशशब्दस्मारितसाधुशब्दैः श्रोतॄणामर्थप्रत्ययसद्भावस्य मञ्जर्यामुक्तत्वाच्च ।

न च प्रागिवात्रैकदेशस्य पृथगर्थवत्त्वाभावः प्रसज्यते । एकदेशानां भीमादीनां भीमसेनादि संज्ञा-शब्दार्थमात्रत्वेन पृथगर्थवत्त्वाभावेऽपि प्रकृतेऽन्नादिशब्दानां स्वस्वार्थप्रतिपादकत्वेन पदत्वोपपत्तेः । एकदेशस्य समस्ते लक्षणमात्रमत्र क्रियते । प्रत्ययार्थस्याधिकस्यान्नमयादिशब्दे सत्त्ववद्भीमसेनादिशब्देष्वपि सेनादिपदार्थक-स्याधिकस्य सत्त्वमिति पूर्वमूलोपरि शङ्का अनेनैव निरस्ता । मयटः प्राचुर्यरूपपृथगर्थकत्ववत्सेनादिपदानां पृथगर्थाभावात् । किञ्च द्विरेफपदलक्ष्यभ्रमरशब्दस्य कथञ्चिन्मधुपरूपार्थप्रत्यायकत्वं सर्वसम्मतमेव । अन्यथा लक्ष्यार्थभूतशब्दसम्बन्धोऽपि तदर्थेन ज्ञायतेति लक्षितलक्षणापि न स्यादिति न कश्चिद्दोषः । एतेनोक्तानुप-पत्तिकथनपरकैयटग्रन्थमनूद्य तन्निरासाय चन्द्रिकाटीकाराघवेन्द्रर्या यदुक्तमनुच्चार्यमाणस्यापि मनसाऽनुसहितस्य शब्दस्यार्थप्रत्यायकत्वानुभवस्य सर्वानुभवसिद्धत्वात् राजपुरुषादिशब्दार्थवाचकत्वस्य राजादिशब्देषु दर्शना-च्चेत्यादि । तद्विचार्यम् । मञ्जर्युक्तरीत्या स्मृत्यनुमितश्रुतेः प्रत्याहारवर्णानां चानुच्चारणेऽप्यर्थप्रत्यायकत्वसद्भावेन प्रतीयमानस्य प्रत्यायकत्वाभावादिति कैय्यटोक्तेरयोग इति दूषणसम्भवे मनसाऽनुसंहितस्य प्रत्यायकत्वाश्रयणेन तन्निरासायोगः । उक्तलिङ्गानुमितश्रुतेरर्थवादान्नेयविधिवाक्यस्यापभ्रंशादिस्मारितसाधुशब्दस्य चार्थप्रत्यायकत्व-दर्शनाच्च । राजपुरुषादिशब्दार्थवाचकत्वस्येत्युक्तम् । राजादिशब्दस्य राजपुरुषाद्यर्थकत्वं यदिपदलोपेनेत्युच्यते । तर्हि संज्ञात्वाभावात्तल्लोपविध्यप्रवृत्तिः प्रवृत्तौ वा तत्र कैय्यटोक्तरीत्या संज्ञाकाले विनियोगाद्याश्रयणेन परिहारप्राप्त्या मनसाऽनुसन्धानाश्रयणानुपपत्तिरेव । एकदेशोत्कीर्तनेन समग्रशब्दलक्षणया तदर्थत्वमिति तु न शक्यते वक्तुम् । केवलराजपदस्य तत्पुरुषे प्रयोगाभावात् । तस्माद्राजपुरुष इति समासे समर्थसूत्रीयमञ्जर्यनुसारेण राज्ञः पुरुष इति वाक्याद्वैलक्षण्यसिद्ध्यर्थं राजपदं राजानमभिधाय न तावति पर्यवस्यति किन्तु पुरुषमप्याचष्ट इत्यादिप्रकारेण राजपदं राजसम्बन्धिपुरुषार्थकमिति वाच्यम् । सति चैवं कथं पुरुषवाचकत्वोपपादनं मनसाऽनुसंहितत्वाश्रयणेन स्यात् । किञ्च कैय्यटे संज्ञाशब्दैकदेशलोपादिपक्षाश्रयणेन प्रतीयमानस्येति दूषणस्यैकदेशात्समुदायस्य स्मरण-मित्येतत्पक्ष एव प्रवर्तनेन तत्परिहाराय चैवं तर्ह्यनुमिष्यादिना(?)ऽवयवरूपा इत्यादिपक्षमुपवर्ण्य तत्पक्षे लोप-विधानार्थक्यं (?) च परिहृतम् । चन्द्रिकायां तु सुधानुसारेणैकदेशेन समग्रलक्षणाया अभिप्रेतत्वात् तथोक्तम् । सति चैवं कैय्यटोक्तैवं तर्ह्युक्तपक्षाश्रयणस्य तत्राभावात् प्रतीयमानस्येत्युक्तकैय्यटोक्तदूषणनिरासेऽपि तात्पर्य-तयैकदेशस्यावाचकत्वेऽर्थाभावात्पदत्वानुपपत्त्या प्रयोगायोग इति प्रदीपविवरणादावुक्तदोषोऽङ्गीकृत इति प्रत्यायितं स्यात् । न हि भवद्भिरत्र लक्षणापक्षस्य पुरस्कारमात्रवदन्यो यत्नः कृत इत्यलम् । प्रथमभागे समर्थसूत्रे च वृत्तौ हीत्यादिर्मञ्जरीग्रन्थः तदनुसारेणाह **वृत्तौ हीत्यादिना** । एतच्च अदृश्यत्वनयेनानुमानमतच्छब्दादित्यत्र च ज्योतिरधिकरणादौ च व्याख्यास्यते ।





न च ज्योतिषां स्तोम इति ज्योतिष्टोमनामनिर्वचनं किं तर्हि इत्यादि अप्पय्यकृतदूषणं तदनुसारेण प्रवृत्तं भट्टोजिकृतं चोक्तप्रकारेण बहुव्रीहित्वप्रत्युक्तपूर्वपदप्रकृतिस्वरत्वदर्शनाच्चेदमेव युक्तमित्यादिप्रकारेण च दूषण-मुद्धर्तुमाह **ननु त्रिवृत्पञ्चदश इत्यादिना । स्तोत्रेति** । तथा ज्योतिष्टोमाख्ययागस्य ज्योतिनामकानां स्तोत्राणामेव सद्भावप्रतिपादनेन ज्योर्तीषि स्तोमा यस्येति वाक्यशेषानुसारिनिर्वचनस्य ज्योतिर्नामिकावान्तरयागसमूहरूपत्व-समर्पकज्योतिषां स्तोम इति निर्वचनस्य च भिन्नविषयत्वेन विरोधोद्भावनायोगः । अत एवाग्नेस्तु स्तोम सोमा इति सूत्रविषयेऽग्निशब्दा उत्तरस्तोमशब्दसकारस्य समासे षत्वे निष्पन्नाग्निष्टोमशब्दोऽग्नीनां स्तोम इत्येव मञ्जर्यां विगृहीतम् । ज्योतिरायुषः स्तोम इत्युत्तरसूत्रविषये ज्योतिष्टोम इत्यत्रापि षष्ठ्यैव विग्रहप्राप्तेश्च ज्योतिष्टोमं प्रथममुपयन्तीत्येतच्छेषे श्रुतगोष्टोमापुष्टोमशब्दयोः षष्ठ्यैव विग्रहस्यावश्यकत्वाच्च । न हि तत्रापि बहुव्रीहित्व-प्रापकवाक्यशेषोऽस्तीति भावः । ज्योतिर्नामकस्तोत्रविशेषवत्वप्रतिपादकबहुव्रीह्याश्रयणेऽपि ज्योतिष्टोमं प्रथम-मुपयन्तीत्यत्राद्युदात्तत्वसम्भवेन ज्योतिषामिति निर्वचनानाश्रयणेनान्तोदात्तत्वप्रसङ्गात् । एतन्निर्वचनाश्रयणेऽपि वा व्यत्यनेनान्तोदात्तत्वाप्रसङ्गोपपत्तेः । व्यत्ययस्यापि परादिच्छन्दसि बहुलमित्येत सूत्रविषये चित्पतिरित्यादि रूपे (?) दृष्टत्वात् । कामपदोपेतवाक्ये तु ज्योतिष्टोमपदस्य पूर्वपदप्रकृतिस्वरानाध्यवसाययितुं त्वयापि शक्या । एतेन तुल्यश्वेत इत्यादौ विशेषलक्षणेनापवादेऽपि प्रकृते तादृशलक्षणाभावान्न पूर्वपदप्रकृतिस्वरत्वप्राप्तिरित्यपि परास्तम् । पूर्वपदप्रकृतिस्वरज्योतिष्टोमपदकज्योतिष्टोममुपयन्तीत्यबहुव्रीहित्वेनैव पूर्वपदप्रकृतिस्वरत्वोपपत्तेः । अन्यत्र ज्योतिष्टोमशब्दस्यान्तोदात्तत्वेऽपि बाधकाभावात् । अन्यच्चात्र प्रपञ्चनीयमस्ति । तत्सर्वं मनसि विधायाह **दिगति । स्वं रूपं शब्दस्येति** । तत्र शब्दसम्बन्धिशब्दाख्यस्वरूपस्य बाह्यार्थाख्यं रूपाद्व्यावृत्तस्य ग्रहणाय स्वमित्युक्तत्वात् । एतच्च जिज्ञासाधिकरणे व्याकृतम् । गीतांभाष्यटीकाव्याख्यानप्रपञ्चेऽस्मदीये स्येचेष्टमेतत् आनन्दमयशब्दः स्वमात्रेति पूर्वमूलव्याख्यावसरेण च किञ्चिद्युक्तम् । संज्ञाधिकरणं चाथैषज्योतिरित्यादिविषये प्रागनुक्तान्तसंज्ञा चोत्पत्तिसंयोगादिति ।

**स०व्र०**— एकदेशोत्कीर्तनेन समग्रशब्दलक्षणामङ्गीकृत्य निमित्ताभिधेयैक्यमङ्गीकरणीयमिति पक्षमुप-पादयितुं प्रसक्तपर्यायित्वादिकं निराकृत्य परिशेषयति **यथेति** । कालविशेषविधिपरत्वोपपादनार्थं ज्योतिष्टोमा-धिकार इत्युक्तम् । तथाच वसन्ते वसन्ते ज्योतिषा यजेतेति वाक्यं किं प्रकृतज्योतिष्टोममनूद्य कालविशेषलक्षण-गुणविधायकं उत कर्मान्तरविधायकमिति सन्दिह्य कर्मान्तरविधायकत्वपक्षे रूपादेः । कल्पनीयत्वेन गौरवापत्त्या जोतिषेत्यनेन प्रकृतज्योतिष्टोममनूद्य कालविशेषलक्षणगुणविधायकमिति सिद्धान्तितमिति भावः । ननु ज्योति-ष्टोमशब्दस्य यागविशेषे रूढस्य कथं राजपुरुषशब्दसमानत्वमित्यतो यौगिकोऽप्ययमित्याह **ज्योतिषां स्तोमो हीति । अत एवेति** । राजशब्दस्यापि राजपुरुषवाचकत्वप्रसङ्गादेवेत्यर्थः । **प्रत्येकं वाचकत्वमिति** । ज्योति-र्ज्योतिष्टोमशब्दयोरित्यर्थः । **अधिकारबलादिति** । प्रकरणबलादित्यर्थः । एकदेशेति समग्रेति च शक्यसम्बन्धोप-पादनाय । ज्योतिःशब्दस्य हि स्वं रूपं शब्दस्येति वचनेन स्वरूपमपि शक्यार्थः । स च समग्रज्योतिष्टोम-शब्दलक्षकस्तदेकदेशरूपो भवति । अतोऽत्र शक्यसम्बन्ध उपपद्यत इति । अत्र यद्यपि ज्योतिःशब्देन लक्षणया





ज्योतिष्टोमरूपोऽर्थो ज्ञातुं शक्य इति न शब्दलक्षणा युक्ता तथाऽपि निमित्ताभिधेयैक्यलाभाय शब्दो लक्षणीयः । अन्यथा संज्ञाभेदप्रसङ्गेन कर्मान्तरपरत्वशङ्काऽऽपातादिति द्रष्टव्यम् । न च दार्ष्टान्तिकेऽन्नप्राणादिशब्दानामेव लक्षणया प्रचुरान्नादिरूपार्थप्रत्यायकत्वेन समाख्यात्वोपपत्तौ किमिति तैरन्नमयादिशब्दो लक्षणीय इति वाच्यम् । तथात्वेऽन्नादिशब्दानां प्रचुरान्नादिरूपे भगवति लक्षणया समन्वयः स्यात् । न चासावस्माकमिष्टः । 'योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः' इत्युक्तेः । न चान्नादिशब्दानां अद्यतेऽत्ति चेत्यादि निरुक्त्या भगवति मुख्यत एव समन्वयोपपत्तिरिति वाच्यम् । मयडर्थभूतप्राचुर्यस्यातदर्थत्वात् । तत्त्यागे च निमित्तभेदेन समाख्यात्वभङ्गप्रसङ्गः । तदिदमुक्तं **निमित्ताभिधेयैक्यमिति** । अतोऽत्र समन्वयप्रमाणसिद्धसमाख्यात्वपरिरक्षणाय शब्दलक्षणैव युक्तेति मन्तव्यम् ।

**स०ना०**— ननु ज्योतिष्टोमशब्दयोः पर्यायत्वेनैकार्थत्वेऽपि न प्रकृते एकार्थत्वान्नरसयोरपर्यायत्वस्योक्तत्वादित्यत आह **न हि शब्दयोरिति । एकदेशोत्कीर्तनेन समग्रशब्दलक्षणामिति** । अत्र लक्षणाशब्दो लक्षणावृत्तिपरः किं नाम ननु कस्येदं लक्ष्यमित्यादिवत् । उद्देश्यपरः उत्कीर्तनेन लक्षणामंगीकृत्येत्यभिधानात् । उत्कीर्तनं हि ताल्वोष्टपुटव्यापारपूर्वकप्रयत्नः । न च व्यापारकलक्ष्यकत्वं लक्षणायाः पदधर्मत्वात् । ततश्चैवं योजना । ज्योतिष्टोमप्रकरणबलात् वसन्ते वसन्ते ज्योतिषा यजेतेत्यत्र वेदपुरुषः ज्योतिष्टोमशब्दमुद्दिश्य ज्योतिरिति तदंशं प्रतीकत्वेनोदाजहारेति कल्पयित्वा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ॥

**विठ्ठल०**— प्राप्यत्वेन निर्देशस्थले मयडुक्तावप्यत्रैकदेशमात्रोत्कीर्तनात् कथं समग्रशब्दार्थप्रतीतिरित्यतो दृष्टान्तपूर्वमुपपादयति **यथा हीत्यादिना** । ज्योतिष्टोमाधिकारे ज्योतिष्टोमप्रकरणे ज्योतिषेतिपदेन प्रकरणप्राप्तं ज्योतिष्टोममनूद्य वरान्तकालविधानपर इत्यर्थः । ननु राजपुरुष इत्यत्र राज्ञः पुरुष इति समासेन राजसम्बन्धिनः पुरुषस्यैव प्रतीतेः न राजराजपुरुषशब्दयोः पर्यायत्वमिति चेन्न । प्रकृतेऽपि षष्ठीतत्पुरुषेणान्यत्वस्यैव प्रतीतेरित्याह **ज्योतिषां स्तोमो हीति** । चिरन्तनमीमांसकप्रसिद्धमेतदिति सूचयति 'हि'शब्देन ॥ आधुनिकास्तु तदज्ञानवशादन्यथा वदन्तीति ज्ञेयम् । **अत एवेति** । राजशब्दस्यापि राजपुरुषवाचकत्वप्रसङ्गादेवेत्यर्थः । ज्योतिज्योतिष्टोमशब्दयोः पर्यायत्वस्य भीमादिशब्दवत्प्रत्येकं वाचकत्वस्याभावे कथं तर्हि ज्योति(स्)शब्दस्य ज्योतिष्टोमप्रत्यायकत्वमिति शङ्कते **किन्तु इति** । उत्तरमाह **अधिकारबलादिति** । प्रकरणबलादित्यर्थः । एकदेशेति मुख्यार्थानुपपत्तिशक्यार्थसम्बन्धोपपादनायैतत् । एकदेशेन समग्रार्थप्रतीतेरनुपपत्तिः, शक्यार्थस्तु ज्योतिश्शब्दस्य 'स्वं रूपं शब्दस्य' इति वचनात् स्वयमपि भवति । स च ज्योतिष्टोमशब्दैकदेश इति एकदेशैकदेशिभावसम्बन्धेन समग्रस्य शब्दस्य लक्षक इति भावः । यद्यपि ज्योतिःशब्देनैव ज्योतिष्टोम- ...................... (८ पंक्तयः अस्पष्टाः) ..... लब्ध्वेति सुखमेवेति, निगमनम् ।

**चषकः**— राजपदस्य राजपुरुष इति समासैकदेशत्वस्येव ज्योतिःशब्दस्यापि ज्योतिष्टोम इति समासैकदेशत्वमित्याह **ज्योतिषामिति** । ननु त्रिवृत्पञ्चदश सप्तदश एकविंश एतानि वाव तानि ज्योतींषि





य एतस्य स्तोमा इति वाक्यशेषबलाज्ज्योतिर्नामकाः स्तोमा यस्येत्येव विग्रहवाक्यं मीमांसकाभिप्रेतम् । बहुव्रीहित्वप्रयुक्तपूर्वपदप्रकृतिस्वरत्वदर्शनाच्च सङ्गतमिति दर्शितश्रुतिविरोधप्रसङ्गेन ज्योतिषां स्तोम इति विग्रहवाक्याश्रयणं न सङ्गच्छत इति चेदत्र व्याकर्तारः श्रौतस्तोमशब्दस्य स्तोत्रपरतया टीकितस्तोमपदस्य च समुदायपरतयाऽविरोधोपपत्तेः । पूर्वपदप्रकृतिस्वरत्वं तु न बहुव्रीहित्वाविनाभूतं ण्यदन्तस्वरितान्तपूर्वपदकार्यब्राह्मणादिकर्मधारयादिषु आर्यो ब्राह्मण इत्यादिविषयेषु व्यभिचारादित्यधस्तादावेदितमिति समादधति **अधिकारबलादिति** । प्रकरणबलादित्यर्थः । **एकदेशेति समग्रेति च** शक्यसम्बन्धोपपादनाय । तथा हि । स्वं रूपं शब्दस्याशब्दसंज्ञेति पाणिनिस्मृतिज्ञापितज्योतिश्शब्दस्वरूपनिरूपितशक्तिकतया ज्योतिःशब्दस्य स्वशक्यज्योतिःशब्दावच्छिन्ननिरूपितविषयितात्वावच्छिन्ननिरूपितव्याप्यतावच्छेदकस्वावच्छिन्ननिरूपितविषयितात्वकधर्माश्रयत्वरूपज्योतिःशब्दघटितत्वमेव लक्ष्याभिमतज्योतिष्टोमशब्दे लक्ष्यलक्षकाभिमतज्योतिःशब्दशक्यनिरूपितसम्बन्ध इति ध्येयम् । स्वपदं लक्ष्यतावच्छेदकाभिमतधर्मपरं विषयितात्वावच्छिन्ननिरूपितव्याप्यतायाः प्रातिस्विकत्वाद्व्याप्यव्यापकभावो न घटत इत्यवच्छेदकपर्यन्तानुधावनम् । ज्योतिःशब्देन लक्षणया ज्योतिष्टोमरूपार्थस्यैव बोधसम्भवेऽपि शब्दलक्षणानभ्युपगमे संज्ञाधिकरणन्यायेन संज्ञाभेदनियन्त्रितकार्यान्तरविधिपरत्वापत्त्या निमित्ताभिधेयैक्यलाभाय शब्दलक्षणोपगतिरित्यवसेयम्।

**।। इति प्रचुरान्तादित्वादेव हि अन्नान्नमयादिशब्दतया ब्रह्मणो वचनम् ।।**
**।। इति पूर्वानुवाके प्राप्यत्वेन अन्नमयादिमयडुक्तिः उत्तरानुवाकेऽपि प्राप्यत्वेनैव अन्नादिब्रह्मोक्तिः ।।**
**।। इति एतदधिकरणीयस्वपक्षसाधने एतच्छ्रुत्युक्तसर्वमयटां प्राचुर्यार्थकत्वम् ।।**
**।। इति एतदधिकरणीयस्वपक्षसाधने 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' इति द्वितीयसूत्रव्याख्यानम् ।।**

* * *

**।। अथ एतदधिकरणीयस्वपक्षसाधने 'तद्धेतुव्यपदेशाच्च' इति तृतीयसूत्रव्याख्यानम् ।।**
**।। तत्रादौ तस्य विष्णोः पूर्णानन्दत्वे 'को ह्येवान्यादि'ति लोकचेष्टकत्वाख्यहेतुव्यपदेशाच्च आनन्दमयादयः पञ्च ब्रह्मैव, तथा अत्रस्थमयट्छब्दश्च प्राचुर्यार्थ एव ।।**
**।। तत्रापि विष्णोरेवानन्दमयत्वं आनन्दमयशब्दगतमयट्प्रत्ययस्य प्राचुर्यार्थकत्वञ्चेत्यर्थद्वयस्य हेत्वन्तरेणोपपादनपरमेतत्सूत्रव्याख्यानं तदनुसृत्यैतत्सूत्रगतशब्दयोजना च ।।**

३८ **सु०**— एवं सूत्रद्वयेनान्नमयादिशब्दपञ्चकस्येश्वरवाचित्वं, मयटश्च सर्वत्र प्राचुर्यार्थत्वमुपपादितम् । इदानीमानन्दमयशब्दस्य विष्णुवाचित्वं, तद्गतस्य मयटश्च प्राचुर्यार्थत्वं हेत्वन्तरेणोपपादयत् **तद्धेतुव्यपदेशाच्चेति** सूत्रं व्याख्याति **महानन्दत्व एवेति** ।

**ब्र०सू०— ।। ॐ तद्धेतुव्यपदेशाच्च ॐ ।।**

अनु०— महानन्दत्व एवास्य हेतुः कोऽन्यादिति स्फुटम् ।
उक्तः

आनन्दमयप्रकरणे 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'त्यस्य विष्णोरेव महानन्दत्व एव (च) हेतुरुक्तः । तेन ज्ञायते विष्णुरेवानन्दमयशब्दार्थ इति, मयट् च प्राचुर्यार्थ इति । यदि ह्यानन्दमयो विष्णोरन्यः स्यात्, मयट् च विकारार्थो भवेत्; तदा श्रुतिरन्यस्यानन्दविकारत्वे हेतुं कमपि ब्रूयात्, विष्णोर्महानन्दत्वे हेतुकथनं त्वसङ्गतमेव ।

अनेन (सूत्रे) तदिति षष्ठ्यन्तं सप्तम्यन्तं च तन्त्रेणोपात्तमित्युक्तं भवति । तस्य विष्णोस्तत्र महानन्दत्व इत्युक्तत्वात् ।

**आनन्दः**— ननूत्तरकारिकायां महानन्दत्व एवेत्यवधारणमयुक्तम् । ब्रह्मशब्दादिव तद्धेतुव्यपदेशस्यापि पञ्चसाधारण्यादित्यत उक्तानुवादपूर्वकं तत्तात्पर्यमाह **एवमिति** । **अनेन तदिति** । सूत्रस्थतत्पदमित्यर्थः । **उक्तत्वात्** । भाष्य इति शेषः ।

**शे०वा०— मयटश्च प्राचुर्यार्थत्वं हेत्वन्तरेणेति** । ततश्च को ह्येवान्यात्कः प्राण्यादिति हेतुव्यपदेश-स्यानन्दमयस्य विष्णुत्व इव प्राचुर्यं मयडर्थ इत्यत्रापि हेतुत्वकथनेन विकारशब्दादिति बाधकोद्धारानन्तर्यं तद्धेतुव्यपदेशस्य समर्थितं भवति । **तेनेति** । विष्णोरेव महानन्दत्व एव च हेतुकथनेनेत्यर्थः । सूत्रे तदित्यस्य षष्ठ्यन्तत्वेऽस्येत्येव, सप्तम्यन्तत्वे च महानन्दत्व एवास्येत्यंशस्यासूत्रार्थकथनरूपत्वादभाष्यत्वमित्याशङ्कां परिहरति **अनेनेति** ।

**॥ अथ तत्राप्यादौ जगच्चेष्टकत्वरूपहेतुना**
**'विष्णोरेवानन्दमयत्वं आनन्दमयशब्दगतमयट्प्रत्ययस्य प्राचुर्यार्थकत्वं चे'त्यर्थद्वयोपपादनम् ॥**
**॥ तत्रादौ जगच्चेष्टकत्वस्य आनन्दत्वेन व्याप्तिः ॥**
**॥ तत्राप्यादौ तद्व्याप्तिः श्रुत्योपपादिता ॥**

३९ **सु०**— नन्वत्राकाशस्यानन्दत्वाभावेऽननं प्राणनं च कस्यापि न स्यादित्येताव-दुच्यते, न तु विष्णोर्महानन्दत्वे कश्चिदपि हेतुरुच्यत इत्यत उक्तम् **स्फुटमिति** । तत्कथ-मिति चेत्, आकाशशब्दस्तावद्विष्णुपर इति वक्ष्यते **आकाशस्तल्लिङ्गादिति** । तथा च विष्णोरनानन्दत्वे जगतो निश्चेष्टत्वप्रसङ्गमापादयन्त्या श्रुत्या जगच्चेष्टकत्वं हेतुत्वेन विवक्षितमिति विवक्षुस्तस्यानन्दत्वेन व्याप्तिं तावदुपपादयति **श्रुत्यन्तर इति** ।





**अनु०— श्रुत्यन्तरे यस्मात्सुखं लब्ध्वा करोत्ययम् ॥**
**करोति नासुखी**

**यस्मात्** इत्यस्योपरि सम्बन्धः । **श्रुत्यन्तरे** छन्दोगश्रुतौ 'इत्युक्तमि'त्युत्तरेणान्वयः । 'यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोती'ति श्रुत्यन्तरे परमेश्वरव्यापारस्यानन्दाविनाभूतत्वमुक्तमित्यर्थः ।

आनन्दशब्द(स्य)श्च पूर्णानन्द एव मुख्यवृत्तिरित्यत्रापि श्रुतिमाह **भूमेति** ।

**अनु०— भूमा सुखं नाल्पे सुखं भवेत् ।**
**इत्युक्तं**

'यौ वै भूमा तत्सुखं नाल्पे सुखमस्ती'ति छन्दोगश्रुतौ सुखशब्दस्य पूर्णानन्द एव मुख्यवृत्तिरित्युक्तमित्यर्थः ।

यद्यपि भूमशब्दो भाववाची, 'बहोर्लोपो भू च बहोरि'ति वचनात् । तथाऽपि 'भावभवित्रोरैक्याद्भूमेति पूर्ण एवोच्यते नाल्प' इत्युक्तत्वात्, स च सन्निधानात्सुखेनेति गम्यते ।

**परि०— यस्मादित्यस्योपरिसम्बन्ध इति** । यस्मादित्यस्य केवललीलयेत्यतःपदेनान्वय इत्यर्थः । नासुखीत्यनन्तरमपीत्युक्तमित्युत्कृष्य श्रुतिशेषोक्तिपूर्वमर्थमाह **सुखमेव लब्ध्वा करोतीति श्रुत्यन्तर इत्यादि** । **भाववाचीति** । 'पृथ्वादिभ्य इमनिज्वे'ति सूत्रे भावार्थे इमनिच्प्रत्ययस्य विधानात् बहुशब्दस्य पृथ्वादिगणे पाठादिति भावः । तथात्वे भूमेति कथं रूपमित्यत आह **बहोरिति** । बहुशब्दात्परस्येमनिजादेः प्रत्ययस्यादेरिकारस्य लोपो भवति बहुशब्दस्य भूरादेशश्च भवतीति पाणिनि-सूत्रादित्यर्थः । तत्र ज्ञापकमाह **नाल्प इति** । भूमप्रतियोगिनोऽल्पपदेन निर्देशाद्भूमा पूर्ण एवाभिमतो-ऽन्यथा नाल्पत्व इति निर्देशः स्यादिति भावः । तावता सुखपदस्य पूर्णसुख एव मुख्यवृत्तिरित्यत्र किमागतमित्यतो भूमेत्यत्र भूमशब्दस्य गुणैः पूर्णत्वार्थतया व्याख्यानेऽपीह प्रकृतोपयोगायार्थमाह **स चेति** । यो वै भूमा पूर्णसुखः स एव च सुखपदेनोच्यत इति श्रुत्यर्थ इत्युक्तं भवति ।





**गु०दी०— बहोर्लोपो भू च बहोरिति वचनात्** इत्यत्र बहोभवि 'पृथ्वादिभ्य इमनिज्वे'ति सूत्रेणेमनिचि कृते 'बहोर्लोपो भू च बहोरि'ति सूत्रेण प्रत्ययादिभूतस्येकारस्य लोपः स्यात् बहोश्च भूरादेशो भवति तेन भूमेति शब्दनिष्पत्तिरिति भावः।

**यादु०—** अन्वयमुक्त्वा व्यतिरेकमाह **नासुखं लब्ध्वेति**। सुखमेवेति निगमनम्। **यो वै भूमेति**। यो वै भूमा पूर्णो नारायणाख्यस्तत्सुखमनन्याधीनसुखरूपम्। अस्यातिव्याप्तिं परिहरति **नाल्प इति**। भूमप्रसादं विना नाल्पे मुक्तजाते सुखमस्तीत्यर्थः। **बहोर्लोप इति**। बहोः परस्येष्ठे मेयसामादेर्लोपः स्याद्बहोश्च भूरादेश इति सूत्रार्थः। ततश्च बहुशब्दस्य पृथ्वादित्वेन तस्मात् 'पृथ्वादिभ्य इमनिज्वे'ति इमनिचो भावे विहितत्वादिति शेषः। **नाल्प इति**। अल्पशब्दस्य चापूर्णधर्मिवाचकत्वादिति भावः।

**वं०प०— उपरीति**। अतः केवललीलयेत्यत्रत्यैतच्छब्देनेत्यर्थः। **भाववाचीति**। पूर्णत्ववाची। **बहोरिति**। बहु अस्मात् पृथ्वादिभ्य इमनिज्वेति भावे इमनिच्प्रत्यये बहोर्लोपो भू च बहोः। बहोः परस्येष्ट इमनिच् ईयस् इत्येतेषां प्रत्ययानामादेरिकारस्य लोपः स्याद्बहोश्च भूरित्ययमादेश इति इकारलोपे बहोश्च भूरादेशे भूमन्निति प्रातिपदिकम्।

**आनन्दः—** ननु भूमेति पूर्ण एवोच्यत इत्युक्तम्। तत्र केन पूर्ण इत्यत आह **स चेति**। पूर्ण इत्यर्थः। **सुखतत्साधनेति**। सुखे तत्साधने च रागः दुःखे तत्साधने च द्वेष इति रागद्वेषावेव प्रवर्तकावित्यर्थः।

**श्रीनिधि०— सन्निधानात् सुखेनेति**। तथा चैवं श्रुत्यर्थः। यः भूमा तत्र यत्सुखेन पूर्णः, पूर्णं सुखं तत्सुखं सुखशब्दमुख्यवाच्यमिति। **नाल्प इत्युक्तत्वादिति**। अन्यथा नाल्पं सुखमिति प्रयोगः स्यादिति भावः।

**शे०वा०— उपरिसम्बन्ध इति**। 'अतः केवललीलया इत्यत्रत्यातश्शब्देन सम्बन्ध इत्यर्थः। **भाववाचीति**। बहुत्ववाचीत्यर्थः। कुतो भूमशब्दस्य बहुत्ववाचित्वमित्यतो बहुशब्दाद्भावार्थे इमनिच्प्रत्ययान्तत्वादिति भावेन। तथात्वे कथं भूमन्निति प्रातिपदिकनिष्पत्तिरित्यत आह **बहोर्लोप इति**। बहोः परेषामिष्टे मेयसामादेर्लोपः स्याद्बहोश्च भू इत्यादेशः स्यादिति सूत्रार्थः। ततश्च बहुशब्दात् 'पृथ्वादिभ्य इमनिज्वे'ति भावे इमनिच्प्रत्यये बहोर्लोप इति इमनिच् आदेरिकारस्य लोपे बहुशब्दस्य च भू इत्यादेशे भूमन्निति प्रातिपदिकनिष्पत्तिरिति भावः। **नाल्प इति**। अल्पशब्दस्यापूर्णधर्मिवाचित्वादिति भावः। **स च भूमा सन्निधानादिति**। परमधार्मिक इत्यादौ धर्मपदसन्निधानेन धर्मेण परमत्वलाभवत्सुखशब्दसन्निधानात् सुखेन पूर्णत्वमेव लभ्यत इति भावः।

**वा०र०— भावार्थे मनिजिति**। भावार्थे य इमनिच्प्रत्यय इति विग्रहः। प्रत्ययान्तत्वं च तत्प्रत्यये निष्पन्नत्वम्।





**स०व्र०—— यस्मादित्यस्येति** 'अतः केवललीलया' इत्यत्रस्यातःशब्देनेत्यर्थः। **अत्र यद्यपि भूमशब्दो भाववाचीति**। भूशब्दस्य पृथ्वादित्वेन तस्मात् 'पृथ्वादिभ्यः इमनिज्वा' इति इमनिचो भावे विहितत्वादिति भावः। **बहोर्लोपो भू च बहोरिति वचनादिति**। बहोः परस्य इष्टे मेयसां आदेर्लोपः स्यात् बहोश्च भूरादेश इति सूत्रार्थः। **स चेति**। भूमेत्यर्थः।

**विठ्ठल०—— यो वै भूमेति**। भूमा नारायणस्तत्सुखम् अनन्याधीनसुखरूपमित्यर्थः। सुखशब्दानुसारेण तदिति नपुंसकम्। पूर्णस्यैव सुखमित्येतदुपपादयति **नाल्पे सुखम् इति**। **भाववाचीति**। पृथ्वादिभ्य इमनि ज्वेति भावार्थ एवेमनिज्विधानात्। बहुशब्दस्यापि पृथ्वादिगणपठितत्वादिति भावः। बहुशब्दस्य इमनिज्विधाने भूमेति कथमित्यत आह **बहोरिति**। बहुशब्दात्परस्येष्ठेमेयस्मादेर्लोपो भवति। बहुशब्दस्य च भू इत्यादेशो भवतीति सूत्रार्थः। तथा च भूमेति रूपसिद्धिरिति भावः। भूमेत्यस्य प्रकृते भवितृवाचकत्वं कुत इत्यत्र ज्ञापकमाह **नाल्प इति**। अल्पशब्दस्य अपूर्णधर्मिवाचित्वादिति भावः। अस्तु भूमशब्दस्य पूर्णार्थकत्वम्। तथापि पूर्णानन्दत्वं कथं लभ्यत इत्यत आह **स चेति**।

**चषकः—— भाववाचीति**। प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नबहुत्व-वाचीत्यर्थः। **बहोर्लोप इति**। बहोर्लोपो भूच बहोः बहुशब्दप्रकृतिकाणामिष्टे मेयसामादेरिकारस्य लोपः स्यात् प्रकृतिभूतबहुशब्दस्य च भूरादेशः स्यादिति सूत्रार्थः। तथा च बहुशब्दात्पृथ्वादिभ्य इमनिज्वेति भावे इमनिच्-प्रत्यये तदादिभूतेकारस्य च बहोर्लोप इत्यनेन लोपे प्रकृत्यंशस्य भूरादेशे भूमन्निति प्रातिपदिकं निष्पद्यत इति भावः।

**॥ अथ ततश्च सा जगच्चेष्टकत्वस्य आनन्दत्वेन व्याप्तिः उपपत्त्यापि समर्थिता ॥**
**॥ अथ च तदर्थं चतुर्विधप्रवृत्त्यैकतमात् सुखोद्रेकादेव परमेश्वरस्य जगच्चेष्टायां प्रवृत्तिः ॥**

**४० सु०——** ईश्वरप्रवृत्तेः पूर्णानन्दत्वेन व्याप्तिं श्रुत्योपपाद्योपपत्त्याऽपि समर्थयते **यत्प्रवृत्तिश्चेति**।

अनु०—— यत्प्रवृत्तिश्च नृत्तगानादिका सुखात् ॥
दुःखाद्रोदादिका चैव सर्वकर्तृत्वतोऽस्य च।
सर्वशक्तेर्न दुःखं स्यात्

अत्रापि **यत्** यस्मादित्यस्योपरि सम्बन्धः।





प्रवृत्तिः चतुर्विधा भवति । सुखोद्रेकात् दुःखोद्रेकात् सुखरागाद्द्वेषाच्चेति शेषः ॥ सुखोद्रेकात्प्रवृत्तेरुदाहरणमाह **नृत्तेति** । उन्मत्तस्येति शेषः । दुःखोद्रेकात्प्रवृत्तिमुदाहरति **दुःखादिति** ॥ केचिदाहुः सुखदुःखतत्साधनरागद्वेषावेव प्रवर्तकाविति, यथोक्तं 'प्रवर्तनालक्षणा दोषा' इति । तन्निरासार्थम् 'एव'शब्दः । सुखादेव दुःखादेवेति । न ह्युन्मत्तस्य क्वचिदनुसन्धानमस्ति, येन सुखरागात्तत्साधनमेतदित्यनुसन्धाय नृत्तादौ प्रवर्तेत, किं तूद्रिक्तं सुखमेव तत्प्रवृत्तौ हेतुः । नापि दुःखं द्विषतोऽपि नारकिणो रोदनादिकं तत्परिहारहेतुरित्यनुसन्धानमस्ति, किन्तु दुःखोद्रेक एव तत्र कारणमित्यनुभवसिद्धम् । सुखरागात्तत्प्राप्त्यर्था भोजनादौ प्रवृत्तिर्दुःखद्वेषाच्च तन्निवृत्त्यर्था कण्टकोद्धरणादौ प्रवृत्तिः सुप्रसिद्धेति नोदाहृता ।

किमतो यद्येवं चेतनसम्बन्धिनी प्रवृत्तिश्चतुर्विधेत्यत आह **सर्वकर्तृत्वत इति** ।

सुखानवाप्तिश्चेति शेषः ।

ततश्च दुःखोद्रेकनिमित्ता तन्निवृत्त्यर्था सुखावाप्त्यर्था चेति प्रवृत्तित्रयं परमेश्वरे नोपपद्यत इति भावः ।

परि०— **अत्रापि यस्मादित्यस्योपरि सम्बन्ध इति** । अतःपदेन सम्बन्ध इत्यर्थः । **सुखेति** । सुखं च दुःखं च तत्साधनं च तेषां रागद्वेषादित्यर्थः । तार्किकसम्मतिमाह **यथोक्तमिति** । **प्रवर्तनालक्षणाः** प्रवर्तकरूपा इत्यर्थः । **दोषा** रागद्वेषमोहाः ।

**यादु०— सुखदुःखेति** । सुखतत्साधनरागो दुःखतत्साधनद्वेष इति विवेकः । **प्रवर्तकाविति** । यद्यपि मोहोऽपि प्रवर्तकतया वक्ष्यमाणतत्सूत्रोक्तः । तथाऽपि न तस्य प्रवृत्तिहेतुत्वं स्वातन्त्र्येण किन्तु रागद्वेषानुग्राहकत्वेन मूढमेव हि रागद्वेषौ प्रवर्तयत इत्याशयेनेदमुक्तमित्यवगन्तव्यम् । **प्रवर्तनालक्षणा इति** । प्रवर्तना प्रेरणा । प्रवर्तयतीति व्युत्पत्त्या प्रवर्तकत्वमित्यर्थः । ण्यासश्रन्थो युजिति स्त्रियां युच् । तदेव लक्षणं येषां ते तथोक्ता इति न्यायसूत्रार्थः । तेन रागद्वेषमोहा इत्यपि तदुक्तं ग्राह्यम् ।

**वं०प०— उपरीति** । अतः केवलेत्यत्रत्यैतच्छब्देनेत्यर्थः । सुखादेव दुःखादेव नान्यथेत्याशयेनैव व्यावर्त्यं दर्शयति **केचिदिति** । **केचित्** तार्किकाः । **सुखरागात्** सुखसाधनरागात् । **दुःखद्वेषाद्** दुःखसाधनद्वेषात्प्रवृत्तिः । तत्र सुखं मे भूयादिति सुखरागात्सुखसाधने नृत्तगानादौ प्रवृत्तिः । सुखसाधनं मे स्यादिति रागात् सुखसाधनीभूतस्रक्चन्दनादिसम्पादने दुःखद्वेषात् तत्परिहारसाधनरोदनादौ दुःखसाधनद्वेषाद् दुःखसाधनीभूता-





हिकण्टकोद्धरणादौ प्रवृत्तिर्दृष्टेति रागद्वेषयोरेव सर्वत्र प्रवर्तकत्वान्न सुखोद्रेकदुःखोद्रेकयोः प्रवर्तकत्वम् । भवदाचार्योदाहृता या नृत्तगानादौ प्रवृत्तिः साऽपि सुखरागादेव न सुखोद्रेकात् या च नारकिणो दुःखोद्रेकात्प्रवृत्तिः साऽपि दुःखद्वेषादेव न दुःखोद्रेकादित्याशयः । एवमभिप्रायावर्णने न ह्युन्मत्तस्येत्युत्तरग्रन्थासङ्गतेरिति ध्येयम् । दोषा रागादयश्च त इति रागद्वेषमोहानां दोषत्वाभिधानादिति भावः । यद्यपि मोहस्याप्यस्ति प्रवर्तकत्वं, तथाऽपि न स्वातन्त्र्येण । किन्तु 'मूढमेव रागद्वेषौ प्रवर्तयत' इति परोक्तेः । रागद्वेषजननद्वारैवेति साक्षात्प्रवर्तकत्वं तयोरेवेति भावः । आचार्योदाहृतनृत्तगानादिप्रवृत्तेः नारकिणो रोदनादि प्रवृत्तेश्च, यत्सुखरागदुःखद्वेषसाध्यत्वं परोक्तं, तन्निराकरणं कथमेवकारलब्धमित्यतस्तद्दर्शयति **न हीति** । सुखरागाद् दुःखद्वेषाच्च प्रवृत्तिराचार्यैः कस्मान्नोदाहृतेत्यत आह **सुखेति** । अम्बुवाय्वादेः प्रवृत्तावेतत्कारणासम्भवेन चेतनेत्युक्तम् । मूले न दुःखं स्यादित्यनेन दुःखोद्रेकात्प्राप्तदुःखद्वेषाच्च तन्निवृत्त्यर्थप्रवृत्त्यसम्भवोऽभिहितस्तथाऽपि नेश्वरप्रवृत्तेः सुखोद्रेकसाध्यत्वसिद्धिः । सुखरागादपि तत्सम्भवेन तन्निराकरणालाभादित्यत आह **सुखानवाप्तिश्चेति शेष इति** । तथा च न दुःखं स्यादित्यनन्तरं सुखानवाप्तिश्च न स्यादिति मूले ग्राह्यम् । येन सुखरागात्तदवाप्त्यर्था प्रवृत्तिः स्यादिति भावः । एवं सति प्रवृत्तित्रयनिषेधो लब्ध इत्याह **ततश्चेति** । **तन्निवृत्त्यर्थेति** । दुःखद्वेषाद् दुःखनिवृत्त्यर्थेत्यर्थः ।

**श्रीनिधि०— सुखादेव दुःखादेवेति** । उन्मत्तः नारकी प्रवृत्तिरिति भावः । रागद्वेषयोरस्माभिरपि प्रवर्तकत्वाङ्गीकारादिति भावः ।

**शे०वा०—** श्रुत्यन्तरे यस्मात्सुखं लब्ध्वेति पूर्ववाक्यसमुच्चयार्थोऽत्रापीत्यपिशब्दः । **यद्यस्मादिति** । अत्र यदिति मौलपदानुवादस्तस्य व्याख्यानं **यस्मादिति** । **उपरीति** । 'अतः केवललीलये'त्यनेनेत्यर्थः । मूले सुखदुःखोद्रेकसाध्यप्रवृत्त्योरेवोदाहरणात् तयोरेव प्रवृत्तिकारणत्वविवक्षाया अभिप्रेतत्वभ्रान्तिनिरासाय शेषं पूरयति **चतुर्विधा भवतीत्यादिना** । **केचिदिति** । नैयायिका इत्यर्थः । **सुखदुःखेति** । सुखतत्साधनरागो दुःखतत्साधनद्वेषश्च प्रवर्तकाविति योज्यम् । तत्र गौतमसूत्रं प्रमाणयति **यथोक्तमिति** । प्रवर्तयतीति व्युत्पत्त्या प्रवर्तनेति प्रवृत्तिहेतुत्वं गृह्यते । ततश्च प्रवर्तना प्रवर्तकत्वं लक्षणं येषां ते प्रवर्तनालक्षणा इत्यर्थसिद्ध्या दोषपदोक्तस्य रागादेः प्रवृत्तिहेतुत्वसिद्धिः । यद्यपि चैतत्सूत्रानुसारेण रागद्वेषयोरिव मोहस्यापि प्रवर्तकत्वप्राप्त्या रागद्वेषाविति द्वयोरेव तत्कथनमनुचितम् । तथाऽपि मोहस्य स्वैकार्थसमवेतरागादिजनकतया रागद्वेषाभ्यामन्यथासिद्धेर्मोहस्य न प्रवर्तकत्वमित्याशयेन पूर्वं रागद्वेषयोरेवोपादानस्य न्याय्यत्वात् । सूत्रे तु साक्षात्परम्परासाधारण्येन प्रवृत्तिप्रयोजकत्वस्यैव विवक्षया दोष इति बहुवचनेन रागद्वेषमोहानां त्रयाणामपि सङ्ग्रहः कृत इत्यवधेयम् । ननु यथाभाष्यं द्वयोरेव प्रवृत्तिकारणत्वं व्याख्यायतां किमन्यथा शेषपूरणेनेत्यतः सुखादौ रागादिना भोजनादिप्रवृत्तेरनुभवसिद्धत्वान्न द्वैविध्यमात्रविवक्षाऽत्र भाष्ये युक्तेत्याशयेन कुतस्तर्हि सुखादिरागादिना प्रवृत्तेरनुदाहरणमित्यतः सुप्रसिद्धत्वादिति भावेन तदन्यथासिद्धिमाह **सुखरागादित्यादिना** । ननु च दुःखाभावे दुःखोद्रेकाद् दुःखद्वेषाद्वा प्रवृत्त्यसम्भवेऽपि सुखरागादेव प्रवृत्त्युपपत्तेर्न वक्ष्यमाणपरिशेषासिद्धिरित्यतः शेषं पूरयति **सुखानवाप्तिश्चेति शेष इति** । सर्वकर्तुः सर्वशक्तेर्दुःखस्येव सुखानवाप्तेरप्ययोगादिति भावः ।





**वा०र०— लीलयेत्यनेनेति** । लीलयेत्यत्रत्यातःशब्देनेत्यर्थः । योजनाभेदेन यच्छब्दद्वयस्य सार्थक्यं मूले स्पष्टयिष्यत इति भावः । प्रवृत्तिश्चेत्यनुव्याख्यानानन्तरं चतुर्धा भवतीत्यादि शेषपूरणानुसारेण 'प्रवृत्तिश्चतुर्धा भवतीति फलितमित्येतत्साक्षत्वादनुक्त्वा प्रतीकोपादानेनैव तमर्थं सूचयन् चातुर्विध्याभिधानप्रयोजनं वदंश्चावतारयति **मूल इति** । **अभिप्रेतत्वभ्रान्तीति** । अभिप्रेतत्वमिति भ्रान्तिस्तन्निरासायेति योज्यम् । सुखदुःखतत्साधनरागद्वेषावित्यत्र सुखदुःखे च तत्साधनयो रागद्वेषावित्यर्थः । प्रतीयते न चायं युक्ताः प्रवर्तनालक्षणा दोषा इत्येतत्सूत्रभाष्ये रागद्वेषयोरेव प्रवर्तकत्वस्य रक्तद्विष्टमूढाः । रक्तो हि तत्कर्म कुरुते तेन कर्मणा सुखं दुःखं वा भजते तथा द्विष्टस्तथा मूढ इति । दोषाः रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं भवतीति ग्रन्थपर्यालोचनया प्रतीतिः । वार्तिकेऽपि तथैव व्याख्यानात् । रागद्वेषौ हि मोहप्रभवौ पुरुषं प्रवर्तमानं प्रवर्तयत इति तात्पर्यटीकोक्तेः । ततः फलविषया रागद्वेषमोहाः प्रवर्तकाः साधनविषयास्तदेकार्थसमवायिनः प्रवर्तनादिति तात्पर्यपरिशुद्धिवचनाच्च । मोहप्रवर्तकत्ववचनगतिं टीकाकृदवकरिष्यति । ततो रागद्वेषावेवात्रोक्तौ भवत इत्याशयेन व्याचष्टे **सुखतत्साधनराग इत्यादिना** । सुखे तत्साधने च राग इत्यादि योज्यम् । रागत्वेन दोषत्वेन चैकीकाराद्रागद्वेषौ द्वावेव प्रवर्तकतया लब्धौ न च तथा सति सुखरागयोरिव तत्साधनरागद्वेषयोरपि प्रवर्तकतानिराकरणं मूले कार्यं स्यादिति वाच्यम् । तत्रापि न्यायसूचनेन तन्निराकरणमपि सुज्ञेयमित्याशयेन द्वयोरेव प्रवर्तकत्वनिराकरणात् । वार्तिकाद्यनुसारेण सूत्रं व्याचष्टे **प्रवर्तयतीत्यादिना** । एतत्प्रपञ्चितमस्ति जिज्ञासानयेऽख्यातिवादेऽस्माभिः । **अनुचितमिति** । रागद्वेषावेवेति पूर्ववाक्य इति शेषः । **वक्ष्यति च पूर्वमिति** । **तथापि मोहस्येति** । मोहप्रभवाविति प्रागुदाहृततात्पर्यटीकोक्तेरिति भावः । कुतस्तर्हि सुखरागादिनेति पाठः । सुखादिनेति पाठे रागोपलक्षणा ज्ञेया । मूले **तन्निवृत्त्यर्थेति** । दुःखद्वेषनिवृत्तिरित्येतदर्थकथनमेतत् ।

**स०व्र०— प्रवर्तनालक्षणाः** प्रवर्तना प्रवृत्तिः लक्षणं कार्यभूतं येषां ते तथोक्ताः प्रवर्तका इत्यर्थः ।

**विठ्ठल०—** मूले सुखदुःखशब्दौ तदुद्रेकाभिप्रायकावित्याह **सुखोद्रेकादिति** । सुखदुःखेति यथाक्रमं सम्बन्धः । सुखे तत्साधने च रागः दुःखे तत्साधने च द्वेष इत्यर्थः । **प्रवर्तनालक्षणा इति** । प्रवर्तनात् प्रेरणात् प्रेरयन्तीति व्युत्पत्त्या प्रवर्तकत्वं लक्षणं येषां ते प्रवर्तनालक्षणा इत्यर्थः । यद्यप्यत्र मोहोऽपि प्रवर्तकतयोक्तस्तथापि मूढमेव रागद्वेषौ प्रवर्तयत इति न्यायेन मोहस्य साक्षात्प्रवर्तकत्वाभिप्रायेण रागद्वेषावेवेत्युक्तम् । सर्वकृतत्व इति भगवतः सर्वकर्तृत्वात्पूर्णशक्तित्वम् । पूर्णशक्तित्वाद्दुःखाभावः सुखपूर्णत्वं चेति मूलाशयः ।

**चषकः— केचिदिति** । नैयायिका इत्यर्थः । **सुखदुःखेति** । सुखतत्साधनरागो दुःखतत्साधनद्वेषश्च प्रवर्तकाविति योजनीयम् । मोहस्यान्यथासिद्धत्वाशयेन द्विवचनम् । **यथोक्तमिति** । गौतमसूत्र इत्यर्थः । प्रवर्तनाशब्दो ण्यासश्रन्थो युजिति युजन्तः स्त्रियाम् । तदर्थः प्रवृत्तिहेतुत्वं तल्लक्षणं असाधारणधर्मो येषामित्यर्थः । मोहस्यापि स्वाश्रयसमवेतरागादिजननद्वारा हेतुत्वाशयेन सौत्रं बहुवचनम् ।

**॥ इति उपपत्त्यापि 'जगच्चेष्टकत्वस्य आनन्दत्वेन व्याप्ति' समर्थने**
**चतुर्विधप्रवृत्त्यैकतमात् सुखोद्रेकादेव परमेश्वरस्य जगच्चेष्टायां प्रवृत्तिः ॥**





**।। अथ उपपत्त्या 'जगच्चेष्टकत्वस्य आनन्दत्वेन व्याप्तिसमर्थनस्योपसंहारः' ।।**

**४१ सु०—** तथाऽपि किमित्यत आह **अत इति**।

**अनु०— अतः केवललीलया ।।**
**प्रवर्तको**

**अतः परिशेषादीश्वरः प्रवर्तको भवन् केवललीलया आनन्दोद्रेकादेव भवेदिति सिद्धः परमेश्वरप्रवृत्तेः पूर्णानन्दाविनाभावः।**

**एवमुपोद्घातमुक्त्वा प्रयोगमाह अत इति । यत एवं परमेश्वरप्रवृत्तेः सिद्धः पूर्णानन्दाविनाभावः, अतः प्रवर्तकोऽयं केवललीलया पूर्णानन्देन युक्तो भवेदिति । अयमत्र प्रयोगः, ईश्वरः सुखी भवितुमर्हति प्रवृत्तिकारणत्रयरहितत्वे सति प्रवृत्तिमत्त्वादुन्मत्तवदिति । कार्यानुगुणत्वाच्च कारणस्य महाप्रवृत्त्या महानन्द एव सिद्ध्यतीति ।**

**परि०—** अतः केवललीलया प्रेरक इत्येतदेव वाक्यं प्रकारान्तरेण योजयति **एवमुपोद्घातमुक्त्वेत्यादि**। यत् यस्मादित्यस्योपरिसम्बन्ध इत्युक्तस्य योजनान्तरं प्रदर्श्य यस्मादित्यस्योपरिसम्बन्ध इत्युक्तम्, तत्प्रदर्शयन् व्याचष्टे **यत एवमिति**।

**यादु०— अतः** प्रकृतसङ्गतिः।

**वं०प०—** नन्वनेन सुखित्वसिद्धावपि न महानन्दत्वसिद्धिः। तथा च महानन्दत्व एवास्येत्ययुक्तमित्यत आह **कार्येति**। **वाचनिकं** कण्ठोक्तम्।

**श्रीनिधि०— प्राण्यादित्यस्य** अर्थः वैदिकीं प्रवृत्तिं कुर्यादिति।

**शे०वा०—** पूर्णानन्देन युक्तत्वस्य साध्यतया विवक्षायां दृष्टान्ते साध्यवैकल्यमित्यतः प्रयोगप्रकारमाह **अयमत्रेति**। कथं तर्हि पूर्णानन्दत्वसिद्धिः। आनन्दमात्रसाधनं च प्रकृतानुपयुक्तमित्यत आह **कार्यानुगुणत्वाच्चेति**।

**वा०र०—** मूले **अतःपरिशेषादि**त्यत्र अत इत्यस्य दुःखोद्रेकदुःखद्वेषसुखरागरूपनिमित्तत्रयासम्भवादित्यर्थः। **एवमुपोद्घातमिति** मूले। अनुमाङ्गव्याप्तिं श्रुत्युपपत्तिभ्यां सिद्धवत्कृत्येत्यर्थः। यस्मादिति यदिति च





पूर्वभाष्यस्थयच्छब्दद्वयसम्बन्धस्यात्राभिधानात् । उन्मत्तप्रवृत्तिः सुखरागजन्या न किन्तु सुखोद्रेकादिति प्रतिपादनेनैव यत्र प्रवृत्तिकारणोक्तत्रितयराहित्ये सति प्रवृत्तिमत्वं तत्र सुखोद्रेकवत्वमिति व्याप्तेरुपपादनस्यार्थतो लाभादिति भावः ।

**विठ्ठल०**— 'दोषास्पृष्टौ गुणपूर्तौ च यस्मान्निःसीमत्वाद्विद्यते तस्य शक्तिरि'ति निर्णये व्याप्तिकथनपरतया योजितमेवात इति वाक्यमनुमानप्रयोगप्रतिपादनपरतयापि योजयति **एवं उपोद्घातमिति** । **यत एवमि**त्यनेन यस्मात्सुखं लब्धेत्यादिनोक्तं परामृशति । तेन यस्मादित्यस्य यत्प्रवृत्तिश्चेति यच्छब्दस्य चोपरि सम्बन्ध इत्येतदुपपादितं भवति ।

**॥ इति उपपत्त्या 'जगचेष्टकत्वस्य आनन्दत्वेन व्याप्ति'दर्शने उपपत्त्या तद्व्याप्तिसमर्थनस्योपसंहारः' ॥**

* * *

**॥ अथ जगचेष्टकत्वरूपहेतुना 'विष्णोरेवानन्दमयत्वं आनन्दमयशब्दगतमयट्प्रत्ययस्य प्राचुर्यार्थकत्वं च' इत्यर्थद्वयोपपादने विपक्षे बाधकापत्तिः ॥**

**॥ तथा च जगचेष्टकस्य विष्णोः पूर्णानन्दत्वाभावे विष्णौ जगत्प्रेरकत्वस्याप्यभावेन कस्यापि प्राणनकर्तृत्वाननकर्तृत्वाद्यभावापत्तिरूपा विपक्षे बाधकापत्तिः ॥**

४२ **सु०**— एवं श्रुतेरभिप्रायसिद्धं हेतुं व्याख्याय वाचनिकं विपक्षे बाधकं विवृणोति **न चेदिति** ।

## अनु०— न चेदेष प्राण्यादन्याच्च कः पुमान् ।

**एष परमात्मा, आसमन्तात्काशनादाकाशः पूर्णानन्दो, न चेत् तदा कारणान्तराभावात्, न किञ्चित्प्रवर्तयेत् । न चेदेष किञ्चित्प्रवर्तयेत्तदा कः पुमान्प्राण्यादन्याच्च । न कोऽपि लौकिकीं वैदिकीं वा प्रवृत्तिं कुर्यात् । स्वातन्त्र्याभावादिति योज्यम् ।**

**परि०**— प्राण्यादन्याच्चेत्यनयोर्व्यत्यासेनार्थोक्तिः 'लौकिकीं वैदिकीं वा प्रवृत्तिमि'ति । भाष्यनिर्देशक्रमेणानुवादः । श्रौतनिर्देशक्रमेणार्थोक्तिरिति न व्यत्यासदोषः शङ्क्यः ।

**यादु०**— प्राण्यादित्यस्यार्थो **वैदिकीमिति** । अन्यादित्यस्यार्थो **लौकिकीमिति** ।

**वं०प०**— **वाचनिकं** कण्ठोक्तम् ।





**आनन्दः— एवमभिप्रायेति**। नवादौ वाचिकं विपक्षे बाधकं वक्तव्यम्। अनन्तरं तदभिप्रायसिद्धो हेतुर्वक्तव्य इति वाच्यम्। वाचकस्यापि बाधकस्यैतत्साधकत्वेन प्रथमान्तस्योक्तत्वात्।

**शे०वा०—** 'आसमन्तात्काशते यदाकाशो मुख्यतो हरिरि'त्युत्तरानुव्याख्यानं मनसि निधाय श्रौताकाशपदं व्याख्याति **आसमन्तादिति**। आ इत्यनुवादेन समन्तादिति व्याख्यानम्। भाष्ये न चेदित्यानन्दो न स्यादिति श्रौतापादकस्य सङ्ग्रह इत्यभिप्रेत्यापेक्षितपूरणेन तद्व्याचष्टे **पूर्णानन्दो न चेदिति**। न स्यादिति नञोऽन्यात्प्राण्यादित्यनेनापि सम्बन्धाच्छ्रुतौ नान्यान्न प्राण्यादित्येतदेवापाद्य कीर्तनमित्यभिप्रेत्य प्रकृततर्केऽप्रयोजकतामाशङ्क्य पूर्णानन्दत्वाभावे प्रवृत्तिकारणाभावापादनद्वारा चेष्टकताभावापादनस्यात्राभिमतत्वेन साक्षात्तदापादनस्यानभिमतत्वान्नाप्रयोजकत्वमित्याशयवान् पूर्णानन्दत्वाभावेन यावत्कारणाभावापादनं मध्ये सूचयन्नेवापाद्यवाक्यतात्पर्यमाह **तदेत्यादिना**। अत्र तदा कारणान्तराभावादिति मध्ये कारणाभावापादनसूचनम्। न प्रवर्तयेदिति नान्यान्न प्राण्यादिति श्रौतापाद्यतात्पर्यकथनम्। माऽस्त्वीश्वरस्य प्रवर्तकत्वमपीतीष्टापत्तिमाशङ्क्य तथा सति जगदनीहं स्यादित्यनिष्टापादनान्तरं मनसि निधाय तत्समर्पणायापेक्षितमनुवृत्त्या पूरयंस्तत्राप्यप्रयोजकत्वं परिहरति **न चेदेष इति**। प्राण्यादन्याच्चेति भाष्यानुसारेण कः पुमान् प्राण्यादन्याच्चेति सम्बन्धं प्रदर्श्य को ह्येवान्यात्कः प्राण्यादिति श्रौतनिर्देशानुसारेण पदद्वयतात्पर्यमाह **न कोऽपि लौकिकीमित्यादि**।

**वा०र०— वाचिकं पक्ष इति** मूलम्। वाचिकशब्दार्थो गीताभाष्यटीकाप्रपञ्चे द्वितीयाध्यायेऽस्माभिः कथितोऽत्र लेखोक्तिः। कः **प्राण्यादिति**। **श्रौतेति**। आक्षेपार्थककिंशब्दनिर्देशेत्यर्थः। तथा अन्यादित्यादिक्रमोऽप्यर्थः। अननप्राणनयोर्लौकिकेत्यादिना व्याख्यानात्।

**विठ्ठल०—** 'सामान्यचेष्टा धर्माश्च कस्य स्युस्तन्मते प्रभुमि'ति तैत्तिरीयभाष्यानुसारेण प्राण्यादित्यस्य वैदिकीं प्रवृत्तिं कुर्यादित्यर्थकथनं, अन्यादित्यस्य तु **लौकिकीमिति**। अत्र प्राण्यादन्यादिति मूलानुसारेणानुवादः श्रौतनिर्देशानुसारेणार्थोक्तिरिति ज्ञेयम्।

**॥ इति जगच्चेष्टकत्वरूपहेतुना**
**'विष्णोरेवानन्दमयत्वं आनन्दमयशब्दगतमयट्प्रत्ययस्य प्राचुर्यार्थकत्वं च'**
**इत्यर्थद्वयोपपादने विपक्षे बाधकापत्तिः ॥**

**॥ इति जगच्चेष्टकत्वरूपहेतुना 'विष्णोरेवानन्दमयत्वं आनन्दमयशब्दगतमयट्प्रत्ययस्य प्राचुर्यार्थकत्वं च' इत्यर्थद्वयोपपादनम् ॥**

**॥ इति एतदधिकरणीयस्वपक्षसाधने 'तद्धेतुव्यपदेशाच्च' इति तृतीयसूत्रव्याख्यानम् ॥**

* * *





**॥ अथ एतदधिकरणीयस्वपक्षसाधने 'मान्त्रवर्णिकमेव च गीयते' इति चतुर्थसूत्रव्याख्यानम् ॥**

**॥ तत्र युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वमेव ॥**

**॥ तत्रादौ एतदनुवाकगतप्रथमवाक्यसूचितार्थस्य परब्रह्मत्वात्**
**तदुत्थशङ्कापरिहारार्थकस्य मन्त्रवर्णस्यापि तत्परत्वमेव ॥**

**॥ तच्च यतश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि वेदमन्त्रवर्णैर्लक्षणवत्तयोक्तं परं ब्रह्मैव अन्नमयादिशब्दपञ्चकेन गीयते, अतोऽपि तदन्नमयादि पञ्चापि ब्रह्मैव इति ॥**

४३ सु०— अन्नमयादीनां पञ्चानामपि युक्त्यन्तरेण परब्रह्मत्वं प्रतिपादयितुं सूत्रम् **ॐ मान्त्रवर्णिकमेव च गीयत इति ।**

## ब्र०सू०— ॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥

तस्यार्थः सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णप्रतिपादितमेव वस्तूत्तरेण ग्रन्थेन गीयते, अतश्चान्नमयादयः परं ब्रह्मेति । स्यादेतद्यदि मन्त्रवर्णोऽपि परब्रह्मविषयः स्यात् । तदेव कुतः, मन्त्रवर्णे ब्रह्मेत्येव श्रवणात्, तस्य चामुख्यया वृत्त्याऽन्यत्रापि सम्भवात् । कथं च मान्त्रवर्णिकार्थप्रपञ्चनार्थमुत्तरो ग्रन्थः । इत्यतः सूत्रार्थं विवरितुमुपोद्घातमाह **ब्रह्मविदिति ।**

अनु०— ब्रह्मवित्परमाप्नोतीति यत्प्रथमसूचितम् ॥
तदेव मन्त्रवर्णेन सत्यं ज्ञानमनन्तवत् ।
लक्षितं

'ब्रह्मविदाप्नोति परमि'त्यनुवाकस्य प्रथमवाक्ये सूचितं तावत्परब्रह्मैव, परशब्दश्रवणात्, तज्ज्ञानस्य मोक्षहेतुत्वोक्तेश्च । तदेव च, मन्त्रवर्णेन, सत्यं ज्ञानमनन्तवदन्तवन्न भवतीति **लक्षितम्** असाधारणधर्मोपेततया प्रतिपादितम्; अतो मान्त्रवर्णिकं परं ब्रह्मैव ।

'ब्रह्मविदाप्नोति परमि'त्युक्ते हि शङ्कात्रयमुदेति ॥ किं लक्षणकं तद्ब्रह्म । न हि लक्षणेन विना वस्तु समस्तव्यावृत्ततया शक्यते ज्ञातुम् ॥ कथं च तद्वेदनम् । किं प्रतीयमानाकारस्यारोपितत्वमुपेत्य तदेवास्मीत्युतान्यथा । ब्रह्मेति पूर्णं प्रतीतम्, न (हि) च तादृशस्य साक्षात्कारोऽस्माकं सम्भवतीति ॥ का नाम तत्प्राप्तिर्या ज्ञानसाध्या । सर्वगतत्वेन नित्यप्राप्तत्वादिति ।





**तत्परिहाराय मन्त्रवर्णमुदाहरति श्रुतिः 'तदेषाभ्युक्ते'ति । तदभि(ए)तदाशङ्कात्रयं प्रति, तत्समाधानतयेति यावत् । एषा ऋग् उक्ता उच्यत इत्यर्थः ।**

**तत्र 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति लक्षणशङ्काया उत्तरम् । एतच्च प्रत्येकं लक्षणम्, वक्ष्यमाणप्रकारेण सत्यत्वादीनामव्यभिचारित्वात् । अत एव समुदितं लक्षणमभ्युपेत्य विशेषणकृत्यान्वेषणे परेषां क्लेशः परास्तः । 'यो वेदे'ति द्वितीयशङ्कोत्तरम् । परिपूर्णपरिमाणमपि शक्तिवशाद्भक्तानुकम्पयाऽल्पपरिमाणं प्रकटयत्सर्वजीवतदुपकारिकार्यकारणप्रेरकत्वेन हृदयगुहावस्थितं ज्ञेयमिति । 'सोऽश्नुत' इति तृतीयशङ्कोत्तरम् । न संयोगमात्रं तत्प्राप्तिः, नाप्यैक्यापत्त्यादिः, किन्तु तद्व्यक्तिस्थाने ततोऽत्यन्तभिन्नतया सत्यकामत्वादितत्सारूप्याभिव्यक्तिरेवेति ।**

**परि०—— सूचितमिति** । सङ्ग्रहेणोक्तमित्यर्थः । परशब्दस्य प्राप्तिकर्मबोधकस्थल एव श्रवणेन ब्रह्मविशेषणत्वेनाश्रवणात् तद्विशेषणत्वस्याप्यभिमतत्वे त्वावृत्तिप्रसङ्गात्तज्ज्ञापकाभावाच्चेत्यत आह **तज्ज्ञानस्येति** । अनन्तवदित्यादिमूलपदस्यार्थोऽन्तवन्न भवतीत्यादि । **प्रतीयमानाकारस्येति** । ब्रह्मपदेन साक्षिणा च प्रतीयमानस्य पूर्णत्वापूर्णत्वादेराकारस्येत्यर्थः । **उतान्यथेति** । सर्वोत्तमत्वसर्वप्रेरकत्वादिनेत्यर्थः । **ब्रह्मेति पूर्णमिति** । पूर्णं सकलवस्तुगतमपरिच्छिन्नपरिमाणमित्यर्थः । **अस्माकमिति** । परिच्छिन्नज्ञानयोग्यानामित्यर्थः । **श्रुतिरिति** । उपनिषदित्यर्थः । **तद्व्यक्तिस्थान इति** । श्वेतद्वीपादौ ।

**गु०दी०—— ततोऽत्यन्तभिन्नतया** इत्यनेन ब्रह्मणा सहेत्यस्य परब्रह्मणा सहेत्यर्थं सूचयति ।

**यादु०——** लक्षितमित्येतत्प्रदर्शितमिति प्रतीतिनिवारणाय व्याचष्टे **असाधारणधर्मेति** । **उतान्यथेति** । सकलजीवप्रेरकत्वादिनेत्यर्थः । इयं च शङ्का सर्वजीवप्रेरणाय हृदयगुहानिहितत्वोक्तिनिवर्त्या दर्शिता । अपरामपि तन्निवर्त्यामाशङ्कां दर्शयति **ब्रह्मेति** । **पूर्णमिति** । पूर्णं सर्ववस्तुगतमपरिच्छिन्नपरिमाणमित्यर्थः । **अस्माकमिति** । परिच्छिन्नज्ञानयोग्यानामित्यर्थः । **परेषां क्लेश इति** । आनन्त्यस्य बृहत्त्वापरपर्यायस्य धर्मत्वेन धर्मिसापेक्षत्वान्न स्वरूपलक्षणत्वमत उक्तम् **सत्यमिति** । तेनापि महासामान्यमात्राभिधानात् तत्पर्यवसानायापरा व्यक्तिर्वक्तव्येत्यपेक्षायां विज्ञानमित्युक्तम् । नन्विदमयुक्तम् । सुखदुःखरागद्वेषादीनां ज्ञानप्रभेदत्वस्य गुरुणाऽभ्युपगतत्वात् । ज्ञानत्वस्यापि महासामान्यतया तत्पर्यवसानाय दुःखादिव्यावृत्तव्यक्त्यन्तरं वाच्यमित्यत उक्तम् **आनन्दमिति** । तथा च विज्ञानसामान्यालम्बनमानन्दविशेषो ब्रह्मेत्यानन्द एव बृहत्त्वादिधर्मवत्तया निरुपाधिकब्रह्मस्वरूपलक्षणं पर्यवस्यतीति परेषां विशेषलक्षणकृत्यान्वेषणक्लेश इत्यर्थः । अनन्तब्रह्मपदाभ्यामेवात्रान्तरहितधर्मिस्वरूप-





लक्षणाभिधानसम्भवे उक्ताकाङ्क्षानुदयेनेतरवैय्यर्थ्यात् । आनन्देतरपदवैयर्थ्यापरिहाराच्च । वैषयिकानन्दानामनेकेषामनुभवेनानन्दपदादप्यानन्दत्वसामान्यमात्राभिधाने वैषयिकानन्दव्यावृत्तव्यक्तिस्वरूपबोधनाय पदान्तरस्यापेक्षितत्वप्रसङ्गाच्चेत्याशयेन क्लेश इत्युक्तम् । ब्रह्मेति च पूर्णं प्रतीतमित्युक्तशङ्कापरिहारायोक्तम् **अल्पपरिमाणमिति** । **कार्यकारणप्रेरकत्वेनेति** । अन्यथा हृदयगुहावस्थितत्वोक्तेर्वैय्यर्थ्यप्रसङ्ग इति भावः । **नाप्यैक्येति** । ब्रह्मणा सहेत्युक्तत्वादिति भावः । **तद्व्यक्तिस्थान इति** । वैकुण्ठादावित्यर्थः । इतरत्र परब्रह्मणा सह भोगासम्भवादिति भावः । **सत्यकामत्वादीति** । सर्वान्कामानित्युक्तिलभ्यमिति ज्ञातव्यम् । सत्यकामत्वादेर्जीवस्वरूपत्वादभिव्यक्तिरेवेत्युक्तम् ।

**वं०प०**— प्रथमवाक्ये ब्रह्मशब्देन परंब्रह्मैव सूचितमित्यन्वयः । कथमित्यतः सूचनाप्रकारं दर्शयति **परशब्देति** । अत्र ब्रह्मज्ञानेन परब्रह्मप्राप्तिः श्रूयते न ह्येतत्सम्भवति । अन्यविद्ययाऽन्यगतेरयोगात् । अतः परब्रह्मप्राप्तिरूपमोक्षजनकज्ञानविषयस्यापि परब्रह्मत्वं सूचितमित्यर्थः । युक्त्यन्तरं चाह **तज्ज्ञानस्येति** । अत्र ब्रह्मज्ञानस्य मोक्षहेतुत्वं श्रूयते । मोक्षजनकज्ञानविषयत्वं च परब्रह्मण एव नान्यस्य । तमेवं विद्वानिति श्रुतेरिति भावः । एवमेव ब्रह्मविदाप्नोति परमिति सूचयित्वेति भाष्यस्याभिप्रायो द्रष्टव्यः । तत्त्वप्रकाशिकायां स्पष्टमनुक्तत्वादिति ध्येयम् । **अनन्तवदन्तवन्न भवतीति** । श्रुतावनन्तमिति स्पष्टोक्तेराचार्यैरनन्तवदिति कस्मादुक्तमिति चेत् । उच्यते । अनन्तमित्यत्र न अन्तमनन्तमिति अनश्व इत्यादिवन्नञ्समासेऽन्तशब्दोक्तनाशप्रतियोगिकान्योन्याभावः प्रतीयते । तच्चासङ्गतम् । अतः श्रौतोऽन्तशब्दोऽन्तवदिति व्याख्यातः । ततश्चान्तशब्दोक्तत्रिविधनाशवन्न भवतीत्यनन्तवदिति नञ्समासः । एवं च श्रुतावन्तशब्दोऽर्श आद्यजन्ततयाऽन्तवदित्यर्थकः । तथा चान्तं न भवतीत्यनन्तमिति नञ्समासो द्रष्टव्यः । यथाऽनादिमत्परंब्रह्मेत्यत्रानादीत्येव पदच्छेदे न आदि अनादीति नञ्समासे आदिभिन्नत्वप्रतीत्या आदिमन्न भवतीत्यनादिमदिति नञ्समासः कृतस्तद्वदिति ध्येयम् । **सत्यकामत्वेति** । मुक्तानां सत्यकामत्वं नाम भगवत्कामानुकूलकामत्वमेवेति ज्ञेयम् ।

**आनन्दः**— तत्र तद्धेतुव्यपदेशादित्यस्येव मात्रावर्णिकसूत्रस्यापि आनन्दमयस्यैव ब्रह्मत्वे असाधारणहेतुत्वमिति प्रतीतिं निवारयितुमाह **अन्नमयादीनामिति** । ननु ब्रह्मवित्परमाप्नोतीत्युत्तरवाक्ये उपनिषदर्थः कथ्यते तदयुक्तम् । सूत्राक्षरतदुपयुक्तकथनाभावात् इत्यत उपनिषदर्थकथनस्योपयोगं वक्तुं आशङ्कामुत्थापयति । स्यादेतत् । ननु ब्रह्मविदिति वाक्यस्यैव ब्रह्मपरत्वाभावात् तल्लक्षणप्रतिपादकमग्रिमवाक्यं इत्ययुक्तमित्यत आह **ब्रह्मविदाप्नोतीति** । **ऐक्यापत्त्यादिति** । आदिपदेन भेदाभेदापत्तिरिति ग्राह्यम् ।

**श्रीनिधि०**— **ब्रह्मविदाप्नोति परमित्यनुवाकस्येति** । अत्र **इतिशब्दः** प्रकारवाची । एवंरूपे **अनुवाकस्य** प्रथमवाक्य इत्यर्थः । **कथं च तद्वेदनं** केन प्रकारेण इत्यर्थः । **तद्व्यक्तिस्थाने** श्वेतद्वीपादौ कार्यकारणेति । कार्यं शारीरिकं कारणमिन्द्रियादिकम् ।





**शे०वा०— कथं चेति**। अन्यविषयत्वस्यैव स्पष्टं प्रतिभासनादिति भावः। **विवरितुमिति**। 'तत्र सत्यत्वं सृष्ट्याऽन्नप्राणयोरपी'त्यादिनेति शेषः । **परशब्दश्रवणादिति** । अङ्गीकृत्य चेदं ज्ञापकमुक्तम् । वस्तुतस्तु शक्तिग्रहणसामर्थ्येन प्रथमप्राप्तत्वाद्बाधकाभावाच्च नात्रामुख्यार्थकल्पना युक्तेत्येव समाधानमवधातव्यम् । लक्षणया प्रतिपादितमित्यन्यथाप्रतीतिनिरासाय लक्षितमित्येतदनूद्य व्याचष्टे **लक्षितमिति** । मन्त्रवर्णेनासाधारणधर्मवत्तया परब्रह्मणः प्रतिपादने को हेतुरित्यतोऽन्यथा लक्षणाकाङ्क्षाया अनिवृत्तेरिति भावेन कुतोऽत्र लक्षणाकाङ्क्षा येन तत्पूरणाय मन्त्रवर्णस्य लक्षणवत्तया ब्रह्मप्रतिपादकत्वं स्यादित्यत आह **ब्रह्मविदिति** । **शङ्कात्रयमिति** । यद्यपि लक्षणाशङ्कोदेतीत्येव वक्तुमुचितं तावतैवोक्तशङ्कापरिहारात् । तथाऽपि यो वेदेत्यादिमन्त्रवर्णशेषस्य सार्थक्यलाभायाधिकमुक्तमिति मन्तव्यम् । लक्षणाभिधानप्रयोजनप्रदर्शनेन लक्षणाकाङ्क्षामुपपादयति **न हीति** । **उतान्यथेति** । सकलजीवादिप्रेरकत्वेनेत्यर्थः । एतच्च सर्वजीवप्रेरणाय हृदयगुहानिहितत्वोक्तिव्यावर्त्यप्रदर्शनम् । हृदयगुहास्थितत्वोक्तिलब्धाल्पपरिमाणत्वनिरसनीयां शङ्कां दर्शयति **ब्रह्मेतीति** । पूर्णमपरिच्छिन्नपरिमाणमित्यर्थः । **अस्माकमिति** । परिच्छिन्नज्ञानयोग्यानामित्यर्थः । **वक्ष्यमाणप्रकारेणेति** । 'सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते' इत्यादिवक्ष्यमाणप्रकारेणेत्यर्थः । **अव्यभिचारित्वादिति** । सम्भवव्यभिचाराभ्यामेव विशेषणस्यार्थवत्त्वादिति भावः । **परेषां क्लेश इति** । अत्र यद्रूपेण यन्निश्चितं तद्रूपं यन्न व्यभिचरति तत्सत्यम् । यद्रूपेण यन्निश्चितं तद्रूपं यद्व्यभिचरति तदनृतमित्युच्यतेऽतो विकारमनृतम् । सत्यं ब्रह्मेति ब्रह्म विकाराद्व्यावर्तयति । अतः करणत्वं प्राप्तं ब्रह्मणः । कारणस्य च कारकत्वम् । वस्तुत्वान्मृद्वदचिद्रूपता च प्राप्ता । अत्रेदमुच्यते **ज्ञानं ब्रह्मेति** । ज्ञानं ज्ञप्तिरवबोधः । भावसाधनोऽयं ज्ञानशब्दः । ब्रह्मविशेषणत्वात्सत्यानन्ताभ्यां सह । न हि सत्यताऽनन्तता च ज्ञानकर्तृत्वे सत्युपपद्येते । ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेत् अनन्तं च । यद्धि न कुतश्चित्प्रविभज्यते तदनन्तम् । ज्ञानकर्तृत्वे च ज्ञानानन्ताभ्यां प्रविभक्तमित्यनन्तता न स्यात् । अतो ज्ञानं ब्रह्मेति कर्तृत्वादिकारकत्वनिवृत्त्यर्थम् । मृदादिवदचिद्रूपतानिवृत्त्यर्थं च प्रयुज्यते । ज्ञानं ब्रह्मेति वचनादन्तवत्त्वं प्राप्तम् । लौकिकज्ञानस्यान्तवत्त्वदर्शनादतस्तन्निवृत्त्यर्थमिहानन्तमित्येवंरूपविशेषणकृत्यान्वेषणे परेषां क्लेश इत्यर्थः । यथा चैतत्तथा तैत्तिरीयशाङ्करभाष्यादौ स्पष्टम् । ब्रह्मेति च पूर्णं प्रतीतमित्युक्तशङ्कापरिहारायोक्तमल्पपरिमाणं प्रकटयदिति । **कार्येत्यादि** । अन्यथा हृदयगुहावस्थितत्वोक्तिवैयर्थ्यादिति भावः । **न संयोगमात्रमिति** । सर्वगतत्वेन नित्यसंयुक्तत्वादिति भावः । **नाप्यैक्येति** । ब्रह्मणा सहेति भेदाभिधानादिति भावः । **तद्व्यक्तिस्थान इति** । वैकुण्ठादावित्यर्थः । एतच्च प्रायिकाभिप्रायमित्यविरोधः । मुक्तमात्रस्य ब्रह्मणा सह भोगप्रतीतिनिरासाय सर्वान् कामानश्नुत इत्यस्य तात्पर्यमाह **सत्यकामत्वादीति**। सत्यकामत्वादेर्जीवस्वरूपत्वादभिव्यक्तिरेवेत्युक्तम्।

**वा०र०— परशब्देति** मूलम् । यद्यपि ब्रह्मविशेषणत्वेन परपदं न श्रुतम् । तथाप्यपरब्रह्मज्ञानेन परब्रह्मप्राप्तेरयोगात् परमित्यत्र ब्रह्मेत्यस्य सम्बन्धवद्ब्रह्मेत्यत्रापि परमित्यस्य सम्बन्धात् परब्रह्मविदिति लभ्यत इत्याशयः । **इत्येवेति** । मुख्यब्रह्मग्रहे युक्त इत्यादेः पूर्वमुक्तत्वादिति भावः । **मोक्षोक्तेश्चेति** । परप्राप्तेरेव मोक्षवदिति भावः । अनन्तमित्यस्यानन्तवदिति व्याख्यानं कथमित्यतो व्याचष्टे **अन्तवन्न भवतीति** मूलम् ।





लक्षणमात्राशङ्कापरिहारापरत्वेन योजने निमित्तमाह **तावतैवेति** । मन्त्रवर्णस्य लक्षणाशङ्कापरिहाराय प्रवृत्तिकथन-मात्रेण तस्य ब्रह्मविषयत्वाभावशङ्कापरिहारादिति भावः । उतान्यथेत्यस्य ब्रह्मेतीत्युत्तरवाक्यस्य च भिन्नविषयत्वं दर्शयति **एतच्चेत्यादिना** । उतान्यथेत्यनेनोक्तसंशयनिरासाय हृदयगुहानिहितत्वं वक्ष्यते । तेन च सकलजीवादि-प्रेरकत्वेन वेदने उक्तेऽन्यतरपक्षनिर्धारणात् संशयनिवृत्तिरिति भावः । हृदयगुहास्थितत्वोक्तिलब्धाल्पेति इत्याशङ्का तु न हृदयगुहानिहितत्वोक्तिमात्रेण निरस्ता । किन्तु शक्तिवशात् अल्पेति । वक्ष्यमाणप्रकारेणोपपादिततदुक्ति-लब्धाल्पपरिमाणत्वेनैवेति तद्व्यावर्त्यकथनमेतदित्यर्थः । एतेनैवापरमपि हृदयगुहानिहितत्वोक्तिव्यावर्त्याशङ्कां दर्शयतीति ब्रह्मेतीति वाक्यावतरणमन्यथाख्यातिरस्थं निराकृतमिति ज्ञेयम् । एतेनैव ब्रह्मेतीति शङ्का न युक्ता । तद्व्यावर्तकस्य श्रुतावनुक्तेरिति शङ्कापि पराकृता वेदितव्या । श्रुतावर्थलब्धाल्पपरिमाणत्वस्यैव तन्निरासकत्वमिति सूचनात् । परिपूर्णपरिमाणमपीत्युत्तरमूलं हृद्याधायाह **अपरिच्छिन्नेति** । पूर्णशब्दार्थानुसारेणास्माकमित्येत-त्तद्विरोधसमर्पकतया व्याकुर्वन्नप्रयोजकतां निराह **परिच्छिन्नेति** । **सम्भवेति** । एतच्च प्राग्जन्माधिकरणमूल-टीकायामेव व्याख्यातम् ।

शाङ्करभाष्ये सत्यं ज्ञानमनन्तमिति वाक्यं ब्रह्मणो लक्षणार्थमित्याद्युक्त्वा सत्यादीनां विशेषणानां विशिष्यमाणब्रह्मणो विशेष्यान्तरेभ्यो निर्धारयाम्भवति (?) । यथा लोके नीलं महत्सुगन्ध्युत्पलमिति विशेषणेभ्यो विशेष्यस्येतरेभ्यो व्यावर्तनं भवतीति प्रतिपाद्य यद्विशेष्यं विशेषणान्तरं व्यभिचरति तत्तेन विशिष्यते । नील-मित्युदाहृते उत्पलस्य रक्तत्वेन नीलव्यभिचारस्य परिहाराय नीलं न रक्तमिति विशेषणात् । प्रकृतेऽपि सत्यमिति विशेषणेनासत्यमिति विशेष्ये सत्यव्यभिचारोऽप्यङ्गीकार्यतया प्रतीयते । एवं ज्ञानानन्तत्वयोरपीति कथं विशेषणविशेष्याभावाश्रयणमित्याद्याशङ्क्य विशेषणविशेष्यभावमात्रस्थले विशेषणानि विशेषणप्रधानान्येतानि विशेष्यजातीयादेव व्यावर्तकानि । लक्षणार्थप्रधानविशेषणानि तु विशेष्यं सर्वत एव व्यावर्तयन्ति । यथा अवकाशद आकाश इति लक्षणार्थं चेदं वाक्यमित्यवोचाम । ततः सत्यादिपदानि परस्परनिरपेक्षाणि प्रत्येकं ब्रह्मशब्देन सम्बध्यन्ते । सत्यं ब्रह्म ज्ञानं ब्रह्म अनन्तं ब्रह्मेति । सत्यमिति यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरतीत्याद्युक्तम् । तदनुसारेण प्रकृतोपयुक्ततया विशेषणकृतोपयुक्ततया विशेषणकृत्यमात्रमनुवदति **अत्र यद्रूपेणेत्यादिना** । यद्रूपेण यन्निश्चितमिति पाठः । **स्पष्टमिति** । विशिष्टचैतत्प्रपञ्चनीयमस्ति । ननु केचिदत्रैव मुच्यन्त इत्यादि प्रमाणा-नुसारेणात्मरूपैकगुणोपासकानां मुक्तानां सत्यकामत्वादि व्यक्तिरत्रास्तीति । कथं तद्व्यक्तिस्थान इति नियम इत्यत आह **एतच्च प्रायिकेति** । यच्चेतरत्र ब्रह्मणा सह भोगासम्भवादिति भाववर्णनमन्यथाख्यातौ । तदुत्तरवाक्य-परामर्शमूलकमिति सूचयंस्तद्वाक्यमवतारयति **मुक्तमात्रस्येति** । अनेन चैवं निराकृतं भवति । मुक्तमात्रस्य ब्रह्मणा सह भोगसम्भवादेव सत्यकामत्वादिति सारूप्याभिव्यक्तिमात्रपर्यन्तं व्याख्यानस्य कृतत्वेन तदभिव्यक्तेश्च तत्तन्मुक्तस्थाने सत्त्वेन बाधकाभावादिति ।

**स०व्र०—— उतान्यथेति** । सकलजीवप्रेरकत्वादिनेत्यर्थः । इयं च शङ्का सर्वजीवप्रेरणाय हृदयगुहानिहितत्वोक्तिनिवर्त्या दर्शिता । भगवतः सर्वजीवप्रेरणरूपप्रयोजनाभावे हृदयनिहितत्वस्योक्तस्य





वैयर्थ्यप्रसङ्गादिति ध्येयम् । अपरामपि तन्निवर्त्याशङ्कां दर्शयति **ब्रह्मेति । पूर्णं प्रतीतमिति** । पूर्णमखिलवस्तूक्तगतमपरिच्छिन्नमित्यर्थः । अस्माकं अल्पवस्तुगतपरिच्छिन्नज्ञानयोग्यानामित्यर्थः । अत एव तदाशङ्कोत्तरत्वेन स्वस्वहृदयगतं परिच्छिन्नपरिमाणमेव ज्ञेयमिति निहितं गुहायामित्यनेनोच्यत इति ज्ञातव्यम् । **नैक्यापत्तिरिति** । ब्रह्मणा सहेत्युक्तत्वादिति भावः । **किन्तु तद्व्यक्तिस्थान इति** । वैकुण्ठादावित्यर्थः । इतरत्र परब्रह्मणा सह भोगासम्भवादिति ।

**विठ्ठल०**— मान्त्रवर्णिकब्रह्मविदाऽप्नोति परम् इत्येतत्प्रतीकग्रहणरूपं वाक्यानुवादं च तथा ब्रह्मवल्ल्याख्यस्य ब्रह्मविदाऽप्नोति परम् इत्याद्यनुवाकस्य यत्प्रथमं ब्रह्मविदाप्नोति परम् इति वाक्यं तस्मिन् सूचितं सङ्ग्रहेणोक्तमित्यर्थः । **तज्ज्ञानस्य इति** । मोक्षसाधनज्ञानविषयत्वस्य परब्रह्मलिङ्गत्वादिति भावः । **अनन्तवदिति** । मूले उपमार्थप्रतीतिनिरासाय अनन्तवदित्येतदन्तवन्न भवतीति व्याख्यातम् । लक्षितमित्यस्य लक्षणया प्रतिपादितमिति वा दर्शितमिति वा प्रतीतिनिरासायोक्तं **असाधारणधर्मोपेततयेति** । सत्यं ज्ञानम् अनन्तं ब्रह्मेति मन्त्रवर्णस्य ब्रह्मविदाप्नोति परम् इत्युक्तार्थत्वाप्रतीतेः कथं तत्र सम्मतितया मन्त्रवर्णोदाहरणमित्यतस्तद्घटयितुम् आह **ब्रह्मविदाप्नोति परमित्युक्ते हीति** । उतान्यथेति प्रतीयमानाकारस्य सत्यत्वेन सर्वभिन्नतया गुणपूर्णत्वसर्वप्रेरकत्वादिनेत्यर्थः । ब्रह्मविदित्यस्यापरोक्षज्ञानार्थत्वं चेति मत्वा तदप्ययुक्तमित्याह **ब्रह्मेति पूर्णमिति** । ब्रह्मेतिपदेन पूर्णमिति प्रतीतम् । न हि देशकालगुणपूर्णस्य साक्षात्कारोऽस्माकं परिच्छिन्नज्ञानयोग्यानां सम्भवतीत्यर्थः । अव्यभिचारादनतिव्याप्तेः । परेषां क्लेश इति सत्यपदस्य सत्तासामान्यपरत्वात् ज्ञानानन्दपदयोर्ज्ञानब्रह्मत्वरूपधर्मवाचित्वाद्धर्माणां धर्मिसापेक्षतया स्वो(सो)पाधिकत्वेन स्वरूपलक्षणत्वं न सम्भवतीत्यतोऽनृतत्वादिव्यावृत्तिरूपैकलक्षणपरतेति विशेषणकृत्यान्वेषणेऽपि व्यावृत्तेरपि धर्मत्वे स्वोपाधिकत्वमेव, न हि भावरूपो धर्मोऽभावरूपो धर्म इत्येतावता धर्मिसापेक्षता निरस्यत इति परेषां क्लेश इत्यर्थः । **नाप्यैक्येति** । ब्रह्मणा सहेति भेदश्रवणादिति भावः । त्वद्व्यक्तिस्थान इति श्वेतद्वीपवैकुण्ठादावित्यर्थः । तथा च भगवतः सर्वगतत्वेऽपि 'आरभ्यते म आमुक्तेः कृष्णस्य सदनं यतः । अव्यक्तहरिलोकत्वादन्येषाम् अन्यलोकते'त्युक्तेः व्यक्तिलोकाभिप्रायेण तत्राप्युक्तिर्युज्यत इत्युक्तं भवति ।

**चषकः**— **ब्रह्मेति पूर्णमिति** । सर्वदेशगतमित्यर्थः । **अस्माकम्** अपरिच्छिन्नरूपं परिच्छेतुमनीशानामित्यर्थः । **परेषां क्लेश इति** । तैत्तिरीयसाङ्करभाष्यादौ स्फुटमेतत् ।

**।। इति युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वसमर्थने**
**एतदनुवाकगतप्रथमवाक्यसूचितार्थस्य परब्रह्मत्वात्**
**तदुत्थशङ्कापरिहारार्थकस्य मन्त्रवर्णस्यापि तत्परत्वमेव ।।**

* * *





**॥ अथ युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वसमर्थने उत्तरषट्प्रकरणानाञ्चापि मान्त्रवर्णिकपरब्रह्मलक्षणविवृतित्वमेव ॥**

**४४ सु०—** अस्त्वेवं प्रथमवाक्यसूचितार्थस्य परब्रह्मत्वात्तदुत्थशङ्कापरिहारार्थस्य मन्त्रवर्णस्यापि तत्परत्वम्, तथाऽपि किं प्रकृत इत्यतः सूत्रार्थं विवृणोति **तत्रेति** ।

**अनु०—** तत्र सत्यत्वं सृष्ट्याऽन्नप्राणयोरपि ॥
उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ।
अनन्तत्वं तथाऽऽनन्दमयवाचाऽप्युदाहृतम् ॥

**तत्र** लक्षणेषु, सत्यत्वं, **सृष्ट्या** 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इति सृष्टिप्रकरणेन, 'स वा एष पुरुषोऽन्नरसमय' इति 'तस्माद्वा एतस्मादन्नरसमयादि'ति च **अन्नप्राणयोः** अन्नमयप्राणमययोः प्रकरणाभ्याम् उ(मप्यु)**क्तम्** । **ज्ञानं तु** ब्रह्मलक्षणं, **मनसा** 'तस्माद्वा एतस्मात्प्राणमयादि'त्यादिना मनोमयप्रकरणेन । **विज्ञानेनापि** 'तस्माद्वा एतस्मान्मनोमयादि'त्यादिना विज्ञानमयप्रकरणेनापि **उदीरितम्** । **तथा**शब्दः समुच्चये । **अनन्तत्वम्** अपि ब्रह्मलक्षणम्, **आनन्दमयवाचा** 'तस्माद्वा एतस्माद्विज्ञानमयादि'त्यादिना आनन्दमयप्रकरणेन । **अपि**पदेनोत्तरवाक्यैरपि **उदाहृतम्** ।

अत उत्तरेषां षण्णामपि प्रकरणानां मान्त्रवर्णिकपरब्रह्मलक्षणविवृतित्वात् परं ब्रह्मैवान्नमयादय इति सूत्रार्थः ।

**परि०— अपिपदेनोत्त(न तदुत्त)रवाक्यैरपीति** । 'को ह्येवान्यादि'त्यादिवाक्यैरित्यर्थः । एतच्च विवरिष्यते 'नाल्पे सुखमिति प्रोक्त्यैवानन्दमये'त्यादिव्याख्यानावसरे । **षण्णामपि प्रकरणानामिति** । सृष्टिप्रकरणेन सह षट्त्वं ध्येयम् ।

**यादु०— उत्तरवाक्यैरपीति** । आनन्दमयप्रकरणादुपरितनैरित्यर्थः । **षण्णामपीति** । इदं चोत्तरवाक्यानामप्यानन्दमयप्रकरणान्तर्भावमभिप्रेत्येति द्रष्टव्यम् ।

**श्रीनिधि०— उत्तरवाक्यैरपीति** । को ह्येवान्यादित्यादिभिरिति भावः ।





**शे०वा०— उत्तरवाक्यैरपीति** । आनन्दमयप्रकरणादुपरितनैः को ह्येवान्यात्कः प्राण्यादित्यादिवाक्यैरपीत्यर्थः ।

**विठ्ठल०— तदुत्तरवाक्यैः इति** । आनन्दमयप्रकरणादुपरितनैरथातो नु प्रश्ना इत्यारभ्यानुवाकीसमाप्तिपर्यन्तं स्थितैरित्यर्थः । आनन्दमयप्रकरणादुपरितनवाक्यानामानन्दमयप्रकरणेऽन्तर्भावात् सृष्टिप्रकरणमेकं मनोमयादीनि पञ्च प्रकरणानीत्येवं षण्णां प्रकरणानामित्युक्तम् ।

**॥ अथ उत्तरषट्प्रकरणानाञ्चापि**
**मान्त्रवर्णिकपरब्रह्मलक्षणविवृतित्वसमर्थने**
**'सृष्टिप्रकरणेन सत्यत्वमुक्तमि'त्युक्तेः स्पष्टीकरणम् ॥**

४५ **सु०—** सत्यत्वं सृष्टिप्रकरणेनोक्तमित्युक्तम्, तत्कथमित्यत आह **सद्भावमिति** ।

**अनु०— सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते ।**
**इति सृष्टिरिह प्रोक्ता**

सच्छब्दः सद्भाववाची, 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत' इति वचनात् । सद्भावो जन्म, यथोक्तम् 'सद्भावशब्देन प्रजननं सूचितमि'ति । तथा च सच्छब्दे जन्मवाचिनि कर्मण्युपपदे यातेरन्तर्णीतण्यर्थात् 'आतोऽनुपसर्गे क' इति कप्रत्यये कृते 'अयस्मयादीनि छन्दसी'त्युपपदस्य भसंज्ञायां सत्यमिति भवति । ततः, **'सत् सद्भावं जन्म, यापयेत्** प्रापयेत्, स्वव्यतिरिक्तं सर्वं, **यस्मात्** तस्मात् **तत्** ब्रह्म **सत्यं कथ्यत'** इति सकलजगज्जन्मकारणत्वं सत्यशब्दार्थं हृदि कृत्वा, 'आत्मन आकाश' इत्यादिश्रुत्या इह अनुवाके **सृष्टिः प्रोक्ता** इत्यर्थः ।

अस्तु जगत्स्रष्टृत्वं सत्यशब्दार्थः । तथाऽपि 'आत्मन आकाश' इत्यादिसृष्टिप्रकरणं तद्व्याख्यानमिति न युक्तम्, अवयवार्थकथनादेरभावादित्यत आह **जगदिति** ।

**अनु०— जगत्सद्भावयापकम् ॥**
**ब्रह्मेति स्थापनायैव**





**सत्यशब्देन यत् जगत्सद्भावयापकं ब्रह्म इत्युक्तं तस्यार्थस्य स्थापनायैव सृष्टिः प्रोक्ता नावयवार्थकथनाद्यर्था । एतदुक्तं भवति । नावयवार्थकथनादिकमेव व्याख्यानम्, किं तूक्तस्थापनमपि । प्रकृते च 'सत्यं ब्रह्मे'ति लक्षणेऽभिहिते, 'असम्भवीदं, पञ्चानां महाभूतानामेव जगज्जन्मादिकारणत्वादि'त्याशङ्क्य, 'महाभूतानामपि ब्रह्मैव कारणं तदन्तर्गतं तत्सत्तादिप्रदं चातो ब्रह्मैव जगज्जनकमि'ति तत्स्थापनम् 'आत्मन आकाश' इत्यादिना क्रियत, इति भवतीदं तद्व्याख्यानमिति ।**

**परि०— इति वचनादिति** । गीतावचनादित्यर्थः । **यथोक्तमिति** । सप्तदशे गीताभाष्ये उक्तमित्यर्थः । **कर्मणीति** । कर्मकारके । **यातेरिति** । 'या प्रापण' इति धातोरित्यर्थः । **आत इति** । अनुपसर्गे कर्मण्युपपदे आकारान्ताद्धातोः कप्रत्ययो भवतीति कप्रत्यये कृते लशः क्वतद्धित इति ककारस्येत्संज्ञायां तस्य लोप इति तस्य लोपे 'आतो लोप इटि चे'त्याकारलोपे च सति रूपम् । सच्छब्दतकारस्य झलाञ्जशोऽन्त इति जशादेशो दकारः कुतो नेत्यत आह **अयस्मयादीनीति** । अयस्मयादीनि शब्दरूपाणि छन्दसि विषये भसंज्ञानि भवन्तीति आद्याध्यायचतुर्थपादस्थसूत्रस्यार्थः । तस्याकृतिगणत्वेन वृत्तावुक्तेः तत्रायमपि शब्दो ग्राह्यः । तथा चापदान्तत्वाज्जश्त्वाभाव इति भावः । ननु महाभूतानां ब्रह्मैव कारणमित्ययुक्तम् । आकाशादेरेव वाय्वादिकारणत्वादित्यत उक्तं **तदन्तर्गतं चेति** । महाभूतानां ब्रह्मैव कारणम् । तथा चाकाशाद्यन्तर्गतं सद्वाय्वादिकारणं च भवतीति भावः । तदन्तर्गतेः किं फलमित्यत उक्तं **तत्सत्तादिप्रदं चेति** । आकाशादिसत्ताशक्तिप्रतीतिप्रवृत्त्यादिप्रबोधनं कुर्वदित्यर्थः ।

**गु०दी०— कप्रत्यये कृते** इत्यत्र 'आतो लोप इटि चे'ति सूत्रादाकारलोपे सतीत्यपि ग्राह्यम् । सत्पदस्थ-तकारस्य 'झलां जशोऽन्ते' इति सूत्रात् जश्त्वप्रापकपदान्तत्ववारणायोपपदस्य पदसंज्ञापवादकभसंज्ञाकरणमिति ज्ञेयम् ।

**यादु०— आतोऽनुपसर्ग इति** । अनुपसर्गे कर्मण्युपपदे आकारान्ताद्धातोः कप्रत्ययो भवतीति सूत्रार्थः । गोद इत्युदाहरणम् । आतो लोप इटि चेत्याकारलोपे सतीत्यपि ग्राह्यम् । ननु झलां जशोऽन्ते इति जश्त्वे सद्यमिति भवेत्सत्यमिति तु कथमित्यत आह **छन्दस्युभयथेति** । 'अयस्मयादीनि छन्दसी'ति सूत्रे वार्तिकं क्वचिदुभयमपि न भवतीति । तस्यायमर्थानुवादः छन्दसि क्वचिद्भत्वं पदत्वं चेत्युभयथाऽपि भवतीति । न तु सूत्रम् । अस्य सूत्रस्य तृतीयाध्यायगतस्य सार्वधातुकार्धधातुकोभयपरत्वेन षष्ठाध्यायस्थस्य च 'न भूसुधियोः' छन्दसि क्वचिद्यणादेशनिषेधापवादकत्वेन भपदसंज्ञारूपोभयविषयकत्वाभावादिति ज्ञातव्यम् । क्वचिदयस्मयादीनि





छन्दसीत्युपपदस्य भसंज्ञायामिति पाठः । तथाऽपि तत्सूत्रस्थोक्तवार्तिकस्मरणार्थमेव सूत्रोदाहरणमिति ध्येयम् । **तदन्तर्गतं तत्सत्तादिप्रदं चेति** । तद्देहान्तर्नियामको हरिश्चाकाशशब्दोक्त इत्यादिना सृष्टिप्रकरणे भगवत्सृष्टेरपि वक्ष्यमाणत्वेन तदुपयोगकथनार्थमिति ज्ञातव्यम् ।

**वं०प०— यथोक्तमिति** । गीताभाष्य इत्यर्थः । **प्रजननं सूचितमिति** । प्रजननं प्रागसतः सत्तापादनम् । यद्यपि सद्भावशब्दः सत्तामात्रवाची तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात्सत्ताविशेषप्रजननपर इति प्रतिपादयितुं सूचितमित्युक्तमिति द्रष्टव्यम् । **कप्रत्यय इति** । तथाच सदुपपदात् या प्रापणेऽस्मादातोऽनुपसर्गे कः । आदन्ताद्धातोः कर्मण्युपपदे कप्रत्ययः स्यादिति कप्रत्यये ककारलोपे आतो लोप इटि चेति धात्वाकारलोपे सत् य् अ सत्येति प्रातिपदिकम् । ननु 'झलां जशोऽन्ते पदान्ते झलां जशः स्युः' इति सूत्रेण सदिति पदान्ते झलस्तकारस्य दकाराख्ये जशि सद्यमिति स्यादित्यत उक्तम् **उपपदस्य भसंज्ञायामिति** । भसंज्ञा च पदसंज्ञापवादिका । तथा चात्र पदसंज्ञाऽभावेन पदान्तत्वाभावान्न जश्त्वप्राप्तिरिति सत्यमिति युक्तमिति भावः । स्वव्यतिरिक्तं सर्वमिति द्वितीया ।

**आनन्दः— उपपदस्य भसंज्ञायामिति** । सदित्यस्येत्यर्थः । अन्यथा श्यव(?)संज्ञायां झलां जशोऽन्त इति जश्त्वापत्त्या सद्यमिति स्यात् इति भावः । अवयवार्थकथनादित्यत्रादिशब्देन रूढ्युपपादके हेत्वादिकमादिशब्दं ग्राह्यम् । ननु स्थापनार्थमित्ययुक्तम् । अवयवार्थकथनादिरूप एव व्याख्यानशब्दप्रयोगाभावादित्यत आह **एतदुक्तं भवतीति** । नन्वनुपपत्तेरभावात्स्थापनमयुक्तमित्यत अनुपपत्तिमाह **प्रकृते चेति** ।

**श्रीनिधि०— यथोक्तमिति** । उपनिषद्भाष्ये भगवत्पादैः इति शेषः । सुप्तिङन्तं पदमिति पदसंज्ञाप्राप्तेराह **छन्दस्युभयथेति** ।

**श्०वा०—** सद्भावशब्दस्य सत्तार्थताभ्रान्तिपरिहारायाह **सद्भावो जन्मेति** । कुतः सत्तावाचिनस्तस्य तत्परित्यागेन जन्मार्थत्वमित्यतो गीताभाष्यसम्मत्या तत्समर्थयते **यथोक्तमिति** । सप्तदशाध्याये सद्भावे साधुभावे चैतच्छ्लोकव्याख्यानावसर इत्यर्थः । प्रागसतः सत्तापादानं प्रजननमित्यर्थः । यद्यपि सद्भावशब्दः सत्तामात्रवाची तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात्सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुमुक्तमित्यनुक्त्वा सूचितमित्युक्तमित्यवधेयम् । **कप्रत्यय इति** । उपलक्षणं चैतत् । आतो लोप इटि चेत्याकारलोपे च सतीत्यपि द्रष्टव्यम् । ननु झलां जशोन्त इत्यनेन जश्त्वापत्त्या सद्यमिति भवितव्यं, सत्यमिति तु कथमित्यत आह **छन्दस्युभयथेति** । अत्रायस्मयादीति छन्दसीत्युपपदस्य भसंज्ञायामित्येवं पाठः स्वरसत्वात् प्रायिकत्वात् 'सत्ततेर्यातनाच्चैवे'ति सत्यशब्दव्याख्यानपरचतुर्थपादीयानुव्याख्यानव्याख्यानपर 'अयस्मयादीति छन्दसी'ति भसंज्ञास्मरणाज्जश्त्वाभाव इति सार्वत्रिकटीकाकारीयोत्तरग्रन्थानुसारित्वाच्चेति द्रष्टव्यम् । छन्दस्युभयथेति क्वाचित्कपाठे त्वयमर्थः । यद्यपि तृतीयाध्यायस्थस्य छन्दस्युभयथेत्यस्य सार्वधातुकार्धधातुकोभयविषयकत्वमेव ।





षष्ठाध्यायगतस्याप्याद्यस्य वृत्तिकृन्मते तिसृचतसृशब्दयोर्नामि दीर्घत्वादीर्घत्वविषयत्वमेव । हरदत्तादिमते त्वविशेषेण नामि दीर्घत्वादीर्घत्वविषयत्वमेव । तत्स्थस्यैव द्वितीयस्य तस्य तु भूसुधियोर्यणादेशनिषेधापवादकतयेङ्यणादेशोभयविषयत्वमेव न तूभयपदसंज्ञोभयविषयत्वमिति न तदुभयोदाहरणमिदं सम्भवति तथाऽप्ययस्मायदीनि छन्दसीति सूत्रीयस्य छन्दस्युभयसंज्ञान्यपीति वक्तव्यमिति वार्तिकस्यार्थानुवादोऽयम् । तथा च छन्दसि भत्वपदत्वयोः समावेशस्य वार्तिककृता क्वचिदङ्गीकारादुपपदस्य भसंज्ञायां जश्त्वाभाव उपपद्यत इति । अत एव चतुर्थपादे 'सच्च त्यच्चाभवदि'त्येतद्ग्रन्थव्याख्यानावसरे 'अयस्मयादीनि छन्दसी'ति भसंज्ञाश्रयणाज्जश्त्वाभाव इति ग्रन्थकृद्वक्ष्यतीति द्रष्टव्यम् ।

नन्वेवमुक्तार्थस्थापकत्वप्राप्तावपि न तद्व्याख्यानत्वप्राप्तिरवयवार्थकथनादिरूपत्वस्यैव तत्र तन्त्रत्वात्प्रयोजनाभावेन स्थापनस्याप्यकर्तव्यत्वाच्चेत्यत आह **एतदुक्तं भवतीति** ।

**वा०र०**— उक्तभाष्यस्थसूचितपदतात्पर्यतट्टीकोक्तरीत्याह **यद्यपीति** । **स्वरसत्वादिति** । भसंज्ञारूपप्रकृतोपयुक्तार्थसमर्पकत्वं तत्सूत्रस्यास्तीति तथापाठस्य सङ्गतत्वादित्यर्थः । प्रायिकत्वं च पाठान्तरापेक्षया बहुपुस्तकगतत्वम् । **सत्यशब्देति** । सच्च यच्चेति श्रुतिस्थेति शेषः । इत्यादिनाध्यायेनेत्यतन्मूलटीकाप्रपञ्चे प्रागेवैतत्सूत्रविवेचनं कृतमस्ति तदत्रापि ज्ञेयम् । सार्वधातुकार्धधातुकोभयविषयकत्वमेवेति । धात्वधिकारोक्तप्रत्ययच्छन्दसि उभयसंज्ञा भवतीति तद्व्याख्याय 'वर्धन्तु त्वा सुष्टुतय' इत्यत्रत्य 'वर्धयन्तु' इत्यर्थकवर्धन्तु त्वेतच्छब्दे 'णेरनिटी'ति आर्धधातुके परतो विहितोऽपि णिलोपः सार्वधातुकरूपतिङ्यपि स्वीकृतः । तेन तत्रार्धधातुकसंज्ञापि स्वीकार्या तथा स्वस्तये तार्क्ष्यमित्यत्रास्तेभूरित्यनेन भूरादेशो न भवति । अर्धधातुके परतो विहितोऽपि सः प्रकृते परतो विद्यमानस्यार्धधातुकत्वतत्सार्वधातुकत्वस्यापि स्वीकारेण न भवतीति वाच्यमिति सार्वधातुकसंज्ञातिङ्शिदन्यतयार्धधातुकस्यापि क्तिनः स्वीकार्येति च तत्सूत्रव्याख्यातृभिः प्रतिपादनादिति भावः । तृतीयस्यान्ते सूत्रमिदम् । **आद्यस्येति** । षष्ठस्य तुरीय एव प्रथमतो विद्यमानस्येत्यर्थः । **वृत्तिकृदिति** । तेन तिसृणां मध्यन्दिने तिसृणां मध्यन्दिने चतसृणां मध्यन्दिन इत्यादौ **न तिसृचतस्रिति** । पूर्वसूत्रप्राप्तनियमाभावार्थं तिसृचतसृशब्दयोरेव नामिदीर्घविकल्पविधिपरतया योजनादिति भावः । **हरदत्तेति** । अविशेषणे तु विकल्पो दृश्यते । अयं पितॄणामग्निः धाता धातृणामिति तैत्तरीयके ह्रस्वः । बह्वृचे दीर्घ इति मञ्जर्यामुक्तेस्तदनुसारिणां च तथोक्तेरिति भावः । **तत्स्थस्यैव** षष्ठाध्यायगतस्यैवेत्यर्थः । इयङित्युवङप्युपलक्षणया ग्राह्यः । तथा च भूशब्दे उवङ्यणादेशविषयत्वम् । सुधीशब्दे तु इयङ्यणादेशविषयत्वमिति विवेकः । वनेषु चित्रविश्वं विशेविशे । विभुवम् । सुध्योहव्यमग्ने । सुधियो हव्यमित्युदाहरणं काशिकादावुक्तमिति भावः । क्वचिदङ्गीकारात् । अत एवोपदेशेऽजननुनासिक इति सूत्रे कुत्वाभावार्थं भत्वाश्रयणीये अयस्मयादीनीति सूत्रीयच्छन्दस्युभयसंज्ञान्यपीति वार्तिकमालम्ब्यैव तदाश्रितमिति शेष्यादौ स्पष्टम् । यच्चायस्मयादीनि च्छन्दसीत्युपपदस्य भसंज्ञायामिति पाठेऽपि तत्सूत्रस्थोक्तवार्तिकस्मरणार्थमेव सूत्रोदाहरणमिति तात्पर्यमन्यथाख्यातौ कथितम् । तदसत् । आनुमानिकपादीयानुव्याख्यानमयस्मयादीनि च्छन्दसीति भसंज्ञास्मरणाज्जस्त्वीभाव इत्येवोक्तत्वेन तद्वदेवायोमयेत्यादिरूप-





व्यावर्तनाय प्रवृत्तायस्मयादीनीत्यनेनैव भत्वसम्पादनसम्भवे तत्परित्यागेन तत्सूत्रोक्तवार्तिकस्मरणार्थत्वस्या-वक्तव्यत्वात् । वार्तिकवैय्यर्थ्यं तु सूत्रार्थस्पष्टीकरणार्थत्वेनोभयं समाधेयम् । उक्तं च प्रागुभयसंज्ञाकार्यं यत्र सऋक्तागमेनेत्यादौ दृश्यते तत्रोभयसंज्ञार्थं तद्वार्तिकमेतदित्यस्माभिः । न चात्र संज्ञाद्वयकार्यमानमानन्दमय इत्यादेत्यत्रेवास्तीत्यास्तां तावत् । इदं दूषणग्रन्थे निवेश्यम् । **व्याख्यानावसर इति** । 'सत्ततेर्यातनाच्चैवे'ति पूर्वोदाहृतानुव्याख्यानव्याख्यानावसर इति प्रागुक्तं पूरणीयम् ।

**विठ्ठल०— यथोक्तमिति** । गीताभाष्ये इत्यर्थः । कर्मणीति कर्मकारके सच्छब्दे उपपदे अन्तर्णीत-ण्यर्थात् 'या प्रापण' इत्यस्मात् धातोरातोनुपसर्गे कः, अनुपसर्गे कर्मण्युपपदे आकारान्ताद्धातोः कप्रत्ययो भवतीति । कप्रत्यये लशक्वतद्धिते इति ककारलोपे आतो लोप इटि चेति धात्वाकारलोपे च सत्यमिति भवति । ननु 'झलां जशोन्ते' पदान्ते वर्तमानानां झलां जशः (सः) स्युरिति तकारस्य दकारादेशे सद्यमिति स्यात् सत्यमिति तु कथम् इत्यत उक्तं **छन्दस्युभयथेत्युपपदस्य भसंज्ञायामिति** । अयस्मदादीनि छन्दसि विषये भसंज्ञानि भवन्तीत्यत्र क्वचिदुभयमपि भवतीति वार्तिकं तस्यायमर्थानुवादः । तथा च अयस्मदादेः आकृतिगणत्वेन सत्यशब्दस्यापि तत्र गणनेन भसंज्ञाप्राप्तापदान्तत्वाभावेन जशादेशाभावात् सत्यमिति रूपसिद्धिरिति भावः । अयस्मदादीनि छन्दसीत्युपपदस्य भसंज्ञायाम् इति क्वचित्पाठः । तत्रापि वार्तिकस्मारणार्थमेव सूत्रोदाहरणम् इति ज्ञेयम् । अवयवार्थकथनाद्यभावात् न व्याख्यानत्वमिति शङ्किते स्थापनायेत्युक्त्या कथं परिहारो लभ्यत इत्यत आह **इदमुक्तं भवतीति** । कथं ब्रह्मैव कारणम् आत्मन आकाशः सम्भूतः इति मूलकारणत्वात् किञ्च अन्तर्नियामको हरिश्चाकाशशब्दोक्त इत्यादिवक्ष्यमाणरीत्या 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः' इति सूत्रे प्रतिपादनाच्चाकाशवाय्वाद्यन्तर्गतब्रह्मैव वाय्वग्न्यादिभूतकारणं, साक्षादपि च वाय्वादिकारणाकाशसत्ताप्रतीति-कारणत्वशक्त्यादीनामपि भगवदधीनत्वाच्च । ब्रह्मैव तज्जनकमिति भावेनाह **महाभूतानामपि ब्रह्मैव कारण-मित्यादि** । अस्तेरिति जीवनार्थकस्य 'असभुवी'ति धातोः शतृप्रत्यये श्नसोरल्लोप इत्यकारलोपे 'सत्' इति रूपम् । तथा विशीर्णतार्थकात् 'षदॢविशरण' इति धातोः क्विप्रत्यये क्विपः सर्वापहारित्वात् लोपे सदिति भवति । तथा च भावप्रधानतया सत्त्वं उक्तोभयविधया यापयतीति सत्यम् इत्यर्थ इति भावः ।

**चषकः—** सद्भावपदस्य सत्तारूपार्थप्रत्यायकताप्रतीतिमवतारयति **सद्भावो जन्मेति** । उक्तार्थे गीताभाष्यं प्रमाणयति **यथोक्तमिति** । सप्तदशाध्याये सद्भावे साधुभावे चेति काशिकाव्याख्यावसर इत्यादिः । असतः सत्तापादनरूपप्रजननमित्यर्थः । सद्भावशब्दस्य सत्तामात्राभिधायकत्वेऽपि प्रकृते ब्रह्मणो जगज्जनकत्व-स्याभिधित्सिततया सत्ताविशेषरूपप्रजननतात्पर्यक एवायं विज्ञायत इति सूचितमित्यनेन ध्वन्यते । **कप्रत्यय इति** । 'आतोनुपसर्गे कः' अनुपसर्गे कर्मवाचके उपपदे आदन्ताद्धातोः कप्रत्ययो भवतीति । गोदः कंबलद इत्यादाविव कप्रत्यये कृते आतो लोप इटि चाजाद्योरार्धधातुकयोः क्ङिदिहोः परयोरातो लोपः स्यादित्याकारलोपे च सतीत्यर्थः । ननु झलां जशोऽन्त इति जश्त्वप्रसङ्गेन सद्यमिति भवितव्यमिति सत्यमिति कथं निष्पद्येतेत्यत





आह **अयस्मयादीनीति** । छन्दस्युभयथेत्यपि क्वाचित्कः पाठस्तु सत्ततेर्यातनाच्चैवेति सत्यपदव्याख्यानरूपतुरीयपादीयानुव्याख्याप्रतीकार्थापनपरा । अयस्मयादीनि छन्दसीति भसंज्ञास्मरणाज्जश्त्वाभाव इति सकलकोशगतोत्तरग्रन्थाननुरोधादप्रायिकत्वाच्च न स्वरस इति व्याचक्षाणाः ।

**॥ इति 'सृष्टिप्रकरणेन सत्यत्वमुक्तम्' इत्युक्तेः स्पष्टीकरणम् ॥**

* * *

**॥ अथ युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वसमर्थने**
**'अन्नमयप्रकरणं सत्यशब्दार्थः' इत्युक्तेः स्पष्टीकरणम् ॥**

४६ सु०— अन्नमयप्रकरणं सत्यशब्दार्थ इत्युक्तं, तत्कथमित्यत आह **सत्त्वमिति** ।

अनु०— सत्त्वं जीवनमेव च ।
विशीर्णता च सत्त्वं स्यात्सन्नमित्याहुरेव यत् ॥

न केवलं जन्मैव सच्छब्दार्थः, किन्तु **जीवनं च** प्राणधारणलक्षणं **सत्त्वमेव** सच्छब्दप्रवृत्तिनिमित्तमेव, 'अस्ति देवदत्त' इत्युक्ते जीवतीति प्रत्ययात् ॥ **विशीर्णता च** शैथिल्यलक्षणा **सत्त्वं** सच्छब्दप्रवृत्तिनिमित्तं **स्यात्** । कुतः । **यत्** यस्माद्विशीर्णं वस्तु **सन्नमित्याहुः** । **एव**शब्दः 'षद्लृविशरणगत्यवसादनेष्वि'ति पाठान्मुख्य एवायं प्रयोग इति सूचयति ॥ तथा चास्तेः शत्रन्तस्य सदेः क्विबन्तस्य वा सदिति रूपम् । भावप्रधानं चैतत् । **सत्** सत्त्वं जीवनं विशरणं वा भूतानां **यापयती**ति सत्यमित्युक्तं भवति ।

किमतो यद्येवमित्यत आह **अत इति** ।

अनु०— अतोऽद्यताऽत्तृताऽन्नत्वं सत्यशब्दार्थ एव हि ।

यत एवं सकलभूतानां जीवनविनाशहेतुत्वं सत्यशब्दोक्तम्, **अतः सत्यशब्दार्थ एवान्नत्वम्** अन्नशब्दप्रवृत्तिनिमित्तम् । तत् कथम् । **हि** यस्मात्, उपजीव्यत्वलक्षणा **अद्यता** विनाशकत्वलक्षणा **अत्तृता** च तदिति ।





**परि०— अस्तेः शत्रन्तस्येति** । 'अस भुवी'त्यस्य शतृप्रत्यये 'श्नसोरल्लोप' इत्यकारलोपे सदिति रूपमिति भावः ।

**गु०दी०— विशीर्णता च शैथिल्यलक्षणा** इत्यनेन धातूक्तं विशरणमवयवशैथिल्यापरपर्यायमिति सूचयति ।

**यादु०— अस्तेः शत्रन्तस्येति** । अत्र श्नसोरल्लोप इत्यकारलोपे द्रष्टव्यः ।

**वं०प०— अस्तेः शत्रन्तस्येति** । अस भुवि अस्मात् शतृप्रत्यये शकारऋकारयोर्लोपे अस् अत् इति स्थिते 'श्नसोरल्लोपः' इति अस् इत्यत्रत्याकारस्य लोपे स् अत् सदिति रूपम् । जीवनवदित्यर्थः । **सदेरिति** । षद्लृ विशरणेत्यदिधातोः क्विपि तस्य लोपे सति भवति । सन्नमिति तदर्थः । **भावप्रधानं चैतदिति** । सदिति पदं धर्मविशेष्यकप्रतीतिजनकमित्यर्थः । भावप्राधान्यं दर्शयति **सत्त्वमिति** । जीवनमेव भावो जीवनवतो विशरण-मेवेत्यर्थः । **उपजीव्यत्वलक्षणाद्यतेति** । जीवनहेतुत्वमित्यर्थः ।

**आनन्दः**— एवचशब्दयोर्भिन्नक्रमेणान्वयमाह **किंत्विति** ।

**श्रीनिधि०— शैथिल्यलक्षणेति** । यस्यामवस्थायां प्राप्तायां सर्वथा जीवनसम्भावनैव नास्ति सा शैथिल्यमित्युच्यते । **भावप्रधानं चैतदिति** । अन्यथा सद्यापयति । सत्त्ववत् यापयतीति असङ्गतमेव स्यात् । सहस्रशीर्षा पुरुष इत्यादौ प्रकृतपुरुषस्य तमिति परामर्शादिति । तमेवमित्यस्य यजुर्वेदपुरुषसूक्तशेषत्वादिति भावः । यतः पैङ्गिश्रुतिः पुरुषशब्दस्य भगवदेकवाचितामाह । तेन नान्यज्ज्ञानाद्विमुच्यत इत्येतत् अप्रयोजक इत्यन्तं मध्ये अपेक्षितं अध्याहृत्य पूरयति । तमेवं विद्वानित्यस्य प्रकृतपुरुषपरामर्शकत्वादिति भावः ।

**शे०वा०— अस्तेः शत्रन्तस्येति** । तथा चास् भुवीत्यस्माल्लटि तस्य लटः शतृशानचाविति शतरि श्नसोरल्लोप इति धात्वकारलोपे च सदिति रूपसिद्धिरिति भावः ।

**वा०र०— श्नसोरल्लोप इतीति** । श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङितीति सूत्रार्थः । श्रौतसच्छब्दस्योक्तव्युत्पत्त्या । धर्मिपरत्वात्सत्त्वं जीवनमिति धर्मार्थिकृतव्याख्यानायोग इत्यत आह मूले **भावप्रधानं चैतदिति** । एवमुत्तरत्रापि । तथा 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ' इत्याद्यनुव्याख्यानादिति । तं व्याख्यानं च भावप्रधानत्वाश्रयणेनेति ज्ञातव्यम् । उक्तं चैतन्मिथ्याशब्दोऽनिर्वचनीयं वदतीत्येतत् तत्त्वोद्योतटीकागतान्त्यताभावप्रतियोगित्वस्वरूपस्यासत्त्वस्यासत्त्वादित्येतदुपपादनावसरेऽस्माभिः । भूतानि यापयतीति द्वितीयान्तरपाठो मूले । यातेर्धातोर्द्विकर्मकत्वात् । अत एव पूर्वं सर्वमिति द्वितीयान्तं पूरितम् । एवमन्यत्र ।

आह **अयस्मयादीनीति** । छन्दस्युभयथेत्यपि क्वाचित्कः पाठस्तु सत्ततेर्यातनाच्चैवेति सत्यपदव्याख्यानरूपतुरीयपादीयानुव्याख्याप्रतीकार्थापनपरा । अयस्मयादीनि छन्दसीति भसंज्ञास्मरणाज्जश्त्वाभाव इति सकलकोशगतोत्तरग्रन्थाननुरोधादप्रायिकत्वाच्च न स्वरस इति व्याचक्षाणाः ।

**॥ इति 'सृष्टिप्रकरणेन सत्यत्वमुक्तम्' इत्युक्तेः स्पष्टीकरणम् ॥**

* * *

**॥ अथ युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वसमर्थने 'अन्नमयप्रकरणं सत्यशब्दार्थः' इत्युक्तेः स्पष्टीकरणम् ॥**

४६ **सु०**— अन्नमयप्रकरणं सत्यशब्दार्थ इत्युक्तं, तत्कथमित्यत आह **सत्त्वमिति** ।

**अनु०**— सत्त्वं जीवनमेव च ।
विशीर्णता च सत्त्वं स्यात्सन्नमित्याहुरेव यत् ॥

न केवलं जन्मैव सच्छब्दार्थः, किन्तु **जीवनं च** प्राणधारणलक्षणं **सत्त्वमेव** सच्छब्दप्रवृत्तिनिमित्तमेव, 'अस्ति देवदत्त' इत्युक्ते जीवतीति प्रत्ययात् ॥ **विशीर्णता च** शैथिल्यलक्षणा **सत्त्वं** सच्छब्दप्रवृत्तिनिमित्तं **स्यात्** । कुतः । **यत्** यस्माद्विशीर्णं वस्तु **सन्नमित्याहुः** । **एव**शब्दः 'षद्लृविशरणगत्यवसादनेष्वि'ति पाठान्मुख्य एवायं प्रयोग इति सूचयति ॥ तथा चास्तेः शत्रन्तस्य सदेः क्विबन्तस्य वा सदिति रूपम् । भावप्रधानं चैतत् । **सत्** सत्त्वं जीवनं विशरणं वा भूतानां **यापयतीति** सत्यमित्युक्तं भवति ।

किमतो यद्येवमित्यत आह **अत इति** ।

**अनु०**— अतोऽद्यताऽत्तृताऽन्नत्वं सत्यशब्दार्थ एव हि ।

यत एवं सकलभूतानां जीवनविनाशहेतुत्वं सत्यशब्दोक्तम्, **अतः सत्यशब्दार्थ एवान्नत्वम्** अन्नशब्दप्रवृत्तिनिमित्तम् । तत् कथम् । **हि** यस्मात्, उपजीव्यत्वलक्षणा **अद्यता** विनाशकत्वलक्षणा **अत्तृता** च तदिति ।





**परि०— अस्तेः शत्रन्तस्येति** । 'अस भुवी'त्यस्य शतृप्रत्यये 'श्नसोरल्लोप' इत्यकारलोपे सदिति रूपमिति भावः।

**गु०दी०— विशीर्णता च शैथिल्यलक्षणा** इत्यनेन धातूक्तं विशरणमवयवशैथिल्यापरपर्यायमिति सूचयति।

**यादु०— अस्तेः शत्रन्तस्येति**। अत्र श्नसोरल्लोप इत्यकारलोपे द्रष्टव्यः।

**वं०प०— अस्तेः शत्रन्तस्येति** । अस भुवि अस्मात् शतृप्रत्यये शकारऋकारयोर्लोपे अस् अत् इति स्थिते 'श्नसोरल्लोपः' इति अस् इत्यत्रत्याकारस्य लोपे स् अत् सदिति रूपम्। जीवनवदित्यर्थः। **सदेरिति**। षद्लृ विशरणेत्यदिधातोः क्विपि तस्य लोपे सति भवति । सन्नमिति तदर्थः । **भावप्रधानं चैतदिति** । सदिति पदं धर्मविशेष्यकप्रतीतिजनकमित्यर्थः । भावप्राधान्यं दर्शयति **सत्त्वमिति** । जीवनमेव भावो जीवनवतो विशरण-मेवेत्यर्थः । **उपजीव्यत्वलक्षणाद्यतेति** । जीवनहेतुत्वमित्यर्थः ।

**आनन्दः**— एवचशब्दयोर्भिन्नक्रमेणान्वयमाह **किंत्विति** ।

**श्रीनिधि०— शैथिल्यलक्षणेति** । यस्यामवस्थायां प्राप्तायां सर्वथा जीवनसम्भावनैव नास्ति सा शैथिल्यमित्युच्यते । **भावप्रधानं चैतदिति** । अन्यथा सद्यापयति । सत्त्ववत् यापयतीति असङ्गतमेव स्यात् । सहस्रशीर्षा पुरुष इत्यादौ प्रकृतपुरुषस्य तमिति परामर्शादिति । तमेवमित्यस्य यजुर्वेदपुरुषसूक्तशेषत्वादिति भावः । यतः पैङ्गिश्रुतिः पुरुषशब्दस्य भगवदेकवाचितामाह । तेन नान्यज्ञानाद्विमुच्यत इत्येतत् अप्रयोजक इत्यन्तं मध्ये अपेक्षितं अध्याहृत्य पूरयति । तमेवं विद्वानित्यस्य प्रकृतपुरुषपरामर्शकत्वादिति भावः ।

**शे०वा०— अस्तेः शत्रन्तस्येति** । तथा चास् भुवीत्यस्माल्लटि तस्य लटः शतृशानचाविति शतरि श्नसोरल्लोप इति धात्वकारलोपे च सदिति रूपसिद्धिरिति भावः ।

**वा०र०— श्नसोरल्लोप इतीति** । श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङितीति सूत्रार्थः । श्रौतसच्छब्दस्योक्तव्युत्पत्त्या । धर्मिपरत्वात्सत्त्वं जीवनमिति धर्मार्थकृतव्याख्यानायोग इत्यत आह मूले **भावप्रधानं चैतदिति** । एवमुत्तरत्रापि । तथा 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ' इत्याद्यनुव्याख्यानादिति । तं व्याख्यानं च भावप्रधानत्वाश्रयणेनेति ज्ञातव्यम् । उक्तं चैतन्मिथ्याशब्दोऽनिर्वचनीयं वदतीत्येतत् तत्त्वोद्योतटीकागतान्त्यताभावप्रतियोगित्वस्वरूपस्यासत्त्वस्यासत्त्वादित्येतदुपपादनावसरेऽस्माभिः । भूतानि यापयतीति द्वितीयान्तरपाठो मूले । यातेर्धातोर्द्विकर्मकत्वात् । अत एव पूर्वं सर्वमिति द्वितीयान्तं पूरितम् । एवमन्यत्र।





**चषकः— अस्तेः शत्रन्तस्येति** । असभुवीति धातुव्याख्यानात्सत्तार्थादस्तेर्लटः शतृशानचावप्रथमा समानाधिकरण इति तस्य शत्रादेशे श्नसोरल्लोप इति इतिधात्ववयवाकारालोपे च सदिति सेत्स्यतीति भावः ।

**॥ इति 'अन्नमयप्रकरणं सत्यशब्दार्थः' इत्युक्तेः स्पष्टीकरणम् ॥**

* * *

**॥ अथ युक्त्यन्तरेणापि अन्नमयादिपश्नानामपि परब्रह्मत्वसमर्थने**
**'प्राणमयप्रकरणं सत्यशब्दार्थः' इत्युक्तेः स्पष्टीकरणम् ॥**

४७ **सु०—** प्राणमयप्रकरणं च सत्यशब्दार्थ इत्युक्तम्, तत्कथमित्यत आह **प्राणमिति** ।

**अनु०—** प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ॥
आयुः प्राणो हि भूतानामिति यद्गतिजीवने ।
उक्ते सदिति धात्वर्थो गतिश्चातो हि सत्यता ॥
प्राणत्वं

**देवा** आदयः **प्राणं** परमात्मानम् **अनु** तत्प्रेरणया **प्राणन्ति** चेष्टन्ते । स **प्राणः** परमात्मा सर्वेषाम् **आयुः** जीवनहेतुश्चातोऽसौ प्राण उच्यत, **इति** मन्त्रेण प्राणन्ति प्रवर्तन्ते जीवन्ति वा सर्वभूतान्यनेनेति प्राणशब्दार्थतया **गतिजीवने** भूतानां गतिजीवन-प्रदत्वमिति यावत्, उक्ते, **यत्** यस्मात् । यतश्च **सदिति धात्वर्थो** गतिर्जीवनं चास्ति धात्वर्थः । ताभ्यां च शतरि क्विपि च कृते सदिति भवति । तच्च भावप्रधानं विवक्षित्वा **'सत्** सत्त्वं गतिं जीवनं वा भूतानां **यापयती'**ति सत्यशब्दोऽपि गतिजीवनप्रदत्वमाह । **अतः सत्यता प्राणत्वं** सत्यप्राणशब्दयोरेकार्थत्वमिति व्याख्येयम् ।

अनेनान्नमयप्राणमयप्रकरणे सत्यशब्दार्थप्रपञ्चनेन तद्व्याख्याने इत्युक्तं भवति ।

**गु०दी०—** अनधातोश्चेष्टाजीवनार्थकत्वेऽपि सच्छब्दे तावर्थावानेतुं प्रनाडीमाह **सदिति धात्वर्थो गतिर्जीवनं चास्ति धात्वर्थ इति** ।





**यादु०— प्राणन्ति प्रवर्तन्त इति** । अन चेष्टायामिति धातोरिति भावः । **जीवन्ति वेति** । धातूनामनेकार्थत्वादिति भावः । यथोक्तम् । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । 'प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति ।

**वं०प०— ताभ्यां** षदॢ विशरणगत्यवसादनेषु अस् भुवीति धातुभ्याम् । अस्तेः शतरि सदेक्किपि चेति विवेकः रूपसिद्धिः पूर्वोक्तैव । **सत्त्वं गतिमिति** । प्रवर्तकत्वं चेष्टकत्वम् । गतिमतो जीवनवतश्च भावो गतिजीवने एवेति भावः ।

**आनन्दः— अनेनेति** । सत्यान्नप्राणशब्दानामेकार्थताकथनेनेत्यर्थः ।

**शे०वा०— प्राणन्ति चेष्टन्त इति** । अन चेष्टायामिति धातोरिति भावः । **प्रवर्तन्त इति** । उक्तधातोरिति भावः । **जीवन्ति वेति** । धातूनामनेकार्थत्वादिति भावः । **सदिति धात्वर्थो गतिरिति** । षदॢविशरणगत्यवसादनेष्विति धातोरिति भावः । **अस्ति धात्वर्थ इति** । अस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययादिति भावः । **ताभ्यां चेति** । नात्र यथाक्रमं सम्बन्धः किं त्वस्तेः शतरि सदेः क्विपि चेति यथायोग्यमेवेति ध्येयम् ।

**वा०र०—** सत्त्वमन्नत्वमित्यत्र सच्छब्दप्रवृत्तिनिमित्तमित्यर्थः । कथितस्ततो विलक्षणतया सत्यता प्राणत्वमित्येतद्व्याख्याति **सत्यप्राणशब्दयोरेकार्थत्वमिति** मूलम् । **इत्याह ज्ञानेतीति** प्रतीकोपादानपाठः । नाल्पे सुखमित्याद्यनुव्याख्यानमाकाङ्क्षाक्रमेण योजयति **नानन्दमयेत्यादिना** मूले ।

**विठ्ठल०— जीवन्ति वेति** । प्राणशब्दस्य अन चेष्टायाम् इति धातुनिष्पन्नत्वेऽपि धातूनामनेकार्थत्वाभिप्रायेणैवमुक्तमिति ध्येयम् । यथोक्तं 'क्रियावाचित्वमाख्यातुं एकैकोऽर्थः प्रदर्शितः । प्रयोगतोऽनुगन्तव्याः अनेकार्था हि धातवः' इति ।

**चषकः— प्राणन्ति चेष्टन्त इति** । अन चेष्टायामिति धातुव्याख्यानादिति भावः । जीवन्ति चेति बह्वर्था अपि धातवो भवन्ति तद्यथा वपिः प्रकिरणे दृष्टः छेदने चापि वर्तते । केशश्मश्रु वपतीत्यादिभाष्योक्तेरिति भावः । **सदिति धात्वर्थो गतिरिति** । षदॢविशरणगत्यवसादनेष्विति धातुव्याख्यानादिति भावः । **अस्ति धात्वर्थ इति** । अस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययादिति प्रागभिहितत्वादिति भावः । **ताभ्यामिति** । अस्तेः शतरि सदेः क्विपि चेति यथायोग्यमेव योजनीयं न यथाक्रमम् ।

**॥ इति 'प्राणमयप्रकरणं सत्यशब्दार्थः' इत्युक्तेः स्पष्टीकरणम् ॥**

* * *

**॥ अथ युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वसमर्थने 'मनोमयप्रकरणं ज्ञानशब्दार्थः' इत्युक्तेः स्पष्टीकरणम् ॥**

**४८ सु०—** ज्ञानशब्दार्थो मनोमयप्रकरणमित्युक्तम्, तत्कथमित्यत आह **अवबोधार्थ इति ।**

**अनु०— अवबोधार्थो मनुधातुः प्रकीर्तितः ।**

**प्रकीर्तितो** 'मनु अवबोधन' इति व्याख्यातः । ततश्च **तस्माद्भावेऽसुन्प्रत्यये विहिते मन इति ज्ञानमिति चैकार्थता भवति ।**

**विज्ञानमयप्रकरणस्य ज्ञानशब्दार्थत्वं स्पष्टमेवेति न प्रपञ्चितम् ।**

**अत्र ज्ञानं ब्रह्मेति लक्षणेऽभिहिते सकलचेतनसाधारण्यादलक्षणमेतदित्याशङ्कायां नावबोधमात्रं ज्ञानमिह विवक्षितं किन्तु सकलपदार्थसामान्यविशेषाकारविषयमित्यतो नातिव्याप्तिरित्याभ्यां प्रकरणाभ्यां लक्षणस्यातिव्याप्तिपरिहाराय प्रपञ्चनं कृतमिति ।**

**वं०प०— तस्माद्भाव इति ।** मन्धातोर्भावे असुन्प्रत्यये नकारलोपे मन् अस् मनस् इति प्रातिपदिकं सिद्ध्यति । न प्रपञ्चितमाचार्यैरिति शेषः । ननु तर्हि स्पष्टत्वे ब्रह्मवल्ल्यां मनोमयविज्ञानमयप्रकरणाभ्यां ज्ञानत्वं कस्मात्प्रपञ्चितमित्यत आह **ज्ञानं ब्रह्मेतीति । सकलपदार्थेति ।** तद्गतेत्यर्थः ।

**आनन्दः—** ज्ञानं ब्रह्मेति लक्षणं मनोमयविज्ञानमयप्रकरणाभ्यां प्रपञ्चनं न कर्तव्यं सत्यमित्यादाविवानुपपत्तेरभावादित्यतोऽनुपपत्तिमाह **ज्ञानं ब्रह्मेतीति ।**

**शे०वा०—** ननु मनोमयविज्ञानमयप्रकरणयोः ज्ञानशब्दावयवार्थकथनादिरूपत्वाभावात् कथं तद्व्याख्यानत्वमित्यतस्तदभावेऽप्युक्तलक्षणातिव्याप्तिनिरासेनोक्तलक्षणव्यवस्थापकत्वाद्युक्तं व्याख्यानत्वमित्याह **ज्ञानमिति ।**

**॥ इति 'मनोमयप्रकरणं ज्ञानशब्दार्थः' इत्युक्तेः स्पष्टीकरणम् ॥**

* * *





**॥ अथ युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वसमर्थने**
**'आनन्दमयप्रकरणेन अनन्तत्वं व्याख्यातम्' इत्युक्तेः स्पष्टीकरणम् ॥**

४९ **सु०—** आनन्दमयप्रकरणेनानन्तत्वं व्याख्यातमित्यभिहितम्, तत्कथमित्यत आह नाल्प इति ।

**अनु०— नाल्पे सुखमिति प्रोक्त्यैवानन्दमयतोक्तितः ॥**
**अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पके ।**

नानन्दमयप्रकरणमनन्तपदनिर्वचनरूप(पर)त्वादिना रूपेण तद्व्याख्यानम्, किं नाम अनन्तत्वलक्षणस्य असं(भवा)भावनाशङ्कायाम् **आनन्दमयतोक्त्या अनन्तत्वं सुनिर्णीतम्** उपपादितम्, परमेश्वरोऽनन्तः पूर्णानन्दत्वादिति ।

ननु साध्यसाधनयोः क्वाप्यदर्शनेन व्याप्त्यभावात् कथमेतत् । मैवम् । **'नाल्पे सुखमस्ति' इति** श्रुत्युक्त्या **हि** यस्मात् **अल्पके** अन्तवति **पूर्णानन्दो न** अस्तीति निश्चीयते । व्यतिरेकव्याप्तिरस्तीत्यर्थः । नन्वनन्तत्ववत्पूर्णानन्दोऽप्यसिद्ध एव । सत्यम् । अत एव 'को ह्येवान्यादि'त्यादिनोपपादयति श्रुतिः । उक्तं चैतत् 'आनन्दमयवाचाऽपी'ति ।

**परि०—** नन्वनन्तत्वमानन्दमयप्रकरणेन विव्रियत इत्युक्तं, तदयुक्तम् । को हीत्यस्य हेत्वसिद्धिनिरासकस्य तत्प्रकरणेऽभावात् । तेन विनाऽनन्तत्वलक्षणोपपादनाभावादित्यत आह **उक्तं चैतदिति** । आनन्दमयवाचाऽपीत्यपिपदेन तदुत्तरवाक्यसमुच्चायकेनानन्दमयप्रकरणेन तदुत्तरवाक्यैश्चानन्तत्वमुदाहृतमिति प्रागेवोक्तमेतदित्यर्थः ।

**यादु०—** नन्वेवमानन्दमयप्रकरणमनन्तत्वस्योपपादकमित्युक्तम् । को ह्येवान्यादित्यादिवाक्यस्य तद्गतत्वाभावादित्यत आह **उक्तं चैतदिति** । एवमुत्तरवाक्यानामप्यनन्तत्वोपपादकत्वमपिशब्देन पूर्वमुक्तं नानन्दमयप्रकरणमात्रस्येत्यर्थः । ये प्राणं ब्रह्मोपासत इत्यादिनेत्यत्रादिपदेन 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन', 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति', 'शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते', 'अभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवती'ति वाक्यानां सङ्ग्रहः ।

**वं०प०— अनन्तत्ववदिति** । साध्यवद्धेतोरपि सन्दिग्धत्वात्कथं पूर्णानन्दत्वं हेतुरिति भावः । उत्तरमाह **अत एवेति** । पूर्णानन्दत्वहेतोरसिद्धत्वादेवेत्यर्थः । एवं च को ह्येवान्यादिति वाक्येन पूर्णानन्दत्वस्योपपादितत्वा-





दनन्तत्वोपपादकत्वं युक्तमित्याशयः । ननु तर्हि को ह्येवान्यादित्यस्य वाक्यस्य पूर्णानन्दत्वोपपादकतया-ऽनन्तत्वोपपादकतया प्राप्ता नानन्दमयप्रकरणस्यैव । अस्य वाक्यस्यानन्दमयप्रकरणादुत्तरत्र सत्त्वेनानन्दमय-प्रकरणान्तर्गतत्वाभावादिति चेन्न । आनन्दमयप्रकरणवदुत्तरवाक्यानामप्यनन्तत्वोपपादकतायाः पूर्वमुक्तत्वा-न्नोक्तदोष इत्याशयेनाह **उक्तं चैतदिति** । अपिपदेनेति शेषः ।

**आनन्दः**— निर्वचनपरत्वादिनेत्यत्रादिपदेन रूढिकथनपरिग्रहः सिद्धस्यैव धर्मस्य हेतूकर्तव्यत्वा-त्पूर्णानन्दत्वस्य चासिद्धत्वाद्धेतूकरणमयुक्तमिति शङ्कते **नन्वनन्तत्ववदिति** । परिहरति **अत एवेति** । असिद्धत्वादेवेत्यर्थः ।

**शे०वा०**— नन्वनन्तत्वं तथाऽऽनन्दमयवाचेत्यानन्दमयप्रकरणस्यानन्तत्वविवरणार्थत्वोक्तेस्तत्राविद्य-मानेन नाल्पे सुखमस्तीति वाक्येन कथं तदुपपादनमित्यतस्तेनानन्दमयप्रकरणस्य तद्विवरणत्वोक्तावप्यानन्दमय-वाचाऽपीत्यपिशब्देन तदुत्तरप्रकरणस्थ 'को ह्येवान्यादि'त्यादिवाक्यानामिव स्थलान्तरस्थ 'नाल्पे सुखमस्ती'ति वाक्यस्यापि सङ्ग्रहेणानन्दमयप्रकरणमात्रस्य तदुपपादकत्वानभ्युपगमाद्युक्तमेतत्प्रकरणस्थस्यापि तस्योपपादक-त्वमित्याह **उक्तं चैतदानन्दमयवाचाऽपीति** । इत्यादिनेत्यादिपदेन 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचने'ति 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते' इत्यभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवतीति मनोमयादिज्ञानान्मोक्षप्रतिपादकवाक्यानां सङ्ग्रहः ।

**वा०र०**— उक्तं चैतदिति वाक्यस्य को ह्येवान्यादित्येतच्छ्रुतिसङ्ग्रहोऽपिशब्देन भाष्ये उक्तं इत्यर्थः । प्रतीयते सन्निधानात् । न चासौ युक्तः । प्रागेवापिपदेनोत्तरवाक्यैरपीति तत्सङ्ग्रहस्य वर्णनात् । किन्तु नाल्प इति व्यवधानेन प्रकृतस्य वाक्यस्य सङ्ग्रहेण वर्णनमेवेदमिति दर्शयन् उत्तरवाक्यव्यावर्त्याशङ्काप्रदर्शनपूर्वकतयोत्तर-वाक्यमवतारयति **नन्वनन्तत्वमिति** । वाचेतीत्यस्येत्यनेनेत्यर्थः । अनन्तत्वविवरणेति पाठः । **तत्रेति** । अपिपदं तु को हीत्युत्तराधिकरणस्थवाक्यसङ्ग्रहार्थतया व्याख्यातमिति भावः । **कथमिति** । व्याप्तिप्रदर्शनमुखेन तदुपपादनमित्यर्थः । **नेनेति वाक्यस्यापि सङ्ग्रहेणेति** । अपिपदेनोत्तरेति पूर्ववाक्ये उपलक्षणया नाल्प इत्येतदपि सङ्ग्राह्यतया अभिप्रेतमिति भावः । मात्रस्येत्युपलक्षणम् । अपिपदोक्त 'को ही'ति वाक्यसहित-तन्मात्रस्य वेत्यपि ज्ञेयम् । **युक्तमिति** । एतेनैवोक्तं चैतदित्यस्यैतच्चोक्तमिति योजना सूचिता । अत एवेत्यादीना-मिवेति दृष्टान्ततयोक्तिः । एवं चात्र परमेश्वरोऽनन्तः पूर्णानन्दवत्वादित्यनुमानमुखेनानन्दमयवाचाऽनन्तत्वोक्ते-रुपपादनम् । हेतोर्व्याप्तिर्नेति शङ्कावारणाय व्यतिरेकव्याप्तिसद्भावदर्शनमुखेन नाल्प इत्यनेनानन्तत्वोपपादनम् । हेतोरसिद्धिरिति शङ्कावारणाय को हीत्यनेन जगत्प्रवृत्त्यन्यथानुपपत्त्या पूर्णानन्दत्वसमर्थनमुखेनानन्तत्वोपपादन-मित्येवं त्रयाणामप्यनन्तत्वाविवरणत्वमनुव्याख्याने सम्मतमेव । तत्रानन्दमयवाचेत्यनेनानन्दमयप्रकरणस्यापि पदेन च पूर्वोक्तरीत्या तदुत्तर'कोहीत्या'देरिव नाल्पे सुखमिति प्रोक्त्यैवेति भाष्यानुसारेण छान्दोग्यस्थानाल्पे सुखमित्यस्यापि सङ्ग्रहोऽभिप्रेतः । पूर्वं तु ब्रह्मवल्लीस्थसृष्ट्यादिषट्प्रकरणानां विनियोगप्रतिपादनप्रसङ्गानुसारेण





आनन्दमयप्रकरणोत्तरको हीत्यादेरेव अपिपदेन सङ्ग्रहो व्याख्यातः । न तु अपिपदार्थस्तावानेवेति भावेनेति न दोष इति ज्ञेयम् । यत्तु को हीत्येतद्वाक्यसङ्ग्रहार्थकतयोक्तं चेत्येतद्व्याख्यानमन्यथाख्यातौ तदप्युक्तरीत्या निरस्तमिति स्पष्टम् । **इत्यादिनेतीति** प्रतीकोपादानानन्तरमादिपदेनानन्दमित्यादिः पाठः । तत्र प्रतीकोपादानानन्तरमवच्छेदक-रेखाभावप्रयुक्तः । इत्यादिनेत्यादिपदेनेतीति पाठः प्रदृश्यते अतः प्रागुपात्तप्रतीकव्यवहितत्वात् तच्छेषत्वाभावाच्च प्रतीकोपादानव्याख्यानयोरेकवाक्यतयोपादानायोग इति शङ्कानवकाश इति ज्ञेयम् ।

**विठ्ठल०**— नन्वेवं तर्हि को ह्येवान्यादित्यादेरेव पूर्णानन्दोपपादनद्वारा अनन्तत्वनिर्णायकत्वेन नानन्दमय-प्रकरणमनन्तत्वोपपादकमिति एतस्यापि आनन्दमयप्रकरणान्तर्भावस्योक्तत्वादित्याह **उक्तं चैतदिति** । 'ये प्राणं ब्रह्मोपासते' इत्यादिना इत्यादिपदेन 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचने'ति, 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते । अभयं प्रतिष्ठां विन्दते अथ सो भयंगतो भवति' इति वाक्यानां ग्रहणम् ।

**।। इति 'आनन्दमयप्रकरणेन अनन्तत्वं व्याख्यातम्' इत्युक्तेः स्पष्टीकरणम् ।।**
**।। इति उत्तरषट्प्रकरणानाञ्चापि मान्त्रवर्णिकपरब्रह्मलक्षणविवृतित्वमेव ।।**
**।। इति युक्त्यन्तरेणापि अन्नमयादिपञ्चानामपि परब्रह्मत्वमेव ।।**

* * *

**।। अथ एतदधिकरणीयस्वपक्षसाधने 'मान्त्रवर्णिकमेव च गीयते' इति चतुर्थसूत्रार्थोपसंहारः ।।**

५० **सु०— सूत्रार्थमुपसंहरति अत इति ।**

**अनु०— अतो हि मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया ।।**
**क्रियते परया यस्मात्**

**अत** इत्युक्तप्रकारेण । **हि**शब्दः प्रसिद्धौ । **तु**शब्दोऽवधारणे । **परया** मन्त्रवर्णादुत्तरया श्रुत्या । तस्मात् 'विष्णुरेवान्नमयादिशब्दवाच्य' इति पूर्वेण सम्बन्धः ।

**वं०प०— मन्त्रवर्णादुत्तरयेति** । सृष्ट्यादिप्रकरणषट्केनेत्यर्थः ।

**।। इति एतदधिकरणीयस्वपक्षसाधने 'मान्त्रवर्णिकमेव च गीयते' इति चतुर्थसूत्रार्थोपसंहारः ।।**
**।। इति आनन्दमयाधिकरणे स्वपक्षसाधनम् ।।**

* * *

**॥ अथ आनन्दमयाधिकरणे परपक्षप्रतिक्षेपः ॥**

**॥ तत्रादौ उत्तरसूत्रचतुष्टये सूत्रकारोक्तः परपक्षप्रतिक्षेपः ॥**

**॥ तत्राप्यादौ 'नेतरोऽनुपपत्तेः' इति पञ्चमसूत्रव्याख्यानम् ॥**

**॥ तत्र आनन्दमयादि पञ्च विष्णोरितरश्चतुर्मुखादिर्न भवति, तस्येतरस्य मुक्तिहेतुज्ञानविषयत्वानुपपत्तेः ॥**

**॥ तदुपपादकतया चादौ 'अन्नमयादिप्रकरणे विष्णिवतरो न कथ्यते, अनुपपत्तेः' ॥**

**॥ 'तमेवं विद्वान्' इति श्रुत्या पुरुषज्ञानादेव मोक्षस्योक्तेः ॥**

**॥ अयश्च पुरुषः 'सहस्रशीर्षा' इति प्रकृतत्वात् विष्णुरेव ॥**

**॥ पुरुषपदवाच्यश्च न विष्णोरितरः सर्वनाम्नामितरत्रैकत्राभावात् ॥**

**॥ 'विष्णुमुद्दिश्य यष्टृभिः ॐ इत्युदाहृत्यैव यज्ञदानादिकरणात् ॐपदवाच्यो विष्णुरेव' इति च युक्तिः ॥**

**॥ 'नारायणमुद्दिश्य यष्टृभिः पुरुषसूक्तेन यजनात् पुरुषपदवाच्यो विष्णुरेव' इति च युक्तिः ॥**

५१ **सु०—** एवम् 'आनन्दमयोऽभ्यासादि'त्यादिसूत्रैः स्वपक्षसाधनं विधाय परपक्षप्रतिक्षेपार्थं सूत्रम् **नेतरोऽनुपपत्तेरिति** ।

**ब्र०सू०— ॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥**

तत्र प्रतिज्ञांशं व्याख्याति **इतर इति** ।

**अनु०— इतरोऽत्र न कथ्यते ।**

**इतरो** जीवो वा शरीरादिकोशो वा प्रकृतिर्वा **अत्र** अन्नमयादिप्रकरणे **न कथ्यते** । कुतः । **अनुपपत्तेः** 'सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते', 'सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासत' इत्यादिनाऽन्नमयादिज्ञानान्मोक्षः प्रतीयते, अन्नमयादिशब्दानां च जीवादिवाचित्वे तदनुपपत्तेरित्यर्थः ।

कुतोऽनुपपत्तिरित्यत आह **पुरुषमिति** ।

**पुरुषं वेत्ति यो मुच्येन्नान्यः पन्था हि विद्यते ॥**
**इति श्रुतेरन्यवेदी कथं मुक्तिं प्रयास्यति ।**

अनेन 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' इति श्रुतिं सूचयति ।





नन्वत्र तमित्युच्यते न विष्णुमिति । मैवम् । सहस्रशीर्षा पुरुष इत्यादौ प्रकृतपुरुषस्य तमिति परामर्शादित्यभिप्रेत्योक्तम् **पुरुषमिति** । **यत्**शब्दश्रवणात् स इति द्रष्टव्यम् । **मुच्येत्** मुच्येत, 'व्यत्ययो बहुलमि'ति वचनात् । **अन्यः** परमपुरुषज्ञानात् **पन्था मोक्षस्य** । **हि**शब्दः श्रुतेः प्रसिद्धत्वद्योतकः ।

नन्वस्तु पुरुषज्ञानादेव मोक्षः, पुरुषोऽप्यन्यश्चेत्कथं नान्यज्ञानान्मोक्ष इत्यत आह **पुरुष इति** ।

**पुरुषः पर आत्माऽजो ब्रह्म नारायणः प्रभुः ॥**
**महानानन्द उद्विष्णुर्भग ओम इतीर्यते ।**
**स्वयं नारायणो देवो नान्यस्यैतानि कस्यचित् ॥**

**स्वयं** मुख्यया वृत्त्या । **एतानि** नामानि ।

कुत एतेषां भगवन्नामत्वम् इत्यत ॐशब्दस्य विष्णुवाचित्वे तावद्युक्तिमाह **तस्मादिति** ।

**तस्मादोमित्युदाहृत्य यज्ञदानादि कुर्वते ।**

**तस्मात्** ओङ्कारस्य विष्णुनामत्वादेव हि, ये विष्णुमुद्दिश्य **यज्ञदानादि कुर्वते** ते **ओमित्युदाहृत्य** एव । अन्यथा तन्न स्यात् । न ह्यन्योद्देशेन कर्म कुर्वाणैरन्यविषयो मन्त्रो जप्यत इति ।

पुरुषशब्दस्य विष्णुवाचित्वे युक्तिमाह **सूक्तेनेति** ।

**सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः ॥**
**इति पैङ्गिश्रुतिस्तेन नान्यज्ञानाद्विमुच्यते ।**





**य एनं नारायणं यजन्ति ते पौरुषेण सूक्तेन यजन्ति । तेन ज्ञायते पुरुषशब्दो विष्णुवाचीति । इति पैङ्गिश्रुतिः पुरुषशब्दस्य भगवदेकवाचितामाह यतः तेन 'तमेवं विद्वानि'त्यस्य विष्णुपरत्वादिति ।**

**परि०**— 'पुरुषं वेत्ति' इत्यादिमूलं सङ्गमयितुं सौत्रं हेत्वंशशङ्कापूर्वं स्वयं व्याचष्टे **कुत इत्यादिना** । **स्वयमित्यनुवादः** । मुख्यया वृत्त्येत्यर्थः । **एतानीत्यनुवादः** । **नामानीति** व्याख्या । **तेनेत्यनुवादः** । तस्य व्याख्यानम् **एवं विद्वानित्यस्य** । **विष्णुपरत्वादिति** । तृतीयापञ्चम्योरेकार्थत्वादिति भावः ।

**गु०दी०**— **सर्वमेव त आयुर्यन्तीति** उपलक्षणम् । ब्रह्मविदाप्नोति परमित्युपक्रमवाक्ये 'सर्वं वै तेऽन्नमाप्नुवन्ती'त्यन्नमयप्रकरणस्थवाक्ये 'कामान्नी कामरूप्यनुसञ्चरन्', 'सोऽश्नुते सर्वान् कामान्' इत्यादिश्रुत्या सर्वान्नप्राप्तेरपि मोक्षलिङ्गत्वात् 'सर्वमेव त आयुर्यन्ती'ति प्राणमयप्रकरणे 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति मनोमयप्रकरणे, 'शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत' इति विज्ञानमयप्रकरणे, 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि'त्यानन्दमयप्रकरणे, 'रसं ह्येवायं लब्ध्वाऽनन्दी भवति अथ सोऽभयंगतो भवती'त्युपसंहारे च मुक्तिश्रवणादिति ग्राह्यम् । अत एवाचार्यैः **अन्यवेदी कथं मुक्तिं प्रयास्यति** इति सामान्येनोक्तम् । **पैङ्गिश्रुतिः** इत्युपलक्षणम् । सहस्रशीर्षत्वव्याप्तत्वामृतेशत्वज्यायस्त्वदेवेज्यत्वदेवस्रष्टृत्वादेः यजुःशाखोक्तह्रीलक्ष्मीपतित्वस्य च विष्णोरन्यत्रासम्भवाच्चेत्यपि द्रष्टव्यम् ।

**वं०प०**— ननु मुच् धातोरात्मनेपदित्वान्मुच्येदिति कथं विधिलिङ्परस्मैपदित्वमित्यत आह **व्यत्यय इति** । **ओमिति** । मूले ओं अ इति पदच्छेदो द्रष्टव्यः ।

**आनन्दः**— ननु स्वपक्षसाधकबाधकपरिहाररूपत्वाभावात् सूत्राणां वैयर्थ्यमित्यतः तत्तात्पर्यमाह **एवमिति** । **अनेनेति** । श्रुतेरर्थानुवादेनेत्यर्थः । पुरुषपदनिवर्त्यां शङ्कां दर्शयति **नन्वत्रेति** । ननु मुचेः परस्मैपदित्वात्कर्तरि लिङि मुञ्चेदिति स्यात् । कर्मणि तिङि आत्मनेपदप्राप्त्या मुच्येतेति प्रयोक्तव्यं सर्वथा मुच्येदिति न प्रयोक्तव्यमित्यत्राह **व्यत्ययो बहुलमिति** । तथा व्यत्ययेनात्मनेपदस्थाने परस्मैपदमित्यर्थः । यजन्तीत्यस्य यागविधिपरत्वप्रतीतिं वारयन् पुरुषसूक्तेनेत्यस्य विधेयत्वं द्योतयितुं यत्तच्छब्दाध्याहारेण योजयति **य एनमिति** ।

**शे०वा०**— इति पैङ्गिश्रुतिरित्यतःपरमपेक्षितमध्याहरति **पुरुषशब्दस्य भगवदेकवाचितामाह यत इति** । **तेनेति** । पुरुषशब्दस्य भगवदेकवाचित्वेनेत्यर्थः । तेनेत्युक्तस्य पुरुषशब्दस्य भगवदेकवाचित्वस्य नान्यज्ञानाद्विमुच्यत इति प्रतिज्ञायां साक्षाद्धेतुत्वासम्भवान्मध्येऽपेक्षितं हेतुं पूरयति **तमेवं विद्वानमृत इह भवतीत्यस्य**





**विष्णुपरत्वादितीति** । अनेनेति पैङ्गिश्रुतिः पुरुषशब्दस्य भगवदेकवाचित्वमाह यतस्तेन कारणेन तमेवं विद्वानित्यस्य विष्णुपरत्वं तस्य विष्णुपरत्वान्नान्यज्ञानाद्विमुच्यत इति मूलयोजनोक्ता भवति । केचित्तु तेनेति तच्छब्दश्रवणाद्यच्छब्दाध्याहारेण योजयतीति तेन किं सिद्धमित्यतो मूलं नान्यज्ञानाद्विमुच्यत इति । तदभिप्रायमाह तमेवं विद्वानित्यस्य विष्णुपरत्वमितीत्याहुः ।

**वा०र०— पुरुषशब्दस्येत्यारभ्य यत इतीत्यन्तं** प्रतीकोपादानम् । **तेनेत्युक्तस्येति** । उक्तमेव दर्शितं वाचित्वस्येत्यन्तेन । साक्षाद्धेतुत्वेति वक्ष्यमाणेनान्वयः । तमेवं विद्वानमृत इत्यादि प्रतीकोपादानम् । स्पष्टत्वाय वाक्यशेषोपादानम् । तथा विष्णुपरत्वमित्यस्य वक्ष्यमाणकेचित्पक्ष इव मुख्यसाध्यसमर्पकत्वेनोपयोगः । यद्यप्यत्र तमेवं विद्वानित्यस्य विष्णुपरत्वमितीति मूलपाठानुसारेणैव प्रतीकमुपादेयं तथापि व्याख्यानपूर्वकप्रतीकोपादानस्य तत्र तत्र दर्शनात् नापि अनुव्याख्यानोक्तनान्यज्ञानाद्विमुच्यत इति साध्यं प्रति हेतुत्वेनैवात्रोक्तिरित्याश्रितमित्यस्य हेतुं पूरयतीत्यवतारानुसारेण सिद्धत्वात् तथोक्तेर्मूलारूढतालाभाय पञ्चम्यन्ततया विष्णुपरत्वमित्यस्य विपरिणामेनात्रार्थानुवादस्याभिप्रेतत्वमित्यतः पञ्चम्यन्ततया प्रतीकोपादानम् । युक्तं अत एव योजनाप्रदर्शनपरोत्तरवाक्ये यथास्थितमूलानुवादपूर्वकमनुव्याख्यानफलपरतया प्रतिपादितमितीति ज्ञेयम् । वस्तुतस्तु विष्णुपरत्वादितीति प्रतीकोपादानम् । तथैव मूले पाठः प्रायकोऽस्तीति भावेन । अत एव हेतुं पूरयतीति प्रागवतारः । अत एव चेतनयुक्तस्य विष्णुपरत्वादिति पञ्चम्याऽन्वयायोगात् तदुभयान्वयं दर्शयितुमुत्तरत्र योजनाप्रकारदर्शनम् । केचित्पक्षे तमितीत्येव पाठमाश्रित्य तथैव च प्रतीतिमुपादाय नान्यज्ञानादिति भाष्याभिप्रायमात्रकथनतया योजना क्रियत इति तत्पक्षभेदः स्पष्ट एवेति ज्ञेयम् । परत्वादितीत्ययं मूलगत इति शब्दोऽनुपपत्तेरिति सूत्रखण्डव्याख्यानपरिसमाप्तौ । अत एव प्रतीकोपादानकाले टीकायां तस्यानुपादानम् । स्वयमेवोत्प्रेक्षितं योजनान्तरं केचित्पक्षतया आह **केचित्त्विति** ।

**विट्ठल०—** ननु कर्मकर्तर्यात्मनेपदम् इत्युक्तेः आत्मनेपदेन भाव्यं 'मुच्येदि'ति कथं परस्मैपदप्रयोग इत्यत आह **मुच्येत् मुच्येत इति** । तेनेति मूलगतपदानुवादेन तमेवं विद्वानित्यस्य विष्णुपरत्वादिति तृतीयापञ्चम्योर्हेत्वर्थकत्वोक्त्या व्याख्यानमिति ज्ञेयम् ।

**चषकः—** पैङ्गिनां श्रुतिरित्येतत् पुरुषशब्दस्य भगवदेकवाचितामाह **यत इति पूरणीयेनान्वेतीत्याह यत इति** ।

**॥ इति 'अन्नमयादिप्रकरणे विष्णिवतरो न कथ्यते, अनुपपत्तेः' ॥**

* * *

**॥ अथ एतदधिकरणीयसूत्रकारोक्तपरपक्षप्रतिक्षेपे 'नेतरोऽनुपपत्तेः' इति पञ्चमसूत्रव्याख्यानोपपादकतया 'अन्नादिप्रकरणे विष्ण्वितरपरिग्रहे यथाऽनुपपत्तिर्न तथा विष्णुपरिग्रहे' ॥**

**॥ ब्रह्मशब्दोदिते विष्णौ आत्मशब्दं प्रयुज्य तस्मादाकाशसृष्टिं मुख्यामुख्यभेदेन चतुर्विधां प्रोवाच ॥**

५२ सु०— ''नन्वितरपरिग्रह इवेश्वरपरिग्रहेऽप्यनुपपत्तिः समाना । तथा हि । 'ओषधीभ्योऽन्नमन्नात्पुरुष' इत्योषधिकार्यान्नविकारं शरीरं पुरुषपदेनोक्त्वा 'स वा एष पुरुष' इति तं परामृश्य 'अन्नरसमय' इत्युच्यते । तस्येश्वरत्वेऽनुपपत्तिरेव । तत्प्रवाहपतिताश्च प्राणमयादयः'' इत्याशङ्कां परिहर्तुं पीठ(ठिका)मारचयति **ब्रह्मशब्दोदित इति** ।

अनु०— ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च ॥
तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ।

'ब्रह्मविदाप्नोति परं', 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति **ब्रह्मशब्दोदिते तस्मिन्** विष्णौ 'तस्माद्वा एतस्मादात्मन' इति **आत्मशब्दं** (च) **प्रयुज्य** इति योज्यम् । **तस्मात्** (एतस्मात्) इत्यनुसन्धानात्, **आकाशसृष्टिं च प्रोवाच** 'आकाशः सम्भूत' इत्यनेन । **अत्र** अनुवाके ।

'आत्मशब्दं प्रयुज्य सृष्टिं च प्रोवाचे'त्यनेनात्मत्वमपि विधेयमिति सूचयति ।

चतुर्विधाकाशसम्बन्धित्वात् सृष्टेश्चतुर्विधत्वम्, न स्वतः, त्रैविध्यस्य वक्ष्यमाणत्वात् । तथा च चतुर्विधस्याकाशस्य(धाकाश)सृष्टिं च प्रोवाचेत्यर्थः ।

आकाश(स्य)चातुर्विध्यं कथमित्यत आह **भूतमिति** ।

अनु०— भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः ॥
हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ।
आ समन्तात्काशते यदाकाशो मुख्यतो हरिः ॥

**भूतम्** आकाशशब्दोक्तमित्यादिसम्बन्धः । **अन्तर्नियामक** एषां त्रयाणाम् । तत्रापि न समानकक्ष्यतया चतुर्णामाकाशशब्दार्थत्वमित्याह **मुख्यत इति** । चशब्द-





**स्तुशब्दा(र्थः)र्थे । तत्कथमित्यत आह आसमन्तादिति । आ इत्यनुवादेन समन्तात्काशनं ह्याकाशशब्दार्थः । ततश्च यत् यस्मात् हरिरेव मुख्यतः समन्तात्काशते तस्मात्स एव मुख्यत आकाश इति योज्यम् ।**

**परि०—** ब्रह्मशब्दोक्त एवात्मशब्दप्रयोग इत्यत्र ज्ञापकमाह **तस्मादेतस्मादित्यनुसन्धानादिति** । अत्रेत्यनुवादेनानुवाक इति व्याख्या । **विधेयमिति** । यत्सत्यज्ञानादिवाक्योक्तं स आत्मेति विधेयमित्यर्थः । तथा चाप्रस्तुतस्य कथमात्मशब्देनानुवाद इति शङ्कानवकाश इति भावः । **चतुर्विधाकाशेति** । भूतभूताभिमानितद्देहतदन्तर्नियामकरूपचतुर्विधाकाशेत्यर्थः । **त्रैविध्यस्येति** । 'प्रादुर्भावो हरेर्जनिरि'त्यादिना सृष्टेः प्रादुर्भावाभिमानस्वरूपलाभत्रैविध्यस्य वक्ष्यमाणत्वादित्यर्थः ।

**गु०दी०—** **त्रैविध्यस्य वक्ष्यमाणत्वात्** इत्यत्र ओषधिमारभ्य पुरुषपर्यन्तेषु ओषध्यन्नदेहाख्यजडानां तत्तदभिमानिजीवानां तत्तदन्तर्यामिपरमात्मरूपाणां चोक्त्या चतुर्णामलाभे त्रैविध्यस्य **वक्ष्यमाणत्वात्** वक्ष्यमाणप्रायत्वादित्यर्थः । अन्ने जीवान्तराभावे तु अन्नाख्यजडस्य तदन्तर्यामिहरिरूपस्य चेति द्वयोरेव सत्त्वेन द्वयोरपि वक्ष्यमाणत्वादिति ज्ञेयम् ।

**यादु०—** **विधेयमितीति** । तेनात्मत्वेनाप्रस्तुतस्य कथमात्मशब्देनानुवाद इति शङ्काऽनवकाशः । **त्रैविध्यस्येति** । 'प्रादुर्भावो हरेर्जनिरि'त्यादिना सृष्टेः प्रादुर्भावाभिमानस्वरूपत्रैविध्यस्य वक्ष्यमाणत्वादित्यर्थः ।

**वं०प०—** **तस्य** अन्नरसमयत्वस्य । **ईश्वरत्वे** अन्नमयस्येश्वरत्वे । **अनुपपत्तिरेवेति** । तद्धि पार्थिवशरीराणामन्नोपजीविनामेव युक्तं न हरेरित्यर्थः । **तत्प्रवाहो** विकारप्रवाहः । अतो न विष्णुत्वं तेषामिति शेषः । पीठं भूमिकामारचयति कर्तव्यविचारोपयोगिनमर्थं दर्शयतीत्यर्थः । कुत इत्थं योज्यमित्यत आह **तस्मादेतस्मादित्यनुसन्धानादिति** । तच्छब्दस्य पूर्वं दूरप्रकृतपरामर्शकत्वेनैतच्छब्दस्य चाव्यवहितपूर्वप्रकृतपरामर्शकत्वेन तस्मादेतस्मादात्मन इत्यनुवादबलेन सः ब्रह्मशब्दोदितो विष्णुरात्मेत्यात्मत्वं विधेयमिति सूचयितुमात्मशब्दं प्रयुज्येत्युक्तमिति भावः । तथा च तस्माद्ब्रह्मविदाप्नोति परमित्यत्र परप्राप्तिकामेन ज्ञातव्यतयोक्तत्वात् । एतस्मात्सत्यज्ञानानन्तत्वेन लक्षितात् । तथा सति आत्मेति ब्रह्मशब्दोक्तस्यात्मत्वविधायकवाक्ये आत्मशब्देन प्रकृताच्च 'आत्मन आकाशः सम्भूत' इति श्रुत्यर्थो द्रष्टव्यः । भूतं भूताभिमानी चेत्युक्तविधया चतुर्विधस्य वायोर्मुख्यामुख्यभेदेन चतुर्विधाकाशात् सृष्टिमाकाशाद्वायुरिति वाक्येन प्रोवाचेति योज्यम् ।

**आनन्दः—** ब्रह्मशब्दोदित इत्येतद्भाष्यं स्वपक्षसाधकविवरणरूपत्वस्य परपक्षबाधकत्वस्य चाभावादित्यत आह **नन्वितरपरिग्रह इवेति** । ननु ब्रह्मविदाप्नोति परमित्युक्तस्यैव सत्यं ज्ञानमिति वाक्यस्थब्रह्मशब्दो-





दितत्वं कुतो ज्ञायत इत्यत आह **तस्मादेतस्मादितीति** । अन्यथैतद्वैयर्थ्यं स्यादिति भावः । **त्रैविध्यस्येति** । क्रियाप्रवर्तकत्वेनेत्यत्र वक्ष्यमाणत्वादित्यर्थः ।

**श्रीनिधि०**— ननु श्रुतौ तस्माद्वा एतस्मादात्मन इत्यात्मत्वानुवादो न घटते । तस्या प्रागप्रस्तुतत्वादित्यत उक्तं मूले **आत्मशब्दं प्रयुज्येति** । तेन कथं शङ्कापरिहार इत्यत आह **आत्मशब्दं प्रयुज्य सृष्टिं प्रोवाचेत्यनेन इति** । तथा च यः पूर्वं ब्रह्मपदद्वयेन प्रकृतः सः आत्मेति द्रष्टव्यम् । तस्मादाकाशः सम्भूत इत्यादि । अयतेर्गत्यर्थत्वादिति तस्मादौणादिक इणि कृते वायुरिति सिद्ध्यतीति भावः ।

**शे०वा०**— **अनुपपत्तिरेवेति** । स वा एष इति परामर्शानुपपत्तेरित्यर्थः । **परिहर्तुमिति** । 'एवं देहादिपर्यन्तमागतं हरिमेव तु । परामृशति तस्यैव पञ्चरूपत्ववित्तये । त्यक्त्वा भूतादिकं सर्वं स वा एष' इति श्रुत्यादिनेति शेषः । **आत्मशब्दं च प्रयुज्येति** । अनेनात्मशब्दं प्रयुज्य चेति चशब्दो भिन्नक्रम इत्युक्तं भवति । **आत्मत्वमपि विधेयमिति सूचयतीति** । श्रुतौ तस्माद्वा एतस्मादित्यतःपूर्वं ब्रह्मणा विपश्चितेत्यनन्तरं स आत्मा चेति शेषं सम्पूर्यात्मत्वमपि विधेयमित्यर्थः । अन्यथा पूर्वत्रात्मत्वानुक्त्याऽऽत्मत्वेनात्र तु तस्यात्मशब्देनानुवादानुपपत्तेरिति भावः । चतुर्थविधां सृष्टिमिति सृष्टेश्चातुर्विध्यपरमिति भ्रान्तिं निवारयति **चतुर्विधेति** । नन्वनुपपत्तेरभावेन चातुर्विध्यस्यैव सम्भवात्कुतो न स्वत इत्यत आह **त्रैविध्यस्येति** । प्रादुर्भावाभिमानस्वरूपोत्पत्तिभेदेन त्रैविध्यस्य 'क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिरि'त्यादिना वक्ष्यमाणत्वादित्यर्थः । **कथमिति** । भूताकाशस्यैवाकाशतया प्रसिद्धत्वादिति भावः । **आकाशशब्दोक्तमित्यादिसम्बन्ध इति** । अनेनाकाशशब्दोक्त इत्येतद्योग्यतया लिङ्गविपरिणामेन सम्बद्ध्यत इत्युक्तं भवति । देहस्य सन्निहितत्वात् तन्नियामकत्वमात्रप्रतीतिं निवारयति **एषां त्रयाणामिति** । **कथमिति** । भूते रूढत्वेन तत्रैव मुख्यत्वस्योचितत्वादिति भावः । **आ इत्यनुवादेनेति** । अतो न वैयर्थ्यमिति भावः । उक्तशङ्कापरिहारायैवशब्दाध्याहारेण वाक्यं योजयति **ततश्चेति** ।

**वा०र०**— **शेषं संपूर्येति** । तेन पूरितेन शेषेणात्मत्वमपि विधेयमित्यर्थः । **लिङ्गविपरिणामेनेति** । भूतांशे नपुंसकत्वेन विपरिणामेनेत्यर्थः ।

**विठ्ठल०**— **विधेयमितीति** । एतेन प्रागप्रस्तुतस्यात्मत्वस्य कथमत्रावकाश इति न शङ्कावकाशः । **त्रैविध्यस्य इति** । प्रादुर्भावो जनिः अभिमानोऽभिमानिनः । अभिमानिशरीरस्य साक्षाद्भूतस्येत्यत्रेत्यर्थः ।

**चषकः**— **आ इत्यनुवादेनेति** । अतो न वैयर्थ्यमिति भावः ।

**५३ सु०— एवं मुख्यामुख्यभेदेन चतुर्विधादाकाशात् 'आकाशाद्वायुरि'त्युक्तविधया चतुर्विधस्य वायोः सृष्टिं प्रोवाच । तत्रापि वायुशब्देन मुख्यतो हरिरेवोच्यत इति योज्यम् (वक्तव्यम्) । तत्कथमित्यत आह बलेति ।**





## अनु०— बलज्ञानस्वरूपत्वाद्वायुः

**व**शब्दो बलवाची । **आयु**रिति ज्ञानमुच्यते, अयतेर्गत्यर्थत्वात्, गत्यर्थानां ज्ञानार्थत्वात् ।

"तथा 'वायोरग्निरि'ति चतुर्विधाद्वायोश्चतुर्विधस्याग्नेः सृष्टिं प्रोवाच । तत्रापि (हरिरेव मुख्यतो) मुख्यतो हरिरेवाग्निशब्देनोच्यत" इति स्थिते; तत्कथमित्यत आह **अग्निरिति** ।

## अनु०— अग्निरगं नयन् ।

**न गच्छति** स्वतो न प्रवर्तत इति **अगं** विश्वम् । अगशब्दे कर्मण्युपपदे नयतेः क्विप् । तत्सन्नियोगेनोपपदलोपो धातोश्च ह्रस्वता निर्वचनत्वात् ।

"ततः 'अग्नेराप' इति चतुर्विधादग्नेश्चतुर्विधानामेवापां सृष्टिं प्रोवाच । तत्राप्याप इति मुख्यतो हरिरेवोक्त" इति वाच्यम्; कथं तदित्यत आह **आप इति** ।

## अनु०— आप आपालनाच्चैव

आङ्पूर्वस्य पाते रूपमेतत् । उपसर्गह्रस्वता धातुलोपश्च निर्वचनत्वात् । **च**शब्दोऽनुक्तसमुच्चयार्थः । तेन स्त्रीरूपत्वात्स्त्रीलिङ्गं बहुरूपत्वाद्बहुवचनं चेत्युक्तं भवति । **एव**शब्दो हरिरेवेति सम्बद्ध्यते ।

"एवम् 'अद्भ्यः पृथिवी'ति चतुर्विधाभ्योऽद्भ्यश्चतुर्विधायाः पृथिव्याः सृष्टिं प्रोवाच । तत्रापि हरिरेव मुख्यतः पृथिवीशब्दवाच्य" इति सिद्धे; तदुपपादयति **पृथिवीति** ।

## अनु०— पृथिवी प्रथितो यतः ॥

**प्रथितो यतः** ततः **पृथिवी** इति योजना । पृथु विस्तारे ।





**परि०— आकाशाद्वायुरितीति**। अनेन वायोः सृष्टिं प्रोवाचेत्यन्वयः। कीदृशस्य वायोरित्यत आह **उक्तविधया चतुर्विधस्येति** । भूतं भूताभिमानी चेत्युक्तविधयेत्यर्थः । **अयतेरिति** । अयगतावित्यस्य उण्प्रत्यये तस्य 'अत उपधाया' इति वृद्धौ रूपमिति भावः । **उपपदस्येति** । उपपदान्तस्याकारस्येत्यर्थः । कैः सूत्रैरेतन्निर्वाह इत्यत आह **निर्वचनत्वादिति** । व्याकरणवन्निर्वचनमपि पृथक्प्रमाणमेवेति तदनुरोधेन प्रकृतिप्रत्ययादिरूह्य इति भावः । उक्तं हि 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमि'ति। **पाते रूपमेतदिति** । क्विप्रत्यये धातोरन्तलोपे उपसर्गस्य ह्रस्वत्वे च सति अबिति रूपम्। तस्य बहुवचनमाप इति शब्दस्वाभाव्यादिति भावः । **पृथु विस्तार इति** । अस्मात् षिवङ्प्रत्यये षित्वाङ्ङीप्रत्यये गुणाभावे च रूपं निर्वचनत्वात् स्त्रीत्वात्स्त्रीलिङ्गं चेति भावः ।

**गु०दी०— उपसर्ग** इत्यादि आप इत्यादौ धातुलोपः, **अद्भ्य** इत्यादौ उपसर्गह्रस्वता धातुलोपश्चेत्यर्थः।

**यादु०— उक्तविधयेति** । भूतं भूताभिमानी चेत्याद्युक्तविधयेत्यर्थः । **अयतेर्गत्यर्थत्वादिति** । अयगतावित्यस्मादुण्प्रत्यये उपधावृद्धौ चायुरिति रूपमिति भावः । नन्वगेत्यत्र कथमुपपदाकारलोपः । न च निरुक्तत्वेन पृषोदरादित्वाद्वर्णनाश इति वाच्यम् । प्रकृतिप्रत्ययसन्निधानादेव वर्णनाशादेस्तत्र व्याख्येयत्वात् । प्रकृते च धातुना व्यवधानेन सन्निधानाभावादित्यत आह **तत्सन्नियोगेनेति** । तथा च साक्षात्प्रत्ययसन्निधानाभावेऽप्युपपदविशिष्टधातोः प्रत्ययविधानात् । प्रत्ययसन्नियोगमात्रेण वर्णनाशोपपत्तिरिति भाव इत्याहुः । वस्तुतस्तु काशिकायाम् 'अन्येभ्योऽपि दृश्यत' इत्यत्र दृशिग्रहणं क्विबन्ते विध्यन्तरोपलक्षणार्थमित्युक्तत्वेनोणादिवृत्तौ क्विब्वाचिप्रच्छीत्यत्र क्विपः पूर्वं निर्देश इष्टसम्पादनार्थ इत्युक्तत्वेन च क्विप्प्रत्ययस्येष्टसम्पादकत्वमभिप्रेत्य तत्सन्नियोगेनेत्युक्तमिति द्रष्टव्यम् । अत्रालोन्त्यपरिभाषयोपपदान्तस्यैव लोपो द्रष्टव्यः । **आङ्पूर्वस्येति** । क्विप्प्रत्यये सतीति ग्राह्यम् । **धातुलोप इति** । धात्वन्ताकारलोप इत्यर्थः । तथा चाप् इति प्रातिपदिकनिष्पत्तिरिति भावः । **पृथु विस्तार इति** । अस्माद्बाहुलिके षिवन्प्रत्यये तस्य च कित्वविवक्षया गुणाभावे षित्वेन ङीषि च सति पृथिवीति रूपमिति भावः ।

**वं०प०— अगशब्द इत्यादि**। तथा चागशब्दे कर्मार्थिके उपपदे नी प्रापणे अस्मात् क्विपि तस्य लोपे क्विप्रत्यययोगेनोपपदान्त्यस्य गकारस्थस्य अकारस्य लोपे धातोश्च ह्रस्वतायामग्नि अग्नीति प्रातिपदिकम् । **आङ्पूर्वस्येत्यादि**। तथा चाङ्पूर्वात् पा रक्षणेऽस्मादुपसर्गस्य ह्रस्वे अप इति जाते धात्वन्तस्याकारस्य लोपे अप् इति प्रातिपदिकम् । पश्चात्स्वाद्युत्पत्तावाप इति सिद्ध्यति । तदेव दर्शयति **तेनेति** । अनुक्तसमुच्चयार्थेन चशब्देनेत्यर्थः । **पृथु विस्तार इति** । पृथ् अस्मात् औणादिके षिवन्प्रत्यये षः प्रत्ययस्येति षकारस्य अन् इत्यस्य च लोपे पृथ् इव इति जाते षिद्गौरादिभ्यश्च स्त्रियां ङीष् स्यादिति ङीषि ङकारषकारयोर्लोपे ई इत्येतावन्मात्रे





उर्वरिते सति पृथ्इव् ई पृथिवीति रूपम् । न चात्र पृ इत्यत्र ऋकारस्य अकाररूपे गुणे तस्य च रपरत्वे पर्थिवीति स्यादिति वाच्यम् । षिवन्प्रत्ययस्य कित्कार्यकारिताया विवक्षितत्वात् । कितश्च स्वस्मिन्परतो गुणनिषेधकत्वस्य क्ङिति चेति सूत्रोक्तत्वादत्र गुणाभाव इति उणादिवृत्तौ साधितमनुसन्धेयम् ।

**आनन्दः— उपपदस्य लोप इति** । आमित्युपपदस्यान्तलोप इत्यर्थः । **धातुलोप इति** । धात्वन्ताकारस्य लोप इत्यर्थः ।

**श्रीनिधि०— निर्वचनत्वादिति** । यथोपदिष्टपक्षादिगतत्वादिति भावः । तस्य च आकृतिगणत्वात् । तथाहि सूत्रं 'पृषोदरादीनि यथोपदिष्टमि'ति । पतेरुपमेतदिति कर्तरि क्विपि च कृत इति द्रष्टव्यम् । **पृथु विस्तार इति** । तस्मात् क्षिव औणादिके क्षिद्भ्वौरादिभ्यश्चेति ङिशि कृते पृथिवीति भवतीति भावः ।

**शे०वा०— उक्तविधया चतुर्विधस्येति** । भूतं भूताभिमानि चेत्याद्युक्तविधयेत्यर्थः । **वशब्दो बलवाचीति** । न तत्र व्युत्पादनापेक्षेति न व्युत्पादनं कृतम् । **अयतेरिति** । अस्माद्बाहुलकादौणादिके उणि कृते 'अत उपधाया' इत्युपधावृद्धौ वायुरिति रूपसिद्धिरिति द्रष्टव्यम् । **ज्ञानार्थत्वादिति** । धातूनामनेकार्थत्वादिति भावः । **क्विबिति** । क्विप् चेति सूत्रेणेति शेषः । नन्वेवं क्विपो लोपे कृदन्तत्वात्स्वाद्युत्पत्तावगनीरिति भवितव्यमग्निरिति तु कथमित्यत आह **तत्सन्नियोगेनेति** । प्रत्ययसन्नियोगेनेत्यर्थः । **उपपदस्य लोप इति** । अलोन्त्यपरिभाषयोपपदागशब्दान्त्यस्य लोप इत्यर्थः । **धातोश्चेति** । धातोरीकारस्येकार इत्यर्थः । यद्यपि प्रत्ययसन्निधानाद्धातोर्ह्रस्वसिद्धावपि नोपपदान्त्यलोपसिद्धिर्धातुना व्यवधानेन साक्षात्प्रत्ययसन्नियोगाभावात्तथाऽपि तत्सन्नियोगमात्रेणापि भर्गादिशब्देषु वर्णविकारादेर्दर्शनेन साक्षात् तद्योगस्यानपेक्षितत्वादपेक्षितस्य च यथाकथञ्चित्सन्नियोगस्य प्रकृतेऽपि सत्त्वाद्युक्त एवोपपदान्त्याकारलोप इति द्रष्टव्यम् । ननु च विधायकाभावात्कथमुपपदाकारलोपादीत्यत आह **निर्वचनत्वादिति** । निरुक्तशास्त्रे निरुच्यमानशब्दानां पृषोदरादित्वादेव साधुत्वाङ्गीकारात्पृषोदरादित्वादेव चात्र वर्णनाशादीति भावः । यद्यपि च पृषोदरादित्वमात्रेणैव वर्णनाशाद्युपपत्तौ प्रत्ययसन्नियोगाश्रयणमनर्थकम् । तथाऽपि प्रकृतिप्रत्ययसन्निधान एव च वर्णविकारादेस्तत्र व्याख्येयत्वाभिप्रायेण तस्यार्थवत्त्वमिति द्रष्टव्यम् । अगशब्दोपपदान्नयतेर्डिप्रत्यय इत्यस्य प्रकारान्तत्वादविरोध इति द्रष्टव्यम् । **आङ्पूर्वस्येति** । क्विबन्तस्येति शेषः । तद्यपित्येव स्यात्तत्कथमबिति प्रातिपदिकनिष्पत्तिरित्यत आह **उपसर्गेति** । **धातुलोपश्चेति** । धात्वन्तलोप इत्यर्थः । अत्राप्युपसर्गस्य साक्षात्प्रत्ययसन्निधानाभावेऽपि प्रत्ययसन्नियोगमात्रस्य सत्त्वाद् ह्रस्वत्वे धात्वन्तलोपे च सत्यबिति प्रातिपदिकनिष्पत्तिरिति भावः । **अनुक्तेति** । स्त्रीरूपत्वबहुरूपत्वरूपानुक्तसमुच्चयार्थ इत्यर्थः । किं तत्समुच्चयप्रतिपादनेनेत्यतः स्त्रीलिङ्गत्वबहुवचनोपपत्तिरेव तत्प्रयोजनमिति भावेनोक्तसाध्ये प्रति तयोर्हेतुत्वमुपपादयति **तेनेति** । अवधारणार्थकैवकारविरोध इत्यतो भिन्नक्रमतया तं योजयति **एवशब्द इति** । **पृथु विस्तार इति** । यद्यपि प्रथसङ्ख्यान इत्यस्मात्प्रथेः षिवङ्सम्प्रसारणं चेत्युणादिसूत्रेण पृथिवीशब्दो निष्पादित इति तथैव





वक्तव्यम्। तथाऽपि प्रथोर्विहितः षिविङ्प्रत्यय उणादयो बहुलमित्युक्तत्वादन्यस्मादपि भवतीति भावेन पृथु विस्तार इत्यस्मादपि षिवङ्प्रत्यये षित्वात् षिद्गौरादिभ्यश्चेति ङीषि जाते पृथिवीति रूपसिद्धिरिति ज्ञेयम्।

**वा०र०**— बलत्वादयनाच्चैवेत्येतदृग्भाष्यटीकानुसारेणाह **न तत्रेति**। **बाहुलकादिति**। उणादयो बहुलमित्येतद्बाहुलकादित्यर्थः। 'कृवापाजिमिस्वदिसाध्यशूभ्य' इति उणादिसूत्रेऽप्युकृवादिभ्य एवोण् विधानेनायतेस्तदप्राप्तेर्बाहुलकाश्रयणम्। यद्यपीणः छन्दसीति सूत्रेणेणः उण्विधानेनेण् धातोरुणि 'अचो ञ्णिती' ति वृद्धौ चायुरिति रूपमित्याश्रयणे बाहुलकाश्रयणाभावस्तथापि छान्दसोण् पक्षाश्रयणमेव बाहुलकसमानम्। वस्तुतस्सोऽपि पक्षो ग्राह्यः। एवं बलत्त्वादयनाच्चैवेत्यादि ऋग्भाष्यव्याख्यावसरे सर्वपक्षोपपादनस्य स्पष्टत्वादित्यवधेयम्। सम्पूर्णोपपदलोपभ्रान्तिवारणायाह **आलोन्त्येति**। यद्यपि सूत्रे षष्ठीनिर्दिष्टस्यान्त्यस्यालोग्रहणमित्येव सूत्रविषयेऽयं परिभाषा तथापि समानन्यायतया तत्परिभाषा बहुविषयेति ज्ञापनाय उपपदलोप इत्यादिष्वपि प्रवृत्तिरुपवर्णिता। श्रीसत्यनाथश्रीपादोक्तानुपपत्तिं श्रुत्वा केनचित् उपपत्तीत्युपपादितम्। तस्य यो अः अकारस्तस्य लोप इति कृतव्याख्यानं तु पारिभाषिकमेव सर्वत्रोपपदत्वमिति प्रतीतिमूलम्। विभाषोपपदेन प्रतीयमान इत्यादि बहुसूत्रेषु उपोच्चरितं पदमुपपदमिति काशिकामञ्जर्यादौ स्पष्टमभिधानात्। अलोन्त्यपरिभाषाया अन्यत्राप्यनाश्रयणे धातुलोप इत्यादाववगतेश्च। तदेतत्सविस्तरमन्तराधिकरणे प्रतिपादयिष्याम इति ज्ञेयम्। **सन्नियोगमात्रेणेति**। साक्षात्परम्परासाधारणपरत्वमात्रेणेत्यर्थः। **भर्गादिशब्देष्विति**। न चैतदपि प्रकृततुल्यमिति वाच्यम्। तत्र तथात्वस्याद्भूती(?)त्यादिशब्ददृष्टान्तेनोपपादनात् प्रत्ययसन्नियोगमात्रेण गुणादेः परैस्तत्रतत्राङ्गीकृतत्वोक्तेश्चेति भावः। **व्याख्येयत्वाभिप्रायेणेति**। अत एव 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परो कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिष्विति' बहुलग्रहणार्थकथने उपलक्षणया वर्णागमविकारा व्याख्याताः। ते च प्रत्यये सन्नियोग एवेति च स्वीकृतमिति भावः। ऋग्भाष्यटीकोक्तपक्षविरोधपरिहारायाह **अगशब्देति**। कृदन्तत्वेन स्वाद्युपपत्तिं दर्शयितुं शेषस्यावश्यकत्वेन तदनुक्तेर्न्यूनतेत्यतः स्वयं शेषं पूरयति **क्विबन्तस्येति शेष इति**। **अवितीति**। आप इति प्रथमायां तु सर्वनामस्थानपरत्वेनात्पृतृन्तृजिति दीर्घ इति भावः। **बहुरूपत्वेति**। आपोदारः सिकता वर्षा इति तदशिष्यमित्येतत्सूत्रकाशिकायां तद्धितश्चासर्वेति सूत्रीयकुसुमविकासे च अशब्दस्य बहुवचनं स्वाभाविकमित्युक्तत्वेऽपि वस्तुतोभयगतिरूपबहुत्वेनोपपत्तिकथनम्। ओषधिशब्देऽप्येतन्न्यायप्रवृत्तिदर्शनाभिप्रायेणेति न दोषः। **विरोध इति**। समुच्चयार्थकचशब्देनेति शेषः। **उणादिसूत्रेणेति**। षिवच्प्रत्यय इति शेषः। तेनेत्यस्मादित्यस्योपपत्तिः। यद्वेत्यस्माद्धातोः पृथिवीशब्दो निष्पादित इत्युक्ते प्रत्ययस्य पुरस्काराप्रतीतेरनुक्तिः। उणादिसूत्रोदाहरणादेव प्रत्ययविशेषप्रतिभासश्च सम्भवतीति न दोषः इति ज्ञेयम्। इति भावेन 'पृथु विस्तार' इतीत्यनन्तरमुक्तत्वादिति शेषः। इत्युक्तत्वादस्मादपीति पाठस्तु स्वरस एव। तत्र धातुमात्रप्रदर्शनप्रयुक्तन्यूनतापरिहाराय विवक्षितमाह **अस्मादपीति**। षिवचश्च बाहुलकत्वाद्गुणाभाव इत्याशयः।

**विट्ठल०**— **अयतेरिति**। अयगतावित्यस्मादुप्रत्यये उपधावृद्धौ वायुः वश्चासावायुश्चेति वायुरिति रूपमिति भावः। ननु गेत्यत्रोपपदगशब्दाकारलोपः कथं पृषोदरादित्वेन निर्वचनादिति चेन्न। तत्र प्रकृति-





प्रत्ययसन्निधानादेव लोपविधानादत्र च धातुव्यवहितत्वादित्यत आह **तत्सन्नियोगेन इति** । तथा च साक्षात्सन्निधानाभावेऽपि उपपदविशिष्टधातोः प्रत्ययसन्नियोगमात्रेणोपपदाकारनाशोपपत्तेरिति भावः । **निर्वचनत्वादिति** । 'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमि'ति वचनादिति भावः । **पातेरिति** । आङ्पूर्वात् पा रक्षण इति धातोः किम् प्रत्यये निरुक्तत्वात् धात्वन्ताकारस्य लोपे उपसर्गह्रस्वतायां च अप इति रूपम् इति भावः । **पृथुविस्तार इति** । अस्मादुणादयो बहुलम् इति 'उ'भावः ।

**चषकः— अयतेरिति** । अयचमतयणय गताविति धातुव्याख्यानादिति भावः । **क्विबिति** । क्विप्चेति योगेनेति हृदयम् । **तत्सन्नियोगेन** तादृशप्रत्ययसमभिव्याहारेण । **उपपदलोपः** उपपदभूतागशब्दान्त्याकारस्यालोन्त्यपरिभाषया लोप इत्यर्थः । **धातोरिति** । धात्ववयवस्य दीर्घेकारस्य ह्रस्वेकार इत्यर्थः । **निर्वचनत्वादिति** । निरुक्तशास्त्रे 'वर्णागमो वर्णविपर्यश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इत्युपगमादिति भावः ।

**५४ सु०— तथा च चतुर्विधायाः पृथिव्याः 'पृथिव्या ओषधय' इति चतुर्विधौषधिसृष्टिं प्रोवाच ॥ भूतानां समाप्तत्वात्तत्स्थाने भौतिकग्रहणम(मि)तःपरं कार्यम् ॥ तत्राप्योषधिशब्देन मुख्यतो हरिरेवोच्यत इति स्थिते, कुत इत्यत आह उष्टानामिति ।**

## अनु०— उष्टानामाश्रयत्वेन स एवौषधिनामकः ।

दग्धानाम् । **उष्टा** ओषाः । कर्मणि घञ् । ओषा धीयन्तेऽस्मिन्नित्योषधिरित्यर्थः । 'कर्मण्यधिकरणे चे'ति किप्रत्ययः ॥ कथमोषध्यन्तर्गतस्योष्टाश्रयत्वमित्यत आह **ओषधीषु स्थित इति ।**

## अनु०— ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् ।

**क्षुधितैः** जाठराग्निनोष्टैः ।

'ओषधीभ्योऽन्नमि'ति चतुर्विधोषधीभ्यश्चतुर्विधस्यान्नस्य सृष्टिं प्रोवाच । तत्राप्यन्नशब्दो विष्णावेव मुख्यः । 'अद्यतेऽत्ति चे'ति व्याख्यानस्य तस्मिन्नेव सम्भवादिति प्रागेव सिद्धत्वान्नोक्तम् ।





**एवेति** । एकस्यैव मयटोऽर्थद्वयं नेत्यत्र दृष्टान्तमाह **अर्धेति** । केनचित्पाशुपतेन सर्वजरत्या योषितोऽनुपभोग्यत्वात्सर्वतरुण्याश्च वृद्धे मय्यरुचिप्रसङ्गादर्धजरत्यानयने दूतः प्रेषित इति लोकप्रवादोऽर्धजरतीशब्देनोच्यते । छप्रत्ययेन चोपमानोपमेयभावरूपः सम्बन्ध उच्यते । तथा च तत्प्रवादतुल्यप्रवादानुपपत्तेरित्यर्थः । श्रुतिलिङ्गप्रकरणविरोधेन प्राचुर्यार्थत्वे मयटो दृष्टान्तोऽपि नास्तीत्याह **कथमिवेति** । विकारार्थत्वे च निश्चिते वाक्यस्य न ब्रह्मार्थतेत्याह **ब्रह्मविषयत्वं चेति** । कथंशब्दस्य प्रश्नार्थतामुपेत्य प्रकरणेन प्राचुर्यार्थत्वादिसिद्धिरिति शङ्कते **मान्त्रवर्णिकेति** । न प्रकरणमात्रं नियामकमतिप्रसक्तेरित्याह **नेति** । लिङ्गेन प्रकरणबाधात् तेषामब्रह्मत्वमित्याशङ्कते **आनन्दमयादीनामिति** । **अन्तरस्यान्यस्य श्रवणादिति** । अन्योऽन्तर आत्मा प्राणमयोऽन्योऽन्तर आत्मा मनोमयोऽन्योऽन्तर आत्मा विज्ञानमयोऽन्योऽन्तर आत्माऽऽनन्दमय इत्युक्तेरिति भावः । **तदभावादिति** । आनन्दमयादन्तरस्यान्यस्याश्रवणादित्यर्थः । **ब्रह्मत्वमिति** । अन्यथा प्रकृतहानाप्रकृतस्वीकारप्रसक्तेरिति भावः । पुच्छवाक्ये आनन्दमयादप्यन्यस्य पुच्छब्रह्मणोऽन्तरस्य प्रतिष्ठापदेनोक्तेरन्नमयादीनामिवानन्दमयस्याप्यब्रह्मत्वमेवेत्याह **तत्रापीति** । यदुक्तमानन्दमयस्याब्रह्मत्वे प्रकृतहानमप्रकृतक्रिया चेति तत्परिहरति **तद्विजिज्ञापयिषयैवेति** । यद्वा । अन्येत्यानन्दमयस्याब्रह्मत्वे तदुक्तिवैयर्थ्यमित्यतोऽन्नमयादिवत्पुच्छज्ञानार्था तदुक्तिरित्याह **तद्विजिज्ञापयिषयैवेति** ।

पुच्छश्रुतिविरोधान्न तस्य स्वप्रधानार्थतेति शङ्कते **नन्विति** । पुच्छशब्दस्यात्रावयवार्थत्वमेव कुत इत्यतस्तत्प्रकरणादन्यथा तद्विरोधादित्याशयेनोक्तम् **अन्नमयादीनामिवेति** । स्वप्रधानब्रह्माधिकाराद् ब्रह्मशब्दोक्त्यैव तत्प्रत्यभिज्ञाने पुच्छशब्दविरोधे सत्येवास्मिन्वाक्ये प्रथमचरमश्रुतशब्दयोराद्यस्यानुपसञ्जातविरोधिनो बलीयस्त्वात् पुच्छत्वेन प्राप्तगुणत्वबाधया स्वप्रधानब्रह्मधीरित्याह **नेति** । किं प्रकृतं स्यादित्याशङ्कते **न चेति** । किं प्रकृतं ब्रह्मानन्दमयवाक्ये पुच्छवाक्ये चोच्यते किं वैकत्रेति विकल्पं मनसि निधायाद्यं दूषयति **तथा सतीति** । अवयवावयविभावस्य कल्पितत्वेऽप्यन्नमयादिष्वेकत्र गुणप्रधानत्वायोग इति भावः । द्वितीयं दूषयति **अन्यतरपरिग्रहे चेति** । अन्यतरस्मिन्वाक्ये ब्रह्मोक्तिस्वीकारे सतीत्यर्थः । नन्वसद् ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेदेत्यानन्दमयेऽपि ब्रह्मशब्दश्रवणादुभयत्र ब्रह्मशब्दश्रवणे कथं पुच्छस्य ब्रह्मत्वमानन्दमयस्याब्रह्मत्वमुच्यत इत्यतः श्लोकस्य पुच्छविषयत्वेनानन्दमयाविषयत्वान्न तत्र ब्रह्मशब्दश्रवणमिति नानन्दमयस्य ब्रह्मत्वप्राप्तिरित्याह **असन्नेवेति श्लोकस्येति** । आनन्दमयपरित्यागेन कुतः श्लोकस्य पुच्छविषयत्वकल्पनम् । श्लोकोक्तभावाभाववेदनयोर्गुणदोषोक्तेः पुच्छब्रह्मविषयत्वे सम्भवादानन्दमयब्रह्मविषयत्वे चासम्भवात् पुच्छब्रह्मविषयत्वमेव कल्पनीयमित्याह **न हीति** । आनन्दमयब्रह्मणोऽपि भावाभाववेदनयोर्गुणदोषोक्तेरुपपत्तेः कथमानन्दमयब्रह्मविषयत्वे तदनुपपत्तिरित्यत आह **न चानन्दस्येति** । **अनुभवसिद्धस्येति** । प्रियमोदादिविशेषत्वानन्दमयस्य सर्वलोकानुभवसिद्धत्वमिति भावः । पुच्छवाक्ये ब्रह्मशब्देन स्वप्रधानोक्तौ पुच्छशब्दस्य का गतिरिति पृच्छति **कथं तर्हीति** । प्रतिष्ठाशब्दविरोधात् पुच्छशब्दस्य तत्र मुख्यवृत्त्यसम्भवेऽपि पृथिव्यादिपुच्छेष्वाधारत्वदृष्ट्या ब्रह्मण्यपि सर्वाधारे लक्षणया पुच्छपदमुपपन्नमित्याह **पुच्छवदिति** । **प्रियाद्यवयवेति** । तस्य प्रियमेव शिर





इत्यादिना प्रियाद्यवयववत्त्वस्य तस्यैष एव शारीर आत्मा यः पूर्वस्येति शारीरत्वस्य च श्रवणादित्यर्थः। सविशेषत्वादित्यतःपरमानन्दमयस्य ब्रह्मत्व इति शेषः। इष्टापत्तिं परिहरति **निर्विशेषं चेति**। तत्कुत इत्यत आह **वाङ्मनसागोचरत्वश्रुतेरिति**। यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहेति वाङ्मनसागोचरत्वश्रुतेरित्यर्थः। एवं मयटो विकारार्थत्वेन प्राचुर्यार्थत्वाभावान्नानन्दमये ब्रह्मविषयत्वमाश्रयितुं युक्तमित्युक्तम्। इदानीमस्तु मयटः प्राचुर्यार्थत्वं तथाऽपि नानन्दमये ब्रह्मविषयत्वमाश्रयितुं युक्तमित्याह **मयट इति**। **प्राचुर्यस्येति**। समानाधिकरणस्य प्रकृत्यर्थप्रतियोग्यल्पत्वसापेक्षत्वनियमादित्यर्थः। ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेन प्राचुर्यस्य लोके दर्शनादिति भावः। अतिमधुरे रुच्यर्थं रसान्तरानुवेधवदानन्देऽपीत्युत्कर्षार्थमीषद्दुःखानुषक्तिरिष्टैवेत्याशङ्क्याह **न चेति**।

**किञ्चेति**। प्रतिदेहं प्रियादीनां सातिशयत्वेनानन्दमयस्यापि सातिशयत्वाद् ब्रह्मणोऽपि प्रतिशरीरं सातिशयत्वप्रसङ्ग इत्यर्थः। इष्टापत्तिं परिहरति **न चेति**। **अनन्तत्वश्रुतेरिति**। सत्यं ज्ञानमनन्तं ब्रह्मेत्यनन्तश्रुतेरित्यर्थः। भृगुवल्लीसमाख्यानादन्नमयादीनां ब्रह्मत्वमित्याशङ्क्य पूर्वानुवाकेऽन्नमयादिशब्दानां श्रवणादुत्तरानुवाके मयट्प्रत्ययहीनानामन्नादिशब्दानामेव श्रवणाच्छब्दभेदे च निमित्तभेदस्याभिधेयभेदस्य चावश्यकत्वेन भिन्नविषयत्वान्न समाख्याऽत्रास्तीत्याह **न चेति**। नन्वेतमानन्दमयमात्मानमुपसङ्क्रामतीति ब्रह्मविद आनन्दमयप्राप्तिश्रवणादानन्दमयस्य चाब्रह्मत्वे तदयोगादानन्दमयस्य ब्रह्मत्वमिति चेत्। तर्ह्येतमन्नमयमात्मानमुपसङ्क्रामतीत्यन्नमयादीनामपि ब्रह्मविदः प्राप्तिश्रवणान्यथाऽनुपपत्त्या ब्रह्मत्वप्रसङ्गेनान्नमयादीनामब्रह्मत्वमङ्गीकृत्य आनन्दमयस्यैव ब्रह्मत्वाङ्गीकारायोगात्। न चान्नमयमात्मानमुपसङ्क्रामतीत्यत्रोपसङ्क्रमशब्दस्यातिक्रमार्थत्वादन्नमयादीनामतिक्रममात्राभिधानेऽपि प्राप्तेरनभिधानान्नोक्तानुपपत्तिरिति वाच्यम्। तथा सत्यानन्दमयमात्मानमुपसङ्क्रामतीत्यत्रापि तदर्थत्वापत्त्या ब्रह्मविदस्तत्प्राप्तिश्रवणासिद्धेर्नानन्दमयस्यापि ब्रह्मत्वमित्याशयेनाह **एतमानन्दमयमात्मानमिति चेति**। ननूत्तरानुवाकोक्तस्यानन्दस्य आनन्दो ब्रह्मेति व्यजानादिति ब्रह्मशब्दश्रवणादिना ब्रह्मत्वादन्नप्राणमनोविज्ञानान्तरं श्रुतेनानन्देनान्नमयप्राणमयमनोमयविज्ञानमयानन्तरं श्रुतस्य आनन्दमयस्य स्थानप्रमाणेनाभेदादानन्दमयस्य ब्रह्मत्वमस्त्विति चेत्। तर्ह्युत्तरानुवाकोक्तान्नादीनामप्यन्नं ब्रह्मेति व्यजानादित्यादिब्रह्मश्रुत्या ब्रह्मत्वेनोत्तरानुवाकोक्तान्नप्राणमनोविज्ञानैः पूर्वानुवाकोक्तान्नमयप्राणमयमनोमयविज्ञानमयानां स्थानप्रमाणेनाभेदादन्नमयादीनामपि ब्रह्मत्वस्य स्वीकर्तव्यतयाऽर्धजरतीयायोगात्। न चान्ते एतमन्नमयमात्मानमुपसङ्क्रम्येति मयट्प्रत्ययश्रवणेन उत्तरानुवाकोक्तान्नादीनामन्नमयादित्वमेवेत्यब्रह्मत्वप्राप्तेर्न तत्स्थानप्रमाणेन पूर्वानुवाकोक्तानन्दमयस्यापि ब्रह्मत्वप्राप्तिरिति वाच्यम्। तर्हि तत एवोत्तरानुवाकोक्तानन्दस्याप्यानन्दमयत्वेनाब्रह्मत्वप्राप्त्या न तत्स्थानप्रामाण्येन पूर्वानुवाकोक्तानन्दमयस्यापि ब्रह्मत्वप्राप्तिरित्याशयेनाह **अन्ते मयटः श्रवणेनेति**। ननु ब्रह्मज्ञानार्थिनस्तदुपदेशान्यथाऽनुपपत्त्या आनन्दमयस्य ब्रह्मत्वमेवेत्यभिप्राय इति चेत्। तर्हि तत एवान्नमयादीनामपि ब्रह्मत्वप्रसङ्गेनार्धजरतीयानुपपत्तेस्तादवस्थ्यात्। न च ब्रह्मज्ञानार्थिनो नान्नमयाद्युपदेशो अनर्थको ब्रह्मज्ञानोपायत्वेन द्वारतया तदुपपत्तेरिति वाच्यम्। तथा सत्यानन्दमयस्यापि ब्रह्मज्ञानार्थिनं प्रत्युपदेशानुपपत्तेः





पुच्छब्रह्मज्ञानोपायत्वेन द्वारतया तदुपपत्तेरिति नोक्तयुक्त्याऽप्यानन्दमयस्य ब्रह्मत्वसिद्धिरित्याशयेनाह **ब्रह्मज्ञानार्थिन इति**।

**एवं तर्हीति**। आनन्दमयस्याब्रह्मत्व इत्यर्थः। का कथन्तेत्यत आह **आनन्दमयस्येति**। **गुणे त्विति**। यथा ह्यग्नीषोमीये पशावेकपाशके 'अदितिः पाशान्प्रमुमोक्त्वेतानि'ति 'अदितिः पाशं प्रमुमोक्त्वेतमि'ति च मन्त्रौ श्रुतौ। तत्र बहुवचनवान्मन्त्रः किं प्रकरणादुत्क्रष्टव्यो न वेति विशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्ते विशेष्यप्रधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीये समवेतार्थत्वात् तदनुरोधेन बहुवचनं पाशगुणत्वेन तद्विशेषणभूतबहुत्ववाचकमन्याय्यया लक्षणया पाशावयवाँल्लक्षयतीति नवमे निर्धारितम्। विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वादिति। उत्कर्षोऽनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति च मन्त्रयोर्विकल्पः स्यात्। पाशप्रातिपदिकस्योभयत्र समत्वात्। गुणे प्रत्ययार्थे त्वन्याय्यकल्पनान्न तद्बलान्मन्त्रोत्कर्षः प्रत्ययस्य पदैकदेशत्वात्। प्रातिपदिकपारतन्त्र्येणोत्कर्षकत्वायोगादिति सूत्रार्थः। एवमिहापि प्रधानश्रुतिविरोधे गुणभूतसूत्राण्यन्यथा नेयानीति भावः। नन्वाम्नायस्यार्थं वक्तुं प्रभवामो नाम्नायं पर्यनुयोक्तुमिति न्यायादपर्यनुयोज्ये वेदे पाशैक्येऽपि बहुवचनं कथञ्चिदवयवबहुत्वाभिप्रायं युज्यते। पौरुषेयेषु सूत्रेषु स्वायत्ते शब्दप्रयोगे सर्वज्ञेन सूत्रकृता किमर्थं श्रुतिविरोधभ्रान्तिकरसूत्रप्रणयनं कृतमित्याशङ्क्याध्याहाराद्यपेक्षानेकार्थप्रत्यायनार्थमित्याशयेनोक्तम् **कथञ्चिदिति**। अध्याहारलक्षणाऽनुषङ्गादिभिरित्यर्थः।

**योज्यत्वादिति**। ब्रह्मपुच्छं प्रतिष्ठेत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते उत स्वप्रधानत्वेनेति विशये पुच्छशब्दादवयवत्वेनेति प्राप्त उच्यते **आनन्दमयोऽभ्यासादिति**। अत्रानन्दमयशब्दस्यानन्दमयपर्यायाम्नाते पुच्छब्रह्मणि लक्षणा। स्वप्राधान्येन प्रतिपाद्यमित्यध्याहारः। ततश्च ब्रह्मपुच्छं प्रतिष्ठेति वाक्यगतब्रह्मपदेन स्वप्रधानमेव ब्रह्मोच्यते। असन्नेव स भवतीत्यस्मिन्निगमनश्लोके ब्रह्मणः केवलस्याभ्यस्यमानत्वादित्येतत्सूत्रार्थः। यत्र ब्रह्मत्वं साध्यं तत्र तद्विषयश्रुत्यादिमात्रस्य हेतूकर्तव्यत्वेऽपीह ब्रह्मणः पुच्छवाक्यविषयत्वे स्थिते तात्पर्येण प्रधानतया तत्प्रतिपाद्यत्वस्य साध्यतया तात्पर्यसिद्धये तल्लिङ्गतयाऽभ्यासपर्यन्तहेतूक्तिरित्यवगन्तव्यम्। द्वितीयसूत्रे विकारशब्देनावयवो लक्ष्यते तद्वाचिशब्दः पुच्छशब्दः। स एव शब्दो विकारो विगतकार्योऽनर्थकः शब्दः कारशब्दः कर्मणि घञन्तः कार्यवाची। तथा च पुच्छमित्यवयववाचिशब्दात् तस्य स्वार्थपरित्यागाल्लक्षणीयाभावेनानर्थक्यप्रसङ्गाच्च न स्वप्रधानत्वं ब्रह्मणो युक्तमिति शङ्कार्थः। न च पुच्छपदेनाधारत्वं लक्षणीयम्। प्रतिष्ठापदेन पौनरुक्त्यप्रसङ्गादिति शङ्कितुर्हृदयम्। प्राचुर्यादप्यवयवशब्दोपपत्तेः। प्राचुर्यं प्रायापत्तिरवयवप्राये वचनमित्यर्थः। अन्नमयादीनां हि शिरआदिपुच्छान्तेष्ववयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वाऽवयवप्रायापत्त्या ब्रह्म पुच्छं प्रतिष्ठेत्याह। नावयवत्वविवक्षयेति द्वितीयसूत्रार्थः। पुच्छवाक्ये पुच्छशब्देनावयवो नोच्यते किं त्वाधारो लक्ष्यत इत्यत्र हेत्वन्तरमुच्यते **तद्धेतुव्यपदेशाच्चेति**। सर्वस्य विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते। इदं सर्वमसृजत यदिदं किञ्चेति। न च कारणस्य सतो ब्रह्मणः स्वविकारमानन्दमयं प्रति मुख्यमवयवत्वमुपपद्यत इत्यर्थः। यत् 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति मन्त्रवर्णेन ब्रह्मोक्तं





तदेतदुपायभूतेन ब्राह्मणेन स्वप्राधान्येन गीयते 'ब्रह्म पुच्छं प्रतिष्ठे'ति । अवयवत्वे त्वस्य मन्त्रे प्राधान्यं ब्राह्मणे स्वप्राधान्येन गीयते 'ब्रह्म पुच्छं प्रतिष्ठे'ति । अवयवत्वे त्वस्य मन्त्रे प्राधान्यं ब्राह्मणे त्वप्राधान्यमित्युपायो-पेययोर्मन्त्रब्राह्मणयोर्विप्रतिपत्तिः स्यादिति मान्त्रवर्णिकसूत्रार्थः । इतश्च पुच्छवाक्यस्थं ब्रह्मैव स्वप्रधानं प्रतिपाद्यम् । इतरस्त्वानन्दमयोऽत्र न प्रतिपाद्यते । ब्रह्मपुच्छं हि प्रकृत्य श्रुतस्य 'सोऽकामयत बहु स्यां प्रजायेयेत्यभिध्यानपूर्वकसर्वस्रष्टृत्वस्य वैषयिकप्रियादिमत्त्वेन तत्रानुपपत्तेरिति पञ्चमार्थः । इतश्च न ब्रह्म पुच्छ-मित्यत्रोक्तं ब्रह्म संसारि यस्माद्ब्रह्मपुच्छमित्यधिकारे 'रसो वै स रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति जीवब्रह्मणी भेदेनैव व्यपदिश्येते । न हि लब्धैव लब्धव्यो भवतीति षष्ठार्थः । ननु भृगुवल्ल्यामानन्दस्य ब्रह्मत्वादानन्दमयस्यापि ब्रह्मत्वं पञ्चमपर्यायत्वादनुमीयत इत्याशङ्कानिवृत्त्यर्थं सूत्रम् । **कामाच्चेति** । काम्यत इति काम आनन्दस्तस्य ब्रह्मत्वदृष्टेर्नानुमानेनानन्दमयस्यापि ब्रह्मत्वमपेक्षितव्यम् । विकारार्थकमयड्विरोधादित्यर्थः । इतोऽपि नानन्द-मयोऽत्र प्रतिपाद्यते । पुच्छवाक्योक्ते ब्रह्मणि प्रतिबद्धस्यानन्दमयस्य 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते-ऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ।' इत्यादिना तत्प्राप्तिमोक्षाभिधानादित्यस्मिन्निति सूत्रार्थः । तदेवमानन्दमयशब्दवाच्यस्याप्रतिपाद्यत्वाल्लक्ष्यस्य ब्रह्मणो व्यतिरेकात्पुच्छवाक्यस्थब्रह्मैवात्र स्वप्रधानं प्रतिपाद्यमिति स्थितमित्याशयः । एतच्च शाङ्करभाष्यतदानन्दगिरिभामतीकल्पतरुतत्परिमलेषु स्पष्टं विशेषतः तत एवावगन्तव्यम् ।

**वा०र०**— कुतो ब्रह्मणः स्वप्राधान्येन ज्ञेयत्वप्रतिपादकानि एकदेशमतमालम्ब्य तैत्तरीयकेऽन्नमय इत्यारभ्य तस्मादानन्दमयः परमात्मेति स्थितमित्यन्तभाष्योक्तरीत्या अन्नमयादि चतुर्णां ब्रह्मत्वेति आनन्दमयस्य ब्रह्मत्वमेवेत्येतदर्थपरतया कुतो न व्याख्यायते इत्यतोऽन्नमयादीनामिवानन्दमयस्यापि ब्रह्मत्वानुपपत्तेर्न तत्परतया सूत्रयोजना सम्भवतीति वक्तुं आनन्दमयस्यापि ब्रह्मत्वमनुपपन्नमिति प्रतिजानीते **तथा हि अन्नमयादय इति** मूलेन । साङ्करभाष्यव्याख्यानरूपानन्दगिर्यनुसारेण व्याचष्टे **अन्नरसविकार इत्यादिना** । अनेनान्नरसमयत्वं मुख्यमेवेति सूचयति । प्राणाद्युपाधीत्युक्तार्थे दृष्टान्तकथनं **यथा हीति** । अत्राहेत्यादि पूर्वग्रन्थे स्पष्टमेतत् । विकारो हि द्विप्रकारः । कश्चिच्छुक्तिरूप्यादिः स्वरूपेणाध्यस्तः । कश्चित्तु प्रतिबिम्बघटाकाशादि उपाधितो विभक्तस्तत्र प्राणाद्युपाधिविभक्त आत्मा तद्विकारीति कल्पतरूक्तरीत्या विवेको व्याख्येयः । प्राणाद्युपाधीत्युक्तं विशदयति **प्राणोपाधिरात्मेति** । प्राणमय इत्यनन्तरं प्राणविकार इति तदुपाधिरात्मेत्यनन्तरं मनोविकार इति शेषमभिप्रेत्यैवान्ते विज्ञानविकार इत्यप्युक्तं प्राण उपाधिर्यस्येत्यादि विग्रहः । प्राणाद्युपाध्यवच्छिन्नो ह्यात्मा भवति प्राणादि विकार इति भामत्यनुसारेण विकारत्वोक्तिमुपपाद्य 'अन्नमयं शरीरमनात्मानमत्यन्तमूढानात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रूतताम्रादिप्रतिभावत् ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वेण पूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मेति ग्राहयत्' इत्यादि भाष्यानुसारेण व्याचष्टे **यद्वा भृगुवल्ल्युक्तेति** । आत्मन आकाश इत्यादिभ्यः प्रकृतिविकारोपदेशकेभ्यः पूर्ववाक्येभ्यो विकारार्थस्य बुद्धिसन्निहितत्वात् भृगवल्ल्युक्ताधिदैविकान्नादि यथासङ्ख्याम्नानेनाध्यात्मिकेषु तद्विकारत्वोक्तिः प्रतीयत इति भावः । प्राचुर्यार्थत्वे तु हेत्वभावादिति पाठः ।





इतःपरमानन्दगिर्यनुसारेण प्रायो भाष्यव्याख्यानम्। स्मृतिपादस्थ 'विरोधे त्वनपेक्षं स्यादि'त्येतदधिकरणीये 'तेनासां यदि वा नैव क्वचिदस्ति प्रमाणता । सर्वत्राव्याहता वा स्यान्न त्वर्धजरतीयता' इत्येतद्वार्तिकव्याख्यान-रूपराणकोक्तरीत्या न्यायार्थमाह **केनचित्पाशुपतेनेति** । प्रवादतुल्यप्रवादेनेत्यर्थ इति पाठः । 'गुरुर्गुरूणां प्रभव' इत्येतद्भाष्यमूलगतार्धजरतीयानुपपत्तेरित्येतद्व्याख्यानस्थन्यायशरीरं लेख्यमित्याज्ञप्तेन शिष्येणानुपपत्तेरित्यधि-कांशस्यापि लेखनात् । अत्र च प्रवादरूपन्यायेनेत्यस्याश्रीयत इत्यनेनान्वयात् । इदं चार्धजरतीयेति मूलपाठपक्षे । यदि चार्धचरतीयेति पाठस्तदा(?)ग्रहैकत्वाधिकरणस्थश्रुत 'शब्दाभिधेयानां नार्थानां युगपत्तथा । ग्रहणाग्रहणं युक्तं अर्धकुक्कुटिपाकवदि'त्येतद्वार्तिकव्याख्यानरूपराणके सदसत्त्वात् श्रुताश्रुतत्वकल्पनैकस्य विरोधान्न समीचीनेत्युक्ते श्रुतस्यापि शब्दस्य कश्चिदर्थो विधिना गृहीष्यते कश्चिन्नेत्युक्तम् । तथा शब्दातिदिष्टं विरोधं दृढयितुमर्धकुक्कुट्यः पच्यतामर्धं प्रसवाय ध्रीयतामिति लोकप्रवादायातं पाशुपतवाक्यं नैकस्य वस्तुनोऽर्धचरतीयम् । कथमनेन कुक्कुट्या वा अर्धपाकः प्रसवायार्धधारणमिति वार्तिकालोचनया दृष्टान्तितं गम्यत इत्यर्धचरतीयमुपपादितम् । तत्प्रकारेण चरतीयेति पाठो व्याख्येयः । तथा चार्धचरतीशब्देनार्धपाकादिलोकप्रवादस्य छप्रत्ययेन चोपमानोपमेयभावरूप-सम्बन्धस्य प्रतिपादनादुक्तप्रवादतुल्यप्रवादेनेत्यर्थलाभ इत्यप्युपलक्षणया ज्ञेयम् । अनिर्वचनीयासिद्धेरेवानुमानस्या-प्यसिद्धिरित्येतत् तत्त्वोद्योतटीकास्थार्धचरतीयानुपपत्तेरित्येतद्वाक्यव्याख्यावसरे टीकाकृता न्यायद्वयस्यापि पक्ष-भेदमाश्रित्योपपादनादिति ज्ञेयम् ।

एवं श्रुतिलिङ्गप्रकरणविरोधेनेत्यनन्तरं प्राचुर्यर्थत्वं निरस्य तदर्थत्वे मयट इति पाठः । श्रुतिर्मयटः । लिङ्गप्रियादियोगवत्वम् । प्रकरणं विकारस्य । त्रयस्यापि प्रागुपपादनात् । **कथंशब्दस्येति** । कथमिवेति पूर्ववाक्ये दृष्टान्ताभावपरतया कथंशब्दो व्याख्यातः । इदानीं तु प्रश्नार्थत्वमङ्गीकृत्येवेत्यस्य कथं पुनरित्यादाविवालङ्का-रार्थत्वमङ्गीकृत्य साधकप्रश्नपर्यवसानमिति योजनान्तरमप्यभिप्रेतम् । अत एव प्रश्नानुसारेण साधकमाशङ्कत इत्यर्थः । **इत्याह नेतीति** । इदं च इति चेदित्यनन्तरं नेत्यस्य प्रसङ्गपदे च प्रसङ्गादिति पञ्चम्यन्ततया च पाठपक्षे । नशब्देन रहिते पञ्चम्यन्ततया विना प्रसङ्ग इति प्रथमान्ततया च पाठे तु अन्नमयादीनामितीत्येव प्रतीकमुपादेयम् । नेत्यस्याध्याहारः प्रसङ्गादिति विभक्तिव्यत्यासश्च व्याख्येय इति भावेनायं टीकाग्रन्थ इत्यप्याहुः । **लिङ्गेनेति** । तस्य प्रकरणाद्बलवत्वादिति भावः । **अन्नमयादिवत्पुच्छेति** । अनेनान्नमयादय इत्यत्र बुद्ध्या विवेकेन पूर्वचतुर्णान्तत्वेनोपादानमिति सूचयति । **तस्य स्वप्रधानेति** । स्वप्रधानश्चासावर्थश्च स्वप्रधा-नार्थस्तस्य भावस्तत्ता ब्रह्मणः प्रकृतत्वे तच्छब्दस्यापि प्रकृतत्वाद्ब्रह्मशब्दस्य परामर्श इत्यप्याहुः । **अन्नमया-दीनामिवेतीति** । अनेनान्नमयादीनामित्यनन्तरं पुच्छमित्यध्याहार्यम् । तथा पुच्छमिवेति सम्पद्यत इति दृष्टान्त-दार्ष्टान्तिकानुगुणतेति बोध्यम् । **तथैतत्प्रत्यभिज्ञान इति** । स्वप्रधानत्वेन ब्रह्मप्रत्यभिज्ञाने सतीत्यर्थः । **प्रथम-चरमेति** । ब्रह्मशब्दः प्रथमश्रुतः पुच्छशब्दश्चरमश्रुतः तयोर्मध्ये ब्रह्मशब्दस्यासञ्जातविरोधित्वेन बलीयस्त्वा-दित्यर्थः । पुच्छत्वेन प्राप्तं यद्गुणत्वं तद्बाध इति योजना । न हीत्येतद्व्यावर्त्याशङ्कां दर्शयन् परिहाराभिप्रायं च दर्शयति **आनन्दमयपरित्यागेनेत्यादिना** । तत्र कल्पनमित्यन्तेन शङ्काप्रदर्शनम् । श्लोकोक्तेत्यादिः कल्पनीय-





मित्यन्तः परिहारः । **भावाभाववेदनयोरिति** । सत्त्वासत्त्ववेदनयोरित्यर्थः । **पुच्छब्रह्म** इत्यत्र पुच्छत्वेनोक्तं यद्ब्रह्मेति योज्यम् । **सान्तरेति** । रुच्युत्पादकलवणादियुक्तपदार्थान्तरेत्यर्थः । **शब्दभेदे चेति** । वक्ष्यमाण-मूलानुसारेण शब्दान्तरन्यायेनेत्यर्थः । **अङ्गीकारायोगादिति** । अङ्गीकारायोगप्रसङ्ग इत्यर्थः । अङ्गीकारायोग इत्येव पाठस्तु स्वरस एव । **स्थानप्रमाणेनेति** । अत्र मीमांसकाभिमतं यथासङ्ख्याम्नानरूपं पाठसादेश्यलक्षणं स्थानमेवा-भिमतम् । ननु सिद्धान्त्यभिमतनित्यानन्दमयनयचन्द्रिकाटीकायामुक्तम् । तदनुसारेणात्रापि मीमांसकाभि-मतमेव पाठसादेश्यलक्षणं स्थानप्रमाणमभिमतम् । नत्वनेकप्रकरणसमुदायरूपं स्थानम् । येन तस्यात्राप्रसङ्गः शङ्क्येतेति ज्ञेयम् ।

कल्पतर्वनुसारेणाधिकरणशरीरं दर्शयति **यथा ह्यग्नीषोमीय इत्यादिना । विशेष्यप्रधानभूतेति** । मयडर्थ-प्रतिपादकार्थस्य विशेषणत्वेनाप्राधान्येऽपि विभक्त्यर्थं सङ्ख्यां प्रति विशेष्यत्वेन तस्य प्राधान्यमिति सूचयितुं विशेष्येत्युक्तम् । अधिकं तु परिमलानुसारेण ज्ञेयम् । निर्धारणस्थलविशेषप्रदर्शनं विप्रतिपत्तावित्यादिक एकदेश-त्वादितीति इति सूत्रे निर्धारितमिति पूर्वेणान्वयः । सूत्रार्थमाह **उत्कर्षोऽनुत्कर्षो वेत्यस्यामिति** । अत्रोत्कर्षो वेति पाठः । उत्कर्षपदत्यागो लेखकागतः । अत एवोपासनापादीयैतदधिकरणशरीरप्रदर्शनानन्तरं उत्कर्षपदसाहित्ये-नानुवाद इति ज्ञेयम् । परिमलानुसारेणाह **नन्वन्नमयस्येत्यादिना** । अनुषङ्गादिभिरित्यत्रादिपदेन रोगवृत्तेश्च परिग्रहः । ब्रह्मपुच्छं प्रतिष्ठेत्यत्र किमानन्दमयस्येत्यादिभाष्यानुसारेण योजनां दर्शयति **ब्रह्मपुच्छमित्यादि** । परिमलानुसारेणाह **अत्रानन्देति** । सूत्रे विद्यमानस्यानन्दमयशब्दस्येत्यर्थः । एकमपेक्षितं प्रतिपाद्यानन्दमय आत्मेत्याद(?)त्यत्रेति भाष्यानुसारेण सूत्रार्थमाह **ततश्चेति । तत्सूत्रम्** आनन्दमय इत्येतत्सूत्रम् । परिमलानुसारेण द्वितीयसूत्रस्थशङ्काभागं व्याचष्टे **यत्र ब्रह्मत्वमित्यादिना । शङ्कार्थ इति** । विकारशब्दान्नेति चेदित्येतच्छङ्काभागार्थ इत्यर्थः । टीकायां हृदयमित्यनन्तरं नायं दोष इति वाक्ययुक्त एव पाठः स्वरसः । अत्रोच्यते । नायं दोषः प्राचुर्यादपीति परभाष्या-नुसारात् । **शङ्कानिरासकेनेति** । सूत्रपदस्यार्थलाभाच्चेति ज्ञेयम् । भाष्यानुसारेण प्राचुर्यादिति परिहारांशं व्याचष्टे **प्राचुर्यादपीत्यादिना** । आनन्दगिर्यनुसारेण सूत्रमवतार्य सर्वस्य विकारजातस्येति भाष्यानुसारेण तदर्थमाह **पुच्छ-वाक्य इत्यादिना** । भाष्यकृता आनन्दमयेत्यादि सूत्रत्रयं व्याख्यायापराण्यपि सूत्राणि यथासम्भवपुच्छवाक्य-निर्दिष्टस्यैव ब्रह्मणः उपपादकानि द्रष्टव्यानीत्युक्तम् । तत्प्रपञ्चयितुं भामत्यां यत्सत्यं ज्ञानमित्यादिनेत्यादिना 'मात्रं वर्णिका'दिसूत्राणि योजितानि तदनुसारेणानन्दनिर्णयानुसारेण च शिष्टसूत्राणां व्याख्यानमिति ज्ञेयम् ।

**स०ब्र०— कोशाः कल्प्यन्त इति** । कोशवादिभिरस्माभिरिति शेषः । **नन्वन्नमयादीनामिवेति** । अन्नमयादिप्रकरणेषु अन्नमयादिपुच्छत्वेनोक्तानि यथा न स्वप्रधानानि तथेत्यर्थः । **प्रियाद्यवयवयोगशरीर-त्वाभ्यामिति** । 'तस्य प्रियमेव शिर' इत्यादिना आनन्दमयस्य प्रियाद्यवयवयोगः कथ्यते । तथा 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'त्यनेन तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इति विज्ञानमयशारीरत्वमुच्यते । इदं च विशेषणं न सम्भवति निर्विशेष इति भावः ।





**विठ्ठल०— कस्मादर्धचरतीयेति** । कस्माद्धेतोरानन्दमयस्य मयटः प्राचुर्यार्थत्वं मयटः प्रायपाठापवादकाभावेनार्धचरतीयतापातात् । कथं वा ब्रह्मविषयत्वं तत्साधकाभावादित्यर्थः । **आश्रयतयेति** । एतेनात्र शब्द आश्रयत्वार्थिक इत्युक्तं भवति । तथा चान्याश्रितस्य न ब्रह्मत्वमिति भावः । तद्विजिज्ञापयिषयेति = ब्रह्मण आश्रयताज्ञापनेच्छयेत्यर्थः । **अन्नमयादीनामिवेति** । अन्नमयादिषु पुच्छतयोक्तं यथा न स्वप्रधानं तथेत्यर्थः । **स्वप्रधानतयेति** । ब्रह्मविदाप्नोति परमिति ब्रह्मणः स्वप्राधान्येन प्रकृतत्वादित्यर्थः । नन्वानन्दमयावयवत्वेऽपि ब्रह्मणः स्वप्रधानतया प्रकृतत्वसम्भवेन कुतः प्रकृतत्वसिद्धये आनन्दमयाश्रयत्वं कल्प्यत इत्याशङ्क्य निराकरोति **न चेति** । नन्वानन्दमये कथं ब्रह्मशब्दाश्रवणं तद्विषयतयोदाहृतश्लोके ब्रह्मश्रवणादित्यत आह **असन्नेवेति श्लोकस्येति** । श्लोकस्यानन्दमयविषयत्वे बाधकं चाह **न च इति** । **भावाभावेति** । अस्ति ब्रह्मेति चेद्वेद असद्ब्रह्मेति वेद चेदित्युक्तेत्यर्थः । तर्हीत्यस्य ब्रह्मणः स्वप्रधानत्व इत्यर्थः । **प्रियाद्यवयवयोगेति** । तस्य प्रियमेव शिरः इति, तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यानन्दमये प्रियाद्यवयवयोगस्य शरीरत्वस्य च सविशेषत्वज्ञापकस्य श्रवणादिति भावः । **अनन्तत्वश्रुतेरिति** । न हि देशकालवस्तुपरिच्छेदराहित्यरूपानन्तत्वेन श्रुतस्य प्रतिशरीरं भेदो युज्यत इति भावः । मयटोऽश्रवणेनेति आनन्दो ब्रह्मेति व्यजानात् इत्येवोक्तेरित्यर्थः । तत्रानन्दपदोक्तस्य ब्रह्मत्वोपपत्तेरिति भावः । एतमानन्दमयमात्मानमुपसंक्रम्येत्युपसंहारे मयटः श्रवणमस्तीति चेत् अत एव तद्वाक्योक्तस्याब्रह्मत्वमङ्गीक्रियत इत्याह **एतमानन्दमयमिति** । तर्ह्युपसंहारानुगुण्यं प्रकरणस्य न स्यादित्यत आह **अन्ते मयट इति** । तर्हि ब्रह्मज्ञानार्थिनो भृगोर्ब्रह्मतया तदुपदेशानुपपत्तिरित्यतः स्थूलारुन्धतीन्यायेनेत्याह **ब्रह्मज्ञानार्थिन इति** । **गुणे त्वन्यायकल्पना इति** । अग्नीषोमीये एकपाशके पशौ, अदितिः पाशान् प्रमुमुक्ते तानिति पाशं प्रमुमुक्ते तमिति मन्त्रौ श्रुतौ, तत्र बहुवचनमन्त्रस्योत्कर्षोऽनुकर्षो वेति संशये 'विप्रतिपत्तौ विकल्पः स्यात् समत्वात् गुणे त्वन्याय्यकल्पनैकदेशत्वात्' इति सूत्रम् । उत्कर्षानुत्कर्षविप्रतिपत्तौ पाशं पाशान् मन्त्रयोः विकल्पः स्यात् उभयत्र प्रातिपदिकस्य समत्वात् । गुणे प्रत्ययार्थे त्वन्याय्यकल्पनात् न तद्बलात् मन्त्रोत्कर्षः प्रत्ययस्य पदैकदेशत्वात् इति सूत्रार्थः । तत्र यथा प्रातिपदिकबलेन गुणभूतप्रत्ययोत्कर्षः एवमिहापि प्रधानश्रुतिविरोधेन गुणभूतसूत्राणां कथञ्चिद्योज्यत्वम् इति ब्रह्मपुच्छत्वमित्यत्र किं आनन्दमयावयवतया ब्रह्म विवक्ष्यते किं वा स्वप्रधानतया इति विशये अवयवत्वेनैव पुच्छशब्दश्रवणादिति पूर्वपक्षे प्राप्ते आनन्दमयोऽभ्यासादित्यत्रान्नमयेत्यादिवाक्ये ब्रह्मपुच्छमित्युक्तं ब्रह्मैव स्वप्रधानतया प्रतिपाद्यं नत्वानन्दमयपदोक्तः कोशोऽत्र प्रकरणे स्वप्रधानतया प्रतिपाद्यः असन्नेवेत्युदाहृतश्लोके केवलस्य ब्रह्मण एवाभ्यस्यमानत्वात् । न च विकारशब्दाद्विकारवाचकपुच्छशब्दान्न स्वप्रधानं ब्रह्मेति चेन्न प्राचुर्यात् । अत्र सर्वत्रावयवप्राचुर्यादिः वात्र पुच्छशब्दप्रयोगः । वस्तुतस्तु प्रतिष्ठेत्यानन्दमयाश्रयत्वमेवातः स्वप्रधानत्वम् । 'तद्धेतुव्यपदेशाच्च', 'स इदं सर्वमसृजत', यदिदं किञ्चेत्येतस्य ब्रह्मणः सर्वहेतुत्वव्यपदेशाच्च । नावयवत्वम् । न हि सर्वकारणस्य स्वकृतविकारानन्दमयैकदेशत्वरूपावयवत्वमुपपद्यते । किञ्च सत्यं ज्ञानम् अनन्तम् इति मन्त्रवर्णे स्वप्रधानतयोक्तमेव ब्रह्मात्र ब्रह्मपुच्छमिति ब्राह्मणोऽत्र गीयते । तस्य च पुच्छतयावयवत्वे मन्त्रब्राह्मणयोर्विरोधः स्यात् । न च परमात्मेतरो जीवो ब्रह्मपुच्छमित्युच्यते । अतोऽवयवत्वं सम्भवतीति वाच्यम् । 'स इदं सर्वमसृजते'ति सर्वस्रष्टृत्वानुपपत्तेः । न हि





सृज्यमानशरीरावच्छिन्नस्य जीवस्यादिकार्यस्रष्टृत्वं उपपद्यते । किञ्च 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवति' इति भेदव्यपदेशाच्च न ब्रह्मपुच्छमित्युक्तं ब्रह्म संसारी । न हि लब्धृतयोक्तये लब्धव्यो भवति । अचेतनं प्रधानमेवात्र ब्रह्मतयोच्यत इति चेन्न । 'कामाच्च नानुमानापेक्षा', 'सोऽकामयेते'ति कामयितृत्वनिर्देशान्नानुमानिकं साङ्ख्य-परिकल्पितं प्रधानं ब्रह्मत्वेनापेक्षितव्यम् इति स्वस्वप्रधाने एवायं ब्रह्मशब्दः यस्मादस्मिन् ब्रह्मणि प्रकृते प्रबुद्धस्य जीवस्य तद्योगं तत्तादात्म्यापत्तिरूपं मुक्तिं शास्ति, अदृश्येऽनात्मेऽनिरुक्ते निलयने अभ अभयं प्रतिष्ठां विन्दत इति । न हि प्रधानतादात्म्यं जीवस्य युज्यते । अतः स्वप्रधानं ब्रह्मैवात्र प्रतिपाद्यते नानन्दमय इति ।

**चषकः— गुणे त्वन्याय्यकल्पनेति** । यथा ह्यग्नीषोमीये पशावेकपाशकेऽदितिः पाशान् प्रमुमोक्त्वेता-निति अदितिः पाशं प्रमुमोक्त्वेतमिति च मन्त्रौ श्रुतौ । तत्र बहुवचनवान् मन्त्रः किं प्रकरणादुत्क्रष्टव्यो न वेति विशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्ते विशेष्यप्रधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीयसमवेतार्थत्वात् तदनुरोधेन बहुवचनं पशुगुणत्वेन तद्विशेषणीभूतबहुत्ववाचकमन्याय्यया लक्षणया पाशावयवान् लक्षयतीति नवमे निर्धारितम् । विप्रतिपत्तौ विकल्पः स्यात् समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वादिति । उत्कर्षोऽनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति च मन्त्रयोर्विकल्पः स्यात् पाशप्रातिपदिकस्योभयत्र साम्यात् । गुणे प्रत्ययार्थे त्वन्याय्यकल्पना तद्बलान्मन्त्रोत्कर्षः । प्रत्ययस्य पदैकदेशत्वात् प्रातिपदिकपारतन्त्र्येणोत्कर्षकत्वायोगादिति सूत्रार्थः । एवमिहापि प्रधानश्रुतिविरोधे गुणभूतसूत्राण्यन्यथा नेयानीति भावः ।

**॥ इति (पञ्चकोशवादि) मायावादिकृतस्यैतत्सूत्राणां व्याख्यानस्यानुवादः ॥**

* * *

**॥ अथ मायावादिव्याख्यानस्य एतत्सूत्रव्याख्यानेन निराकृतत्वेऽपि शिष्यहिततया स्फुटनिरासः ॥**

**॥ तत्रादौ अन्नमयादिपञ्चानां ब्रह्मत्वाभावे तदुभयानुवाकयोः ब्रह्मतयोक्तिविरोधः ॥**

**६९ सु०— तदेतत्सूत्रव्याख्यानेन निराकृतमपि शिष्यहिततया स्फुटं निराकरोति येऽन्नमिति ।**

**अनु०— ये(यो?)ऽन्नं ब्रह्मेत्याद्युपासां सामानाधिकरण्यतः ।**
**उक्त्वा पञ्चस्वरूपाणां पुनस्तत्प्राप्तिवादिनी ॥**
**स्थानद्वयगता वेदवाणी तदपलापिनाम् ।**
**तमसोऽन्यत्र संस्थानं कथमेव सहेत सा ॥**





**इत्यादि** इति क्रियाविशेषणम् । **पञ्चस्वरूपाणाम्** इति विशेषणसमास एवायं न द्विगुः, तद्धितार्थाद्यभावात् । **तत्प्राप्तिवादिनी** ज्ञानफलत्वेनेति शेषः । **स्थानद्वयम्** अनुवाकद्वयम् । **तदपलापिनाम्** अन्नमयादीनां ब्रह्मत्वापलापिनां मायावादिनाम् ।

**इदमुक्तं भवति । अन्नमयादिपञ्चकं यदि न ब्रह्म तदाऽन्नमयादीन्प्रत्युदाहृतश्लोकेषु 'येऽन्नं ब्रह्मोपासत' इति प्रथमानुवाके 'अन्नं ब्रह्मेति व्यजानादि'त्युत्तरानुवाके च ब्रह्मतयोक्तिविरोधः स्यात् । न हि पुच्छस्यापि ब्रह्मत्वे प्रमाणमस्त्यन्यदतो ब्रह्मशब्दात् ॥ नन्वेतद्ब्रह्मज्ञानद्वारतयोपदिष्टं न तु ब्रह्मतयोपदिष्टमिति चेन्न, सामानाधिकरण्येनोक्तत्वात् ॥ न च सामानाधिकरण्यमपि गौणम्, तथा सति विदुषस्तत्प्राप्तिरुक्ता विरुद्ध्येत । न च तत्रातिक्रमोऽर्थ इत्युक्तम् ॥ न चानन्दमये ब्रह्मशब्दो नास्ति श्लोकस्य पुच्छविषयत्वादिति वाच्यम्, तथा सत्यन्नमयादिश्लोकानामपि तथात्वप्राप्तेः ॥ किञ्च बाधकवशादित्थमाश्रीयते, एवमेव वा । नाद्यः, बाधकानां परिहृतत्वात् । द्वितीये तु निर्निमित्तं वेदार्थभूतब्रह्मापलापिनो बौद्धस्येव वेदाभिमानिकोपेन नरकप्राप्तिः स्यादिति ।**

**परि०— तद्धितार्थाद्यभावादिति** । द्वितीयस्याद्यपादे 'दिक्सङ्ख्ये संज्ञायामि'त्यनुवर्त्य 'तद्धितार्थोत्तरपदसमाहारे चे'ति सूत्रे तद्धितार्थे विषयभूते उत्तरपदे च परतः समाहारे वाच्ये दिक्सङ्ख्ये सुबन्तेन समस्येते इति समासं विधाय 'सङ्ख्यापूर्वो द्विगुरि'ति तदुत्तरसूत्रेण सङ्ख्यापूर्वकसमासस्य द्विगुसंज्ञोक्त्या 'द्विगोः' इति ङीपि सति पञ्चस्वरूपीति भाव्यमिति न शङ्क्यम् । तद्धितार्थविषय इत्यादिसमासनिमित्तानामिहाभावेन तेन समासस्यैवात्राप्राप्तेः । किन्तु पञ्च च तानि स्वरूपाणि च पञ्चस्वरूपाणीति 'विशेषणं विशेष्येण बहुलमि'ति सूत्रेण विशेषणसमास एवेत्यर्थः । भाष्यस्थाशेषपदानामुपयोगं व्यञ्जयन् परमतनिरासप्रकारं व्यनक्ति **इदमुक्तं भवतीत्यादिना स्यादितीत्यन्तेन** ।

**गु०दी०— तद्धितार्थाद्यभावात्** इत्यत्र 'तद्धितार्थोत्तरपदसमाहारे चे'ति सूत्रोक्तसंस्कृतत्वादिरूपतद्धितार्थाभावादादिपदोक्तस्तद्धितार्थस्समाहारः ।

**यादु०—** ननु तद्धितार्थोत्तरपदसमाहारे चेति सूत्रप्रापितसमासे सङ्ख्यापूर्वो द्विगुरिति द्विगुसंज्ञायां द्विगुरेकवचनमित्येकवचने द्विगोरिति ङीपः प्राप्तौ पञ्चस्वरूप्या इति वक्तव्ये कथं पञ्चस्वरूपाणामित्युक्तमित्यत आह **विशेषणसमास इति** । **तद्धितार्थादीति** । तथा च न तद्धितार्थोत्तरपदेत्यादिनाऽत्र समासप्राप्तिः । येनोक्तरीत्या





प्रयोगप्रसङ्गः । किन्तु विशेषणं विशेष्येण बहुलमित्यनेनेति भावः । अत्र समाहारविवक्षया द्विगुत्वमङ्गीकृत्य पात्रादित्वेन न समाधानं कृतम् । तथात्वेऽप्येकवचनप्रसङ्गेन बहुवचनानुपपत्तेरित्यवगन्तव्यम् ।

**वं०प०**— **क्रियेति** । उक्त्वेति वचनरूपक्रियाविशेषणमित्यर्थः । **अभावादिति** । अविवक्षितत्वादित्यर्थः । प्रथमानुवाक इत्यनन्तरं 'सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते इति वाक्यं ग्राह्यम् । ननु ब्रह्मतयोक्तावपि न ब्रह्मत्वमङ्गीक्रियत इति चेत् तत्राह **न हीति** । तथा च स्वप्राधान्येन ज्ञेयतया त्वदङ्गीकृतस्यापि 'ब्रह्मपुच्छं प्रतिष्ठे'ति उक्तपुच्छस्यापि ब्रह्मत्वं न स्यादित्याशयः । **नन्वेतदिति** । अन्नमयादिपञ्चकमित्यर्थः । **सामानाधिकरण्येनेति** । अन्नं ब्रह्मेति सामानाधिकरण्येनेत्यर्थः । **तथा सतीति** । अमुख्यब्रह्मत्वोपेतान्नादिसाक्षात्कारेण तत्प्राप्तिरयुक्ता स्यादित्यर्थः ।

**आनन्दः**— येऽन्नं ब्रह्मेत्यादि शब्दस्य उपासात्वाभावेन इत्यादीत्यस्योपासा विशेषणत्वायोगादाह **इत्यादीति** । **क्रियाविशेषणमिति** । ननु पञ्चस्वरूपाणां इत्यत्र पञ्चानां स्वरूपाणां समाहार इति द्विगौ कृते अकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट इति वचनात् । ङीति सति पञ्चस्वरूपिणामिति स्यात् । न तु पञ्चरूपाणामित्यत आह **पञ्चस्वरूपाणामिति** । **विशेषणसमास एवायमिति** । विशेषणं विशेष्येणेत्यनेन समाहार एव कुतो न स्यादित्यत्राह **तद्धितार्थादीति** । ननु तत्र ब्रह्मशब्देनान्नमयादिर्ब्रह्मत्वेनोक्तावपि न तस्य ब्रह्मत्वमित्यत आह **न हि पुच्छस्यापीति** । अन्यथा पुच्छस्यापि ब्रह्मत्वं न स्यादिति भावः । उक्तं अतिक्रमं वदन्तं तमित्यत्रेति शेषः ।

**श्रीनिधि०**— **इत्यादीति क्रियाविशेषणमिति** । येऽन्नं ब्रह्मेत्यादि यथा भवति तथोक्त्वेत्यर्थः । येऽन्नं ब्रह्मोपासते ये प्राण ब्रह्मोपासते इत्यादिरूपेणोक्त्वेति यावत् । **सामानाधिकरण्येन उक्तत्वादिति** । अन्नं ब्रह्मेत्येकार्थनिष्ठत्वे नोक्तत्वादित्यर्थः । उपासनायाः सामान्याधिकरण्यमपि अन्नत्वविशिष्टब्रह्मलक्षणैकविषयत्वमेव ।

**शे०वा०**— **तदेतत्सूत्रव्याख्यानेनैव निराकृतमपीति** । अन्नमयादीनां पञ्चानामपि परब्रह्मत्वप्रतिपादनपरतया सूत्रव्याख्यानेनेत्यर्थः । **इत्यादीति क्रियाविशेषणमिति** । साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययविधानात् 'अव्ययादाप्सुप्' इति सुब्लोपे इत्यादीत्युपपन्नमिति भावः । ननु पञ्चस्वरूपाणामित्यस्य सङ्ख्यापूर्वकत्वेन 'सङ्ख्यापूर्वो द्विगुरि'ति द्विगुत्वादकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्मरणात् । द्विगोरिति ङीषि पञ्चस्वरूप्या इति भवितव्यं पञ्चस्वरूपाणामिति कथमित्यत आह **पञ्चस्वरूपाणामिति** । **विशेषणसमास इति** । पञ्च च तानि स्वरूपाणि चेति 'विशेषणं विशेष्येण बहुलमि'त्यनेन विशेषणसमास इत्यर्थः । न च विशेषणसमासस्य 'दिक्सङ्ख्ये च संज्ञायामि'ति विशेषस्मरणेन संज्ञायामेव नियमितत्वात् प्रकृते च विशिष्टस्यासंज्ञात्वान्न विशेषणसमासः प्रकृते आश्रयितुं युक्तः । अन्यथैकशाठीत्यत्रापि विशेषणसमासोपपत्त्या तत्र समासविधायकपूर्वकालैकेति सूत्रवैयर्थ्यापातादिति वाच्यम् । पञ्चस्वरूपशब्दस्य





नियमेनार्थविशेषोपस्थापकतया सामयिकसंज्ञाश्रयणेन तत्सम्भवात् । **न द्विगुरिति** । तथा च नोक्तरीत्याऽनिष्ट-रूपप्रसङ्ग इति भावः । द्विगुसमासाभावे हेतुमाह **तद्धितार्थादीति** । पञ्चकपालः पुरोडाश इत्यादिवत् तद्धितार्थविषयत्वस्य, पञ्चगवधन इत्यादिवदुत्तरपदपरत्वस्य, पञ्चगवमित्यादिवत्समाहारवाच्यत्वस्याप्यभावान्न पञ्चस्वरूपाणामिति द्विगुरित्यर्थः । 'तद्धितार्थोत्तरपदसमाहारे चे'त्यत्रोक्तस्य त्रिविधस्यैव सङ्ख्यापूर्वकस्य 'सङ्ख्यापूर्वो द्विगुरि'ति द्विगुत्वविधानान्न सङ्ख्यापूर्वकत्वमात्रेण द्विगुत्वमिति भावः । यद्यपि पञ्चपात्रमित्यादिवत् पात्रादि-त्वेनाकारान्तोत्तरपदत्वेऽपि ङीबप्राप्तेरुपपादयितुं शक्यत्वात् समाहारस्य वाच्यत्वाश्रयणेन द्विगुत्वमपि व्युत्पादयितुं शक्यम् । तथाऽपि द्विगुत्वे द्विगुरेकवचनमित्येकवद्भावेनैकवचनस्यैव प्रसक्त्या पञ्चस्वरूपाणामिति बहुवचनानुपपत्तिप्रसङ्गात् तदुपपत्तय एव तथा नाश्रितमिति ध्येयम् । **स्थानद्वयमनुवाकद्वयमिति** । एतच्च स्थानद्वयेऽनुवाकद्वय इति पूर्ववाक्यवदेव व्याख्यातव्यम् ।

किमनेनान्नमयादीनां ब्रह्मत्वे साधकमुक्तं भवतीत्याशङ्कां परिहरन्नेव 'अन्नं ब्रह्म, सामानाधिकरण्यतः । तत्प्राप्तिवादिनी'त्याद्यनेकविशेषणानामाकाङ्क्षाक्रमेण प्रयोजनप्रदर्शनेन वैय्यर्थ्यशङ्कां च परिहरन्नेव विकल्पमुखेन प्रवृत्त्या तदपलापिनामिति वाक्यन्त्यभागस्यासङ्गतिशङ्कां च परिहरन्नेव येऽन्नमित्यादेरभिप्रायमाह **इदमुक्तमिति** । **उदाहृतश्लोकेष्विति** । 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्याद्युदाहृतश्लोकेष्वित्यर्थः । तत्र येऽन्नं ब्रह्मोपासत इत्यादौ ब्रह्मतयोक्तेरिति भावः । येऽन्नं ब्रह्मेत्यादित्यादिपदेन न केवलमेतदनुवाकस्थस्य ये प्राणं ब्रह्मोपासत इत्यादेरेव सङ्ग्रहः किं नामोत्तरानुवाकस्थस्यान्नं ब्रह्मेति व्यजानादित्यादेरपीति भावेनादिपदसङ्ग्राह्यं दर्शयन्नेव स्थानद्वय-गतेत्येतदुपपादयति **अन्नं ब्रह्मेति व्यजानादित्युत्तरानुवाके चेति** । उक्तहेतोरप्रयोजकत्वं परिहरति **न हीति** । तथा च ब्रह्मतयोक्तानामन्नमयादीनामब्रह्मत्वे तत्त्वेनोक्तस्य पुच्छस्यापि तत्प्रसङ्गान्न ब्रह्मतयोक्तेरप्रयोजकत्वमिति भावः । उक्तहेतोरसिद्धिशङ्कापरिहारकतया मौलं सामानाधिकरण्याभिधानं योजयितुमाशङ्कते **नन्विति** । **गौणमिति** । मनो ब्रह्मेत्यादौ तद्दर्शनादिति भावः । **तथा सतीति** । न हि शरीरादिकोशप्राप्तिर्ब्रह्मज्ञानिनः फलमिति सम्भवति । तरति शोकमात्मविदित्यादिश्रुतिविरोधात् । शरीरादेः कोशरूपत्वादिति भावः । नन्वत्र नान्नमयादिप्राप्तिरुच्यते । उपसङ्क्रमशब्दस्यातिक्रमार्थत्वादित्यत आह **न चेति** । **उक्तमिति** । 'उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति । अतिक्रमं वदन्तं तमुपशब्दो निवारयेदि'त्यादिनेति शेषः । नन्वसद् ब्रह्मेति वेद चेदिति ब्रह्मशब्दश्रवणात् कथमानन्दमये ब्रह्मशब्दाश्रवणमित्यतः स्यादेतदेवं यद्यसन्नेवेति श्लोक आनन्दमयविषयः स्यात् । न चैवम् । किन्तु ब्रह्मपुच्छ-मित्युक्तब्रह्मविषयक एव । तस्य स्वप्रधानतया प्रकृतत्वात् । ततश्च सिद्धमानन्दमये ब्रह्मशब्दाश्रवणमित्याह **श्लोकस्येति** । **तथात्वप्राप्तेरिति** । पुच्छविषयकत्वप्राप्तेरित्यर्थः । अन्यथाऽर्धजरतीयप्रसक्तेरिति भावः । **बाधकानामिति** । आनन्दमयस्य ब्रह्मत्वे विकारार्थकमयडनुपपत्त्यादिबाधकानामित्यर्थः । **परिहृतत्वात्** । 'प्राचुर्यार्थाश्च मयटः सर्वेऽत्र प्रतिपादिताः' इत्यादिनेति शेषः । **निर्निमित्तमिति** । बाधकं विनेत्यर्थः ।

**वा०र०**— येऽन्नं ब्रह्म, ये प्राणं ब्रह्म, विज्ञानं ब्रह्म, अन्नं ब्रह्म, प्राणो ब्रह्मेत्यादिवाक्यैः सामानाधिकरण्यतः पञ्चस्वरूपाणामुपासामुक्त्वेत्युक्ते उक्तवाक्यानां करणत्वाद्बहुत्वाच्चेत्यादिभिरित्यापत्त्येत्यादीत्यविभक्तिकप्रयोगो भाष्ये





न युक्त इत्यतो मूले **इत्यादीति क्रियाविशेषणमित्युक्तम्** । तत्र क्रियाविशेषणत्वं नाम किं तदाश्रयणे उक्तानुपपत्तिपरिहारश्च कथमित्यतः क्रियाविशेषणत्वं व्याकुर्वन्नेव तदाश्रयणे क्रियाविशेषणस्य कर्मत्वादुष्ट्रासिका आस्यन्त (?) इत्यादाविव बहुत्वावधारणादेकवचनान्तत्वाभावेन द्वितीयाबहुवचने सतीत्यादीनीति द्वितीयाबहुवचनप्राप्तावपि क्रियाविशेषणत्वप्रयुक्तेऽव्ययत्वे च क्रियाविशेषणना(?)मातिपरिभाषाबलादेव प्राप्ते सती तेनाव्ययादाप्सुप इति सुप्भूतद्वितीयाबहुवचनलोपे इत्यादीत्यविभक्तिप्रयोगोपपत्तिरित्यप्याह **साधनं परित्यज्येत्यादिना** । अधिकमुपपादनमुमर्जीकबौद्धोक्तदूषणपरिहारश्च एकः स पञ्चधा उक्तोऽन्नमय इत्यादीत्येतद्भाष्यमूलटीकाव्याख्यावसरे प्रतिपादितप्रकारेण ज्ञेयौ ।

**पञ्चस्वरूपाणामित्यस्येति** । इत्येतत्समासपदस्येत्यर्थः । समासानिर्णयाच्छङ्कामुखेन तदुपपादनं **सङ्ख्यापूर्व इति** । तद्धितार्थोत्तरपदसमाहारे चेत्यत्र वक्ष्यमाणरीत्या त्रिप्रकारः सङ्ख्यापूर्वः समासो द्विगुरिति सूत्रार्थः । **द्विगुत्वादिति** । प्रकृते पञ्चस्वरूपाणि समाहृतानीति समाहारस्य वाच्यतया तद्धितार्थेत्यनेन तत्पुरुषे सति सङ्ख्यापूर्व इत्यनेन द्विगुत्वप्राप्तेरित्यर्थः । **स्मरणादिति** । स्त्रीत्व इति शेषः । द्विगोरित्यत्र स्त्रियामित्यधिकारेण स्त्रियामेव ङीषस्तेन विधानसिद्धेः स्त्रीत्वप्राप्तिकथनम् । इयमत्र साधारणप्रक्रियाऽभिप्रेता । समाहारे द्विगोरर्थस्यैकवद्भावविधायकेन द्विगुरेकवचनमिति सूत्रेण पञ्च स्वरूपाणि समाहृतानीति विग्रहपूर्वकसमासोत्तरमेकवद्भावे सति द्विगोर्द्वन्द्वस्य वा यस्यैकवद्भावस्तस्य नपुंसकत्वविधायकेन स नपुंसकमिति सूत्रेण परवल्लिङ्गतापवादे नपुंसकतायामकारान्तोत्तरपदे द्विगुरित्यनेन स्त्रीत्वे स्त्रीत्वात् ङीपि यस्येति चेत्यनेनावर्णलोपे पञ्चस्वरूपीति प्रातिपदिकनिष्पत्तेस्ततः षष्ठ्यां सत्यां पञ्चस्वरूप्या इति प्राप्नोतीति । संज्ञायामेव **नियमितत्वादिति** । उक्तं तत्सूत्रे हरदत्तेन । विशेषणं विशेष्येणेति सिद्धेरिति नियमार्थम् । दिक्सङ्ख्ये संज्ञायामेवेतीति भावः । **प्रकृत इति** । द्वितीयं स्पष्टत्वार्थम् । संज्ञायामेवेति नियमाविवक्षायां बाधकमाह **अन्यथेति** । विशेषणत्वविशेष्यत्वयोः परस्परापेक्षयोभयत्राविशेषाभिप्रायेणैव सूत्रे उभयग्रहणस्य निर्णीततया पदैकेनाप्युत्तरेणेत्यहिकुण्डलाधिकरणीयभाष्यमूलटीकायां सविवरं प्रतिपादनेन प्रथमानिर्देशप्रयुक्तोपसर्जनसंज्ञाया अयोगात्तत्प्रयुक्तपूर्वनिपातनियमायोगेन नीलोत्पलमित्यादौ च तदनियमस्येष्टतया द्रव्यगुणवाचकक्रियाद्रव्यवाचकादिशब्देषु प्राधान्यादिनिमित्तेन तन्नियमस्य क्वचिदनियमस्य चाभ्युपगमेन चैकशाटीत्यादौ प्राधान्यादिनियामकरहितेऽपि तदनियमे प्राप्ते तन्नियमयोपसर्जनत्वप्रयोजकप्रथमानिर्देशेन समासविधायकपूर्वकालैकेति सूत्रप्रवृत्तिरिति सिद्धत्वात् दिक्सङ्ख्ये इत्यस्य नियमार्थत्वाभावे एकशाटीत्यत्र संज्ञाभावेऽपि दिक्सङ्ख्ये इत्यनेनैव समासे सति तत्सूत्रीयप्रथमानिर्देशेनैवोपसर्जनत्वप्राप्त्युपपत्त्या पूर्वनिपातनियमसम्भवेन तन्नियमार्थकपूर्वकालैकेतिसूत्रवैयर्थ्यापातादित्यर्थः ।

**अर्थविशेषेति** । अन्नमयादिपञ्चकरूपार्थविशेषेत्यर्थः । **सामयिकेति** । षोडशपदार्थपदवदिति शेषः । टीकाकृता तथैव गीताभाष्यटीकाव्याख्यायामुक्तेः । विद्यैवेत्यधिकरणे वक्ष्यमाणत्वाच्च । यद्यपि षोडशपदार्थानामिति वरदराजीव्याख्यावसरे निष्कण्टिकादौ द्व्येकयोरित्यादिवद्भावप्रधानत्वादिकमाश्रित्य समाहितं तथाऽप्यर्थप्रतिभासानुसारेणोपपादनस्याश्रयणीयत्वादिह तत्त्यागः कार्यः । एवं तस्य पूरणे डित्यनेन डट् डप्रत्ययान्तषोडशशब्द-





स्वीकारात् प्रमाणादीनां प्रत्येकं षोडशसङ्ख्यापूरकतया षोडशाश्च ते पदार्थाश्च षोडशपदार्था इति पूरणार्थकप्रत्ययान्तपूर्वपदत्वाश्रयणेन समाधानकरणेऽपीह तथा समाधानासम्भवः । नान्तादसङ्ख्यादेर्मडित्यनेन डटो मडागमविधानेन पञ्चन्शब्दात्पूरणार्थे डट्प्रत्यये मटोऽन्तरङ्गतया देरित्यनेन प्राप्तटिलोपं परमपि बाधित्वा पूर्वमेव डटो मडागमेऽजादिपरत्वाभावेन भत्वाप्रसङ्गेन टेरित्यस्य पश्चादपि प्रवृत्त्ययोगात्पञ्चम इत्येव रूपापत्त्या पञ्चेति प्रयोगासम्भवप्रसङ्गात् । किन्तु सप्तर्ष्यादिवत्संज्ञात्वस्य षोडशपदार्थपदे स्वीकृततया तद्वदेव पञ्चस्वरूपप्रातिपदिकेऽपि कथञ्चित्संज्ञात्वेनैव समाससमर्थनेनोक्तशङ्कासमाधानं कार्यमिति भावः । यद्यपि च त्र्यवयवा विद्या त्रिविद्या तामधीतेति त्रैविद्य इत्यादिमहाभाष्याद्युक्तविग्रहे विद्यात्रयरूपसमुदायस्य विद्यात्वविवक्षावत् स्वरूपपञ्चकरूपसमुदायस्य स्वरूपत्वविवक्षया पञ्चावयवं स्वरूपमिति विग्रहे शाकपार्थिवादितया समानाधिकरण समासेऽवयवपदलोपे च पञ्चस्वरूपप्रातिपदिकनिष्पत्तिसम्भवेन तथाविग्रहाश्रयणे संज्ञात्वकल्पनान्यासाश्रयणाभावः तथापि तत्समासेऽपि द्विगुसमासत्वप्रयुक्तैकवद्भावे पञ्चस्वरूपस्येत्येकवचनापत्त्या बहुवचनान्तप्रयोगस्वरूपाणामिति बहुवचनायोगात् तादवस्थ्यमित्याशयेन तत्त्यागोऽपि कृतः । अत एव पात्रादित्वेनाकारान्तोत्तरपदत्वेऽपि ङीबप्राप्तिमाशङ्क्य द्विगुत्वेनैकवचनापत्त्या बहुवचनान्तप्रयोगानुपपत्तिरिति टीकाकृदनुपदमेव समाधास्यति । न च सर्वादीनि सर्वनामानीत्यत्रादिपदार्थभूतसंमूहस्योद्भूतावयवभेदत्वाश्रयणेन बहुवचनोपपादनस्य ग्रन्थकारैराश्रयणात् तद्वदेवोद्भूतावयवभेदत्वेन समूहाश्रयणे पञ्चस्वरूपाणामिति बहुवचनोपपत्तिर्व्युत्पादयितुं शक्येति वाच्यम् । तत्सूत्रेऽनन्यगतिकतयाऽवयवभेदोद्भवकल्पनोपपत्तावप्यन्यत्र तथाकल्पनायोगात् । अन्यथा समूहस्यैकत्वेऽप्युक्तयुक्त्यैकवद्भावविधानमपि सार्थकमिति तदर्थकतयोपपन्नसार्थक्यस्य द्विगुरेकवचनमित्यस्य प्रकारान्तरेण सार्थक्यायोगमाश्रित्य स नपुंसकमिति सूत्रे तच्छब्देन परामर्शोपपत्त्यर्थं तत्सूत्रमित्यादिकुसृष्ट्याश्रयणं तत्सूत्रमित्यादिकुसृष्ट्याश्रयणं तत्सूत्रव्याख्यातॄणां व्यर्थं स्यादित्यलम् । **अनिष्टरूपेति** । पञ्चस्वरूप्या इत्यनिष्टरूपेत्यर्थः । **पञ्चकपाल इति** । पञ्चसु कपालेषु संस्कृता इति विग्रहे संस्कृतं भक्षा इति सूत्रेण सप्तमीसमर्थात्पञ्चकपालशब्दात् संस्कृतार्थे भक्षे वाच्ये सति अण्प्रत्यये द्विगोर्लुगनपत्ये इति सूत्रेण द्विगोर्निमित्तस्य अनपत्यार्थतद्धितस्याणः लुकि सति द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेति द्विग्वादिषु परपदस्येव लिङ्गनिषेधात्कपालपदलिङ्गाभावे च कपालः पुरोडाश इति सिद्ध्यति । आदिपदेन दशकपाल इत्यादेर्ग्रहणम् ।

**पञ्चगवधन इत्यादिवदिति** । पञ्चगावो धनं यस्येति त्रिपदबहुव्रीहौ कृते उत्तरपदे परतस्तद्धितार्थेत्यनेन पञ्चगोपदयोस्तत्पुरुषे कृते गोतर तद्धितलुकीति सूत्रेण गोन्तात् तत्पुरुषात् समासान्ते टचि अवादेशे धनशब्दे उत्तरपदे परतः पञ्चगवधन इति द्विगुसमासे सिद्ध्यति । गाति शेष्यां स्पष्टम् । आदिशब्देन पञ्चनावप्रिय इत्यादेर्ग्रहणम् । **पञ्चगवमित्यादिवदिति** । पञ्चगावः समाहृता इत्यत्र समासान्तर टचि कृते द्विगुरेकवचनमिति एकवद्भावे स नपुंसकमिति तस्य नपुंसकताया पञ्चगवमिति सिद्ध्यतीति द्रष्टव्यम् । आदिपदेन सप्तगवमित्यादेर्ग्रहणम् । **समाहारवाच्यत्वस्येति** । अत्र समाहारशब्दः समाहारणं समाहार इति न भावसाधनः । किन्तु समह्रियत इति समाहार इति कर्मसाधनः । तथा सत्येव गवां आनयनं शाब्दं भवति । भावसाधनत्वे तु समूहस्यैव





प्राधान्यात् । क्रियान्वयप्रतीत्यापत्त्या गवामानयनं शाब्दं न स्यात् । ततश्च तच्छब्दत्वसिद्ध्यर्थं समूहिनि लक्षणाया आक्षेपो वा कल्पनीयः स्यात् । किञ्च समूहिप्राधान्ये समाह्रीयमाणानामनेकतया द्विगुरेकवचनमिति एकवद्भाववचनसार्थकम् । समूहप्राधान्ये तु समूहस्य एकत्वादेव एकवचनस्य सिद्धत्वेन तत्सूत्रवैयर्थ्यापत्तिः । अधिकविचारस्तु अन्योऽप्यल्पमतिः शाखा चतुःपञ्चगतमिति तृतीयाध्यायीयानुव्याख्यानरूपमूलव्याख्यानोपपादनावसरेऽस्माभिः करिष्यत इत्यवधेयम् । **पञ्चपात्रमित्यादिवदिति** । पात्रादेराकृतिगणत्वादिति भावः । **बहुवचनानुपपत्तीति** । समाहारपदोक्तसमूहेऽवयवभेदोद्भवविवक्षया बहुवचनोपपत्तिरिति तु पूर्वमेव निराकृतमिति ज्ञेयम् ।

**स०व्र०— विशेषणसमास एवायमिति** । अन्यथा पञ्चस्वरूप्या इति स्यादिति भावः ।

**विट्ठल०—** ननु तद्धितार्थोत्तरपदसमाहारे च तद्धितार्थविषये उत्तरपदे परतः समाहारे वाक्ये दिक्संज्ञं सुबन्तं सुबन्तेन समस्यत इति सूत्रेण समासविधाने सङ्ख्यापूर्वो द्विगुरिति द्विगुसंज्ञायां द्विगुरेकवचन इति एकवचने द्विगोरिति ङीपश्च प्राप्तौ पञ्चस्वरूप्या इति भवितव्ये पञ्चस्वरूपाणामिति कथमित्यत आह **विशेषणसमास इति** । विशेषणं विशेष्येण बहुलम् इति विशेषणसमास एवायं न द्विगुः तद्धितार्थोत्तरपदत्वाभावेन समाहारसमासाप्राप्तेरिति भावः । परकीयव्याख्याननिरासप्रकारं व्यञ्जयन् मूलाभिप्रायमाह **इदमुक्तं भवतीति** । 'मतुवसोरिति', मत्वन्तस्य वस्वन्तस्य रुरित्ययमादेशो भवति । सम्बुद्धौ परतश्छन्दसि विषये इति सूत्रार्थः । तथा भगव इति रुत्वविसर्गे रूपमिति भावः ।

**चषकः—इत्यादिक्रियाविशेषणमिति** । साधनांशविनिर्मोकिणोपोपसृष्टकेवलधातूपस्थाप्यनिष्ठविशेष्यतानिरूपिताभेदसंसर्गावच्छिन्नप्रकारतापन्नप्रत्यायकमित्यर्थः । तेन कृदन्तसामानाधिकरण्याभावेन तस्य स्त्रीलिङ्गत्वापत्त्यनवकाशः । क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वमव्ययत्वं च वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययत्वविधानादव्ययादाप्सुप् इति सुब्लोपे इत्यादीति समञ्जसमिति भावः । अभिहितं च कातन्त्रपरिशिष्टकृता । कथं स्तोकः कृदन्तसमानाधिकरणत्वात् । धात्वैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति । ननु पञ्चस्वरूपाणामिति भाष्यकारीयो विन्यासः पाणिनीयं प्रतिशेते । तस्य सङ्ख्यावाचकशब्दपूर्वकतया सङ्ख्यापूर्वो द्विगुरिति द्विगुतयाकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति वचनात् द्विगोरिति ङीपि पञ्चस्वरूप्या इति न्यासेन भवितव्यत्वादित्यत आह **पञ्चस्वरूपाणामिति** । **विशेषणसमास इति** । विशेषणं विशेष्येण बहुलमित्यनेन नीलोत्पलमित्यादाविव समानाधिकरणतत्पुरुष इत्यर्थः । ननु विशेषणं विशेष्येणेति सिद्धे पूर्वनिपातनियमार्थं एकशब्दस्य दिक्सङ्ख्ये संज्ञायामिति बाधनार्थं च पूर्वकालैकेति सूत्रं यथा तद्वद्दिक्सङ्ख्ये संज्ञायामित्यपि संज्ञायामेवेति नियमार्थमिति स्थिततया प्रकृते विशिष्टस्य संज्ञात्वविरहेण न विशेषणसमासाश्रयणं सङ्गच्छत इति चेत् । अत्र व्याचक्षाणाः पञ्चस्वरूपशब्दस्य नियमेनार्थविशेषोपस्थापकतया सामयिकसंज्ञाश्रयणेन तत्सम्भवान्न द्विगुरिति । तथा च नोक्तरीत्यानिष्टप्रसङ्ग इति भाव इति प्रकृतग्रन्थाशयं व्यभावयन् । प्रकृतसमासस्याद्विगुतायां बीजं दर्शयति **तद्धितार्थादीति** । तद्धितार्थोत्तरपदसमाहारे च । तद्धितार्थे विषये उत्तरपदे





च परतः समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वद्वेत्यर्थः । पौर्वशालः आपरशाल इति दिशा तद्धितार्थे । पूर्वशालाप्रिय इत्युत्तरपदे । दिक्षु समाहारो नास्त्यनभिधानात् । सङ्ख्यायास्तद्धितार्थे षण्णां मातॄणामपत्यं षाण्मातुरः, पञ्चकपालः पुरोडाश इति । पञ्चगवधन इत्युत्तरपदे । पञ्चगवमिति समाहारे उदाहरणानि । तत्र न सङ्ख्यापूर्वकत्वमेव द्विगुताया तन्त्रम् । किन्तु तद्धितार्थविषयकत्वोत्तरपदपरत्वसमाहारवाचकत्वान्यतमम् । तदाक्रान्तश्च नायमिति नैतस्य द्विगुतापत्तिरिति .भावः । समाहारस्य वाच्यत्वाश्रयणेऽपि पात्रादित्वादकारान्तोत्तरपदत्वेऽपि ङीबप्राप्तेर्द्विगुत्वमुपेत्यापि समाधातुं सुशकमिति शङ्का द्विगुत्वे पञ्चगवमितिवत् द्विगुरेकवचनमित्येकवद्भावापत्त्या पञ्चस्वरूपाणामिति बहुवचनान्तत्वानुपपत्तिप्रसङ्गेन तदुपायेन पात्रादित्वोपगमेन समाहितमिति निरसनीया ।

**।। इति अन्नमयादिपञ्चानां ब्रह्मत्वाभावे तदुभयानुवादकयोः ब्रह्मतयोक्तिविरोधः ।।**

* * *

**।। अथ मायावादिव्याख्याननिरासे ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वादन्नादिकं ब्रह्मैव ।।**

**७० सु०—** 'स्थानद्वयगते'त्युक्तम् । प्राक् च 'भृगोश्चैतद्वदिष्यती'ति । तत्रोत्तरानुवाकोक्तस्य ब्रह्मत्वं प्रपञ्चयति **अधीहीति** ।

**अनु०— अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकम् ।**
**आह ब्रह्म कथं तन्न**

**अधीहि** अध्यापय, ण्यर्थस्यान्तर्णीतत्वात् । **भगवो** भगवन्, 'मतुवसो रुः सम्बुद्धौ छन्दसी'ति वचनात् । **उक्तो** भृगुणा पृष्टो वरुणः 'भृगुर्वै वारुणिः । वरुणं, पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुःश्रोत्रंमनोवाचमित्ये'वं ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वादन्नादिकं ब्रह्मैव भवितुमर्हतीत्यर्थः ।

ननु तत्र मयटोऽश्रवणाद्भिन्नविषयत्वमिति चेन्न, उक्तोत्तरत्वात् । किञ्च तथा सत्यन्नमयादीन्प्रत्युदाहृतश्लोकेषु मयटोऽश्रवणाद्भिन्नविषयत्वं स्यात् । अस्त्विति चेन्न, तथा सति तदुदाहरणस्यासङ्गतिप्रसङ्गात् । यस्यान्नादेर्विकारास्ते तत्प्रशंसापरतया सङ्गतिस्त्विति चेन्न, मनोमयश्लोके तदयोगात् । तर्हि तत एवानुपपत्तेरन्नादिशब्दैरन्नमयादय एवोच्यन्त इति कल्प्यत इति चेत्, तर्ह्यत्रापि प्रकरणवशादन्नमयादय एवोच्यन्त इत्यङ्गीकार्यम् । उक्तेऽर्थे हि संवादित्वेनेयमाख्यायिकोक्ता, तस्मादन्नमयादय एवात्रोच्यन्ते,





**ते च ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वान्यथाऽनुपपत्त्या ब्रह्मैवेति । यद्यपि 'सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिते'ति साक्षाद्ब्रह्मविद्यात्वमुच्यते, तथाऽपि मीमांसार्थं युक्त्युपन्यासः । अथवा, अस्यापि समानयोगक्षेमत्वादिति ।**

**परि०— मतुवसोरुरिति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषये इति सूत्रार्थः । **उक्तोत्तरत्वादिति** । 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते' इत्युक्तत्वादिति भावः । **मनोमयश्लोक इति** । 'यतो वाचो निवर्तन्त' इति श्लोके मनसः प्रशंसाऽभावादिति भावः । **अत्रापीति** । भृगुवल्ल्यामपीत्यर्थः । **व्योमन्निति** । अच्छेद्यत्वेन व्योमनिभे ब्रह्मणीत्यर्थः । **युक्तीति** । ब्रह्मप्रश्नोत्तरत्वादियुक्त्युपन्यास इत्यर्थः । **अस्यापीति** । 'भृगुर्वै वारुणिरि'त्यनुवाकस्यापि 'ब्रह्मविदि'त्यनुवाकसमानयोगक्षेमत्वादित्यर्थः ।

**गु०दी०— मनोमयश्लोके तदयोगात्** इत्यत्र मनोमयश्लोके 'यतो वाचो निवर्तन्ते' इति 'आनन्दं ब्रह्मणो विद्वान्' इति श्लोकोक्तानन्दविकारत्वाभावान्मनोमयस्य । किन्तु 'श्रद्धैव शिर' इत्यादिनोक्तश्रद्धादिविकारत्वस्यैव श्रवणादिति भावः ।

**यादु०— मतुवसोरिति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति सम्बुद्धौ परतश्छन्दसि विषये इति सूत्रार्थः । प्रकृतमेवोदाहरणम् । **उक्तोत्तरत्वादिति** । 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते' इत्यादिनेति शेषः । **मनोमयश्लोक इति** । 'यतो वाचो निवर्तन्त' इति मनोमयश्लोके मनःप्रशंसाऽभावेनोक्तसङ्गत्ययोगादित्यर्थः । **अथवाऽस्यापीति** । अन्ततः, 'परमे व्योमन् प्रतिष्ठिते'ति व्याख्याने सर्वस्या अपि विद्यायाः साक्षाद् ब्रह्मविद्यात्वं न लभ्यते । अतोऽनिश्चितार्थतयेदमपि वाक्यं तद्विद्यागतान्यवाक्यसमानयोगक्षेमम् । यद्युक्तविचारेणेतरवाक्यानि साक्षात्प्रतिपादकानि तर्हीदमपि वाक्यं तेषां साक्षाद्ब्रह्मविद्यात्वप्रतिपादकं भविष्यति । नान्यथा । उक्तरीत्या सावकाशत्वात् । अत आवश्यकत्वादितरवाक्यानामेव साक्षाद्ब्रह्मप्रतिपादकतासिद्ध्यै युक्त्युपन्यासः कृत इति भावः ।

**वं०प०— मतुवसो रुः सम्बुद्धौ छन्दसीतीति** । मत्वन्तस्य वस्वन्तस्य च रुः स्यात्सम्बुद्धौ परतश्छन्दसि विषय इति सूत्रार्थः । अलोन्त्यपरिभाषया रुरित्यादेशः षष्ठीनिर्दिष्टस्यान्त्यस्यैव । तथा च भगशब्दान्मतुप्प्रत्यये उप् इत्यस्य लोपे मादुपधायाश्च मतोर्वोऽयवादिभ्य इति सूत्रेण मतुपो मकारस्य वकारे सति भगवदिति तकारान्तप्रातिपदिकनिष्पत्तौ सत्यां पश्चात्सम्बुद्धौ भगवत् सु इति स्थिते मतुवसो रुरिति सूत्रेण तकारस्य रुरित्यादेशो तस्य विसर्गे सम्बुद्धौ सोर्लोपे भगव इति युक्तमित्यर्थः । किञ्च तथा सतीत्यनन्तरं ब्रह्मवल्ल्यामपीति शेषः । **उदाहृतश्लोकेष्विति** । अन्नाद्वै प्रजाः प्रजायन्ते । प्राणं देवा अनुप्राणन्तीत्यादिष्वित्यर्थः ।





**ते** कोशाः । **तदिति** । अन्नादीत्यर्थः । **तदयोगादिति** । प्रजाजनकत्वदेवचेष्टकत्वरूपोऽन्नप्राणयोर्महिमा यथा तत्र निरूपितस्तथा यतो वाच इत्यत्र मनोमहिम्नोऽनिरूपितत्वेनोक्तसङ्गत्ययोगादित्यर्थः । **तत एवेति** । मनोमयश्लोके मनोमहिम्नोऽनिरूपितत्वेनोक्तसङ्गत्यसम्भवादेवेत्यर्थः । **अन्नादिशब्दैरिति** । अन्नाद्वै प्रजा इत्यादिश्लोकस्थान्नादि-शब्दैरित्यर्थः । उच्यन्ते ब्रह्मवल्ल्यां तथा चान्नमयादिप्रशंसा सम्भवतीति हृदयम् । **अत्रापि** भृगुवल्ल्यामपि । अन्नादिशब्दैरिति शेषः । प्रकरणवशादित्युक्तमेव प्रदर्शयति **उक्तार्थ इति** । ब्रह्मवल्ल्युक्तार्थ इत्यर्थः । **ब्रह्मप्रश्नेति** । अधीहि भगवो ब्रह्मेति ब्रह्मप्रश्नेत्यर्थः । **परम इति** । परमव्योमशब्दस्य ब्रह्मवाचकत्वादित्यर्थः । **समान-योगक्षेमत्वादिति** । परमे व्योमन् प्रतिष्ठितेत्यस्यान्नमयादिद्वारपञ्चकोपदेशद्वारा शाखाचन्द्रमसन्यायेनान्ततः परमे व्योमन् प्रतिष्ठितेत्यपि व्याख्यानसम्भवेन साक्षाद्ब्रह्मविद्यात्वसाधकत्वाभावेनान्नमयादिप्रकरणसमानयोगक्षेमत्वेन भार्गवीवारुणीविद्यायाः परब्रह्मपरत्वनिश्चायकत्वासम्भवादित्याशयः ।

**आनन्दः— मतुवसो रुरिति** । छन्दसि विषये सम्बुद्धौ परतो मतुवसो रुर्भवतीत्यर्थः । तत्र भृगुवल्ल्यां भिन्नविशेषत्वं ब्रह्मभृगुवल्ल्योः **उक्तोत्तरत्वादिति** । प्रचुरान्नादिरेवात इत्यत्रेति शेषः । **उदाहरणस्येति** । **मनोमय-श्लोक इति** । मनोमयं प्रत्युदाहृतश्लोके वाङ्मनसागोचरत्वादेरुक्तत्वात्तस्य च सम्भवेन प्रशंसापरत्वासम्भवा-दित्यर्थः । **अस्यापि** ब्रह्मविद्यात्ववचनस्यापि । तत्समानयोगक्षेमत्वेऽन्नमयादिसमानयोगक्षेमत्वम् । अन्नमयादीनां द्वारत्ववत् । ब्रह्मविद्यात्ववचनमपि ब्रह्मज्ञानतद्द्वारत्वाभिप्रायेणेति भावः । तथा च युक्त्युपन्यास आवश्यक इति भावः । अन्नमयादीन्युद्दिश्य श्लोकोदाहरणस्यासङ्गतत्वं स्यादित्यर्थः ।

**श्रीनिधि०— उक्तोत्तरत्वादिति** । अन्नमन्नमयेत्यपि उच्यते । सविशेषेणेत्यत्र उत्तरस्योक्तत्वादित्यर्थः । **अस्यापि समानयोगक्षेमत्वादिति** । युक्त्युपन्यासाभावे अधीहि भगवो ब्रह्मेत्यादेर्यादृशः योगक्षेमः तादृश-योगक्षेमवत्त्वात् । सैषा भार्गवी वारुणी विद्येत्यस्येत्यर्थः । परमे व्योमन् प्रतिष्ठितेत्युक्ते तत्तात्पर्यकत्वेन तत्र प्रतिष्ठिते अन्नमयादिकं तु तज्ज्ञानार्थमुक्तमिति व्याख्याने अन्नमयादीनां ब्रह्मत्वं न सिद्ध्येत् । ततश्च ब्रह्मप्रश्नोत्तरत्वेन उक्तत्वरूपयुक्त्युपन्यासः कर्तव्य इति भावः । आगन्तुकलाभो योगः विद्यमानपरिरक्षणं क्षेमः ।

**शे०वा०—** ननु णिचोऽत्राश्रवणात् कथमधीहीत्यनेन अध्यापकत्वलाभ इत्यत आह **ण्यर्थस्येति** । **वचनादिति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषय इति सूत्रार्थः । प्रष्टृप्रतिवक्त्रनुक्तिप्रयुक्तां भाष्ये न्यूनतां परिहरन्नेव ब्रह्मप्रश्नोत्तरत्वस्य हेतोर्मूलारूढतालाभायोक्तिशब्दं प्रश्नपरतया व्याचष्टे **उक्त इति** । पदार्थमुक्त्वा यतस्तत इत्यध्याहारमभिप्रेत्य प्रश्नप्रतिवचनांशप्रदर्शनपूर्वकं वाक्यार्थमाह **भृगुर्वा इत्यादिना** । **इत्यर्थ इति** । ततश्च तत्समाख्यानादन्नमयादीनां ब्रह्मत्वमिति वाक्यशेषः । **भिन्नविषयत्व-मिति** । शब्दभेदे निमित्ताभिधेयभेदस्यावश्यकत्वादित्यर्थः । तथा चानुवाकद्वये भिन्नभिन्नवस्तुप्रतिपादनान्न समाख्येति भावः । **उक्तोत्तरत्वादिति** । प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यत इत्यादिनेति शेषः । **तदयोगा-दिति** । उक्तप्रकारेण सङ्गत्ययोगादित्यर्थः । यतो वाचो निवर्तन्त इति मनोमयश्लोके यद्विकारो मनोमयस्तस्य





मनसोऽप्रशंसनाद्यस्य चानन्दं ब्रह्मणो विद्वान्न बिभेतीत्यानन्दस्य प्रशंसा क्रियते तद्विकारत्वाभावादिति भावः । **तत एवानुपपत्तेरिति** । तदुदाहरणस्यासङ्गतिप्रसङ्गरूपानुपपत्तेरित्यर्थः । अन्नादिशब्दैरन्नमयादीन्प्रत्युदाहृतश्लोकगतान्नादिशब्दैरित्यर्थः । **अत्रापीति** । उत्तरानुवाकेऽपीत्यर्थः । अन्नादिशब्दैरिति शेषः । ननु च श्लोकोदाहरणानुपपत्त्या तद्गतान्नादिशब्दानामन्नमयादिपरत्वेऽभिहिते तादृशानुपपत्त्यैवोत्तरानुवाकोक्तान्नादिशब्दानामन्नमयादिपरत्वव्युत्पादनस्य सम्मतत्वेऽपि प्रकृते तादृशानुपपत्तेरभावात् प्रकरणमात्रस्य चाप्रयोजकत्वात् कथं तद्वशेनोत्तरानुवाकगतान्नादिशब्दानामन्नमयादिपरत्वव्युत्पादनमित्यतोऽत्रापि तादृशानुपपत्त्यैवान्नादिशब्दानां तत्परत्वस्याभिप्रेतत्वाददोष इत्यभिप्रेत्यानुपपत्तिमुपपादयति **उक्तेऽर्थ इति** । इतीत्यतःपरं श्रुत्येति शेषः । **साक्षादिति** । स्वयमेवेत्यर्थः । **ब्रह्मविद्यात्वमुच्यत इति** । तथा च श्रुत्यैव ब्रह्मपरत्वसिद्ध्या युक्त्यनपेक्षत्वात् तदुपन्यासोऽनर्थ इति भावः । **अस्यापीति** । 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते'ति ब्रह्मपरत्ववाक्यस्यापीत्यर्थः । **समानयोगक्षेमत्वादिति** । अन्नादीनां ब्रह्मत्वोपदेशसमानयोगक्षेमत्वादित्यर्थः । अन्नं ब्रह्मेति व्यजानादित्यादेरन्नादीनां ब्रह्मज्ञानद्वारत्वाभिप्रायकत्ववत्सैषेत्यादिब्रह्मविद्यात्ववचनस्याप्यन्नादीनां ब्रह्मज्ञानद्वारत्वाभिप्रायकत्वेन श्रुत्याऽन्नादेर्ब्रह्मत्वासिद्ध्या तत्सिद्ध्यर्थतया युक्त्युपन्यासोऽर्थवानिति भावः ।

**वा०र०— ण्यर्थस्येतीति** । ण्यर्थस्य लक्षणया लाभ इत्यादिकम् .... इत्यादौ तत्र तत्र टीकादौ निरूपितं ज्ञेयम् । ऋग्भाष्यटीकाव्याख्यानान्तरे चोपपादनमस्ति तत्संशयो(?)योपपादनीयोऽस्ति । **यतस्तत इत्यध्याहारमिति** । अधीहि भगवो ब्रह्मेति पृष्टोऽन्नप्राणपूर्वकमाह । तदन्नादिकं कथं न ब्रह्मेत्युक्तेऽन्नादेर्ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वस्य तद्ब्रह्मत्वस्य च हेतुहेतुमद्भावाप्रतीत्योक्ताध्याहारस्यावश्यकत्वादिति भावः । आक्षेपार्थकं कथमित्यस्य नञश्च योगेन अतिशयलाभमभिप्रेत्योक्तं मूलकृता **ब्रह्मैवेति** । प्रकृतोपयोगायावश्यवक्तव्यस्यानुक्तिप्रयुक्तन्यूनतापरिहाराय शेषं पूरयति **ततश्च तदिति** । **तद्विकारत्वाभावादिति** । मनोमयस्येति शेषः । **तदुदाहरणस्येति** । तदुदाहरणस्यासङ्गतिप्रसङ्गरूपाया अनुपपत्तिरिति विग्रहः । **तादृशानुपपत्त्यैवेति** । भिन्नार्थत्वे संवादत्वेनाभिधानायोगात् प्रसङ्गरूपानुपपत्त्यैवेत्यर्थः । **इतीत्यत इति** । प्रतिष्ठितेतीत्यत्रत्येतिशब्दानान्तरमित्यर्थः । न केवलं श्रुत्येति शेषपूरणं स्मृतित्वादिव्यावृत्तये वस्तुस्थितिप्रदर्शनपरम् । अपि तु शङ्कामूलश्रुतित्वरूपयुक्तिसूचकं चेत्याशयेन तत्सूचितयुक्तेः फलमाह **तथा चेति** । पूर्वं युक्तिसूचनलाभाय वाक्यस्य श्रुतित्वपुरस्कारेण वचनेऽपि अत्र तस्य वाक्यत्वपुरस्कारेणैवोक्तेर्नपुंसकोपपत्तिरित्याशयेनास्येति परामर्शं घटयति **वाक्यस्यापीत्यर्थ इति** ।

**स०व्र०— मतुवसो रुः सम्बुद्धौ छन्दसीति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषय इति सूत्रार्थः । **मनोमयश्लोक इति** । 'यतो वाचो निवर्तन्ते' इति मनोमयश्लोके मनःप्रशंसाऽभावेनोक्तसङ्गत्ययोगादित्यर्थः । **अथवास्यापि समानेति** । अन्ततः परमे व्योमन् प्रतिष्ठितेति व्याख्याने सर्वस्या अपि विद्यायाः साक्षाद्ब्रह्मविद्यात्वं न लभ्यते अतो अनिश्चितार्था । तथैतदपि वाक्यं तद्विद्यागतान्यवाक्यसमानयोगक्षेमम् । यद्युक्तविचारेणेतरवाक्यानि साक्षाद्ब्रह्मवाक्यानि स्युः तर्हीदमपि वाक्यं तेषां





साक्षाद्ब्रह्मविद्यात्वप्रतिपादकं भविष्यति नो चेन्न । उक्तरीत्या सावकाशत्वात् । अत आवश्यकत्वादितर-वाक्यानामेव साक्षाद्ब्रह्मप्रतिपादकतासिद्ध्यै युक्त्युपन्यासः कृत इति भावः ।

**विट्ठल०— उक्तोत्तरत्वादिति** । प्राप्यत्वेन मयटः प्रोक्तेर्न तत्राप्यन्यदुच्यत इत्यत्रेति शेषः । ते कोशाः तत्प्रशंसापरतया अन्नादीनाम् अब्रह्मत्वेऽपि ब्रह्मद्वारत्वादिना प्रशंसापरतयोदाहृतश्लोकसङ्गतिरित्यर्थः । **मनोमयश्लोक इति** । यतो वाचो निवर्तन्ते इति मनोमयश्लोके मनःप्रशंसाभावेनोक्तसङ्गत्ययोगादित्यर्थः । **अन्नादिशब्दैरिति** । अन्नमयादीन् प्रत्युदाहृतश्लोकगतान्नादिशब्दैरित्यर्थः । **अत्रापीति** । उत्तरानुवाकेऽपीत्यर्थः । **व्योमन्निति** । व्योतमस्मि जगद्यस्माद्व्योमेति सर्वाश्रयं व्योमेत्यर्थः । **अथवास्यापीति** । परमे व्योमन्नित्यस्यापि न ब्रह्मपरत्वमिति परेणोक्ते सन्दिग्धतया पूर्वग्रन्थसमानयोगक्षेमतया अत्रापि युक्त्युपन्यासस्यावश्यकत्वादित्यर्थः ।

**चषकः— मतुवसो रुः सम्बुद्धाविति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषय इति सूत्रार्थः । **उक्तोत्तरत्वादिति** । साध्यत्वेन मयट्प्रोक्तेरित्यादिनेत्यादिः । साक्षात् दर्शितानुपूर्वीकेण स्वेनैव ।

**॥ इति ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वादन्नादिकं ब्रह्मैव ॥**

* * *

**॥ अथ तन्निरासे 'ब्रह्मज्ञानोपायतया अन्नादीनां ब्रह्मत्वोक्तिः' इत्यपि न,**
**दिक्पालस्य वरुणस्य सम्प्रदायानभिज्ञतापत्तेः ॥**

**७१ सु०— स्यादेतत् । ब्रह्मप्रश्नोत्तरतयोक्तिमात्रेण न वरुणोक्तानामन्नादीनां ब्रह्मत्वं सिद्ध्यति, ब्रह्मज्ञानोपायतयाऽपि तदुपदेशोपपत्तेः । तथा हि । द्वितीयाचन्द्रप्रश्नेऽचन्द्ररूपापि शाखा चन्द्रतयोच्यते चन्द्रज्ञानोपायत्वात् । यथा वाऽरुन्धतीप्रश्ने तत्समीपवर्तिनी पृथुला तारकाऽरुन्धतीत्वेनोपदिश्यते, अरुन्धतीज्ञानद्वारत्वात् । द्वारत्वं चान्नादिशब्दोदितानां शरीरादीनां बहिर्वृत्तिनिवारणद्वारा ब्रह्मज्ञानं प्रत्युपपद्यत एवेति । मैवम् । किमनेन व्यभिचारश्चोद्यते, किंवाऽन्यथासिद्धिः सम्भाव्यते, उत सा निश्चीयते । पक्षत्रयमसम्बद्धमित्याह द्वारमिति ।**

**अनु०— द्वारं तदिति वादिनः ॥**
**उपसत्तिं कथं विद्युः**





**तत्** अन्नादिकम् । **उपसत्तिं** ब्रह्मज्ञानार्थोपसत्त्युत्तरकालीनं गुरूपदेशप्रकारमित्यर्थः । **कथम्** इत्याक्षेपे, न विद्युरित्यर्थः । गुरूपदेशप्रकाराज्ञानविजृम्भितेयं शङ्केति भावः । तत्कथं न विद्युरित्यत आह **उपसन्नायेति** ।

**अनु०—** उपसन्नाय हि त्रिशः ।
**वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वा ॥**
**सकृद्धेत्यागमा ब्रूयुः सम्प्रदायविदोऽपि च ।**

**ब्रह्म** एव वक्तव्यम्, न पुनर्यत्किञ्चित् । अबोधेऽपि पुनः पुनः तदेव शब्दान्तरेण (शब्दान्तरेण तदेव) वक्तव्यम् । द्वारं च द्वारतयैव वक्तव्यम्, न तु तदात्मकत्वेन । न हि धूमोऽग्न्यात्मकत्वेन प्रदर्श्यते । चन्द्राद्युदाहरणमप्यसिद्धमेवेति । **आगमा** वेदाः । **सम्प्रदायविदः** स्मृतीतिहासपुराणकर्तारः । **अपिचौ** इतरेतरसमुच्चयार्थौ ।

'तर्हि उपदेशप्रकाराज्ञतया वरुणोऽन्यदुपदिशतीत्यस्तु । मैवम् । लोकपालस्यैतावज्ज्ञानाभावासम्भवादि'त्याशयेन द्वारोपदेशशङ्कानिराकरणमुपसंहरति **तदिति** ।

**अनु०— तद्यत्किञ्चित्कथं ब्रूयादुपसन्नाय दिक्पतिः ॥**

**तत्** तस्मात् । **यत्किञ्चिद्** द्वारम् ।

**परि०— किमनेनेति** । 'द्वितीयाचन्द्रप्रश्न' इत्यादिकथनेनान्नादिकं ब्रह्म भवितुमर्हति । ब्रह्मप्रश्नोत्तरत्वात् । यत् यत्प्रश्नोत्तरं तत्तद्भवतीति विवक्षितानुमाने शाखादौ व्यभिचारः शङ्क्यत इत्यर्थः । था असिद्धिः ।

**यादु०— किमनेन व्यभिचारश्चोद्यत इति** । यद्यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्त्यभिधान इत्यर्थः ।

**वं०प०— व्यभिचारश्चोद्यत इति** । यद्यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्तौ चन्द्रारुन्धतीबोधनद्वारभूतशाखास्थूलतारकयोर्व्यभिचारश्चोद्यत इत्यर्थः । **अन्यथासिद्धिरिति** । तत्प्रश्नोत्तरत्वं ब्रह्मत्वं विना





द्वारत्वेनाप्यन्यथासिद्धमित्यन्यथासिद्धिः सम्भाव्यते शङ्कयत इत्यर्थः । **सा** अन्यथासिद्धिः । **लोकपालस्येति** । 'न देवपदवीं प्राप्ता ब्रह्मदर्शनवर्जिताः' इति वचनेन देवतापदस्य परब्रह्मज्ञानसाध्यत्वावगमेनैतावज्ज्ञानाभावे लोकपालकत्वस्यैवासम्भवादिति भावः ।

**आनन्दः— ब्रह्मैव वक्तव्यमिति** । तथा च चन्द्राद्युदाहरणस्यासिद्धत्वान्न व्यभिचारः । द्वारस्य द्वारत्वेनैव वक्तव्यतोक्त्याऽन्यथासिद्धिसम्भावनानिश्चययोर्निरास इत्यर्थः ।

**श्रीनिधि०— किं व्यभिचारश्चोद्यत इति** । यत् प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति व्याप्तेरित्यर्थः ।

**शे०वा०—** तर्ह्युक्तप्रकारेण युक्तेरपि सावकाशत्वान्न युक्त्याऽपि तत्सिद्धिरित्याशङ्कते **स्यादेतदिति** । ननु नान्नाद्युपदेशो द्वारतयाऽन्यथयितुं युक्तः । अन्नादिज्ञानं विनाऽपि प्राणादिज्ञानेनान्नादेर्द्वारत्वायोगात् । न चात एव ब्रह्मज्ञानोपायतयेति ब्रह्मणि द्वारत्वाश्रयणमिति वाच्यम् । अन्नं ब्रह्मेत्यनुक्त्वाऽप्यानन्दो ब्रह्मेति ब्रह्मस्वरूपस्योपदेष्टुं शक्यतया तदयोगादित्यत आह **द्वारत्वं चेति** । **बहिर्वृत्तिनिवारणद्वारेति** । चित्तस्य प्रत्यक्प्रावण्यद्वारेत्यर्थः । **व्यभिचार इति** । अन्नादिकं ब्रह्म भवितुमर्हति ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वादित्यनुमाने विशेषव्याप्तौ दृष्टान्ताभावेन तदनुपपत्त्या यद्यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्तेरेवावश्यवक्तव्यत्वाच्छाखादेश्चन्द्रादिप्रश्नोत्तरत्वेनोक्तत्वेऽपि चन्द्रादित्वाभावाद्व्यभिचार इत्यर्थः । कथं तर्हि द्वितीयाचन्द्रप्रश्नेऽचन्द्ररूपायाः शाखायाश्चन्द्रतयोपदेशः । अरुन्धतीप्रश्ने तत्समीपवर्तिन्याः पृथुलायास्तारकाया अरुन्धतीत्वेनोपदेशश्चेत्यतो लोके चन्द्रारुन्धत्यादौ शाखास्थूलतारकादेर्द्वारत्वेनैवोपदेशेन चन्द्रारुन्धतीत्वेनोपदेशाभावादुदाहरणमसिद्धमित्याह **चन्द्राद्युदाहरणमपीति** । **इतरेतरसमुच्चयार्थाविति** । ततश्चापिशब्दयोर्नान्यतरवैयर्थ्यमिति भावः ।

**वा०र०— द्वारत्वायोगादिति** । प्राणादिकं प्रतीति शेषः । **तदयोगादिति** । ब्रह्मणि परमात्मस्याप्ययोगादित्यर्थः । **उदाहरणमसिद्धमित्याहेति** । यत्रापि लोके साधारणजनो अन्यं बोधयितुमियमेवारुन्धतीत्यादि तत्रापि तत्स्थतारातः अधोदेशसमीपे वेत्यादिरूपेण व्याकरोत्येवेति नाभेदेनोक्तिः कुत्रापीति भावः । **सम्प्रदायविदः स्मृतीतिहासपुराणकर्तार** इति मूलम् । एतद्व्याख्यानं वक्षस्थलस्थिता श्रीरिति सम्प्रदायविद इति प्राणाधिकरणीयतत्त्वप्रकाशिकाव्याख्याने ऋषीणां सम्प्रदायादित्येतद्गीताभाष्यटीकास्थागमो ग्रन्थनिबद्धं वाक्यम् । सम्प्रदायस्तूपदेशपरम्परामात्रमित्येतद्वाक्यव्याख्यावसरे अन्यत्रापि च सम्प्रदायशब्दार्थानुगुण्यादिविचारोऽस्माभिः कृतोऽस्ति । तदनुसारेणोपपाद्यम् । अत्रापि लेख्यमस्ति ।

**स०व्र०— किमनेन व्यभिचारः चोद्यत इति** । यत् यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्त्यभिधान इत्यर्थः ।

**विठ्ठल०— बहिर्वृत्तीति** । शरीरप्राणादीनां प्रत्यक्त्वेन तत्र चित्तवृत्तिप्रवृत्तौ तत्सन्निहितप्रत्यक्चैतन्ये ब्रह्मणि चित्तनिरोधोपपत्त्या ब्रह्मज्ञानं भवतीति भावः । **व्यभिचारश्चोद्यते इति** । अन्नादिकं ब्रह्म भवितुमर्हति ब्रह्म





प्रश्नोत्तरत्वादित्यत्र यद्यत्प्रश्नोत्तरत्वेनोच्यते तत्तद्भवितुमर्हति इति सामान्यव्याप्तावनेन द्वितीया चन्द्र इत्यादिना द्वितीया चन्द्रप्रश्नोत्तरतयोच्यमानशाखादौ व्यभिचारश्चोद्यत इत्यर्थः। **धूम इति**। अग्निज्ञानद्वारभूतो धूमो नाग्न्यादित्वेनेत्यर्थः।

चषकः— **चन्द्राद्युदाहरणमपीति**। चन्द्रारुन्धत्यादिप्रश्ने शाखापृथुलतारकादिकं चन्द्रारुन्धत्यादिज्ञानोपायकत्वेनैवोपदिशन्ति लौकिकाः न तत्तादात्म्येनेत्याशयः।

**॥ इति 'ब्रह्मज्ञानोपायतया अन्नादीनां ब्रह्मत्वोक्तिः' इत्यपि न,**
**दिक्पालस्य वरुणस्य सम्प्रदायानभिज्ञतापत्तेः ॥**

* * *

**॥ अथ तन्निरासे 'ब्रह्म पृष्टवते भृगवे वरुणेन व्यामोहनाय अब्रह्मैवोक्तम्' इत्यपि न,**
**वरुणस्य मायावादित्वाभावात् ॥**

**७२ सु०— नन्वब्रह्मैव ब्रह्म पृष्टवते वरुणेनोक्तं व्यामोहनायेति किं न स्यादित्यत आह न वदेदिति।**

**अनु०— न वदेद्ब्रह्म च कथं मायावी न हि वारिराट्।**

**किम्** आक्षेपे, ब्रह्मैव वदेदित्यर्थः। तत्र हेतुः **'मायावी न ही'**ति, आप्तत्वादित्यर्थः।

**विवक्षितार्थतत्त्वज्ञानं हि वरुणस्य दिक्पतेः प्रसिद्धम्। अविप्रलम्भकत्वं च पितृत्वात्। भृगोर्ब्रह्मज्ञानयोग्यत्वात्। उपसन्नायेति प्रसङ्गदोषस्य निरस्तत्वात्। वारिराडिति भूताभिमानित्वेनोक्तस्यापटुकरणत्वासम्भवात्। विवक्षायाश्चोपदेशादेव सिद्धेः। अत एव श्रुतिः 'वारुणिः (र्वरुणं) पितरमुपससारे'त्याह।**

**तदनेनाप्तेन ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वमन्नादीनां ब्रह्मत्वे हेतुरित्युक्तं भवति।**

यादु०— आप्तत्वमुपपादयति **विवक्षितार्थतत्त्वज्ञानं हीत्यादिना**। श्रोतृप्रसङ्गान्यतरानुकूल्याभावव्याप्तं लोके विप्रलम्भकत्वम्। इह तदुभयानुकूल्यसत्त्वाद्व्याप्यस्य विप्रलम्भकत्वस्याप्यभाव इत्याह **अविप्रलम्भकत्वं चेति**। पितृत्वादित्यनेन वक्तृप्रेमास्पदत्वस्य भृगोरित्यनेन श्रोतुस्तत्त्वज्ञानयोग्यत्वस्य चोपपादनेन श्रोत्रानुकूल्योपपादनमिति द्रष्टव्यम्।





**वं०प०**— श्रोतुस्तत्त्वज्ञानायोग्यत्वे वक्तुर्विप्रलिप्सा भवति । प्रकृते च तन्नास्तीत्याह **भृगोरिति** । **भूताभिमानित्वेति** । सर्वदा सावधानतया स्वाभिमन्यमानप्रेरणं हि अभिमानिदेवताकृत्यम् । न हीदमभिमानिदेवतानामपटुकरणत्वे सम्भवतीति भावः ।

**शे०वा०**— कथं वरुणस्याप्तत्वमित्यतो विवक्षितार्थतत्त्वज्ञानादिरूपाप्तिमत्त्वादिति भावेनाप्त्येकदेशभूततत्त्वज्ञानवत्तामुपपादयति **विवक्षितार्थतत्त्वज्ञानं हीति** । विप्रलम्भकत्वस्य श्रोतृप्रसङ्गान्यतराननुकूल्यनिबन्धनत्वात् प्रकृते च तदुभयानुकूल्यसत्त्वात् न विप्रलम्भकत्वमित्याशयेन आप्त्येकदेशभूतमविप्रलम्भकत्वमुपपादयति **अविप्रलम्भकत्वं चेति** । अत्र पितृत्वादिति श्रोतुर्वक्तृप्रेमास्पदत्वस्य भृगोरित्यनेन तत्त्वज्ञानयोग्यतायाश्चोपपादनेन श्रोत्रानुकूल्यसमर्थनम् । उपसन्नायेत्यनेन प्रसङ्गानुकूल्यसमर्थनमिति द्रष्टव्यम् । आप्त्येकदेशभूतपटुकरणत्वस्योपपादनम् **वारिराडितीति** । तदेकदेशविवक्षाया उपपादनम् **विवक्षायाश्चेति** । नन्वस्तु वरुणस्याप्तत्वं तथाऽपि न ब्रह्मप्रश्नोत्तरतयोक्तत्वेन हेतुनाऽन्नादीनां ब्रह्मत्वं सिद्ध्यति । अब्रह्मैव ब्रह्म पृष्टवते वरुणेन व्यामोहनायेत्युक्तरीत्या तस्यान्यथासिद्धिशङ्काकलङ्कितत्वादित्यतो नात्र तावन्मात्रं हेतुत्वेनाभिमतं किं त्वाप्तेन ब्रह्मप्रश्नोत्तरतयोक्तत्वमेव । तस्य च नान्यथासिद्धिशङ्काग्रस्तत्वमिति युक्ता तेन तत्सिद्धिरित्याह **तदनेनेति** ।

**विठ्ठल०**— वरुणस्याप्तत्वमुपपादयितुं विवक्षितार्थतत्त्वज्ञानाविप्रलम्भकरणपाटवादिकं श्रोतृप्रसङ्गानुकूल्यं चोपपादयति **विवक्षितार्थतत्त्वज्ञानं हीत्यादिना** ।

**चषकः**— वरुणस्याप्ततामुपपादयति **विवक्षितार्थतत्त्वज्ञानं हीति** । विप्रलम्भकत्वनिरूपितव्यापकताविशेषितस्य श्रोतृप्रसङ्गान्यतराननुकूल्यस्य व्यतिरेकेण तद्व्याप्ततापन्नविप्रलम्भकत्वव्यतिरेकः पक्षीकृतवरुणेऽवसितुं सुशक इत्याशयेनाह **अविप्रलम्भकत्वं चेति** । हेतुविभक्त्यन्तत्रिकेण हेत्वसिद्धिं प्रतिविधत्ते ।

**॥ इति 'ब्रह्म पृष्टवते भृगवे वरुणेन व्यामोहनाय अब्रह्मैवोक्तम्' इत्यपि न, वरुणस्य मायावादित्वाभावात् ॥**

* * *

**॥ अथ तन्निरासे 'चक्षुःश्रोत्रवाक्छन्दानां कर्तर्यपि व्युत्पत्तिसद्भावान्न ब्रह्मवाचकत्वानुपपत्तिः' ॥**

**७३ सु०— ''ननु वरुणेनोक्तेष्वन्नादिष्वन्नप्राणमनांसि सन्तु ब्रह्मस्वरूपाणि, अन्नादिशब्दानामचृत्वाद्यर्थतयाऽनुपपत्त्यभावात्; चक्षुःश्रोत्रवाक्शब्दं तु कथं ब्रह्म स्यात्, चक्षुरादिशब्दानां 'चष्टेऽनेनेति चक्षुः, शृणोत्यनेनेति श्रोत्रम्, वदत्यनयेति वागि'ति करणार्थत्वात्, ब्रह्मणश्च करणत्वानुपपत्तेरि''ति चेन्न, कर्तर्यपि तद्व्युत्पत्तिसम्भवादित्याह चष्ट इति ।**

**अनु०— चष्ट इत्येव तच्चक्षुः श्रवणाच्छ्रोत्रमुच्यते ॥**
**वचनादेव वाग्ब्रह्म**

**एवशब्देन करणसाधनतां निराकरोति।**

**किञ्च 'यतो वा इमानि भूतानि जायन्ते' इति सकलभूतानां सृष्टिस्थितिसंहारकारणत्वं च ब्रह्मलक्षणमन्नादिषूपदिष्टम्। ततश्चैतद्ब्रह्मेत्याह सृष्टीति।**

## सृष्टिस्थित्यादिकारणम्।

**यतः सृष्ट्यादिकारणमुक्तमतोऽपि ब्रह्मेति सम्बन्धः।**

**वं०प०— अकरणत्वादिति**। कर्तृप्रयोज्यत्वरूपकरणत्वाभावादित्यर्थः।

**श्रीनिधि०— चष्ट इति**। चक्षुरित्यादि औणादिकमूह्यम्।

**शे०वा०— अत्तृत्वाद्यर्थतयेति**। भूतात्तृत्वभूताद्यत्वाद्यर्थतयेत्यर्थः। **अनुपपत्त्यभावादिति**। ब्रह्मणः संहर्तृत्वेन सर्वभूतात्तृत्वस्य सर्वभूतोपजीव्यतया ब्रह्मणि सम्भवस्य 'भोग्यत्वमत्र चाद्यत्वमि'त्यादिना प्राग्व्युत्पादितत्वादिति भावः। **करणत्वानुपपत्तेरिति**। कारकान्तरेऽचरितार्थत्वे सति कारणत्वादिरूपकरणत्वस्य कर्तृतया करणे चरितार्थे ब्रह्मण्यनुपपत्तेरित्यर्थः। **कर्तर्यपीति**। ब्रह्मणश्च श्रवणादिकर्तृत्वादिति भावः। ननु चक्षुरादिशब्दानां ब्रह्मणि निर्वचनप्रस्तावे सृष्ट्यादिकारणत्वोक्तिरसङ्गतेत्यतो नेदं चक्षुरादिशब्दवाच्यत्वोपपादकं किन्तु वरुणोपदिष्टानामन्नादीनां युक्त्यन्तरेण ब्रह्मत्वोपपादकमेवेति भावेन तथा योजयति **किञ्चेति**। सृष्टीत्यादेरन्नादीनां ब्रह्मत्वोपपादकत्वे युक्त्यन्तरपरत्वस्य मूलारूढतासिद्धये तथा तद्व्याचष्टे **यत इत्यादिना**।

**वा०र०— सर्वभूतोपजीव्यतयेति**। उपलक्षणं चैतत्। महाव्यापारत्वादिना प्राणत्वमनस्त्वयोश्चेत्यपि द्रष्टव्यम्। **कारकान्तर इति**। कारणत्वमात्रस्य करणत्वेनाभिमते तन्तुमत्पिण्डादि चक्षुरादिकरण इव कुविन्दतुर्यादिमनःसंयोगादिकारणान्तरेऽपि सत्त्वेनासाधारणत्वस्य च प्रकारान्तरेण निरूपयितुमशक्यत्वेन कारकान्तरेऽचरितार्थत्वरूपत्वेनैव निर्वक्तव्यत्वादिति भावः। एतच्चात्र स्पष्टम्। कर्तृतयेत्यादिनोक्तलक्षणाभावोपपादनं कुविन्दादेस्तन्त्वादिकरण इवेति पूरणीयम्। कारण इति कारकान्तरम्। वस्तुतः कारणरूपमेव कर्तृप्रयोज्यं तन्त्वादि दृष्टमिति प्रकृतेऽपि दर्शनरूपक्रियाकर्तृब्रह्मणा प्रवर्त्यं चक्षुरादिकरणमेव भवतीति पर्यवसानाभिप्रायेणोक्तम्। अन्यथा कारकान्तर इत्यवक्ष्यत्। **कर्तर्यपीतीति**। अभ्युपगम्य चेदं मूलं प्रवृत्तम्। परमात्मनि सर्वशब्दविभक्ति-





सद्भावेन करणत्वादेरपि सत्त्वात् । अत एव पृथगधिकरणमूले प्रज्ञानेत्रो लोक इत्यत्रत्यनेत्रपदव्याख्यानावसरे नीयतेऽनेनेति नेत्रम् । दाम्नीत्यादिसूत्रेण करणे ष्ट्रन्नित्याद्युक्तम् । एतच्च प्रथमपद्यशुभसज्ज्ञाननेत्रमित्येतस्योपपादनानुसारेणोपपाद्यम् ।

चषकः— चक्षुःश्रोत्रवाक्शब्दमिति । कृतबहुव्रीहित्वात् ब्रह्मपादसमानलिङ्गता ।

**॥ इति 'चक्षुःश्रोत्रवाक्छब्दानां कर्तर्यपि व्युत्पत्तिसद्भावान्न ब्रह्मवाचकत्वानुपपत्तिः' ॥**

* * *

**॥ अथ तन्निरासे 'सङ्ख्यासंज्ञाभेदादनुवाकद्वयोक्तस्य भिन्नत्वं न कल्प्यं, वाधूलशाखायां एकस्यैव ब्रह्मणोऽष्टरूपत्वेनोदाहृतत्वात्' ॥**

**७४ सु०— ननु तथाऽपि नानुवाकद्वयोक्तमेकं वस्तु भवितुमर्हति, सङ्ख्याभेदात्संज्ञाभेदाच्च । पूर्वं खल्वन्नमयादयः पञ्चोक्ता, न चक्षुःश्रोत्रवाचः; उत्तरत्र चान्नादयः षट्, न विज्ञानानन्दाविति; तत्राह तच्चेति ।**

**अनु०— तच्च वाधूलशाखायामष्टरूपमुदाहृतम् ॥**
**विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः ।**

चशब्दो हेत्वर्थः । यस्मात् **वाधूलशाखायां विज्ञानानन्दसहितं** तदन्नादिषट्कमिति **अष्टरूपं** ब्रह्मतया **उदाहृतम्** । तस्मात्तदनुसारेण प्रथमानुवाके चक्षुरादित्रयस्योत्तरत्र विज्ञानानन्दयोरध्याहारेण सङ्ख्यासंज्ञैक्यं भविष्यतीति भावः । हेत्वन्तरसमुच्चये वा चशब्दः । अत्रापि हि 'विज्ञानं ब्रह्मेति व्यजानात्', 'आनन्दो ब्रह्मेति व्यजानादि'त्युत्तरवाक्यपर्यालोचनयाऽपि ह्यत्र विज्ञानानन्दयोरध्याहारो गम्यते । न हि 'अन्यद्वरुणेनोपदिष्टं भृगुस्त्वन्यद्व्यजानादि'ति युज्यते ।

ननु वाधूलशाखोक्तमपि कुतो ब्रह्मेत्यत आह **पृथगिति** । अनेकशाखाविदामेवात्र सम्यगधिकारज्ञापनायैतदुक्तम् ।

ननु वाधूलशाखायामिवात्रोभयत्राष्टकमेव कस्मान्नोक्तमित्यत आह **आवापेति** ।





## अनु०— आवापोद्वापतः शाखा यत आहुः परं पदम् ॥

**क्वचिदन्यत्रानुक्तावापेन क्वचिदन्यत्रोक्तोद्वापेन क्वचिदुभयतया क्वचित्सामग्र्येण परमेश्वरस्वरूपं प्रतिपादयन्तीति शाखानां स्वभावो यतोऽतो न कश्चिद्विरोध इति ।**

**परि०— यस्माद्वाधूलशाखायामित्यादि** । "तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा वाङ्मयः । तस्माद्वा एतस्माद्वाङ्मयादन्योऽन्तर आत्मा चक्षुर्मयः तस्माद्वा एतस्माच्चक्षुर्मयादन्योऽन्तर आत्मा श्रोत्रमयः तस्मात्प्राणमयः तस्मान्मनोमयस्तस्माद्विज्ञानमयस्तस्मादानन्दमय" इति हि वाधूलशाखेति तत्त्वप्रदीपोक्तरीत्या अष्टरूपोक्तिस्तत्र ध्येया । हेत्वन्तरमेवाह **अत्रापि हीति** । **एतदुक्तमिति** । अन्यथा पृथक्सृष्ट्यादिप्रतिपादकवाक्यान्युदाहृत्य प्रदर्शयेदिति भावः । **क्वचिदन्यत्रानुक्तावापेनेत्यादि** । यथा ब्रह्मवल्ल्यामनुक्तस्य चक्षुरादेः भृगुवल्ल्यामावापः प्रक्षेपः भृगुवल्ल्यामुक्तस्य चक्षुरादेर्ब्रह्मवल्ल्यामुद्वापोऽनुक्तिः भृगुवल्ल्यामेवा(न्यत्रा)नुक्तस्य चक्षुरादेरावापोऽन्यत्रोक्तस्य ज्ञानादेरुद्वाप इत्युभयथा क्वचिद्वाधूलशाखायां सामग्र्येणेति विवेकः ।

**यादु०**— तदेव हेत्वन्तरं दर्शयति **अत्रापि विज्ञानमिति** । **एतदुक्तमिति** । अन्यथा पृथक्सृष्ट्यादिप्रतिपादकवाक्यान्युदाहृत्य प्रदर्शयेदिति भावः । **क्वचिदन्यत्रानुक्तावापेनेति** । यथा पूर्वानुवाकेऽनुक्तस्य चक्षुरादेरुत्तरानुवाके आवापः प्रक्षेपः । अन्यत्रोक्तोद्वापो यथोत्तरानुवाके उक्तस्य चक्षुरादेः पूर्वानुवाके उद्वापस्त्यागः । क्वचिदुभयथा यथोत्तरानुवाक एवान्यत्रानुक्तस्य चक्षुरादेरावापः । अन्यत्रोक्तविज्ञानानन्दयोरुद्वापश्च । क्वचित्सामग्र्येणेत्यस्य वाधूलशाखैवोदाहरणम् ।

**वं०प०**— तदेव विशदयति **अत्रापीति** । **अत्रोभयत्रेति** । अत्र तैत्तिरीयशाखायामुभयत्रानुवाकद्वय इत्यर्थः ।

**आनन्दः**— वाधूलशाखायामित्युक्तिप्रयोजनमाह **अनेकेति** ।

**श्रीनिधि०— इत्यष्टरूपमिति** । एवमष्टरूपमित्यर्थः । हेत्वन्तरमेव दर्शयति **अत्रापि विज्ञानमित्यादिना** । अध्याहारे ज्ञापकमाह **न ह्यन्यत् वरुणेनेति** ।

**शे०वा०**— कुतोऽनुवाकद्वयोक्तस्य वस्तुनो भेद इत्यतः 'सप्तदश प्राजापत्यान्पशूनालभेते'ति प्राजापत्यवाक्ये सङ्ख्यया कर्मभेदस्य भेदलक्षणे स्थितत्वादिहापि सङ्ख्याभेदेनानुवाकद्वयोक्तवस्तुनोऽपि भेदसिद्धिरिति भावेन सङ्ख्याभेदं तावद्भेदसाधकत्वेनाह **सङ्ख्याभेदादिति** । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरि'त्यादौ





संज्ञाभेदादप्यनुवाकद्वयोक्तवस्तुभेदसिद्धेरित्याशयेनाह **संज्ञाभेदाच्चेति** । कथं सङ्ख्याभेदसंज्ञाभेदावित्यतस्तौ दर्शयति **पूर्वमिति** । पूर्वानुवाक इत्यर्थः । **उत्तरत्रेति** । उत्तरानुवाक इत्यर्थः । **उदाहृतमिति** । 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा वाङ्मयः । तस्माद्वा एतस्माद्वाङ्मयादन्योऽन्तर आत्मा चक्षुर्मयस्तस्माद्वा एतस्माच्चक्षुर्मयादन्योऽन्तर आत्मा श्रोत्रमयस्तस्मात्प्राणमयस्तस्मान्मनोमयस्तस्माद्विज्ञानमयस्तस्मादानन्दमयः' इति वाधूलश्रुताविति शेषः । तदेव हेत्वन्तरं दर्शयति **अत्रापि हीति** । उत्तरानुवाकेऽपीत्यर्थः । नन्वावोद्वापत इति वक्ष्यमाणरीत्यैव सङ्ख्यासंज्ञैक्यसिद्धिसम्भवादप्रसिद्धश्रुत्युदाहरणमनर्थकम् । सार्थक्येऽपि वा स्पष्टं तद्वाक्योदाहरणेन विवक्षितार्थस्य वर्णनीयत्वात् साम्मुख्येन तदुक्तत्ववर्णनमनर्थमेवेत्यत आह **अनेकेति** । एतत् साम्मुग्ध्येन वचनमित्यर्थः । **अत्रेति** । तैत्तिरीयशाखायामित्यर्थः । **उभयत्रेति** । पूर्वोत्तरानुवाकयोरित्यर्थः । **क्वचिदन्यत्रानुक्तावापेनेति** । ततश्च प्रकृते पूर्वानुवाकेऽनुक्तस्य चक्षुरादेरुत्तरानुवाके प्रक्षेपरूपावाप इति भावः । **क्वचिदन्यत्रोक्तोद्वापेनेति** । ततश्च प्रकृते उत्तरानुवाकोक्तस्य चक्षुरादेः पूर्वानुवाके त्यागरूपोद्वाप इति भावः । **क्वचिदुभयथेति** । ततश्चोत्तरानुवाक एवान्नं प्राणं चक्षुः श्रोत्रं मनो वाचमितीत्यत्रान्नं ब्रह्मेति व्यजानादित्यादावनुक्तस्य चक्षुरादेरावापस्तत्रैवोक्तविज्ञानानन्दयोरुद्वापः । एवमन्नं ब्रह्मेति व्यजानादित्यादावन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमितीत्यत्रानुक्तविज्ञानानन्दयोरावापः । तत्रैवोक्तस्य चक्षुरादेरुद्वापश्चेति भावः । यद्वा पूर्वानुवाकेऽनुक्तस्य चक्षुरादेरुत्तरानुवाके आवापस्तत्रोक्तविज्ञानानन्दमयोरुद्वाप इत्युभयथेत्यर्थः । **क्वचित्सामग्र्येणेति** । वाधूलशाखायां समग्रमपीत्यर्थः ।

**वा०र०— सप्तदश प्राजापत्यानिति** । भेदलक्षणे द्वितीयाङ्घ्रौ पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेदः स्यादिति सप्तमाधिकरणे भाष्यकारमतेन द्रव्यगतसङ्ख्याया एवोदाहरणत्वात् तामुदाहरणं कृत्वा सङ्ख्यया कर्मभेदस्य निर्णीतत्वादित्यर्थः । यद्यपि वार्तिककारेण तिस्र आहुतीर्जुहोति द्वादश द्वादशानि जुहोतीत्यादिकं वाक्यमेवोदाहरणत्वेन स्वीकृतम् । तत्पक्षे समिधो यजतीत्यादावाख्यातस्यासकृच्छ्रुतेरभ्यासे भेदोऽक्तसङ्ख्यायां तु जुहोतीत्याख्यातस्य सकृच्छ्रुतेः स न स्यादिति प्रत्युदाहरणसङ्गतेर्गतोऽभ्यासप्रसङ्ग इति वार्तिकसूचितायाः सङ्ख्यानिमित्तभेदविचारस्येत्यादिराणकोक्ताया अभ्यासप्रकरणेनैतदधिकरणे वक्तुं शक्यत्वात् । सप्तद्रव्यसंयोगाश्चोदनापशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगेन हि तस्य गुणार्थेनेति पूर्वाधिकरणे सोमेन यजेतेति प्रकृत्या श्रुते ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति आश्विनं गृह्णातीत्यादौ ये ऐन्द्रावयवादयो विहितास्तेषां दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति आश्विनो दशमो गृह्यते तं तृतीयं जुहोतीत्यादिना समुच्चयः क्रमश्च प्रतिपादितज्ञाततदुभयमपि सोमयागैक्येऽपि अभ्यासेनोपपन्नमिति नैन्द्रावायवादयोऽनेके यागाः कल्प्याः । तथाऽग्नीषोमीयं पशुमालभेतेति प्रकृत्या श्रुते हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथवाक्षास इत्यादावपि हृदयादिद्रव्यक एक एव योगो नानेके इत्यादि सिद्धान्तकरणात् तदुपजीवनेन तिस्र इति आहुतीरित्यादावपि त्रित्वादिसङ्ख्याया अभ्यासादेवोपपत्तेर्नगानेकत्वमिति पूर्वपक्षोत्थानाद्ग्रहणवाक्येष्टचश्रुतयागकल्पना सोमेन यजेतेति यजिना श्रुतेन प्रतिबध्यत इति पूर्वसिद्धान्तप्रमेयानुसारेणैवाख्यातेऽप्यश्रुतकर्मसङ्ख्याकल्पना तिस्र इति पदान्तरश्रुतसङ्ख्याया श्रुतिबध्यत इति





सिद्धान्तकरणाच्चानन्तरसङ्गतिरित्येवं तत्सङ्गतेरपि तदुदाहरणपक्ष एव सम्भवात् । तथापि तत्पक्षे कर्मोत्पत्तिवाक्यगतया कर्मसमानाधिकरणया सङ्ख्यया कर्मभेदसिद्धौ विवादाभावेन पूर्वपक्षस्यैवोत्थानात्ससङ्गतिकमपि तद्वाक्यं परित्यज्य सप्तदश प्राजापत्यान् पशूनालभेत इति द्रव्यगतसङ्ख्याप्रतिपादकं वाक्यं भाष्ये उदाहरणतयोपात्तम् । तत्र द्रव्यगतसङ्ख्यया कर्मभेदस्पष्टता । इष्टालम्भाधिकरणे द्रव्यदेवतान्वयस्य यागकल्पकत्वोक्त्या प्राजापत्यानित्यत्रापि यागानेकत्वप्राप्तावप्यतिस्पष्टत्वाभावात्पूर्वपक्षोपपत्तेरिति ज्ञेयम् ।

तदधिकरणे हि किमत्र सप्तदशपशुक एको यागो विधीयते उतैकैकपशुद्रव्यकाः सप्तदशयाग इति चिन्ता । तदर्थं द्रव्यदेवतासम्बन्धैक्यं वा तद्बहुत्वं वेति चिन्ता । तदर्थं साऽस्य देवतेति विहिततद्धिते सति अस्येति सर्वनाम्नोक्तत्वात्पशोः पशुशब्दे वैकशेषः कृत्स्नप्राजापत्यशब्द एव वा स इति चिन्ता । तदर्थं बहुवचनोक्तं बहुत्वं विशेष्यमात्रायि उत विशिष्टान्वयीति चिन्ता । यदि बहुत्वं विशेषमात्रान्वयि तदा तद्धितोक्तलब्धसर्वनामार्थपशुवाचकशब्द एवैकशेषाद्द्रव्यदेवतासम्बन्धैक्यप्राप्त्या सप्तदशपशुकैकयागसिद्धिरिति पूर्वपक्षे फलफलिभावः । यदि च बहुत्वविशिष्टान्वयि तदा कृत्स्नप्राजापत्यशब्द एवैकशेषाद्द्रव्यदेवतासम्बन्धबाहुल्यप्राप्त्याऽनेकपशुद्रव्यकानेकयागसिद्धिरिति सिद्धान्ते फलफलिभावः । पूर्वपक्षस्तु सप्तदशपशुद्रव्यक एक एव यागोऽत्र विधीयत इति । प्रजापतिदेवता एषां पशूनां ते प्राजापत्या इति तद्धितव्युत्पत्तिपक्षे प्रजापतिप्रकृतिभागेन देवतायास्तद्धितेन च पशुद्रव्यस्य बहुवचनेन बहुत्वस्य च प्रतीतिस्तावदस्ति । तत्र साऽस्य देवतेति विहिततद्धितार्थस्यास्येति सर्वनाम्नोक्तपशोः पशुश्च पुशश्च पुशश्च पशवस्तेषामिति सप्तदशकृत्व उच्चारणे पशुशब्दैकमात्रैकशेषे च प्रत्ययार्थप्रधानभूतद्रव्ये प्रथमतो बहुवचनार्थबहुत्वेनान्वयः पश्चाच्चैतेषां प्रजापतिर्देवतेति द्रव्यदेवतयोः सम्बन्ध इत्येवं बहुभिः पशुभिरेकद्रव्यभूतैः प्रजापतिरूपैका देवता व्यासज्य सम्बध्यत इति द्रव्यदेवतासम्बन्धैक्यादेक एव याग इति प्राप्तेः । सप्तदशत्वसङ्ख्यायास्तु पशुद्रव्यगततया तिस्र आहुतीरित्यत्रेव क्रियागतत्वाभावान्न कर्मभेदापादकत्वम् । न च प्राजापत्यशब्दे प्रजापतिर्देवता अस्येति एकवचनान्ततया तद्धितान्तव्युत्पत्तिरेकशेषश्च पश्चाद्बहुत्वान्वयस्तदा प्राजापत्यशब्देन देवतासम्बन्धविशिष्टद्रव्याभिधानाद्विशिष्टशब्द एवैकशेषात्सङ्ख्यान्वये द्रव्यदेवतासम्बन्धभेदाद्यागभेदः स्यात् । स्रग्विण इत्यत्र स्रग्विशिष्टरूपेणैव बहुत्वं सङ्ख्यान्वयदर्शनादिति वाच्यम् । द्वौ त्रय इत्यत्र द्वित्वत्रित्वविशिष्टेन द्विवचनबहुवचनाभिहितसङ्ख्यान्वयस्वीकारे क्रमेण चतुर्णां नवानां वा प्रतीत्यापत्त्या विशिष्टरूपेणान्वयं परित्यज्य स्वरूपेणैवान्वयस्याङ्गीकर्तव्यतया विशिष्टाभिधानस्थलविशिष्टरूपेणैवान्वय इत्यस्यानैकान्त्येन प्रकृतेऽपि प्रजापतिर्देवतासम्बन्धविशिष्टपशुप्रतिपादनेऽपि पशुपरुद्रपद्रव्यविशेष्यरूपेणैव बहुवचनाभिहितबहुत्वसङ्ख्यान्वयेन द्रव्यदेवतासम्बन्धभेदालाभात् । सिद्धान्तस्तु 'यदि कर्म भवेदेकमेकः स्याच्चेकतस्ततः । तेन चैकगणप्राप्तेः पशुसङ्ख्या विरुध्यते ॥' अष्टमस्य प्रथमे 'दैक्षस्य चेतरेष्वित्यधिकरणे' दीक्षायां विधानेन दैक्षशब्दोक्ताग्नीषोमीयविकारत्वं सवनीयादीनामुक्त्वेकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनादित्यधिकरणे ऐकादशिना पशवः एवामाम्नायन्ते । पशवस्तेषु सवनीयविकारत्वमुक्त्वा प्रवृत्तिर्गणेषु स्यात् प्रतिपशुयूपदर्शनादित्यधिकरणे सौत्रामण्यादिपशुगणेष्वैकादशिनविकारताया उक्तत्वात् तदन्तर्गतप्राजापत्यानां पशूनामपि स्वप्रकृतिभूतैकादशिनेष्वेकादशावदानगणनानुक्तेस्तदतिदेशादप्राप्तावपि यस्य लिङ्गमर्थसंयोगादभि-





धानवदिति सूत्रे पशुगणान्तरेष्वेकादशिनस्येति शास्त्रदीपिकोक्तेरग्नीषोमीयपशौ हृदयं, जिह्वा, वक्षो, यकृत् वृक्यौ सव्यंदोरुभे पार्श्वे दक्षिणश्रोणिर्गुदं तृतीयमिति देवतानीतिविहितैकपशुनिष्पन्नैकादशपशुरूपैकद्रव्यकैकयागत्वाङ्गीकारे तस्यापि प्रकृतिवद्विकृतिः कर्तव्येति चोदकबलेन एकस्यैव एकपशुनिष्पन्नहृदयाद्येकादशावदानगणस्य प्राप्तौ तस्य च सप्तदशपशुष्वेकमात्रेऽनुष्ठानेनैकयागस्य पर्यवसन्नतयैकस्यैव प्राजापत्यत्वप्राप्तावप्यविशिष्टषोडशपशुषु तदप्राप्त्या तेषां यागसाधनत्वाभावात् प्राजापत्यत्वं न स्यात् चोदको ह्येकस्मिन् यागे एक एवास्ति । यत्तूक्तमुपदेशेनातिदेशिकैकपशुनिष्पन्नैकादशावदानगणबाध इति । तन्न, एकपशुनिष्पन्नैकादशावदानगणस्योपांशुबहुत्वेन विरोधाभावेनोक्तेन तद्बाधायोगात् । सप्तदशपशुकानेकयागपक्षे प्रत्येकं चोदकरूपवाक्यशेषानुसारेणैकपशुनिष्पन्नैकादशगणाः प्रत्येकमेव प्राप्नोतीति कुतः पश्वेकत्वस्य बाधः । न ह्यवियोगैक्यं निश्चितम् । येन तद्बलादुपदिष्टपशुबहुत्वेनातिदेशतः प्राप्तपश्वेकत्वस्य बाधः स्यात् । नापि तदवदानगणैकत्वस्य । यत्त्ववदानानां पशुसंस्कारार्थत्वात् प्रतिपश्वावृत्तिरित्यादिकमुक्तम् । तदपि न । नष्टस्य पशोः साक्षादवदानसंस्कार्यतानुपपत्त्या हृदयाद्यात्मनैव तत्संस्कार्यताया अङ्गीकार्यत्वेन हृदयादेश्चावदानसंस्कृते हृदयेन यजेतेति प्रकृतौ यागसाधनत्वोपदेशात् । विकृतावपि पशोर्यागसाधनत्वोपपादनयातिदेशेन हृदयादेरेकपशुनिष्पन्नस्यैव प्राप्तेर्यागस्यैव प्राप्तेर्यागैक्यनिश्चयाभावेनावदानगणावृत्तिकल्पनाया अयोगात् । तस्माद्विवक्षितैकत्वसङ्ख्या हृदयादेरेवातिदेशतः प्राप्तेरङ्गीकार्यत्वादुपदिष्टपशुबहुत्वस्य च साधारणत्वेन यागैक्यं निश्चित्य विरोधस्य वक्तुमशक्यत्वात् तदुभयाविरोधाय यागभेद एवाङ्गीकार्यः । सति च तस्मिन् प्रतिपशुचोदकभेदेनैकपशुनिष्पन्नैकदशावदानगणप्राप्तिः सम्भवतीति सर्वेषां प्रजापतिदेवतान्वयसम्भवान्न बहुत्वस्य व्युत्पत्तिसिद्धविशेष्यमात्रान्वय इति प्राजापत्यशब्द एवैकशेषे बहुत्वान्वये द्रव्यदेवतासम्बन्धभेदाद्यागभेद एव प्राप्त इति । एवं वसन्ताय कपिञ्जलानालभत इत्यादाविति चोदकभेदाद्यावद्द्रव्यं यागभेदः । एवं चेहाधिकरणे चोदकवशाद्यागभेदनिर्णयेऽपि सप्तदशेति श्रुत्युक्तसङ्ख्याया एकद्रव्यत्वाश्रयणपक्षे पश्वन्तराणां प्राजापत्यत्वानुपपत्तिरित्यादि सिद्धान्तकरणे उपजीव्यत्वात्सङ्ख्यासहितचोदकेन यागभेदनिर्णयप्राप्तिरित्याशयेन सङ्ख्ययेति मूलटीकयोर्भेदकाभिधानमित्यदोषः । अत्र सर्वनाम्नि वैकशेष इत्येतत्कोटिस्थाने तद्धिते वैकशेष इति कोटिः शास्त्रदीपिकाभिप्रेतेति पक्षलक्षीकृत्य केवलप्रत्ययप्रयोगाभेदाभावान्न तद्धितमात्रैकशेषो युक्तः । तन्मात्रैकशेषेऽपि तद्धितस्य देवताविशिष्टद्रव्याभिधायकत्वाद्यागकल्पकदेवताविशिष्टरूपभेदाद्यागभेदापत्तेः पूर्वपक्षासिद्धिः । तस्माद्द्रव्यदेवतान्वयैक्यानैक्यसंशयहेतुसर्वनाम्नि वैकशेषः कृत्स्नप्राजापत्यशब्दे वेति संशय इत्यादिना राणके भट्टसोमेश्वरेण कृतं विचारमत्र बहुभाष्याहेत्यादिना अर्थतोऽनूद्य प्रत्ययमात्रप्रयोगभावेनेत्याद्यं दूषणं तावत्सुपरिहरम् । महाभाष्ये प्रादीपे च गर्गस्यापत्यानीत्यर्थे गर्गादिभ्यो यञिगर्गञ् य ञ् इति समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वात् तत एवैकस्याविभक्तौ प्रथमाबहुवचनादौ परभूतायामेकशेषस्य स्पष्टमुक्त्याऽत्रापि तद्धितमात्रे एकशेषोपपत्तेः । नापि द्वितीयं दूषणम् । प्रजापत्यन्वयात्प्रागनिश्चितविशेषेण देवतामात्रेण वैशिष्ट्यनिरूपणाभावाद्विशिष्टभेदाभावेऽन्यभेदाभावाद्यागभेदानापत्तेरित्याद्युक्त्वा तद्धितमात्रैकशेषोक्त्यर्थं तु वार्तिकम् । प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते । तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेदितीत्यादिकं शङ्करभट्टैर्बहुप्रतिपादितं तत एव प्रतिपत्तव्यम् ।





अथैष ज्योतिरथैष विश्वज्योतिरित्यादि भेदलक्षण एव द्वितीयपादस्य संज्ञा चोत्पत्तिसंयोगादित्यष्टाधिकरणे अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र सहस्रदक्षिणागुणे विधेये यागानुवादापेक्षायां वसन्ते ज्योतिषेतिवज्ज्योतिरित्येकदेशेन ज्योतिष्टोमस्यानुवादादेतच्छब्दाच्च प्रकृतज्योतिष्टोमाभेदावगमादन्यथा प्रकृतहानादिप्रसङ्गात् विश्वसर्वज्योतिःशब्दयोश्च त्रिवृदादिष्वेव यथाकथञ्चित् साकल्येन वृत्तेरथशब्दस्य चाथ जिह्वाया इतिवत् पाठसिद्धक्रमानुवादित्वाज्ज्योतिष्टोममेव ज्योतिरादिपदैरनूद्य तत्र सहस्रदक्षिणारूपो गुणो विधीयत इति पूर्वपक्षं प्रापय्य नामान्तरश्रुतावर्थभेद इत्यौत्सर्गिकनियमसत्त्वेनाथैषा इत्यत्र च बलवद्बाधकाभावेन आद्यवाक्येनैवानुवादपूर्वकगुणविधानसिद्धेर्वाक्यान्तरवैयर्थ्यापत्तेश्च संज्ञाभेदश्रुत्या ज्योतिष्टोमातिरिक्तार्थावगमादथशब्देन प्रकरणे विच्छेदोपपत्तेरेतच्छब्दस्य च प्रस्तूयमानपरत्वेनाप्युपपत्तेश्च सहस्रदक्षिणायुक्तानि ज्योतिः सर्वज्योतिरित्यादिनामकानि कर्मान्तराण्येवेत्यङ्गीकार्यतया युक्तः संज्ञाभेदेन कर्मभेद इति सिद्धान्तितमस्तीति भावः। टीकायामप्येतदधिकरणशरीरमेतन्नये प्रागनुक्रान्तम्। उदाहृतमितीति प्रतीकोपादानानन्तरं तस्माद्वा एतस्मादित्यारभ्य आनन्दमय इतीत्यनन्तरं वाक्य इति शेष इति पाठः। क्वचिद्वार्धूलेतीति प्रतीकोपादानानन्तरमुक्तवाक्यस्यान्त इति वार्धूलश्रुताविति शेष इति पाठः। तत्र तु शाखास्थश्रुतेरेव शाखापदार्थतया कथनात् वार्धूलश्रुताविति पुनर्वार्धूलपदोपादानं उदाहृतमितीति प्रतीकोपादानन्तरं इति। वार्धूलश्रुताविति शेष इति पाठे तु यत्किञ्चित्सम्बन्धिश्रुतिभ्रान्तिवारणाय वार्धूलेत्यनुवाद इति ज्ञेयम्। वचनमित्यर्थ इति ज्ञेयम्। **वचनमित्यर्थ इति**। **उक्तमिति** मूलस्य कृतमित्यर्थ इति भावः। क्वचिदन्यत्रानुक्तावपि नेत्यादेरुदाहरणान्तरमालोचनीयम्। ततश्च प्रकृत इत्यादिस्थलत्रयटीकानुसारेण उदाहरणान्तरसद्भावप्रतीतेरित्यवधेयम्। पूर्वं विधाद्वयोपपादनमनुवाकभेदमाश्रित्य कृतम्।

उभयथेत्येतत्तृतीयाविधार्मेक(?)मेवानुवाकमाश्रित्य पूर्वोत्तरस्थभेदेनोपपादयति **ततश्चोत्तरेति**। उत्तरानुवाक एवेत्यनेन पूर्वत्रेवावापोद्वापस्थलभूतानुवाकभेदो नास्तीति सूचयति। अस्यैवकारस्य वाचमितीत्यत्रेत्युत्तरत्रापि सम्बन्धादेकस्मिन्नेव वाक्ये तदुभयं न तु पूर्वत्रेव क्वचिदावापः क्वचिदुद्वाप इति वाक्यभेदे इति च लब्धं भवति। एवमिति वाक्येऽपीत्यादावेवेति योजनया वाक्यभेदनिरासलाभस्तत्रापीति ज्ञेयम्। **तत्रैवेति**। अन्नं ब्रह्मेत्यादावेवेत्यर्थः। अन्नं प्राणमित्यत्र तदनुवाकीयोत्तरवाक्यानुक्तावापवत्पूर्वानुवाकानुक्तावापस्यापि व्याख्यातुं शक्यत्वात् तमावापमाश्रित्यैकस्मिन्वाक्य एवोत्तरानुवाकीयेऽन्नं ब्रह्मेत्युत्तरवाक्योद्वापं पूर्वव्याख्यानवदेव चाश्रित्योभयथेत्येतत्प्रकारान्तरेण व्याख्याति **यद्वा पूर्वेति**। उत्तरानुवाके तदनुवाकस्थं प्राणमिति वाक्य इति योज्यम्। **तत्रोक्तेति**। उत्तरानुवाक एवान्नं ब्रह्मेति व्यजानादित्याद्युत्तरवाक्योक्तेत्यर्थः। अनुवाकभेदविवक्षयाऽप्युभयथेत्येतदुपपादनमन्नं प्राणं चक्षुरित्यत्रैव कर्तुं शक्यमिति भावेन तावदेवोपपादितं न त्वन्नं ब्रह्मेतीत्यत्राऽप्युभयथेत्येतदुपपादनं कृतम्। अनुवाकान्तरस्थमित्यस्य साम्येनावापोद्वापयोस्तत्राभावादित्यदोषः। यद्यपि क्वचिदन्यत्रेत्याद्यकल्पस्योभयथेति तृतीयकल्पस्य चोदाहरणे साङ्कर्यं प्रतीयते। तथाप्युपधेयस्यान्यत्रानुक्तावापोभयलक्षणोपाधिमतोऽन्नं प्राणं चक्षुरित्यादैक्येऽप्युक्तोपाध्येरसङ्कर (?) इत्यत्र तात्पर्यान्न दोषः। अत एव विषयो वृक्षादिकम्पजनक इति सप्तपदार्थीपदार्थचन्द्रिकायां प्राणत्वविषयत्वोपाधिभेदात् प्राणविषयरूपो वाय्वोर्भेद इति निरूपितमिति ज्ञेयम्।





**स०व्र०—** ननु 'विज्ञानं ब्रह्मेति व्यजानात्' इत्युत्तरवाक्यपर्यालोचनयाऽपि ह्यत्र विज्ञानानन्दाध्याहारो गम्यत इति युक्तिमनुक्त्वा वाधूलशाखोदाहरणं किमिति कृतमित्यत आह **अनेकशाखाविदामिति**। **क्वचिदन्यत्रेति**। अन्यत्र पूर्वानुवाके अनुक्तानां चक्षुःश्रोत्रवाचां अन्यत्र उत्तरानुवाके आवापः प्रक्षेपः । अन्यत्र उत्तरानुवाके उक्तानां चक्षुःश्रोत्रवाचां अन्यत्र पूर्वानुवाके उद्वापस्त्यागः। क्वचिदुभयथा उत्तरानुवाके अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमित्यत्र अन्यत्र अन्नं ब्रह्मेति व्यजानादित्यादौ अनुक्तानां चक्षुःश्रोत्रवाचां आवापः तत्रैवोक्तविज्ञानानन्दयोरुद्वापः एवम् 'अन्नं ब्रह्मेति व्यजानादि'त्यत्राप्युभयं द्रष्टव्यम्। क्वचित्सामग्र्येण वाधूलशाखायामित्यर्थः।

**विट्ठल०— वाधूलशाखायामित्यादि**। वाधूलशाखा च तत्त्वप्रदीपिकायामुदाहृता 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा वाङ्मयस्तस्माद्वा एतस्माद्वाङ्मयादन्योन्तर आत्मा चक्षुर्मयस्तस्माद्वा एतस्माच्चक्षुर्मयादन्योन्तर आत्मा श्रोत्रमयस्तस्मात्प्राणमयस्तस्मान्मनोमयस्तस्माद्विज्ञानमयस्तस्मादानन्दमय' इति वाधूलश्रुतिरिति। समुच्चेयमेव हेत्वन्तरं दर्शयति **अत्रापीति**। वरुणोपदिष्टादन्यद्भृगु व्यजानादिति किं न स्यादित्यत आह **न हीति**। तथात्वे वरुणोपसत्तिवैय्यर्थ्यापत्तेरिति भावः। **एतदुक्तमिति**। अन्यथा पृथक्सृष्ट्यादिप्रतिपादकवाक्यान्युदाहृत्य प्रदर्शयेदिति भावः। **क्वचिदन्यत्रानुक्तावापेनेति**। यथा पूर्वानुवाके अनुक्तस्य चक्षुरादेरुत्तरानुवाके आवापः = सङ्ग्रहः। क्वचिदन्यत्रोक्तोद्वापेन, यथा उत्तरानुवाकोक्तस्य चक्षुरादेः पूर्वानुवाके उद्वापः = त्यागः। क्वचिदुभयथा उत्तरानुवाके एव अन्यत्रानुक्तस्य चक्षुरादेरावापः। अन्यत्रोक्तविज्ञानानन्दमययोरुद्वापश्च। क्वचित्सामग्र्येण यथा वाधूलशाखायाम् अष्टरूपमुदाहृतमिति।

**चषकः— अनुक्तावापेनेति**। पूर्वानुवाकानभिहितचक्षुरादेरुत्तरानुवाके सङ्ग्रहेणेत्यर्थः। **अन्यत्रोक्तोद्वापेनेति**। उत्तरानुवाकोक्तचक्षुरादेः पूर्वानुवाके उद्वापस्त्यागः।

**॥ इति 'सङ्ख्यासंज्ञाभेदादनुवाकद्वयोक्तस्य भिन्नत्वं न कल्प्यं, वाधूलशाखायां एकस्यैव ब्रह्मणोऽष्टरूपत्वेनोदाहृतत्वात्' ॥**

* * *

**॥ अथ तन्निरासे**
**'पुनरुपसरणस्यान्यथोपपत्तेस्तन्मात्रेण पूर्वोद्दिष्टस्याब्रह्मत्वं न कल्प्यम्' ॥**

**७५ सु०—** ननु तथाऽपि वरुणोपदिष्टानामन्नादीनां ब्रह्मत्वं नोपपद्यते, 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससार' इति लब्धोपदेशस्यापि भृगोः पुनरुपसरणवचनात्। पूर्वोक्तस्यैव ब्रह्मत्वे 'अधीहि भगवो ब्रह्मे'ति पुनरुपसरणं व्यर्थं स्यात्। अनेन तु ज्ञायते न पूर्वोपदिष्टं ब्रह्मेति। यथा हि ''कश्चित्सुवर्णं याचितवते रजतं ददाति, सोऽपि गृहीत्वाऽऽलोच्य पुनः(पुनः)

सुवर्णं देहीति याचते, तेन पार्श्वस्थो जानाति 'प्राग्दत्तमन्यदेव किञ्चिन्न सुवर्णमि'ति । तथेहापी''त्याशङ्कां परिहरति **यत इति** ।

अनु०— यतो भूतानि जायन्त इत्याद्यैर्लक्षणैः स्वयम् ।
लक्षितं गुरुणा पश्चात्तपसैवापरोक्षितम् ॥
दृष्ट्वैकैकस्वरूपं तु समस्तोक्तानुदर्शनम् ।
इच्छताऽऽज्ञां गुरोः प्राप्य तपसैवापरोक्षितम् ॥
अब्रह्मेत्येव वदतां श्रुतहान्यश्रुतग्रहौ ।
साक्षाल्लक्षणतां प्राप्ताविति लज्जा तदुक्तिषु ॥

अयमर्थः न पुनरुपसरणान्यथाऽनुपपत्त्या पूर्वोपदिष्टस्याब्रह्मत्वं कल्प्यम्, पुनरुपसरणस्यान्यथोपपत्तेः । तथा हि । वरुणो ह्युद्देशलक्षणाभ्यां भृगवे ब्रह्मोपदिश्योवाच 'न श्रवणमात्रेण कृती भवान्, श्रवणमात्रस्य ब्रह्मसाक्षात्कारासाधनत्वात्, साक्षात्कारस्यैव मोक्षसाधनत्वात् । अतस्त्वया मनननिदिध्यासनरूपं तपः करणीयमि'ति । स चैवमुपदिष्टाष्टरूपो युगपत्सर्वस्य साक्षात्कर्तुमशक्यत्वान्मनननिदिध्यासनाभ्यामन्नाख्यं भगवद्रूपं साक्षात्कृत्य गुरुप्रसादलब्धमपूर्वतमं धनं तस्मै निवेदयितुं प्राणाख्यरूपान्तरसाक्षात्काराय मनननिदिध्यासने चिकीर्षुर्गुरोरनुज्ञामादातुं च पुनर्गुरुमुपससार । एवं रूपान्तरेऽपि । तत्र अनुजानीहीति वक्तव्ये यदधीहि भगवो ब्रह्मेति वदति तदहङ्कारनिरासार्थमिति ।

नन्वेवमस्त्वर्थापत्तिरन्यथोपपत्त्यो(त्त्यु)पक्षीणा, तथाऽपि किं पूर्वस्याब्रह्मत्वात्पुनरुपसरणम् उतोक्तरीत्याऽनुज्ञानार्थमिति सन्दिह्यते । सन्देहे चान्नमयादीनां न ब्रह्मत्वावधारणं सम्भवतीति । मैवम्, 'यतो वा इमानि भूतानि जायन्त' इत्यादिलक्षणयोगात्तपसैवापरोक्षितत्वलिङ्गाच्चोत्तरपक्षावधारणोपपत्तेः ।

न हि देहादाविदं लक्षणं सम्भवतीति । न च तस्य स्वभावसिद्धज्ञानस्य साक्षात्काराय तपोऽपेक्षितम् । किञ्च पूर्वस्याब्रह्मत्वेन पुनरुपसरणे स तपस्तप्त्वाऽन्नमब्रह्मेति





**व्यजानात्, नान्नाद्ध्येव खल्वित्यादि ब्रूयात्, एवं ब्रह्मत्वज्ञापकेषु श्रुतेष्वप्यश्रुतमब्रह्मत्वं कल्प्यतां श्रुतहानिरश्रुतग्रहापत्तिश्च स्यादित्यलम्; निर्दलपक्षप्रतिक्षेपेऽस्माकमेव लज्जा जायत इति ।**

**अक्षरार्थस्तु स्फुट एव ॥ सूत्राक्षराणामननुगुण्यं तु भगवता न व्युत्पादितम्, तस्य परेण स्वयमेवाङ्गीकृतत्वात् । यो हि स्वयमेव स्वव्याख्यानस्यास्वारसिकत्वं मन्यते, तं प्रति तद्व्युत्पादनं मृतमारणमिव निराकर्तुरेव लज्जाकरम् । अत एवाह । इति प्रकारेण तदुक्तिषु विषयभूतासु दूषणाभिधानेऽस्माकमेव लज्जा इति ।**

**परि०—** मूलपदैरुक्तशङ्कानिरासस्याप्रतीतेर्व्यनक्ति **अयमर्थ इत्यादिना । अर्थापत्ति-रन्यथोपपत्त्येति** । पुनरुपसरणान्यथानुपपत्तिरनुज्ञास्वीकाररूपान्यथोपपत्त्येत्यर्थः । **अक्षरार्थ इति** । यत इत्यादि मूलस्येति योज्यम् । **स्वयमेवाङ्गीकृतत्वादिति** । 'गुणे त्वन्याय्यकल्पने'त्युक्तत्वादिति भावः । इतिपदं पूर्वं हेत्वर्थकं व्याख्याय प्रकारार्थतयापि व्याख्याति **इति प्रकारेणेति** ।

**गु०दी०— निदिध्यासनरूपं तपः करणीयमित्येतत्** 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मे'त्यस्यार्थ-कथनम् । **तस्य परेण स्वयमेवाङ्गीकृतत्वात्** इत्यस्य अपौरुषेयपौरुषेययोः श्रुतिसूत्रयोर्विरोधे गुणेऽप्रधाने सूत्र एवान्याय्यकल्पनेति स्वयमेवोक्तत्वादित्यर्थः । अत्रेदं चिन्त्यम् । घटैकदेशस्पर्शेऽपि घटः स्पृष्ट इत्यादाविव ब्रह्मावयवत्वात् तत्पुच्छस्यापि ब्रह्मत्वोक्तिरिति सावकाशमेकं ब्रह्मशब्दमादायान्नमयादीन् प्रत्येवोदाहृतश्रुतिरूप-श्लोकपञ्चकोक्तान् षड्ब्रह्मशब्दानुत्तरानुवाके 'अधीहि भगवो ब्रह्मेति', 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मे'ति श्रुतौ 'अन्नं ब्रह्मेति व्यजानादि'ति श्रुतौ अन्नमयादीन् प्रत्येवोदाहृतानष्टौ ब्रह्मशब्दान् तदुपोद्बलितानि स्वभाष्यमूलभूत-ब्रह्मसूत्राणि चोपेक्षमाणस्य तवैव तूक्तविधया बहुत्वेन प्रबलप्रधानभूतसौत्रन्यायविरुद्धायां सावकाशैकब्रह्मशब्दाव-लम्बितया गुणभूतायां त्वदीयश्रुतावेवान्याय्यकल्पनेत्यात्मीय एव बाणो भवन्तं प्रहरति । उक्तन्यायमननुसन्दधानस्य तव विवेकाख्यगुण एव अन्याय्यकल्पनोचिता नास्मद्ब्रह्मसूत्र इति । किञ्च महदिदं व्याख्यानकौशलं परकीय-भाष्यकारस्य यत्स्वभाष्यमूलभूतं समन्वयस्यादिमं सूत्रमपार्थकीकृत्य उत्सूत्रभाष्यतया स्वभाष्येणैव स्वभाष्यं भाष्यलक्षणविधुरं चकारेति ।

**यादु०— तस्य परेण स्वयमेवेति** । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राणां कथञ्चिद्योज्यत्वा-दिति तेनोक्तत्वादिति भावः ।

**वं०प०— अन्यथोपपत्तीति** । अनुज्ञास्वीकारार्थत्वेनेत्यर्थः । **विषयभूतासु** निराकरणविषयभूतासु ।

**श्रीनिधि०— मनननिदिध्यासनरूपं तपः करणीयमिति** । तपसा ब्रह्म विजिज्ञासस्वेत्यस्य अर्थोऽयम् । अक्षरार्थस्तु यतो भूतानि जायन्ते इत्यादिवाक्योक्तैः सृष्टिकर्तृत्वादिभिः लक्षणैः गुरुणा स्वयं लक्षितम् । एतल्लक्षणवत्तया प्रतिपादितमित्यर्थः । अनन्तरं न श्रवणमात्रेण कृती भवान् किन्तु अपरोक्षार्थं मनननिदिध्यासनरूपं तपः करणीयमित्युक्ते तपसा अन्नाख्यमेकं भगवद्रूपं साक्षात्कृत्य क्रमेण समस्तोक्तानुदर्शनमिच्छत मनननिदिध्यासनार्थं गुरोरनुज्ञां प्राप्यते । न तपसा अपरोक्षितं रूपपञ्चकं ब्रह्मणेति वदतां श्रुतहान्यश्रुतग्रहौ साक्षाल्लक्षणतां मुख्यचिन्तां प्राप्ताविति हेतोः तदुक्तिषु निराकरणविषयभूतासु निराकरणे कार्ये लज्जा जायते, निर्दलत्वात् तदुक्तीनां मत्तगजशातेन योद्धुः पुरुषस्य शिथिलेनैकेन क्रोष्ट्रा योधने लज्जेव यो हि निमित्तान्तरेण मृतः तन्मरणे तादृशस्य शूरस्यातिलज्जाकरं दृष्टमेवेति ।

**शे०वा०—** ननु सृष्टिस्थित्यादिकारणमित्यादिना वरुणोक्तान्नादीनामुक्तस्य सृष्ट्यादिकारणत्वस्यैव कथनाद्यतो भूतानीत्याद्युत्तरवाक्यवैयर्थ्यमित्यतः पुनरुपसरणान्यथाऽनुपपत्त्या प्राप्तब्रह्मत्वशङ्कानिवर्तकतया तस्यार्थवत्त्वमिति भावेन तच्छङ्कानिवर्तकतया तद्योजयितुं तां शङ्कामुत्थापयति **नन्विति** । ननूक्तार्थापत्तेरनेनादूषणान्नोक्तशङ्कानिरासकत्वमुत्तरवाक्यस्येत्यतो भाष्याभिप्रायमाह **अयमर्थ इति** । तर्ह्युक्तशङ्कानिरासस्य दृष्ट्वैकैकमित्यादिनाऽन्यथोपपत्तिप्रतिपादनेन सिद्धेर्यतो भूतानीत्यादेरानर्थक्यमित्यतस्तद्व्यावर्त्यशङ्काप्रदर्शनेन तद्योजयितुं तामुत्थापयति **नन्वेवमिति** । ननु लक्षणलिङ्गयोरन्यत्राप्युपपत्तेर्न ताभ्यामुत्तरपक्षावधारणं सम्भवतीत्यतस्तयोरन्यत्रासम्भवं क्रमेण दर्शयति **न हीत्यादिना** । भाष्याक्षरार्थकथनपूर्वकत्वात् तदभिप्रायकथनस्य कथं तदकथयित्वैवायमर्थ इत्यभिप्रायकथनमुपपद्यत इत्यतोऽत्र यतो भूतानीत्यादिभाष्याक्षरार्थस्य स्पष्टत्वात्तदकथनेऽपि तात्पर्याभिधानमुपपद्यत इत्याशयेनाह **अक्षरार्थस्त्विति** । पञ्चकोशत्ववादिमते आनन्दमयोऽभ्यासादित्यादिसूत्राक्षरानानुगुण्यं च दोष इत्याशयेन कुतस्तर्हि पञ्चकोशत्ववादिमतदूषणार्थं प्रवृत्तस्य भाष्यकारस्याक्षरानानुगुण्या व्युत्पादनमित्यतोऽव्युत्पादने प्रतिज्ञापूर्वकं निमित्तमाह **सूत्रेति** । **अङ्गीकृतत्वादिति** । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति न्यायेन सूत्राणां कथञ्चिद्योज्यत्वादिति परेणैवोक्तेरिति भावः ।

**वा०र०— यतो भूतानीत्याद्युत्तरेति** । एतत्प्रतिज्ञायां कथनादित्यन्तं हेतुकथनम् । **भाष्याभिप्रायमिति** । अयमर्थ इत्येव मूले उक्तावप्यक्षरार्थस्तु स्फुट एवेत्युत्तरत्रोक्तेरयमभिप्रेतोऽर्थ इति मूलेऽभिप्रेतमित्याशयेनाभिप्रायमित्युक्तमिति ज्ञेयम् । वक्ष्यति च भाष्याक्षरार्थस्य स्पष्टत्वादिति । एवं तदभिप्रायकथनेत्युत्तरत्राप्यभिप्रायपदेनार्थपदमभिप्रायार्थमिति सूचितम् ।

**स०व्र०— तस्य परेण स्वयमेवाङ्गीकृतत्वादिति** । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राणां कथञ्चिद्योज्यत्वादिति तेनोक्तत्वादिति भावः ।

**विट्ठल०—** उक्तं शङ्कानिरासपरतया मूलार्थमाह **अयमर्थ इत्यादिना** । **अर्थापत्तिरिति** । पुनरुपसरणान्यथानुपपत्तिरूपार्थापत्तिरित्यर्थः । अक्षरार्थस्त्विति भृगुर्यतो वेत्यादि लक्षणैर्गुरुणा लक्षणवत्तया प्रतिपादितम् अष्टरूपं





यत्तत्स्वयं तपसा मनननिदिध्यासनरूपेणालोचनेनैकमन्नाख्यभगवद्रूपमपरोक्षतो दृष्ट्वा, पुनः समस्तानां उक्तानां प्राणादीनामनुक्रमेण दर्शनमिच्छता स्वेन गुरोरनुज्ञां प्राप्य तपसैवैकैकं रूपं क्रमेणापरोक्षितं यदष्टरूपं ब्रह्म तदब्रह्मेति वदतां श्रुतहान्यश्रुतस्वीकारौ साक्षादेवासाधारणधर्मतां प्राप्ताविति प्रकारेण तदुक्तिषु तत्पक्षनिरासोक्तिविषयेऽस्माकमेव मृतमारणं कुर्वत इव लज्जा जायत इति स्फुट एवार्थ इत्यर्थः । **परेण स्वयमेवेति** । गुणे त्वन्याय्यकल्पनमिति अनानुगुण्यस्य स्वेनैवोक्तत्वादिति भावः । अत एवात्राह विवरणकारः 'शङ्करः शङ्करः साक्षाद्व्यासो नारायणः स्वयम् । तयोर्विरोधे सम्प्राप्ते किंकरः किं करोम्यहम्' इति । तदपहासपरतया अस्मत्परमगुरुश्रीमन्नृसिंहाचार्यवर्याः उक्तवन्तः । 'व्यासस्तु भगवान् विष्णुः सङ्करो मणिमान् खलः । तस्य व्यासविरोधे तु स्यादेव ह्यधरं तमः' इति । 'यदत्र नियामकमि'ति मान्त्रवर्णिकब्रह्माधिकारात् सर्वान्तरत्वाच्च आनन्दमयमात्रस्य परमात्मत्वमिति यन्नियामकमुक्तं तत् मान्त्रवर्णाधिकारस्यान्नमयादिसाधारण्योक्त्या न हि विज्ञानमयान्तरत्वमात्रेण सर्वान्तरत्वं सिद्ध्यतीत्युक्त्या च प्रागेव निराकृतमित्यर्थः ।

**॥ इति 'पुनरुपसरणस्यान्यथोपपत्तेस्तन्मात्रेण पूर्वोद्दिष्टस्याब्रह्मत्वं न कल्प्यम्' ॥**

* * *

**॥ अथ तन्निरासे 'भेदव्यपदेशाच्चेति सूत्रव्याख्यान्तोक्तस्य मिथ्याभेदपरत्वस्यानुपपत्तिः' ॥**

**७६ सु०—** यच्च 'भेदव्यपदेशाच्चे'ति सूत्रं व्याख्यायोक्तं परेण 'मिथ्याभूतं जीवात्मपरमात्मभेदमाश्रित्य भेदव्यपदेशाच्चेत्युक्तमि'ति तदनुपपन्नमिति भावेनाह **समीप इति** ।

**अनु०—** समीपे सह भोगस्य मुक्तित्वेनोक्तितोऽसकृत् ।
भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत् ॥

'एतमानन्दमयमात्मानमुपसङ्क्रम्ये'त्यादौ परमेश्वरस्य **समीपे** । 'सोऽश्नुत' इत्यादौ तेन **सह** । न हि सामीप्यं साहित्यं च भेदेन विनोपपद्यते । न च मोक्षेऽपि शिष्यमाणं मिथ्या भवितुं युक्तम्, आत्मस्वरूपस्यापि मिथ्यात्वप्रसङ्गात् ।

अथवा 'भेदव्यपदेशादि'त्युक्ते मिथ्याभेदोऽयं किं न स्यादित्याकाङ्क्षानिरासार्थत्वेन 'अस्मिन्नस्य च तद्योगं शास्ती'ति सूत्रं प्रकारान्तरेण व्याख्याति ।

**यादु०—** मिथ्याभूतं जीवात्मपरमात्मभेदमिति तद्ग्रन्थार्थानुवादो न वाक्यानुवाद इति द्रष्टव्यम् ।





**वं०प०— प्रकारान्तरेणेति**। 'योगमन्नमयाद्यैर्यत्फलत्वेनास्य शंसती'ति पूर्वमस्य सूत्रस्य व्याख्यातत्वात् प्रकारान्तरेणेत्युक्तम्। तथा चास्मिन्स्थानद्वयेऽस्य जीवस्य तद्योगं तेन परब्रह्मणा योगं तत्सामीप्यमिति यावत्। तेन योगं साहित्यं च श्रुतिः शास्ति। तथा तत्समीपे तेन सह भोगं च मुक्तित्वेन शास्तीति व्याख्यानं द्रष्टव्यम्।

**श्रीनिधि०— समीपे सहभोगस्येति**। मूलस्यायमर्थः। एतमानन्दमयमात्मानमुपसंक्रम्य तान् लोकान् कामानीकामरूप्यनुसञ्चरन् इत्यादौ परमेश्वरस्य समीपे सोऽश्नुते इत्यादौ तेन सह च भोगस्य मुक्तित्वाभिप्रायेण सकृदुक्तितः अत्र भोगस्य सकृदुक्तित इति। इमान् लोकान् कामानीकामरूप्यनुसञ्चरन् सोऽश्नुते सर्वान् कामान् इति वाक्यद्वयाभिप्रायेण भेदो मिथ्या नैव भवेत्। मुक्ताववशिष्यमाणस्य मिथ्यात्वायोगात्। सामीप्यसाहित्ययोर्भेदेन विना अनुपपत्तेः। किं नाम जीवेशयोर्भेदो मिथ्या इति वचनमेव मिथ्या भवेत् निरर्थकमिति यावदिति यदत्र नियामकमुक्तं तत्प्रागेव निराकृतमिति सूत्रे आनन्दमयशब्दस्यैव श्रवणात्। अन्यथा अन्नमयादीनां पञ्चानां अपि ग्रहणं स्यादिति नियामकमुक्तम्। तत्सूत्रस्याल्पाक्षरत्वेन उपलक्षणतया आनन्दमयानां अगृहीतं अन्यथा ब्रह्मशब्दस्य अन्नमयादिष्वेव व्यभिचारः स्यादिति प्रागेव निराकृतमित्यर्थः।

**शे०वा०—** किमुक्तमित्यत ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य भेदव्यपदेशाच्चेत्युक्तमिति परभाष्यमर्थतोऽनुवदति **मिथ्याभूतमिति**। समीपे सहभोगस्य कुत्राप्यनभिधानादसिद्धिरित्यतो नात्र समीपे सहभोगाभिधानमेकं भेदापवादकत्वेन विवक्षितं किन्तु समीपे भोगाभिधानं सह भोगाभिधानं चेति द्वयमेव। तच्च नासिद्धमिति भावेनाभिधानद्वयं क्रमेण दर्शयति **एतमित्यादिना**। समीपे भोगस्य सहभोगस्य च मुक्तित्वेनोक्त्याऽस्तु सामीप्यसाहित्ययोर्मोक्षे प्राप्तिस्तथाऽपि मोक्षे कथं भेदप्राप्तिरित्यतस्तयोर्भेदाविनाभूतत्वादिति भावेन तमुपपादयति **न हीति**। अस्तु मोक्षे भेदप्राप्तिस्तथाऽपि कुतस्तस्य पारमार्थ्यं येन भेदमिथ्यात्वमिथ्यात्वसिद्धिरित्यत आह **न चेति**। **प्रकारान्तरेणेति**। 'योगमन्नमयाद्यैर्यदि'त्यादिप्राचीनव्याख्यानापेक्षया प्रकारान्तरेणेत्यर्थः। व्याख्यातीत्यतःपरं समीप इतीति शेषो द्रष्टव्यः।

**॥ इति 'भेदव्यपदेशाच्चेति सूत्रव्याख्यान्तोक्तस्य मिथ्याभेदपरत्वस्यानुपपत्तिः' ॥**

**॥ इति मायावादिव्याख्यानस्य एतत्सूत्रव्याख्यानेन निराकृतत्वेऽपि शिष्यहिततया स्फुटनिरासः ॥**

* * *

**॥ अथ भाष्यकारोक्ते परपक्षस्य स्फुटनिरासे 'भास्करादीनां व्याख्यानस्यापि निरासः' ॥**

**७७ सु०— एवं पञ्चकोशवादिनां मायावादिनां व्याख्यां निराकृत्य ये तु भास्करादयो यथाश्रुतसूत्रानुसारिणः 'अन्नमयादयश्चत्वारः कोशाः, आनन्दमयस्त्वेक एव परमात्मे'ति व्याचक्षते, तन्मतमतिदेशेन निराकरोति एतेनेति।**





**अनु०— एतेन मयटश्चैव द्वैविध्येनार्थकल्पनात्।
तदन्येषां मतमपि सत्संसत्सु न भासते ॥**

**एतेनैव** अन्नमयादीनां पञ्चानामपि ब्रह्मत्वोपपादनेन । **तदन्येषां** पञ्चकोशत्ववादिभ्योऽन्येषां चतुष्कोशवादिनाम् । **सत्संसत्सु** विद्वत्सभासु ।

अधिकं चात्र दोषमाह **मयटो द्वैविध्येनार्थकल्पनाच्चेति** । 'अन्नमयादिषु विकारार्थत्वमानन्दमये प्राचुर्यार्थत्वमि'ति यदत्र नियामकमुक्तं तत्प्रागेव निराकृतमिति । ननु प्राणमय एव विकारप्रक्रमो भग्नः । तर्हि तत्र (तत्र तर्हि) प्रत्ययस्य स्वार्थिकत्वकल्पनादधिको दोषः स्यादिति ।

**परि०— यदत्र नियामकमुक्तमिति** । सर्वान्तरत्वादिरूपं यन्नियामकमुक्तं तत् ततोऽपि ब्रह्मपुच्छमिति पुच्छब्रह्मणः श्रवणादित्यादिना निराकृतमित्यर्थः ।

**यादु०— आनन्दमये प्राचुर्यार्थत्वमिति** । तथा च प्रायपाठविरोध इति भावः । **यदत्र नियामकमिति** । मान्त्रवर्णिकब्रह्माधिकारः । अन्नमयादिष्वान्तरस्यान्यस्य श्रवणेऽप्यानन्दमये तदभाव इत्यादिकमित्यर्थः । **प्रागेवेति** । पञ्चकोशत्ववादिव्याख्यानानुवादसमय एवेत्यर्थः । **ननु न प्रायपाठोऽस्ति** । येन तद्विरोध इत्याशङ्कते **ननु प्राणमय एवेति** । इदमुपलक्षणम् । मनोमय इत्यपि ग्राह्यम् । चतुर्भिरन्नमयादिपदैर्देहमनोप्राणबुद्धिरूपाश्चत्वारः कोशा अभिधीयन्त इति मयाऽङ्गीक्रियते । एवं च देहस्यान्नविकारित्वेऽपि न प्राणमनसो प्राणमनोविकारित्वं सम्भवति । आत्माश्रयत्वप्रसङ्गादिति भावः । **अधिकदोष इति** । मयटामर्थत्रयकल्पनादिति भावः । इदमुपलक्षणम् । विज्ञानमयेऽपि स्वार्थिकत्वकल्पनाप्रसङ्गः । न च विज्ञानमये मयट्सम्बन्धार्थो वैय्यर्थ्यादप्यमुख्यार्थस्य ज्यायस्त्वादिति वाच्यम् । अन्नमये विकारार्थः, प्राणमयमनोमययोः स्वार्थिको, विज्ञानमये सम्बन्धार्थ, आनन्दमये प्राचुर्यार्थ इति वैरूप्यप्रसङ्गात् । न च प्राणमयादावपि सम्बन्धार्थता । प्राणादेः प्राणादिसम्बन्धाभावात् । प्राणशब्दस्याप्रसिद्धार्थत्वे तु वरं परमात्मपरत्वमित्यपि द्रष्टव्यम् ।

**वं०प०— द्वैविध्येनेति** । तथा च नियामकाभावादन्नमयादाविवानन्दमयेऽपि विकारत्वमेव स्वीकर्तव्यम् । अन्यथा प्रायपाठविरोधः स्यादिति भावः । नन्वन्नमयादिष्वन्तरस्यान्यस्य श्रवणेन तत्रत्यमयटां विकारार्थत्वमानन्दमये तदश्रवणात्तत्र मयटः प्राचुर्यार्थत्वमिति नियामकमुक्तमिति चेत्तत्राह **यदत्रेति** । आनन्दमयेऽन्तरस्यान्यस्याश्रवणेऽपि ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयं प्रत्याश्रयतया ब्रह्मण उक्तत्वेन ब्रह्माश्रितस्यानन्दमयस्य ब्रह्मत्वासम्भवात्तद्गतमयटोऽपि विकारार्थत्वमेव वाच्यमिति नानन्दमयस्य ब्रह्मत्वमिति पञ्चकोशत्ववादिव्याख्या-

नानुवादावसर एव निराकृतमित्यर्थः । ननु यदुक्तमन्नमयादिषु चतुर्षु विकारार्थत्वमानन्दमये प्राचुर्यार्थत्वमिति द्वैविध्यकल्पनमयुक्तं प्रायपाठविरोधादिति । तन्न । अन्नशब्दवाच्ये देहरूपे कोशेऽन्नविकारित्वसम्भवेनान्नमय एव मयटो विकारार्थत्वं स्वीकृतं न प्राणमयमनोमयविज्ञानमयेषु । आत्माश्रयत्वप्रसङ्गेन प्राणानां प्राणविकारित्वासम्भवात् । मनसश्च मनोविकारित्वासम्भवात् । विज्ञानस्यापि विज्ञानविकारित्वासम्भवादतो न प्रायपाठविरोध इत्याशङ्कते **ननु प्राणमय एवेति** । उपलक्षणमेतत् । मनोमयविज्ञानमयावपि ग्राह्यौ । **स्वार्थिकत्वेति** । प्राण एव प्राणमय इत्यादिरूपेण स्वार्थिकत्वकल्पनादावित्यर्थः । अर्थान्तराभावादिति भावः । **अधिको दोष इति** । अन्नमये विकारार्थत्वं प्राणमयादिषु त्रिषु स्वार्थिकत्वमानन्दमये प्राचुर्यार्थत्वमिति त्रैविध्यकल्पनात् द्वैविध्यकल्पनापेक्षयाऽप्यधिकदोषः स्यादित्यर्थः ।

**आनन्दः— यदत्र नियामकमिति । स वा एष इति** । शरीरपरामर्शादन्नमये विकारार्थत्वमेव स्वीकार्यमिति भावः । **प्रागेव निराकृतमिति** । भूतं भूताभिमानी चेत्यनेनेति शेषः । यादवप्रकाशमते शङ्कते **ननु प्राणमय इति** ।

**शे०वा०— अतिदेशेनेति** । सूत्राक्षरानानुगुण्यस्य परेण स्वपक्षे परिहारेण शङ्कायामाधिक्यादतिदेशोऽत एव यथाश्रुतसूत्रानुसारिण इत्युक्तमिति ध्येयम् । मयटो द्वैविध्येनार्थकल्पनायाः प्रागनुक्ताया एव चतुष्कोशत्ववादिमतनिरासकत्वेनोक्त्या परिहारसाम्याभावात् कथमतिदेशः । अन्यथाऽतिप्रसङ्गादित्यतः परिहारसाम्यसिद्धये तत्परित्यागेनैतेनेत्यस्यार्थं वदन् वाक्यं योजयति **एतेनैवेति** । तर्हि च मयटो द्वैविध्येनार्थकल्पनादिति भाष्यखण्डो व्यर्थ इत्यतोऽत्र पक्षेऽधिकदोषप्रतिपादनार्थत्वान्न तद्वैय्यर्थ्यमिति भावेन तथैवावतारयति **अधिकं चेति । कल्पनाच्चेति** । अनेन चशब्दो भिन्नक्रम इत्युक्तं भवति । मयटोऽर्थद्वैविध्यकल्पनामेवोपपादयति **अन्नमयादिष्वित्यादि** । तथा च प्रायपाठबाध इति भावः । नन्वन्नमयाद्युपदेशानन्तरमन्योऽन्तर आत्मेत्यन्तरस्य श्रवणादानन्दमयोपदेशानन्तरमन्योऽन्तर आत्मेत्यन्तरस्य श्रवणादानन्दमयोपदेशानन्तरं च तदश्रवणादानन्दमय एव ब्रह्म न त्वन्नमयादय इत्यर्थद्वैविध्यमवश्यं कल्पनीयमित्यतस्तत्रापि 'सत्यं ज्ञानमनन्तं ब्रह्मेति' प्रकृतस्य ब्रह्मणो 'ब्रह्म पुच्छं प्रतिष्ठे'त्यानन्दमयाश्रयतयोक्तत्वान्नानन्दमयेऽप्यन्तरस्यान्यस्याश्रवणमिति पञ्चकोशत्ववादिमतोपन्यासावसर एव समर्थितत्वान्नार्थद्वयकल्पना युक्तेत्याह **यदत्रेति** । यद्वा । ननूत्तरानुवाकेऽन्नप्राणमनोविज्ञानज्ञानानन्तरं तद्विज्ञाय पुनरेव वरुणं पितरमुपससारेति पुनरुपसत्तिश्रवणादानन्दज्ञानानन्तरं च तदश्रवणादन्नादीनामब्रह्मत्वस्यानन्दस्य ब्रह्मतायाश्च सिद्ध्याऽन्नप्राणमनोविज्ञानानन्तरं श्रुतेनानन्देनान्नमयप्राणमयमनोमयविज्ञानमयानन्तरं श्रुतस्यानन्दमयस्य स्थानप्रमाणेनाभेदादानन्दमयस्यैव ब्रह्मत्वं न त्वन्नमयादीनामिति तावदावश्यकम् । ततश्च मयटोऽर्थद्वैविध्यमकामेनापि कल्पनीयमेवेति कथं प्रायपाठबाधो दोष इत्यतो 'दृष्ट्वैकैकं स्वरूपं त्वि'त्यादिनाऽन्नादीनां ब्रह्मत्वेऽपि पुनरुपसरणस्य समाहितत्वेन पुनरुपसरणभावाभावाभ्यामन्नादीनामानन्दस्य चाब्रह्मत्वब्रह्मत्वव्यवस्थाऽसिद्ध्या न तत्स्थानप्रमाणेनान्नमयादीनामानन्दमयस्य चाब्रह्मत्वब्रह्मत्वव्यवस्थासिद्धिरिति नानेनापि





**आनन्दः**— यथाश्रुतार्थेनैवाभिमतसिद्धेरित्यत आह **नन्विति**। सर्वस्य परमात्मसम्बन्धिकत्वान्नाम एको विशेष इत्यत्राह **वाचकमिति शेष इति**। ननु समासे उपसर्जनत्वेन निर्दिष्टस्य वरीयत्वस्यान्यान्वितत्वेन निराकाङ्क्षत्वान्न परतः इत्यनेन सम्बन्ध इत्यत आह **अत्रेति**। **बुद्ध्या विविक्तेनेति** विग्रहवाक्यावस्थाप्रागेव वरीयस्त्वस्य परत इत्यनेन सम्बन्धे कृते सतीत्यर्थः।

**शे०वा०**— नन्वभ्यधिकाशङ्कया अधिकरणारम्भस्य 'चेष्टा ही'त्यादिनैव समर्थनात् 'आकाश इति नाम चे'त्युत्तरभाष्यानर्थक्यमित्यतः 'इत्याशङ्कानिवृत्त्यर्थं सूत्रितमि'त्यनेनोक्तस्य सूत्रेऽभ्यधिकाशङ्कानिवृत्त्यर्थत्वस्य सूत्रार्थकथनेनोपपादनार्थत्वान्नानर्थक्यमिति भावेन सूत्रस्याभ्यधिकाशङ्कानिवृत्त्यर्थत्वायोगमाशङ्कते **नन्विति**। **पूर्वपक्षाच्छादकं किञ्चिदिति**। सर्वभूतकारणत्वादेर्वक्ष्यमाणरीत्या भूतेऽपि सम्भवेनोक्तपूर्वपक्षनिवर्तकत्वादिति भावः। किञ्चिदित्यतःपरं तस्मान्न सूत्रं शङ्कानिवृत्त्यर्थमिति शेषः। **सूत्रस्य अर्थान्तरमाहेति**। आकाशः परमात्मा सर्वभूतकारणत्वादितल्लिङ्गादिति पूर्वपक्ष्युपदर्शितसूत्रार्थापेक्षयाऽन्यं सूत्रार्थमाहेत्यर्थः। आकाश इति नामापीति समुच्चयार्थकत्वायोगात् प्रकृतानुसन्धानार्थकतुशब्दार्थत्वं मनसि निधाय चशब्दयोजनामाह **आकाशनामेति**। ननु परतोऽपीत्यस्य न तावत्समासार्थेन सम्बन्धः। अयोग्यत्वात्। नापि वरीयस्त्वेन। वरीयस्त्वं पूर्वं यस्येति वरीयस्त्वपूर्वमिति समासे उपसर्जनतया तस्य निर्दिष्टत्वात् तत्सम्बन्धे चैकस्यैव वरीयस्त्वस्य विरुद्धप्रधानत्वोपसर्जनत्वप्रसक्तेरित्यत आह **अत्रेति**।

**वा०र०**— **समुच्चयार्थकत्व इति**। समुच्चेयान्तरानुक्तेरिति भावः। **तुशब्दार्थत्वमिति**। एतेन 'आकाश इति नाम च हरेरि'ति मूले चशब्दस्तुशब्दार्थ इत्युक्तं भवति। **समुच्चयार्थेनेति**। पूर्वं यस्येति बहुव्रीह्यार्थान्यपदार्थेनेत्यर्थः। **तत्सम्बन्धे चेति**। परतोऽपि यद्वरीयस्त्वमित्येवं परतोऽपीत्यनेन सम्बन्ध इत्यर्थः। सापेक्षत्वेनासमर्थत्वमनेनोक्तमिति ज्ञेयम्।

**स०व्र०**— ननु वरीयस्त्वपूर्वादित्यत्र वरीयस्त्वमेव पूर्वं यस्येति वरीयस्त्वस्य पूर्वादित्यनेनैवान्वितत्वेन परतोऽपीत्येतदनन्वितं स्यादित्यत आह **अत्रोपसर्जनतयेति**। विशेषणतयेति शेषः। तथा च साक्षात्सम्बन्धाभावेऽपि बुद्ध्या विवेक इति भावः।

**विठ्ठल०**— **न पुनः पूर्वपक्षाच्छादकमिति**। आकाशशब्दस्य योगरूढिभ्यां भूताकाशपरत्वे चोदिते योगरूढ्यपवादकं न किञ्चिदत्रोच्यते। विष्णुलिङ्गादाकाशो विष्णुरित्यस्योक्तयोगादिबाधकत्वायोगादिति भावः। **अर्थान्तरमिति**। नाल्पयोगाद्युपेताकाशनामबलाद्भूतपरत्वं श्रुतेः किन्तु आकाश इति नाम हरेरेव तल्लिङ्गात्। परोवरीयस्त्वादिनिरवकाशभगवल्लिङ्गसद्भावात् आकाश इति नाम्नो विष्णुपरत्वाच्छ्रुतेर्भगवत्परत्वमित्यर्थान्तरमित्यर्थः।





**॥ अथ एतच्छङ्काच्छादकतया सूत्रस्यार्थान्तरकरणे आकाशशब्दस्य हरिवाचकत्वे उक्तस्य 'परतोऽपि वरीयस्त्वपूर्वात्' इति लिङ्गस्य औचित्यम् ॥**

**॥ तत्र चादौ सर्वभूतकारणत्वादिलिङ्गानां भूतेऽपि कथञ्चिद्व्याख्यातुं शक्यता ॥**

**९५ सु०—** सर्वभूतोत्पत्तिकारणत्वपूर्वादिति वक्तव्ये परोवरीयस्त्वपूर्वादित्युक्तम्, प्रथमप्रतीतस्यापि सर्वभूतकारणत्वादेर्भूतेऽपि कथञ्चिद्व्याख्यातुं शक्यत्वात्, परोवरीयस्त्वादेः सर्वथाऽपि तत्र नेतुमशक्यत्वात् । तथाहि । 'अस्य लोकस्य का गतिरि'ति पृथिवीगतिप्रश्नस्याकाश इत्युत्तरमभिधाय कथमेतत्, अपां कार्यं हि पृथिवी, तत्रैव (च) लीयत इति तासामेव पृथिवीगतित्वोपपत्तेरित्याशङ्क्य, मैवम्, मूलकारणत्वादित्याह ***सर्वाणीति** । न च तर्हि 'आत्मन आकाशः संभूत' इति श्रुतेरात्मा वक्तव्य इति वाच्यम्, भूतविषयविचारे वियत एव वक्तव्यत्वात् । न च आकाशस्यापि भूतत्वात्सर्वाणीति विरुद्धम्, 'इदं सर्वमसृजते'तिवत् तद्व्यतिरिक्तग्रहणोपपत्तेः । न चावधारणानुपपत्तिः, परम्परया भूतोपादानस्यापरस्याभावात् । कथमस्य भूतोत्पत्त्यादिहेतुत्वम्, भूतेषु ज्येष्ठत्वादित्याह **'आकाशो ह्येभ्यश्चतुर्भ्यो भूतेभ्यो ज्यायानि'ति** । न केवलमुत्पत्तिलयकारणत्वाद्गतिः, किं नाम 'कारणेषु स्थितं कार्यमि'ति श्रुतेराश्रय(णीय)त्वादपीत्याह **आकाशः परायणमिति** । न च 'अस्य लोकस्ये'ति प्राणिनिकायाभिधानम्, येन सर्वभूतशब्दोऽपि तत्परः स्यात् । **'न प्रतिष्ठां लोकमतिनयेदि'ति** पृथिव्याः प्रकृतत्वात् ।

**परि०—** **भूतेऽपि कथञ्चिद्व्याख्यातुं शक्यत्वादिति** । एतेन परभाष्ये कारणत्वादिलिङ्गोक्तिरयुक्तेति सूचितम् । **प्राणिनिकायेति** । प्राणिसमूहेत्यर्थः । **न प्रतिष्ठां लोकमिति** । प्रतिष्ठां = सर्वाधारं लोकम् । पृथिवीलोकं अतिक्रम्यान्यन्न जानीयादिति श्रुत्यर्थः । पृथिवीलोकमतिक्रम्य साम न नयेत् = सामप्रतिपाद्यपृथिवीलोकशब्दितादन्यन्न ब्रूयादित्यर्थः ।

**यादु०—** **न प्रतिष्ठामिति** । प्रतिष्ठां लोकं = सर्वाधारं पृथिवीलोकम् अतिक्रम्यान्यं न जानीयादिति श्रुत्यर्थः ।

**वं०प०—** **सर्वभूतोत्पत्तीति** । एतल्लिङ्गस्य सर्वाणि ह वा इति प्रथमवाक्य एवोक्तत्वादित्यर्थः । किमर्थं तथोक्तमित्यत आह **प्रथमेति** । **अशक्यत्वात्** इत्यनन्तरम् इत्यभिप्रायेणेत्यर्थ इति शेषः । तथा च

---

* (छां. उ. १-९) अत्र सुधायां परिच्छेदः - २०२ द्रष्टव्यः ।





नेतुमशक्यत्वादित्यभिप्रायेण परोवरीयस्त्वपूर्वादित्युक्तमित्यन्वयो द्रष्टव्यः । प्रथमप्रतीतस्य सर्वभूतकारणतल्लया-धिकरणत्वादेः कथं, भूते कथञ्चिद्व्याख्यातुं शक्यत्वम्, इत्यतस्तदुपपादयति **तथा हीत्यादिना प्रकृतत्वादि-त्यन्तेन** । **मूलेति** । आकाशस्येति शेषः । **आत्मेति** । आत्मैव मूलकारणत्वेन वक्तव्य इत्यर्थः । **विरुद्धमिति** । स्वस्य स्वकारणत्वमात्माश्रयणेन विरुद्धमिति भावः । **इदमिति** । अत्र यथा ब्रह्मातिरिक्तमेव सर्वशब्देन गृह्यते न ब्रह्मापि तद्वदाकाशव्यतिरिक्तमेवात्र सर्वाणीत्यनेन ग्राह्यं नाकाशमपि येन विरुद्धता स्यादित्याशयः । **अवधारणेति** । सर्वाणि ह वा इमानि भूतान्याकाशादेवेत्यवधारणेत्यर्थः । **अपरस्येति** । आकाशातिरिक्त-स्येत्यर्थः । **गतिरिति** । पृथिवीगतिरित्यर्थः । ननु नैवं कथञ्चिद्व्याख्यातुं शक्यते । तथाहि यदि 'अस्य लोकस्य का गतिरि'त्यत्र लोकशब्देन पृथिवी विवक्षिता स्यात् तदा आकाशस्य तद्गतित्वमभिधाय तदुपपादनपरे 'सर्वाणि ह वा' इति वाक्ये सर्वशब्द आकाशव्यतिरिक्तसर्वार्थतया सङ्कुचितार्थो व्याख्येयः प्रसज्येत । न चैवम् । किं नाम 'लोकस्तु भुवने जने' इत्यभिधानबलात् प्राणिनिकाय एव लोकशब्दवाच्यतया गृह्यते तद्गतिप्रश्ने च भगवानेव तद्गतित्वेनाकाश इत्यनेनोच्यते । तथा च सर्वाणि ह वा इत्यत्रत्यसर्वभूतशब्देन प्राणिनिकायस्यैव ग्रहणेन विरोधाभावात् सर्वशब्दोऽसङ्कुचितार्थ एव भवतीत्यत आह **न चास्येति** । **तत्परः** प्राणिनिकायपरः । कुतो न प्राणिनिकायाभिधानमित्यत आह **नेति** । अत्र प्रतिष्ठाशब्देन सर्वाधारस्य पृथिवीलोकस्यैव प्रकृतत्वा-दित्यर्थः । सर्वभूतोत्पत्तिकारणत्वादिलिङ्गत्वादित्यर्थः ।

**आनन्दः**— सर्वभूतोत्पत्तिकारणत्वस्यैव वक्तव्यत्वे हेतुः **प्रथमप्रतीतस्येति** । नन्वाकाशस्य पृथिवीं प्रति निमित्तकारणत्वं वा उपादानकारणत्वं वा । नाद्यः परमात्मरूपनिमित्तकारणसद्भावेनावधारणानुपपत्तेः । नान्त्यः । अबादेरप्युपादानत्वेनावधारणानुपपत्तेरित्याशङ्क्य निषेधति **न चावधारणेति** । ननु लोकशब्देन प्राणिनिकायस्योक्तत्वात्सर्वभूतानीत्यत्रापि तेषामेव ग्रहणम् । तथा चाचेतनपरत्वे आकाशशब्दस्य जीवकर्तृत्वं न युज्यत इति भगवत्परत्वमेव न्यायमित्यत आह **न चास्येति** ।

**श्रीनिधि०— येन सर्वभूतशब्दोऽपि तत्परः स्यादिति** । तत्परत्वे को दोष इति चेन्न । आकाशस्य प्राणिनिकायं प्रति कारणत्वाभावेन भूतमात्रकारणत्वेन लिङ्गस्य सावकाशत्वं न स्यादतो वक्तव्यमेवेदं सावकाश-त्वादिना।

**शे०वा०— इति वक्तव्य इति** । विषयवाक्ये प्रथमप्रतीतत्वात् प्रथमातिक्रमे च कारणाभावात् सर्वभूतोत्पत्तिकारणत्वपूर्वादित्येव वक्तव्यमित्यर्थः । **इत्युक्तमिति** । भावे क्तः । इत्युक्तिरित्यर्थः । वक्ष्यमाणरीत्या स्वव्यतिरिक्तत्वेन सर्वशब्दसङ्कोचाद्यभिप्रायेण कथञ्चिदित्युक्तम् । अशक्यत्वादित्यतःपरम् इत्यभिप्रेत्येति शेषः । अपां कार्यं हीत्यत्र हिशब्दोऽद्भ्यः पृथिवीत्यादिप्रमाणप्रसिद्धिद्योतनार्थः । **तत्रैवेति** । यस्य यस्मादुत्पत्तिस्तस्य तत्रैव लयस्यौत्सर्गिकत्वादिति भावः । **तर्हीति** । मूलकारणत्वाभिप्राये । **आत्मा वक्तव्य इति** । तस्यैव मूलकारणत्वादिति भावः । **परम्परयेति** । प्रायिकमेतदित्यविरोधः । **सर्वाणीति** । सर्वशब्दवदेभ्य इतीदंशब्दोऽपि स्वव्यतिरिक्तभूतपर





इत्यभिप्रेत्य व्याचष्टे **एभ्यश्चतुर्भ्यो भूतेभ्य इति** । ततश्चैभ्यो ज्यायानित्येतदपि न विरुद्धमिति भावः । ननु सर्वभूतशब्दस्य प्राणिनिकायपरत्वेन सर्वभूतकारणत्वं नाम सकलप्राणिनिकायकारणत्वमेव न चैतद्भूते सम्भवतीति सर्वभूतकारणत्वमपि निरवकाशमेवेत्यतः स्यादेतदेवं यद्यत्र सर्वभूतशब्दस्य प्राणिनिकायपरत्वमेव स्यात् । न चैतदस्ति । किं नाम अस्य लोकस्येति पूर्ववाक्ये लोकशब्दनिर्दिष्टमात्रपरत्वमेव । न च लोकशब्देन प्राणिनिकायोऽभिधीयते । किं नाम पृथिव्येव । तथा च लोकशब्दनिर्दिष्टपृथिवीमात्रपरत्वात् सर्वभूतशब्दस्य तत्कारणतायाश्च भूतेऽप्युपपन्नत्वान्न सर्वभूतकारणत्वस्य निरवकाशत्वमित्याह **न चास्य लोकस्येत्यादि** । **तत्परः स्यात्** इत्यतःपरं ततश्च सर्वभूतकारणत्वमपि भूते निरवकाशं स्यादिति शेषः । ननु चास्य लोकस्येत्यस्य पृथिवीमात्रपरत्वे सिद्धे सर्वभूतशब्दस्य तत्परत्वं स्यात् । तदेव कुतः । तस्यापि प्राणिनिकायाभिधायकत्वे बाधकाभावादित्यत आह **न प्रतिष्ठामिति** । तथा चास्य लोकस्येत्यस्य प्राणिनिकायाभिधायकत्वे प्रकृतपरित्यागाप्रकृतस्वीकारप्रसङ्ग एव बाधक इति भावः ।

**वा०र०— औत्सर्गिकत्वादिति** । चतुर्थस्य द्वितीये सर्गक्रमतो विपर्यय इत्यनुभाष्यमूले मुक्तौ सर्गक्रमतो विपर्यय इति यो यस्माज्जातस्तस्य तस्मिन्मुक्तिरिति तावदङ्गीकरणीयमित्यर्थः । एतच्चापवादाभावे ज्ञेयम् । तथाच न्यायविवरण इत्युक्तेरिति भावः । युक्तं च तथा चेति वाक्यटीकायाम् । तत्समानां च विशेषवचनाभावस्वसमानलयस्थान एव लयोपपत्तेरिति न्यायविवरणेऽनुत्पादके विलयस्योक्तत्वाद्वरुणाद्यनुत्पन्नामपि तदुत्पन्नाबादिदेवतासमानामश्विप्रभृतीनां स्वसमानाबादिदेवतालयस्थाने लयो नानुपपन्न इति भाव इतीति ज्ञेयम् । **कारणत्वाभिप्राय इति** । न चावधारणेति मूलम् । सर्वान्तर्गतस्वकारणत्वानुपपत्तिपरिहाराय स्वव्यतिरिक्तेति विशेषणे कृतेऽपि वायुरूपभूतमात्रं प्रत्याकाशस्य कारणत्वेऽपि तेजआदिभूतानां क्रमेण वायुतेजोजलकार्यतया तानि प्रत्याकाशस्य कारणत्वाभावात्सर्वाणि भूतान्याकाशादेवेत्यवधारणानुपपत्तिरित्येवमवधारणसहितसर्वाणीत्यस्यानुपपत्तिरित्यर्थः । तथाच सर्वाणीत्येतदेव प्रकारान्तरेणाक्षिप्तं भवति । न वयं साक्षादेव सर्वभूतकारणत्वमाकाशस्य ब्रूमः । येनोक्तानुपपत्तिः स्यात् । अपि तु वायुं प्रत्याकाशस्य कारणता वायोश्च तेजःप्रति तेजसो जलं प्रतीत्यादिप्रकरणपरम्परयैव । तथा च पृथिवीकारणजलकारणतेजःकारणं वायुं प्रत्याकाशस्य करणत्वे वाय्वादिप्रनाड्या पृथिव्यन्तसर्वभूतकारणत्वमाकाशमात्रस्येति प्राप्त्या तत्रानुपपत्तेरभावादित्याशयेन परम्परयेति मूलं प्रवृत्तम् । परम्परयेत्यस्य साक्षात्परम्परयेत्यर्थ इत्यपि वदति । तत्रैवमाशङ्कोदेति यथा स्वातिरिक्तभूतोपादानत्वं परम्परया आकाशस्यास्ति तथा वायोरपि स्वातिरिक्ततेजःप्रभृतिभूतान् प्रति परम्परया कारणत्वमस्ति । एवं तेजसोऽपीति कथं परम्परया भूतोपादानत्वमाकाशस्यैवेति । तत्परिहारायाह **प्रायिकमेतदिति** । एतत्परम्परया भूतकारणत्वं प्रायिकं बाहुल्येन विवक्षितम् । स्वातिरिक्तेति विशेषणमनन्तरं स्वातिरिक्तसर्वभूतकारणत्वस्यैव प्राप्तेः । तस्य चाकाशमात्रवृत्तित्वेऽपि न वाय्वादौ सत्त्वं अत अविरोधः । अपरस्याभावादित्यस्य विरोधो नेत्यर्थः । प्रायिकमित्यनेन मूलस्थभूतपदस्य सर्वभूतेति विवक्षासूचनात् । तथा च मूलमवधारणानुपपत्तिशङ्कापरिहाराय पर्याप्तमित्युक्तं भवति । केचित्तु उक्तरीत्या सर्वभूतानि प्रत्याकाशस्य साक्षात्कारणत्वानुपपत्तिरेव न चावधारणेति





शङ्कामूलार्थः । न वयं साक्षात्सर्वभूतकारणत्वं ब्रूमः । येनोक्तानुपपत्तिः स्यादिति तु परम्परया भूतोपादानमाकाशो वेति विवक्षितमिति वदामः । तत्र च नानुपपत्तिरिति परम्परयेति मूलार्थः । तत्रैवं शङ्का । तेजःप्रभृतिभूतानि प्रत्याकाशस्य परम्परासद्भावेऽपि वायुं प्रति तदभावेन परम्परया स्वातिरिक्तसर्वभूतोपादानत्वस्य निर्वाहायोगादित्यत आह **प्रायिकमेतदिति** । क्वचित्परम्पराभावेऽपि प्रायः परम्पराया सत्त्वान्नामलिङ्गसमन्वयादेः पादार्थत्ववदविरोधः परम्परया भूतोपादानत्वविवक्षायाः अनुपपत्तिर्नेत्यर्थ इत्याहुः । इदं च छान्दोग्यभाष्योक्तप्रकारात् प्रकारान्तरमिति निरोधः ।

**स०व्र०— न प्रतिष्ठामिति** । प्रतिष्ठां लोकम् = सर्वाधारं पृथिवीलोकम् । अति = अतिक्रम्य अन्यं न जानीयादिति श्रुत्यर्थः ।

**विट्ठल०—** ननु मूलकारणत्वविवक्षया आकाशाभिधानं न सङ्गच्छते आत्मन एव मूलकारणत्वेन तस्यैव वक्तव्यत्वादित्याशङ्क्य निराह **न च तर्हीति । स इदं सर्वमसृजतेतिवदिति** । तथा च यथा स्रष्टुर्व्यतिरिक्तस्यैव सर्वपदेन ग्रहणं तथा आकाशव्यतिरिक्तानि सर्वभूतानीति ग्रहणोपपत्तेरित्यर्थः । **अवधारणानुपपत्तिरिति** । वाय्वादेरग्न्यादिकारणत्वादिति भावः । न प्रतिष्ठां लोकमिति प्रतिष्ठां लोकं सर्वाधारं पृथिवीलोकमतिक्रम्यान्यत्सामप्रतिपाद्यं न जानीयादिति श्रुत्यर्थः ।

**चषकः— प्राणिनिकायाभिधानं** प्राणिसमूहाभिधानम् । **न प्रतिष्ठामिति** । सर्वाश्रयं पृथिवीलोकमतिक्रम्यान्यं न जानीयादित्यर्थः ।

**॥ इति सर्वभूतकारणत्वादिलिङ्गानां भूतेऽपि कथञ्चिद्व्याख्यातुं शक्यता ॥**

* * *

**॥ अथ च न तथा परोवरीयस्त्वादिलिङ्गं शक्यं कथञ्चिद्व्याख्यातुम् ॥**

**९६ सु०— न च परोवरीयस्त्वादिकं शक्यमेवं कथञ्चिद्व्याख्यातुम्; निरुपचरितं सर्वोत्तमत्वं हि परोवरीयस्त्वम्, अन्यथा ज्यायानित्यनेनैव गतार्थत्वप्रसङ्गात् । उद्गीथत्वं च 'ओमित्येतदक्षरमुद्गीथमि'त्युक्तत्वान्न कथञ्चिदन्यत्र नेतुं शक्यते । आरोपोऽयमिति चेन्न, बाललीलाऽर्थत्वप्रसङ्गादुपनिषदाम् ॥ अनन्तत्वं चाकाशस्य देशकालधर्मैरन्तवतो न सम्भवत्येव । आपेक्षिकं तु प्रकृतविरुद्धम् । पृथिव्याः सामगतित्वम् 'अन्तवद्वै खलु सौम्य (सौम्य साम्ये) ते सामे'ति निराकृत्य स्वयमप्यन्तवन्तमाकाशमभिदधता किमधिकमाचरितं स्यात् । अतोऽनन्तत्वमपि निरुपचरितमेवेति ।**

**परि०— निरुपचरितं सर्वोत्तमत्वं हीति** । 'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकमि'ति छान्दोग्यभाष्योक्तेरिति भावः । उत्तमत्वमात्रविवक्षायां बाधकं चाह **अन्यथेति** । यद्वा परिमाणत आधिक्यं परोवरीयः शब्दार्थ इति विवक्षायां बाधकमाह **अन्यथेति** । ज्यायानित्यस्य व्याप्ततम इत्यर्थत्वात् । वृद्धशब्दस्येयसुन्प्रत्यये ज्यादेशे च ज्यायानिति रूपनिष्पत्तेः । **ओमितीति** । ओमित्येतन्नामकमक्षरशब्दितं ब्रह्मोद्गीथनामकमुपासीते'ति छान्दोग्योपक्रमे उक्तत्वादित्यर्थः ।

**वं०प०— अन्यथा** सर्वोत्तमत्वमात्रार्थत्वे । उद्गीथत्वमपि सर्वभूतोत्पत्तिकारणत्वादिलिङ्गवदाकाशेऽपि कथञ्चिद्वक्तुं शक्यत एवेत्याशयेन शङ्कते **आरोपोऽयमिति** । **बालेति** । अविद्यमानार्थप्रतिपादकत्वेनेत्यर्थः । 'नाविद्यमानं ब्रुवते वेदा ध्यातुमि'त्युक्तेरिति भावः । अनन्तत्वं देशकालगुणैश्चानन्तत्वमित्यर्थः । **आपेक्षिकमिति** । वाय्वाद्यपेक्षया देशानन्त्यस्य व्युत्क्रमाल्लयाङ्गीकारेण कालानन्त्यस्यापि सत्त्वादित्यादिरूपमापेक्षिकमित्यर्थः । तदुपपादयति **पृथिव्या इति** । **सामगतित्वं** सामरूपगतिमत्त्वम् । **स्वयमप्यन्तवन्तमिति** । न चाकाशे आपेक्षिकमनन्तत्वमस्तीति वाच्यम् । साम्न्यपि तादृशानन्तत्वस्य वक्तुं शक्यत्वेन तन्निराकरणानुपपत्तिप्रसङ्गादिति भावः ।

**आनन्दः**— ननूत्तमत्वमेव तदित्यत आह **अन्यथेति** । **बालेति** । तथा चातत्त्वावेदकं स्यादिति भावः ।

**शे०वा०**— ननु चतुर्भ्यो भूतेभ्यो ज्यायस्त्वमेव परोवरीयस्त्वमिह विवक्षितमस्तु । किं निरुपचरितसर्वोत्तमत्वपर्यन्तधावनेनेत्यत आह **अन्यथेति** । चतुर्भ्यो भूतेभ्यो ज्येष्ठत्वस्य ज्यायानित्यनेनैवोक्तत्वादिति भावः । ननु चानन्तत्वं नान्तत्रयोज्झितत्वं किं नाम आकल्पावस्थितत्वम् । तच्च भूताकाशस्याप्यस्त्येवेति कथं तस्य निरवकाशत्वमित्यत आह **आपेक्षिकं त्विति** । प्रकृतविरुद्धत्वमेवोपपादयति **पृथिव्या इति** ।

**स०व्र०— निरुपचरितं सर्वोत्तमत्वं परोवरीयस्त्वमिति** । 'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकमि'ति प्रमाणेन परोवरीयस्त्वब्दस्य निरुपचरितं सर्वोत्तमत्वमर्थ इति भावः । **अन्यथेति** । निरुपचरितसर्वोत्तमत्वं परित्यज्य उत्तमत्वमात्रस्यैव परोवरीयस्त्वशब्दार्थत्वाङ्गीकार इत्यर्थः । **देशकालधर्मैरिति** । देशतः कालतः धर्मत इत्यर्थः । **आपेक्षिकं त्विति** । यथाकथञ्चिदनन्तत्वमित्यर्थः ।

**विठ्ठल०**— सर्वभूतकारणत्वादेर्भूते सावकाशत्वात् तस्य हेतुतयाऽवक्तव्यत्वमुपपाद्य परोवरीयस्त्वादेर्निरवकाशत्वमुपपादयति **न च परोवरीयस्त्वादिकमिति** । **अन्यथेति** । 'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात् प्रोक्तं पारोवरीयकम्' इत्युक्तरीत्या निरुपचरितसर्वोत्तमत्वम् । परोवरीयस्त्वमित्यर्थग्रहण इत्यर्थः । **उद्गीथत्वं चेति** । ॐ इत्येतदक्षरमुद्गीथमुपासीतेत्यधिकोच्चगुणत्वसर्वसन्निहितत्वाक्षीणत्वादिकमन्यत्र नेतुमशक्यमिति भावः ।





**चषकः— निरुपचरितं सर्वोत्तमत्वं हीति ।** 'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकमि'ति छान्दोग्यभाष्येऽभिहितत्वादिति भावः ।

**॥ इति, न तथा परोवरीयस्त्वादिलिङ्गं शक्यं कथञ्चिद्व्याख्यातुम् ॥**

* * *

**॥ अथ च आकाशश्रुतेरपि निरवकाशतया हरिवाचकत्वम् ॥**

**९७ सु०— नन्वाकाशश्रुतिरपि निरवकाशेत्युक्तम् । सत्यम् । दुरुक्तं तत् । न हि देशकालाभ्यां परिच्छिन्नस्याकाशस्यावकाशदातृत्वं निरवधिकं संभवति । नापि स्वतन्त्रं, परमेश्वरायत्तत्वात् । तत्कुत इत्यत आह नभ इति ।**

**अनु०— नभो ददाति श्वसतां मार्गं यन्नियमाददः ॥**
**इत्यादिवाक्यैः**

**आदिग्रहणेन 'सर्वभूतगुणैर्युक्तमि'त्यादेः सङ्ग्रहः । तेन यदुक्तं 'परमेश्वरे योगानुपपत्तिरि'ति तदपि समाहितं भवति । आकाशेऽवकाशदातृत्वस्येश्वरायत्तत्वमीश्वरस्यापि पृथक्तद्वत्त्वं चावगम्यत इति शेषः । उपपत्तिं तु वक्ष्यामः ।**

**परि०— इत्यादेरिति ।** सर्वभूतगुणैर्युक्तं दैवं त्वं ज्ञातुमर्हसीति मोक्षधर्मवाक्यस्यान्यत्र भाष्यकारोक्तस्य सङ्ग्रह इत्यर्थः । सर्वेषां पृथिव्यादिभूतानां ये धारकत्वतर्पकत्वतापकत्वशोषकत्वावकाशदातृत्वादयो गुणास्तैर्गुणैर्युक्तं विष्णवाख्यं दैवं ज्ञातुमर्हसीति कश्चित्प्रत्युच्यते । कथं समाहितमित्यतः महायोगो हि द्वेधा । अन्यगतशब्दप्रवृत्तिहेतुं प्रति स्वातन्त्र्यं शब्दप्रवृत्तिहेतुपौष्कल्यवत्त्वं चेति । तत्राऽऽद्यं नभ इति भागवतसिद्धम् । अन्त्यं तु आदिपदोपात्तमोक्षधर्मवाक्यसिद्धमिति भावेनाह **आकाशेऽवकाशदातृत्वस्येति** । ननूक्तमात्राचेतनगतं तत्स्वभावभूतं च कथमन्याधीनमिति तत्राह **उपपत्तिं त्विति** । गायत्र्यधिकरणोपक्रमे आकाशाधिकरणवैषम्यं व्युत्पादयन्तो वक्ष्याम इत्यर्थः ॥

**गु०दी०— पृथक्तद्वत्वं च** इत्यत्र गमनागमनादावाकाशवद्व्याप्तेन हरिणाऽपि कुड्यवन्निरोधमकृत्वा स्वात्मनि पृथगवकाशदानादासमन्तात् काश अवकाशो यस्मादिति योगस्यापि सम्भवादित्यर्थः । **उपपत्तिं तु**





**वक्ष्याम** इत्यत्र स्वभावस्यान्याधीनत्वं कथमिति शङ्कापरिहारायोपपत्तिं नित्यगायत्र्याः भगवदधीनत्वप्रतिपादनसमये वक्ष्याम इत्यर्थः ।

**यादु०**— अचेतनस्वभावस्य विवरत्वादेः परमेश्वरायत्तत्वस्योक्तरीत्याऽसम्भवादागमसिद्धमपि तत्कथमङ्गीकार्यमित्यत आह **उपपत्तिं त्विति** । गायत्र्यधिकरण इति शेषः । तत्र हि 'यद्यपि विवरत्वादीनां कारणता' इत्यादिग्रन्थेनाकाशस्य धर्मिण एवोत्पत्त्यादावीश्वराधीनत्वेन तद्धर्मस्यापि तथाभावोऽवर्जनीय इत्युपपत्तिर्वक्ष्यत इत्यर्थः।

**वं०प०**— **यदुक्तमिति** । न चाकाशशब्दस्येश्वरे योगः सम्भवति । तस्य मनागप्यवकाशत्वाभावादिति यदुक्तमित्यर्थः । **समाहितमिति** । आदिपदगृहीतेन सर्वभूतगुणैरिति वाक्येन आकाशधर्मस्याप्यवकाशत्वस्य भगवत्येवावगमादिति भावः ।

**आनन्दः**— अत्र ह्याकाशशब्दप्रवृत्तिनिमित्तमवकाशत्वं वावकाशादातृत्वं वा । आद्ये चिद्गतस्येशतन्त्रत्ववदचिद्गतस्यापीशतन्त्रत्वमवश्यं वक्तव्यम् । चेतनादप्यचेतनस्यात्यन्तपराधीनत्वात् । अत एव भृत्यगतजयस्य राजाधीनत्वेन राज्ञिजयशब्दप्रयोग इव जडगतस्य मृत्वादेरभिमानिदेवताधीनत्वेन देवतायां मृदब्रवीदित्यादि प्रयोगः । तथा चेतनगतत्वेऽपि विवरत्वादेरीश्वराधीनत्वं युक्तमेव । नापि स्वभावत्वात्तदधीनत्वं स्वभावभूतस्यापि विवरत्वादेश्छिद्रमस्त्विति हरीच्छावशादेव जातत्वेन तदधीनत्वस्यावश्यकत्वात् । अन्यथा निबिडत्वं स्यात् । लोकेऽपि कुम्भस्वभावभूतस्यापि कुम्भत्वादेर्धर्मिणा सह पुंतन्त्रादेर्दृष्टत्वात् । द्वितीय आह **न हीति** । इत्यादिवाक्यैरित्यत्रापूर्णत्वाच्छेषं पूरयति **आकाशेति** । नन्वत्रोभयत्रोपपादकं किमित्यत आह **उपपत्तिं त्विति** । तदधीनत्वादित्यत्र॥

**श्रीनिधि०**— **सर्वभूतगुणैर्युक्तमिति** । सर्वेषां भूतानां गुणरूपादयः । तत्सदृशगुणैर्युक्तम् । विवरत्वं विना आकाशवदवकाशदातृ चेत्यर्थः । **तदपि समाहितं भवतीति** । आनुपूर्वकात्काशृदीप्तावित्यस्मात् कर्तरि अच्प्रत्यय इदं सिद्धं भवतीति भावः । उपसर्गपूर्वकत्वेनार्थान्तरं ज्ञेयम् । धात्वर्थं बाधत इत्याद्युक्तेः । **उपपत्तिं तु वक्ष्याम इति** । गायत्र्यधिकरणे यद्यपि विवरत्वादिकं कारणतः स्वरूपतोऽप्यागन्तुकम् । तथापि धर्मिण एवेत्यादिना वक्ष्याम इत्यर्थः ।

**शे०वा०**— नन्वस्तु लिङ्गानां निरवकाशत्वं तथाऽप्याकाशश्रुत्यनुसारेण भूतमेवात्र विवक्षितमस्तु किमाकाशस्य परमात्मत्वकल्पनया । न च निरवकाशलिङ्गेन श्रुतिबाधान्न भूतमाश्रयितुं युक्तमिति वाच्यम् । निरवकाशलिङ्गेन सावकाशायाः श्रुतेर्बाधेऽपि निरवकाशश्रुतिबाधे निरवकाशलिङ्गस्यासामर्थ्यात् निरवकाशमात्रप्रयुक्तप्राबल्यापेक्षया स्वभावनिरवकाशत्वप्रयुक्तप्राबल्यस्य बलवत्त्वेन रूपद्वयेन प्रबलया आकाशश्रुत्यैव निरवकाशलिङ्गबाधसम्भवात् । न चानेकत्वेन लिङ्गानामप्यनेकत्वान्निरवकाशत्वाच्च रूपद्वयेन तेषामपि प्राबल्यमिति वाच्यम् ।





स्वभावप्रयुक्तप्राबल्यापेक्षया अनेकत्वप्रयुक्तप्राबल्यस्य दुर्बलतायाः 'तयोः स्वभावो बलवानि'त्यादिप्रमाणसिद्धत्वेन निरवकाशश्रुत्या बाधसम्भवात् । श्रुतेरभ्यस्यमानतया प्रकारत्रयेण श्रुतेः प्राबल्येन तया लिङ्गबाधस्य कैमुतिकन्यायसिद्धत्वाच्चेत्याशयेन शङ्कते **नन्विति** । **उक्तमिति** । आकाशशब्दस्य भूते महायोगविद्वद्रूढिभ्यां मुख्यत्वं 'विवरादिः कथं ततः' इत्यत्रोक्तमित्यर्थः । महायोगविद्वद्रूढ्योरेवासिद्धेर्नाकाशश्रुतेर्निरवकाशतेति युक्तो निरवकाशलिङ्गैर्बाध इत्याशयेन महायोगाभावं दर्शयितुं तच्छब्दनिर्वचनलब्धस्यार्थस्य तत्र निरवधिकत्वाभावं तावदुपपादयति **न हीति** । देशकालाभ्यां परिच्छिन्नस्येति हेतुगर्भं विशेषणम् । भूते तस्यानन्याधीनत्वाभावमप्याह **नापीति** । उपलक्षणमेतत् । वैदिकप्रयोगबाहुल्यासिद्ध्या विद्वद्रूढिरप्यसिद्धेत्यपि द्रष्टव्यम् । **तत्कुत इति** । ऐश्वर्यादिवदागन्तुकज्ञानादिकारणद्वारा वा स्वरूपतो वाऽन्यानधीनतया अचेतनाश्रितत्वस्वभावत्वाभ्यामुपपादितत्वादन्याधीनत्वं कुतः, न कुतोऽपीत्यर्थः । **भूतगुणैः** अवकाशप्रदत्वादिभिः ।

ब्रह्मणः सर्वभूतगुणैर्युक्तत्वप्रतिपादकप्रमाणस्य आकाशावकाशदातृत्वस्येश्वरायत्ततारूपप्रकृतप्रमेयाप्रतिपादकत्वादादिपदेन सङ्ग्रहो न युक्त इत्यतो नोक्तप्रमेयसाधकतया अस्योपन्यासः किन्तु न केवलमाकाशगतस्यावकाशदातृत्वस्येश्वरायत्तत्वात् तस्य तत्र महायोगः किं नाम परिच्छिन्नादाकाशादपरिच्छिन्ने ब्रह्मण्येवावकाशदातृत्वस्य निरवधिकत्वाच्च तस्य तत्र महायोग इत्यत्रैव । न चैतद्व्युत्पादनमनर्थकम् । न चाकाशशब्दस्येश्वरे योगः सम्भवति । तस्य मनागप्यवकाशत्वाभावादिति पूर्वपक्षिशङ्कितयोगानुपपत्तिशङ्कासमाधानार्थतया अर्थवत्त्वादित्याह **तेनेति** । साकाङ्क्षत्वात् प्रमाणद्वयसाध्यप्रदर्शनपूर्वकमपेक्षितक्रियामप्यध्याहरति **आकाशेति** । अचेतनस्वभावस्य कथमीश्वराधीनत्वम् । अन्याधीनत्वे स्वभावत्वहानेरित्यतः प्रमाणप्रश्नश्चेदुक्तमेव । सम्भावकप्रश्नश्चेत् तत्राह **उपपत्तिं त्विति** । गायत्र्यधिकरणेऽन्यथा सर्वेश्वरत्वहानेरित्यादिनेति शेषः । यद्यप्यवकाशप्रदत्वस्य भगवत्येव निरवधिकत्वस्य सर्वभूतगुणैर्युक्तमित्यादिप्रमाणसिद्धत्वान्न तस्याचेतनस्वभावत्वमित्येव वक्तुं युक्तमित्यनर्थकं सिद्धान्तेऽचेतनस्वभावस्येशतन्त्रत्वसमर्थनम् । तथाऽपि स्वभावनियामकत्वरूपमहागुणसिद्ध्यर्थं जडमात्रस्वभावनिमित्तकशब्दान्तरसमन्वये न्यायः फलिष्यतीति प्रदर्शनार्थं च कृत्वा चिन्तया कृतमित्यवधेयम् ।

**वा०र०— न चानेकत्वेनेति** । लिङ्गानामनेकत्वस्य विद्यमानत्वादनेकत्वनिरवकाशत्वरूपप्रकारद्वयेन प्राबल्यमित्यर्थः । **श्रुतेरभ्यस्यमानतयेति** । अभ्यासस्य तात्पर्यलिङ्गस्य प्राप्तेरिति भावः । महायोगविद्वद्रूढ्योरेवासिद्धेरिति नञ्गर्भः पाठो युक्तो **मूलकोशगतश्च** । एवं च यत्पूर्वपक्षिणेत्येतच्चन्द्रिकानुसारेणाह **यद्यप्यवकाशप्रदत्वस्येत्यादि** ।

**स०व्र०— आकाशेऽवकाशदातृत्वस्येति** । न च विवरत्वस्यैव आकाशशब्दप्रवृत्तिनिमित्तत्वेन तस्य परमात्मनि सर्वथाऽसम्भवस्य परेण शङ्कितत्वेन तस्य परमात्मनि सम्भवमनुपपाद्यावकाशदातृत्वस्य तदुपपादनमसङ्गतमिति वाच्यम् । पूर्वपक्षिणापि भ्रान्त्या, अवकाशप्रदत्वस्यैव प्रवृत्तिनिमित्तत्वमङ्गीकृत्य परमात्मनि सम्भवेऽपि, असम्भवस्याऽऽशङ्कितत्वादिति भावः । अचेतनस्वभावस्य विवरत्वादेः परमेश्वरायत्तत्वस्योक्त-





रीत्याऽसम्भवादागमसिद्धमपि तत्कथमङ्गीकार्यमित्यत आह **उपपत्तिं तु वक्ष्याम इति** । गायत्र्यधिकरण इति शेषः । तत्र हि यद्यपि विवरत्वादिकं कारणमित्यादिनाऽऽकाशस्य धर्मिण एवोत्पत्त्या आदावीश्वराधीनत्वेन तद्धर्मस्यापि तथाभावोऽवर्जनीय इत्युपपत्तिरुच्यत इत्यर्थः । यद्वा तस्मिन्नेवाधिकरणे 'तादृशत्वाच्च तच्छक्तेरि'-त्यनुव्याख्याव्याख्यावसरे 'अन्यथा सर्वेश्वरत्वहानेरि'त्यादिनेति शेषः ।

**विठ्ठल०**— नन्वचेतनस्वभावस्य विवरत्वादेरीश्वरायत्तत्वस्य प्रागुक्तरीत्याऽसंभवादागमसिद्धिमपि तत्कथम् अङ्गीकार्यमित्यत आह **उपपत्तिं त्विति** । गायत्र्यधिकरणे आकाशधर्मिण एवोत्पत्त्यादावीश्वराधीनत्वेन तद्धर्मभूतविवरत्वादेर्भगवदधीनत्वमवर्जनीयमित्युपपत्तिं वक्ष्याम इति भावः ॥

**॥ इति आकाशश्रुतेरपि निरवकाशतया हरिवाचकत्वम् ॥**

**॥ इति आकाशशब्दस्य हरिवाचकत्वे उक्तस्य 'परोवरीयस्त्वपूर्वात्' इति लिङ्गस्यौचित्यम् ॥**

**॥ इति अभ्यधिकाशङ्काच्छादकतया सूत्रस्यार्थान्तरम् ॥**

**॥ इति अभ्यधिकाशङ्कासद्भावादारम्भणीयत्वम् ॥**

**॥ इति 'को ह्येवान्यात्कः प्राण्यात्' इत्यादिश्रुतौ श्रूयमाण आनन्दपदवाच्यो न भूताकाशः किन्तु विष्णुरेव, तत्र विष्णुलिङ्गसद्भावात् ॥**

**॥ इति अधिभूतविषयशब्दसमन्वयः ॥**

* * *

**॥ अथ अधिकरणार्थोपसंहारः ॥**

**९८ सु०— तस्मादाकाशोपलक्षितसकलाधिभूतशब्दपरममुख्यवाच्यो भगवान्हरिरिति सिद्धम् ॥**

**वं०प०**— समन्वेतव्यशब्दताऽवच्छेदकोपाधिं वदन्नुपसंहरति **तस्मादिति** ।

**चषकः**— **उपपत्तिमिति** । गायत्रीनये 'यद्यपि विरत्वादिकं कारणतः स्वरूपतोऽप्यनागन्तुकं तथापि धर्मिण एवाकाशादेरुत्पत्तिविनाशवतो जन्मस्थितिलयेष्वीश्वराधीनत्वे धर्मस्यापि तथाभावोऽवर्जनीय' इति ग्रन्थेन गायत्रीनयोपक्रमे आकाशनयवैषम्यं व्युत्पादयन्तोऽभिधास्याम इत्यर्थः ।

**॥ इति अधिकरणार्थोपसंहारः ॥**

## ॥ इति आकाशाधिकरणम् ॥ १-१-८ ॥

* * *



## ॥ अथ प्राणाधिकरणम् ॥

॥ १-१-९ ॥

**॥ अथ अध्यात्मिकशब्दसमन्वयः ॥**

**॥ तत्रादौ अभ्यधिका शङ्का ॥**

**॥ तत्राप्यादौ अनुव्याख्यानशब्दार्थसङ्क्षेपः ॥**

९९ **सु०—** इदानीमाध्यात्मिकशब्दसमन्वयं सिषाधयिषुः प्रधानत्वात् प्राणशब्दसमन्वयार्थं सूत्रयामास **अत एव प्राण इति** ।

**ब्र०सू०—** ॥ ॐ अत एव प्राणः ॐ ॥

तैत्तिरीयके श्रूयते, 'तद्वै त्वं प्राणोऽभवः । महान्भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान्प्राणयो न वे'ति । तत्र संशयः । किमयं प्राणः परमात्मोत मुख्य इति । वायुवृत्त्यादेः प्राणशब्दप्रवृत्तावपि वाक्यार्थस्य सर्वथाऽप्यनुपपत्तेर्न संशयविषयत्वम् । न ह्यचेतनं प्रति त्वमेवमभव इति बुद्धिमतोच्यते । किं तावत्प्राप्तम् । मुख्य इति । कस्मात् । प्राणशब्दस्य लोकवेदयोर्मुख्यप्राणे प्रयोगप्राचुर्यात्प्राणन्त्यनेनेति निरुक्तिसम्भवाच्च ॥ नन्वेतदपि पूर्वन्यायेन परिहृतं न सूत्रारम्भं प्रयोजयतीति । अतोऽभ्यधिकाशङ्कां दर्शयति **अध्यात्ममिति** ।

**अनु०—** अध्यात्ममन्वयव्यतिरेकतः ॥
प्राणादिहेतुतादृष्टेः

आत्मानमधिकृत्य तस्य भोगायतनत्वेन वर्तत इति **अध्यात्मं** शरीरं, तस्मिन् **प्राणः** प्राणनं जीवनम् । **आदिग्रहणाच्चेष्टोपादीयते** । मुख्यस्येति शेषः । मुख्य एवात्र प्राणो भवितुमर्हतीति वाक्यशेषोऽत्राध्याहार्यः ।

**परि०— प्रधानत्वादिति** । मुख्यप्राणवाचित्वादिति भावः । **श्रूयते** प्राणशब्द इति योज्यम् । ननु वायुविकारे श्वासवायौ चेष्टादौ च प्राणशब्दवाच्यत्वस्य सत्त्वात्तस्य कुतो न संशयकोटित्वमित्यत





आह **वायुवृत्त्यादेरिति** । अनुपपत्तिमेवाह **न हीति** । ओषधे त्रायस्वैनमित्याद्यप्यभिमानिचेतनपरमेवेति भावः । **लोकवेदयोः** पौरुषेयापौरुषेयग्रन्थयोः । **प्राणन्ति** जीवन्ति चेष्टन्ते वा । **एतदपीति** । चोद्यमिति योज्यम् । **पूर्वन्यायेनेति** । इन्द्राकाशादिशब्दानां महायोगविद्वद्रूढिभ्यां निरवकाशलिङ्गेन च विष्णूपस्थापकत्वन्यायेनेत्यर्थः । **अभ्यधिकाशङ्कामिति** । विष्णुत्वावगमकमहायोगविद्वद्रूढिनिरवकाशलिङ्गानां त्रयाणामभावहेतुका(ना)मित्यर्थः ।

**वं०प०— वायुवृत्त्यादे**र्जडस्य **न संशयविषयत्वं** तत्कोटित्वमित्यन्वयः ।

**आनन्दः—** मुमुक्षोरध्यात्मविचारस्य चरमत्वादाधिदैविकाधिभूतविचारानन्तरं अध्यात्मविचारः क्रियत इत्याशयेन **इदानी**मित्युक्तम् । नन्वध्यात्ममात्रविचारस्य कर्तृत्वे प्राणशब्दस्येव सूत्राणां किं निबन्धनमित्यत आह **प्रधानत्वादिति** । अनु विषयसंशयपूर्वपक्षादिकमवश्यं वक्तव्यं तेन विनाप्यधिकाया ज्ञातुमशक्यत्वात् । न च ग्रन्थान्तरादेव तदधिगम इति वाच्यम् । तथा सति प्रतिपत्तिगौरवप्रसङ्गादित्याशयेन विषयादिकं दर्शयितुमाह **तैत्तिरीयक इति** । तत्तस्मात्त्वं प्राणो अभवो महान् भोगश्चाभवो यस्मात्प्रजापतेर्भुजः करिष्यमाणः यस्माच्च नवदेवान् प्राणयः इति विषयवाक्यार्थः । ननु प्राणशब्दस्य वायुविकारेऽपि प्रयोगात्तस्यापि कुतो न संशयकोटित्वमित्यत आह **वायुवृत्त्यादेरिति** । अभिमानितद्देहयोर्ग्रहणम् । अनुपपत्तिमेवाह **न हीति** । भोगत्वं तत्कारणत्वं चानुपपन्नमिति द्रष्टव्यम् । **पूर्वन्यायेनेति** । महायोगविद्वद्रूढ्योरभावान्न प्राणशब्दस्य विष्णुपरत्वमित्येतदानन्दमयाधिकरणन्यायेन निरस्तम् । निरवकाशलिङ्गाभावान्न प्राणश्रुतिबाध इत्येतत्त्वन्तराधिकरणन्यायेन निरस्तम् । प्राणगतस्यापि शब्दवृत्तिनिमित्तस्य न भगवदधीनत्वमित्येतत्तु आकाशाधिकरणन्यायेन निरस्तमित्यर्थः । नन्वध्यात्ममिति मूले आत्मानं शरीरमधिकृत्य प्रवर्तत इत्यात्मशब्देन शरीरग्रहणे शरीरमधिकृत्य वर्तमानानां परमात्ममुख्यप्राणजीवानां ग्रहणे तेषु प्राणादिहेतुरिति प्रतीयेत तच्चायुक्तम् । मुख्यप्राणस्य परमात्मजीवनदातृत्वाभावान्नापि तस्यैवात्माश्रयात् । नापि जीवस्य शरीरं विना केवलस्य जीवनादेरभावादित्यतो व्याख्याति **आत्मानमिति** । प्राणादीत्यत्रादिशब्देन परमात्मनो मुख्यस्य चाग्रहणे मुख्यस्य परमात्मानं स्वं च प्रति हेतुत्वासंभवादित्यतो व्याचष्टे **प्राण इति** । हेतुमात्रस्यानन्वितत्वात् । प्रतिज्ञापदमध्याहरति **मुख्य एवेति** ।

**श्रीनिधि०— वायुवृत्तिः** वायुकार्यं तद्विकार इति यावत् ।

**शे०वा०—** एतदधिकरणसमन्वेतव्यशब्दावच्छेदकोपाधिं वदन्नेव सूत्रस्य प्राणशब्दोपलक्षितानेकशब्दसमन्वयप्रतिपादकत्वे कुतः सूत्रे प्राणशब्दस्य मुखतः सङ्कीर्तनमितरेषां चोपलक्षणमित्याशङ्कां च परिहरन्नेव ससङ्गतिकमेतदधिकरणप्रतिपाद्यमाह **इदानीमित्यादि** । सूत्रे प्राणशब्दः सजातीयचक्षुरादिशब्दोपलक्षक इति ज्ञापनार्थमाध्यात्मिकेत्याद्युक्तम् । तैत्तिरीयक इत्यादिको ग्रन्थः छन्दोगाः पठन्तीत्यादिपूर्वाधिकरणग्रन्थवद्योज्यः । वायुवृत्त्यादेरित्यत्रादिपदेनेन्द्रियाणां चेष्टायाश्च सङ्ग्रहः । अस्य च न संशयविषयत्वमित्यनेन सम्बन्धः ।





प्राणशब्दप्रवृत्तावित्यादौ तु तस्यैव योग्यतया वायुवृत्त्यादाविति विभक्तिविपरिणामेनान्वयो बोध्यः । वाक्यार्थस्य सर्वथाऽप्यनुपपत्तेरित्युपलक्षणम् । 'मुखे मुख्यः प्रकीर्तितः' इति मुख्यवायावेव मुख्यत्वाभिधानेन वायुवृत्तौ प्राणशब्दस्यामुख्यार्थत्वादित्यपि द्रष्टव्यम् । उक्तामनुपपत्तिमेव दर्शयति **न ह्यचेतनं प्रतीति** । **इति बुद्धिमतोच्यत इति** । इत्यादि बुद्धिमतोच्यत इत्यर्थः । अत एव चन्द्रिकायां त्वं प्राणोऽभव इत्याद्ययोगादित्यादिशब्दः । न चौषधे त्रायस्वैनमित्यादिवदुपपत्तिरिति वाच्यम् । तस्य स्वमतेऽभिमानिदेवतापरत्वेन मीमांसकमते चार्थवादत्वेनाचेतन-सम्बोधनपरत्वाभावात् । यद्यपि पूर्वाधिकरणपूर्वपक्षे जडस्याप्याकाशस्यानन्दमयत्वादिकमिवात्रापि जडस्याप्यभि-मानिद्वारा सम्बोधनादिकं युक्तम् । तथाऽपि मुख्ये मुख्यत्वात्प्राणशब्दस्य जडपरत्वायोगात्त्वमभवः करिष्यमाणः प्राणय इत्यादीनां बहूनाममुख्यार्थत्वप्रसङ्गान्न तस्य संशयविषयत्वाश्रयणमिति ध्येयम् । **पूर्वन्यायेनेति** । इन्द्रा-काशादिशब्दानामन्यत्र मुख्यत्वेऽपि रूढियोगाभ्यामेव तत्परत्वादमुख्यत्वं, भगवति च महायोगविद्वद्रूढिभ्यां प्रवृत्ततया मुख्यत्वं, तथा प्राणशब्दस्यान्यत्र प्रसिद्धत्वेऽपि रूढियोगाभ्यामेव तत्र प्रवृत्तेर्भगवति च महायोग-विद्वद्रूढिभ्यां प्रवृत्तेरन्यत्रामुख्यत्वस्य भगवति च मुख्यत्वस्य सिद्ध्या भगवन्मात्रबुद्ध्याधायकत्वेन न प्राणश्रुत्या पूर्वपक्षावकाश इत्यर्थः । **अभ्यधिकाशङ्कां दर्शयतीति** । प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वमन्वयव्यतिरेकाभ्यां प्राणशब्दार्थत्वेन प्रसिद्धस्य वायोरेवेति स एव प्राणशब्दवाच्यो न विष्णुरित्यभ्यधिकाशङ्कामित्यर्थः । विवक्षि-तामभ्यधिकाशङ्कां भाष्यारूढां कर्तुमपेक्षितशेषपूरणेन तद्व्याचष्टे **आत्मानमित्यादिना** ।

**वा०र०— ससङ्गतिकमिति** । इदानीमित्यनेनानन्तर्यलक्षणसङ्गतेः सूचनादिति भावः । **आध्यात्मि-केत्यादीति** । आदिपदेन शब्दसमन्वयं साधयिषुः प्रधानत्वात् प्राणशब्दस्येत्यस्य सङ्ग्रहः । तेनोपलक्षणाभिप्रायस्य स्पष्टत्वादिति बोध्यम् । **छन्दोगाः पठन्तीत्यादीति** । अभ्यधिकाशङ्कयाऽधिकरणारम्भसमर्थनार्थत्वान्न चेष्टा हीत्याद्युत्तरभाष्यवैयर्थ्यमिति भावेनेत्यादिना छन्दोगाः पठन्तीत्यादिग्रन्थ आकाशाधिकरणे योजितः । तद्वच्चेष्टा हीति पदस्थानेऽध्यात्ममितिपदप्रक्षेपेणाभ्यधिकाशङ्काया अधिकरणारम्भसमर्थनार्थत्वान्नाध्यात्ममित्यादि भाष्ये वैयर्थ्यमिति भावेन तत्प्रयोजकीभूतगतार्थताशङ्कामुत्थापयितुं विषयाद्यप्रदर्शनेन तस्या अनुत्थानात् विषय-संशयपूर्वपक्षांस्तावद्दर्शयति । तैत्तरीयक इत्यादिनेत्येवं योज्य इत्यर्थः । मूले **वायुवृत्त्यादेरिति** । संकल्पादीनां मनोवृत्तित्ववत् प्राणादीनां पञ्चानामपि वायुवृत्तित्वस्य विद्यमानत्वात् तेष्वपि प्राणशब्दप्रवृत्तेः सिद्धत्वादिति भावः । **अस्य चेति** । वायुवृत्त्यादेरित्यस्य चेत्यर्थः । प्राणशब्दप्रवृत्तावित्यत्राधिकरणानुक्तेराह **प्राणशब्देति** । तस्यैवान्वय इति सम्बन्धः । कुत इत्यत उक्तं **तस्यैव योग्यतयेति** । षष्ठ्यन्तस्य कथमन्वय इत्यत उक्तं **विभक्तीति** । विपरिणाममेवाभिनीय दर्शयति **वायुवृत्त्यादावितीति** योज्यम् । मूले एवमभव इत्यत्र त्वं प्राणोऽभव इत्यर्थमात्रस्य प्रतीत्या महान्भोग इत्यादेरसङ्ग्रहः प्राप्त इत्याशङ्कापरिहाराय व्याचष्टे **इत्यादिबुद्धिमतेति** । एतच्चैवमित्यस्य प्राण इत्येतावन्मात्रार्थकत्वमित्यभिप्रेत्य चन्द्रिकानुसारेण व्याख्यातम् । एवमित्यस्य प्राणः महान्भोगः इत्याद्यर्थकत्वेन व्याख्याने तु तावतैव विवक्षितार्थसिद्धेः । तथापीत्यादीति व्याख्यानं पाक्षिकप्राण इत्येतावन्मात्रव्याख्यानस्याप्युपपादनायेति न दोष इति ज्ञेयम् । यद्यप्यत्र न ह्यचेतनं प्रति त्वमेवमभव इति





बुद्धिमतोच्यत इत्युक्ते यत्राचेतनत्वं तत्रोक्तरीत्या बुद्धिमद्वचनविषयत्वाभाव इति सामान्यव्याप्तिप्रदर्शनरूपताप्रतीत्यात्र विशिष्य प्राणत्वादिकान्तर्भावस्य नोपयोगः । तदभावेऽपि घटाद्यचेतनं प्रति त्वं जलाहरणसमर्थोऽभव इत्यादिकं हि बुद्धिमता नोच्यते । अतोऽचेतनवायुवृत्त्यादिकं प्रति त्वं प्राणो प्राणोऽभव इत्यादिकं न युज्यत इति वाक्यार्थानुपपत्तिरस्त्येवेति प्रकृतो योग्यार्थप्रतिपादनलाभात् । अवश्यं च व्याप्तिप्रदर्शनपरतया योजनम् । अन्यथा बुद्धिमता नोच्येतेत्येव ब्रूयात् । वर्तमानापदेशं कुर्वतस्तु तथात्वाभिप्रायस्यैव स्पष्टत्वात् । तथापि प्रकृतानुसारेण प्राणत्वादिकीर्तनेऽपि दोषाभावः । न ह्यचेतनं घटादिकं प्रति त्वं प्राण इत्यादिरभव इत्येतद्बुद्धिमतोच्यत इत्युक्ते विशिष्यैव व्याप्तिप्रदर्शनलाभेन तदर्थमादिपदगर्भतया व्याख्यानोपपत्तेः । तथा च व्याप्तिप्रदर्शनपरवाक्येन वाक्यार्थानुपपत्तिरित्युपपत्त्युपपादनं समञ्जसमिति ।

केचित्तु नेदं व्याप्तिप्रदर्शनपरं वाक्यम् । अपि तु मुखत एव वाक्यार्थानुपपत्तिप्रदर्शनपरम् । न चोच्यन्त इत्येतन्निर्देशायोगात् । उच्यत इत्यस्य वक्तुं शक्यमित्यर्थस्वीकारो चोच्यतेत्येवं लकारव्यत्ययाश्रयणे वा दोषाभावात् । न चौषधे त्रायस्वेत्यादिग्रन्थस्तु व्याख्यानान्तर इत्येतत्पक्षेऽपि व्यभिचारपरिहारपरतया योजयितुं शक्यत इति वदन्ति । चन्द्रिकानुसारेणाह **न चौषधे त्रायस्वेत्यादि । आकाशस्यानन्दमयत्वादिकमिवेति** । यद्यप्याकाशाधिकरणचन्द्रिकायामाकाशे आनन्दमयत्वाद्यनुपपत्तिशङ्कनादिकमस्तीतीहाधिकरणे तद्दृष्टान्तीकरणं युक्तमिह तु अन्तरस्थत्वाधिकरणेन सङ्गतिप्रदर्शनाद्याश्रयणेन आनन्दमयाधिकरणाक्षेपप्रवृत्तेरित्याभाति । तथापि को ह्येवान्यादित्यादि भाष्योक्तानन्दमयाधिकरणसङ्गत्यादेरपि सम्मतत्वात्तत्सङ्गत्याश्रयणेन चन्द्रिकोक्तैतद्दृष्टान्ताभिधानमिति न दोषः । **युक्तमिति** । तथा च वायुवृत्त्यादेरपि संशयविषयत्वाश्रयणं कर्तुमुचितमिति शेषः । **अन्यत्र मुख्यत्वेऽपीति** । मुख्यवृत्त्या प्रवृत्तत्वेऽपीत्यर्थः । उक्तं च पूर्वाधिकरणमूले **भूते मुख्यमावृत्त्या प्रवृत्तस्येति । अन्यत्र प्रसिद्धत्वेऽपीति** । अन्यत्र मुख्यत्वेऽपीत्यर्थः । पूर्वानुसारात् । **आत्मानमधीत्यादि** । आत्मनीत्यध्यात्ममित्येव विग्रहस्वरूपम् । **आत्मानमित्यादिकं** त्वधिकर्तव्यप्रधानेऽधिकरणेऽव्ययीभावोऽयमित्यन्त आत्मानं प्रति वर्तमानमिति प्राप्तमित्याशयेन तत्तात्पर्यकथनमिति ज्ञेयम् । अधिकं गायत्र्यधिकरणे व्युत्पादयिष्यामः । भावे घञन्तः प्राणशब्दो भाष्ये विवक्षित इत्याशयेन व्याचष्टे **प्राणः प्राणनमित्यादि** मूलम् ।

**विट्ठल०**— ननु वायुविकारश्वासादौ अहङ्कारकार्यविशेषे च प्राणशब्दवृत्तेस्सत्त्वात्कुतो न संशयकोटित्वमित्यत आह **वायुवृत्त्यादेरिति** । तामेवानुपपत्तिं दर्शयति **न हीति** । लोकवेदयोः पौरुषेयापौरुषेयशास्त्रयोः सप्तम्यर्थे अध्यात्ममित्यव्ययमिति भावेन तस्मिन्नित्युक्तम् । सति विद्यमाने वायुविकारशरीरत्वादिति कुलालशरीरान्वयव्यतिरेकाभ्यां कुलालस्य यथा हेतुतावगमस्तथा प्रकृतेऽपीति भावः ।

**चषकः**— श्रूयमाणानुपूर्वीविशेषस्यैतद्योगसमन्वेतव्यतावच्छेदकताविपर्यासप्रतिविधित्सया प्रकृतनयसमन्वेतव्यतावच्छेदकमभिदधानः सूत्राघटकतादृशसमन्वेतव्यतावच्छेदकाक्रान्तचक्षुरादिशब्दसमन्वयव्युत्पादकत्वोपगमे तद्घटकतया तादृशचक्षुरादिशब्दासङ्कीर्तनेन तादृशानेकशब्दोपलक्षकप्राणशब्दस्य तथा सङ्कीर्तनं निर्बीज-





मित्याशङ्कां प्रतिविदधानः ससङ्गतिकमेतन्नयप्रतिपाद्यमभिधत्ते **इदानीमित्यादि** । **प्रधानत्वात्** मुख्यप्राणाभिधायकत्वात् । **सूत्रयामासेति** । चौरादिकस्वार्थणिजन्तवेष्टनार्थसूत्रयतेर्धातूनामनेकार्थकत्वात्सूत्रकृत्यर्थतोपगमे 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चे'ति वा, सूत्रमिति प्रातिपदिकात्करोत्यर्थे णिचि लिटि रूपमेतत् । विषयसन्देहपूर्वपक्षान् दर्शयति **तैत्तरीयक इत्यादि** । **श्रूयते** प्राणशब्द इत्यनुषञ्जनीयम् । **किमयमिति** । प्रकृतप्राणशब्दाभिधेयधर्मिकपरमात्मत्वमुख्यप्राणत्वकोटिकः सन्देहः प्रकृताधिकरणघटक इति भावः । सन्देहस्य विरुद्धनानाकोटिकत्वमेव नियतं न तु तादृशभावाभावकोटिकत्वं स्थाणुर्वा पुरुषो वेत्यादेरसङ्ग्रहात् । तस्य चतुष्कोटिकतायां तु प्रकृतेऽपि सैवोपगम्यताम् । वायुविकारश्वासचेष्टेन्द्रियाणां प्राणशब्दाभिधेयानामपि न सन्देहविषयतेत्यत्र बीजं दर्शयति **वायुवृत्त्यादेरिति** । क्लीबभावप्रत्ययान्तेनान्वेति । वाक्यार्थानुपपत्तिं दर्शयति **न हीति** । ओषधे त्रायस्वैनमित्यादिकं त्वभिमानिदेवतातात्पर्यकमिति भावः । प्राणशब्दस्य मुख्यार्थत्वानुपपत्तिरप्यवसेया । करणसाधनप्रत्ययान्ततामभिप्रेत्याह **प्राणन्तीति** । प्रकृत्यंशः जीवनार्थश्चेष्टार्थो वा ।

**॥ इति अनुव्याख्यानशब्दार्थसङ्क्षेपः ॥**

* * *

**॥ अथ अनुव्याख्यानशब्दार्थविस्तारः ॥**

**१०० सु०— ततश्चायमर्थः । उपपद्यते तत्रेन्द्रादिश्रुतेराकाशादिश्रुतेर्वाऽपहारः, प्रवृत्तिनिमित्तस्यान्यत्र मुख्यस्यासंभवात्, परमात्मनि च संभवात् । न चैवं प्रकृते । जीवनचेष्टाहेतु(त्वं)ता हि प्राणशब्द(स्य)प्रवृत्तिनिमित्तम् । तच्च मुख्ये संभवति । 'शरीरे, सति मुख्ये, जीवनादिकं भवति, नासती'त्यन्वयव्यतिरेकाभ्यां मुख्यस्य जीवनादिहेतुतादृष्टेः ॥ ननु वायुविकारान्वयव्यतिरेकानुविधायित्वं जीवनादेः प्रतीयते । मुख्यस्य तु तद्धेतुता साध्यत इति किं केन सङ्गतम् । मैवम् । वायुविकारशरीरत्वान्मुख्यस्येति ।**

**अथवा 'प्राणादिहेतुताया अदृष्टेरि'ति व्याख्येयम् । परमात्मन इति शेषः ॥ अन्वयव्यतिरेकाभ्यां हि हेतुता कल्प्या । न च परमात्मनः प्राणशब्दप्रवृत्तिनिमित्तजीवनादिहेतुतावगमकान्वयव्यतिरेकौ पश्याम इति भावः ।**

**यद्वा यदत्र वाक्ये न व देवान्प्राणय इतीन्द्रियप्राणनमुक्तम्, यच्च प्रजापत्युपलक्षितानां सकलजीवानां भोगकारणत्वम्, तदुभयमप्यध्यात्ममन्वयव्यतिरेकाभ्यां मुख्यस्य दृश्यते न परमात्मनः ।**





**अतो युक्तिसंवादान्मुख्यविषयमेवेदं वाक्यमिति ॥ न चात्र वाक्ये पूर्ववदनन्यथा-सिद्धं किमपीश्वरलिङ्गमस्ति, येन श्रुतिबाधं प्रत्येष्याम इति पूर्वपक्षशेषः ।**

**परि०— अपहार इति** । इन्द्रादिभ्यो विष्णाविति योज्यम् । **जीवनचेष्टेति** । जीवनचेष्टयोर्हेतुतेत्यर्थः । वाक्यशेषे तथा प्रतीतेरग्रे स्पष्टयिष्यमाणत्वादिति भावः । **शरीरे** अधिकरणे । मुख्ये सतीत्यर्थः । **वायुविकारशरीरत्वान्मुख्यस्येति** । यथा कुलालशरीरान्वयादिना कुलालस्य हेतुता तथैवात्रापीति भावः । ननु मुख्यप्राणस्येव हरेरपि जीवनान्वयव्यतिरेकित्वे कथं निर्णय इत्यतो योजनान्तरं चाह **अथवेति** । आदिपदेनात्र न पूर्वत्रेव चेष्टाग्रहः । तस्यापि प्राणपदेनैव ग्रहसम्भवात् । किन्तु भोगकारणत्वमिति भावेनाह **यच्चेति** । **युक्तीति** । सर्वेन्द्रियदेवप्राणनादियुक्तीत्यर्थः । एतेन हरौ विद्वद्रूढिरपि निरस्ता । योगपूर्वकत्वात्तस्याः । एवं सौत्रप्रतिज्ञांशव्यावर्त्यमुक्त्वा अत एवेति हेत्वंश-व्यावर्त्यमाह **न चात्रेति** । किञ्चेति चार्थः । लक्ष्मीपतित्वादिकं तु 'अद्भ्यः सम्भूतः' इत्यनुवाकान्तर-गतं भर्ता सन्नित्यनुवाकगतप्राणविशेषणं न भवति । प्राणविशेषणत्वे वा योगेन लक्ष्म्यादिशब्दस्य प्राणभार्यापरत्वमेवेति भावेनोक्तम् **अनन्यथासिद्धमिति किमपीति च** ।

**यादु०— न चैवं प्रकृत इति** । अत्रापि पूर्वाधिकरणवैषम्येन पूर्वपक्षोत्थानादनन्तरसङ्गतिरनेन सूचितेति ज्ञातव्यम् । **वायुविकारशरीरत्वादिति** । यथा कुलालशरीरस्य घटं प्रत्यन्वयव्यतिरेकदर्शनेन कुलालस्य तत्र हेतुताग्रहस्तथा प्रकृतेऽपीति भावः । **अन्वयव्यतिरेकाभ्यां हीति** । प्रमाणान्तराभावादिति शेषः । 'येन जातानि जीवन्ति' इतरेण तु जीवन्ती'त्यादिश्रुतेर्मुख्यप्राणविषयत्वेन सावकाशत्वात् न श्रुत्या हेतुताग्रहः प्रकृते सम्भवतीति भावः । तथा च हेतुताया अन्वयव्यतिरेकमात्रगम्यत्वस्यात्रानभिप्रेतत्वाद्यथाश्रुते यागादेः स्वर्गादावहेतुत्वापात इति दूषणानवकाश इति ध्येयम् । **पश्याम इति** । परमात्मनः सर्वगतत्वादशरीरत्वाच्च तस्य वा तच्छरीरस्य वा नास्मदादिशरीरेऽभाव इति न तद्व्यतिरेकाज्जीवनव्यतिरेकग्रहः सम्भवतीति भावः । तस्य वा तच्छरीरस्य वा नित्याव्यक्तस्वभावत्वान्न तद्ग्रह इति वा । **मुख्यस्य दृश्यत इति** । इदमपि वायुविकाररूपशरीरद्वारेणेति द्रष्टव्यम् ।

**आनन्दः—** नन्वाकाशादिशब्दवत्प्राणशब्दप्रवृत्तिनिमित्तस्यापि भगवति मुख्यत्वात्तदन्यत्रामुख्यत्वा-दल्पत्वात्तस्यापि भगवदधीनत्वाद्भगवत एव प्राणशब्दवाच्यत्वमिति । क्वाभ्यधिकाशङ्केत्यत आह **ततश्चायमर्थ इति** । **वायुविकारेति** । ब्रह्मणस्तु सर्वगतत्वादशरीरत्वाच्चैतस्य वा तच्छरीरस्य वा नास्मदादिशरीरे भाव इति न तद्व्यतिरेकाज्जीवनव्यतिरेके इति भावः । ननु मुख्यस्य साक्षादन्वयव्यतिरेकाभावेऽपि वायुविकारद्वाराऽन्वय-व्यतिरेकयोः सत्त्वात्तस्य जीवनादिहेतुत्ववत्परमात्मनोऽपि मुख्यद्वाराऽन्वयव्यतिरेकयोः सत्त्वाज्जीवनादिहेतुत्वं किं न स्यादित्यत आह **अथवेति** । पूर्ववदत्रापि मुख्यस्येति सिद्धान्त एव स्यादत्राह **परमात्मन इति** । शरीरद्वारा हि





शरीरिण्यन्वयव्यतिरेकौ वक्तव्यौ तयोरेव मुख्यत्वात् । न च वायुविकारो मुख्यप्राणा वा परमात्मनः शरीरं तस्याशरीरत्वात् । न चान्तर्यामीत्यत्र पृथिव्यादेः परमात्मशरीरत्ववद्वायुविकारस्याप्यस्तु तदिति वाच्यम् । तत्र पृथिव्यादिशरीरत्वस्य गौणत्वात् । न च तथात्र मुख्यपरिहारेण गौणग्रहणे कारणमस्तीति भावः । **अन्वयव्यतिरेकाभ्यां हीति** । न च श्रुत्यैव तत्सिद्धिः । अन्वयव्यतिरेकानुसारेण श्रुतेर्मुख्यविषयत्वात् । इतरेण तु जीवन्तीत्यत्रापि इतरशब्दस्य प्रसिद्धप्राणेतरत्वविवक्षया मुख्य एव युक्तत्वात् । **युक्तिसंवादादिति** । अत्र हि युक्तिसंवादो नाम युक्तिविषयीकृतार्थप्रतिपादकं श्रुत्यर्थो हि न वेन्द्रियचेष्टकत्वं सकलजीवभोगकरणत्वं तदुभयं युक्त्या विषयीक्रियते । तत्र कीदृशी युक्तिरिति चेत् । नवेन्द्रियचेष्टापक्षः प्राणाधीना तदन्वयव्यतिरेकानुविधायित्वात् सकलजीवभोगः प्राणाधीनः तदन्वयव्यतिरेकानुविधायित्वादिति युक्त्या श्रुतिप्रतिपादितार्थस्य विषयीकृतत्वेन युक्तिसंवादादित्यर्थः । ननु प्राणशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वेनाकाशशब्दवदस्यापि भगवत्परत्वं स्यादित्यत्राह **न चात्रेति** । आकाशशब्दे हि निरवकाशविष्णुलिङ्गस्य विद्यमानत्वाद्ब्रह्मपरत्वसंभवेऽपि प्रकृते निरवकाशविष्णुलिङ्गाभावान्न प्राणश्रुतिबाधेन ब्रह्मपरत्वमिति भावः । न च श्रीपतित्वादिकं निरवकाशलिङ्गमस्त्येवेति वाच्यम् । अद्भ्यः संभूत इत्यनुवाके 'श्रीश्च ते' इत्युक्तस्य विष्णुत्वेऽपि भर्ता सन्नित्यनुवाकस्य विष्णुपरत्वे कारणाभावात् । प्रत्युत मातरिश्वश्रुतेरेव सत्त्वेनाविष्णुपरताया एव युक्तत्वादिति भावः ।

**श्रीनिधि०— शरीरे सति मुख्य इति** । देहे मुख्यप्राणे विद्यमान इत्यर्थः । **वायुविकारशरीरत्वादिति** । तथा च वायुविकारस्य जीवनान्वयव्यतिरेकाऽनुविधायित्वात् तत्प्रेरणयैवेति भावः । शरीरे गमनादेश्चेतनाधीनतादर्शनाल्लोक इति ज्ञेयम् । एतेनैव विवक्षया न वेत्युक्तम् ॥ **युक्तिसंवादादिति** । पायूपस्थयोरैक्यविवक्षया मनसः पञ्चेन्द्रिये च योगेन तत्र तद्वैत्वं इति वाक्यप्रतिपाद्यः प्राणो मुख्य एव । इन्द्रियचेष्टकत्वेन सकलजीवभोगसाधनत्वेन च श्रुतत्वाद्यन्यैव तन्नैवं यथा रुद्रादिः । तल्लिङ्गाच्चायं मुख्यनिष्ठं मुख्यवायुशरीरवायुविकारान्वयव्यतिरेकानुविधायित्वात् तयोरिति युक्तिः द्रष्टव्या ।

**शे०वा०—** ननु जीवनस्य वायुविकारान्वयव्यतिरेकदर्शनेन जीवनादिहेतुत्वस्य वायुविकारनिष्ठत्वप्राप्तावपि मुख्यवायोर्जीवनं प्रत्यन्वयव्यतिरेकादर्शनेन जीवनादिहेतुत्वस्य मुख्यप्राणनिष्ठत्वासिद्धेर्न प्राणशब्दस्य तत्र महायोग इति कथमियमभ्यधिका शङ्का । भगवतोऽप्यन्वयव्यतिरेकाभ्यां जीवनादिहेतुत्वोपपत्त्या प्राणशब्दनिर्वचनलब्धजीवनादिहेतुत्वस्य भगवन्निष्ठत्वेन तत्रापि महायोगोपपत्तेरन्यमात्रोपस्थापकत्वासिद्धिश्चेत्यतः पूर्वाधिकरणवैषम्यप्रदर्शनपूर्वकमभ्यधिकाशङ्कामुपपादयति **ततश्चेत्यादिना** । **प्रवृत्तिनिमित्तस्येति** । इन्द्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यस्य पुरन्दरादिष्वल्पतायाः श्रुतिपुराणादिसिद्धत्वेनाकाशशब्दनिर्वचनलब्धस्यावकाशदातृत्वस्य देशकालाभ्यां परिच्छिन्नभूते च सावधिकत्वेन पुरन्दरादिषु भूते च तत्तच्छब्दनिर्वचनलब्धप्रवृत्तिनिमित्तस्यामुख्यत्वादित्यर्थः । ततश्च न तेषां तत्र महायोग इति भावः । अन्यत्र महायोगाभावमुक्त्वा भगवति तेषां महायोगमाह **परमात्मनि चेति** । सम्भवादित्यत्र प्रवृत्तिनिमित्तस्य मुख्यस्येत्यनुवर्तते । अविगानेन परमैश्वर्यादिः





'सर्वभूतगुणैर्युक्तमि'त्यादिवचनबलेनावकाशदातृत्वस्य च देशकालगुणैरपरिच्छिन्ने भगवत्येव निरवधिकत्वेन तत्र तेषां महायोग इति भावः । एवं पूर्वाधिकरणन्यायमुक्त्वा तद्वैषम्यमुपपादयति **न चेति** । तत्कथमित्यतो निर्वचनलब्धार्थप्रदर्शनपूर्वकं तस्य मुख्यप्राणे मुख्यत्वमुपपादयति **जीवनेति** । **जीवनचेष्टाहेतुत्वं ही**त्येव मूलपाठो बहुषु पुस्तकेषु दर्शनात् । क्वचित्तु **जीवनचेष्टाहेतुता ही**त्यपि पाठस्तत्रापि हेतुत्वमित्यर्थः । अतस्तच्चेत्युत्तर-परामर्श उपपन्न इति ध्येयम् । **मुख्ये सम्भवतीति** । मुख्यप्राणे मुख्यं(?) सम्भवतीत्यर्थः । अतस्तत्र तस्य महायोग इति भावः । **शरीरे सति मुख्य इति** । शरीरे मुख्यप्राणे सतीत्यर्थः । **किं केन सङ्गतमिति** । अन्यनिष्ठान्वयव्यतिरेकयोरन्यनिष्ठकार्यकारणभावग्राहकत्वेऽतिप्रसङ्ग इति भावः । कुलालशरीरस्य घटं प्रत्यन्वय-व्यतिरेकदर्शनेन कुलालस्य घटहेतुताग्रहवन्मुख्यप्राणशरीरभूतवायोर्जीवनं प्रत्यन्वयव्यतिरेकदर्शनमात्रेण मुख्य-प्राणस्यापि तद्धेतुत्वग्रहो नानुपपन्नः । शरीरशरीरिभावस्यैव नियामकत्वान्नातिप्रसङ्गोऽपीत्याशयेन परिहरति **मैवमिति** ।

एवं मुख्यप्राणे महायोगोपपादकत्वेन भाष्यं योजयित्वा भगवति महायोगाभावोपपादकत्वेनापि भाष्यं योजयति **अथवेति** । मुख्यस्य प्राणादिहेतुताया दृष्टत्वात् कथमदृष्टिरित्यतोऽपेक्षितशेषं पूरयति **परमात्मन इति शेष इति** । ननु श्रुत्यादिना ब्रह्मणो जीवनादिहेतुत्वग्रहसम्भवान्नान्वयव्यतिरेकाभ्यां प्राणादिहेतुत्वदृष्टिमात्रेण ब्रह्मणो जीवनादिहेतुत्वाभावसिद्धिरित्यतो मुख्यस्य जीवनहेतुत्वग्राहकान्वयव्यतिरेकानुसारेण 'येन जातानी'त्यादिश्रुतेरपि मुख्यप्राणविषयत्वेन श्रुत्या ब्रह्मणो जीवनादिहेतुत्वग्रहानुपपत्तेर्युक्तैवान्वयव्यतिरेकाभ्यां ब्रह्मणो हेतुत्वादृष्टिमात्रेण जीवनादिहेतुत्वाभावसिद्धिरित्यभिप्रेत्य सोपस्कारेण वाक्यतात्पर्यमाह **अन्वयव्यतिरेकाभ्यामिति** । अस्तु तर्हि ब्रह्मणो जीवनादिहेतुत्वग्रहोऽन्वयव्यतिरेकाभ्यामेवेत्यतः सत्यप्यन्वये ब्रह्मणः सर्वगतत्वादशरीरत्वाच्च तस्य वा तच्छरीरस्य वाऽस्मदादिशरीरे व्यतिरेकाभावेन ग्राहकयोरन्वयव्यतिरेकयोरभावान्न ताभ्यामपि तस्य तद्ग्रह इत्याह **न चेति** । तथा च प्राणशब्दनिर्वचनलब्धं जीवनादिहेतुत्वं न भगवद्गतमिति न तत्र तस्य निरवधिकत्वमिति भावः । उपलक्षणं चैतत् । जन्मादिसूत्रोक्तस्थितिहेतुताया असम्भवादिप्रसङ्गादन्यगतं न भगवदधीनमित्यपि द्रष्टव्यम् । **मुख्यस्य दृश्यत इति** । एतदपि वायुविकाररूपशरीरद्वारेण द्रष्टव्यम् । अभ्यधिकाशङ्कान्तरमाह **न चेति** । नाप्यत्र निरवकाशलिङ्गमस्तीत्यर्थः । तथा च समुद्रशायित्वादिपरोवरीयस्त्वादिनिरवकाशलिङ्गानां श्रवणादिन्द्रादि-श्रुतीनामाकाशादिश्रुतीनां च बाधसम्भवेऽपीह वाक्ये तदश्रवणान्न प्राणश्रुतेर्बाध इति वैषम्यमुक्तं भवति । ननु निरवकाशस्य श्रीपतित्वलिङ्गस्यैव श्रवणात् कथं तदश्रवणमित्यतोऽद्भ्यः सम्भूत इत्यनुवाके श्रीश्च ते लक्ष्मीश्च पत्न्यौ इत्युक्तस्य विष्णुत्वेऽपि भर्ता सन् भ्रियमाण इत्यनुवाके तद्वै त्वं प्राण इत्युक्तस्य न विष्णुत्वमिति भावेनात्रे-त्युक्तम् । नन्वस्यार्थस्य भाष्यादलाभात् कथमिदं वैषम्यमुच्यत इत्यतः पूर्वपक्षभाष्यशेषपूरणमेतदित्युक्तं **पूर्वपक्ष-शेष इति** ।

**वा०र०— वायुविकारेति** । भूतवायोः शरीरत्वेनाग्रेऽभिधानमपि भूतवायुविकारशरीरवायुपरमिति न दोषः । **जीवनं प्रतीति** । जीवनादिकं प्रतीत्यर्थः । एवमन्यत्रापि परमैश्वर्यदिरादिष्विति पाठः । परमैश्वर्यस्येति पाठेऽपि





परमैश्वयदिरित्येवार्थः । तत्रेन्द्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यदिरित्यन्तस्थत्वाधिकरणीयग्रन्थानुसारेण व्यवहार-निर्णयादिति बोध्यम् । वक्ष्यति परमैश्वर्यदिरिति । **अविगानेनेति** । परमैश्वर्यदिरित्यस्य भगवत्येव निरवधिकत्वेनेति सम्बन्धः । तदुपपादनं परमेश्वरे निरवधिकत्वे विभागाभावेनेति । **तेषां** इन्द्रादिशब्दानाम् । **हेतुत्वमित्यर्थ इति** । त्वतलोरेकार्थतया व्याख्येयमिति भावः । **उपपन्न इति** । नपुंसकेन प्रकृतस्यैव परामर्शस्वीकारादिति भावः । एतेन निमित्तपरामर्शस्वीकारे तच्चेत्युपपन्नमिति परास्तम् । शरीरे सतीत्याद्युत्तरवाक्ये हेतुतायाः पुरस्कारप्रतीत्या तत्परामर्शस्यैव न्यायत्वात् । अत एव हेतुतादृष्टेरित्यत्रापि तथा व्यवहार इति ज्ञेयम् । **भूतवायोरिति** । तद्विकार-शरीरवायोरित्यर्थः । अत एवैतच्छङ्कानुवादरूपपूर्वग्रन्थे उत्तरत्रे च वायुविकारेत्येवोक्तमिति ज्ञेयम् । **ग्राहकयो-रन्वयव्यतिरेकयोरिति** । अन्वयमात्रस्यातिप्रसक्तत्वेन कारणताग्राहकत्वाभावात् तद्ग्राहकस्य व्यतिरेकस्य चाभावात् कारणताग्राहकयोरुभयोरभावादिति भावः । **असम्भवादीति** । आदिनाऽतिव्याप्तिपरिग्रहः । सर्वथा भगवति जीवनहेतुत्वाभावमभ्युपेत्य अन्वयगतस्य भगवदधीनत्वाङ्गीकारेऽसम्भवः । भगवत्यपि सत्त्वमङ्गीकृत्या-न्यतरस्य भगवदधीनत्वमित्यङ्गीकारे चातिव्याप्तिरिति विवेकः । **श्रीपतित्वेति** । पतित्वादित्यर्थः । मूले सूत्रस्य पूर्वपक्षाच्छादकत्वलाभपरतया योजनावसरे तादृक्शब्दस्य षष्ठ्यन्ततादृश इति प्रयुक्तम् । तेन च विवक्षितार्थ-सिद्धिरित्याशयेन भाष्यस्थं तादृश इत्येतदनूद्य पूर्वोक्तसमानस्य परिहारन्यायस्येति षष्ठ्यन्ततया व्याख्यातम् । अतिदेशनिरूपणार्थतया योजनायां च तादृशो हीति प्रथमान्तं तादृशपदमभिप्रेत्य तच्छब्दस्य यच्छब्दसापेक्षतया यच्छब्दार्थकथनं यदा शङ्काया इत्यादीति ज्ञेयम् ।

**स०व्र०— शरीरे सति मुख्य इति** । सतीत्यस्य मुख्य इत्यनेन सम्बन्धः ।

**विठ्ठल०—** मुख्यस्येवेश्वरस्यापि प्राणनान्वयव्यतिरेकित्वे पूर्वपक्षनिर्णयायोगादीश्वरेऽन्वयाद्ययोगोप-पादनाय प्रकारान्तरेण योजयति **अथवेति** । प्राणादिहेतुतेत्यादिपदेन चेष्टा उपादीयते इत्युक्तं प्राक् । अधुना अन चेष्टायामिति धातोः प्राणशब्देनैव चेष्टाग्रहणसंभवात् आदिशब्देन भुजः करिष्यमाण इत्युक्तभोगकारणत्वं उपादीयत इति भावेनाह **यद्वेति** । मूले दृष्टेरित्यतःपरम् अध्याहार्यमाह **इति पूर्वपक्षशेष इति** ।

**चषकः— न चैवं प्रकृत इति** । तथा च पूर्वनयवैषम्येण पूर्ववादिमतप्रवर्तनात् प्रत्युदाहरणरूपासङ्गति-रनेन ध्वन्यत इत्यवसेयम् । **वायुविकारशरीरत्वादिति** । घटादिनिरूपितान्वयव्यतिरेकयोः कुलालादिशरीरे दर्शनेन तदधिष्ठितचेतनस्य यथा तन्निरूपितहेतुताप्रतिसंहतिस्तद्वत्प्रकृतेऽपीत्याशयः । **अन्वयव्यतिरेकाभ्यां हीति** । हेतुताग्राहकमानान्तरराहित्यादिति भावः । परमात्मनो जीवनादिहेतुत्वप्रतिपादकत्वेनोत्तरवाद्यूरीकृता 'येन जातानि जीवन्ति', 'इतरेण तु जीवन्ती'ति श्रुतिरपि मुख्यप्राणस्य तद्धेतुत्वतात्पर्यकतया पूर्ववादिना नीयत इति हृदयम् । तथा च कार्यकारणभावस्यान्वयव्यतिरेकमात्रजनिताधिगतिविषयत्वस्यात्रानभिधित्सिततया यागस्वर्गयोः हेतु-हेतुमद्भावस्यान्वयव्यतिरेकप्रतिसंहतिजनितावगतिविषयत्वेऽपि न क्षतिरित्यवसेयम् । **पश्याम इति** । सर्वगततया





अशरीरतया नित्याव्यक्तनिसर्गतया वेश्वरस्य नान्वयव्यतिरेकग्रह इति भावः। **मुख्यस्य दृश्यत इति**। वायुविकार-शरीरं द्वारीकृत्येत्यवसेयम्।

**॥ इति अनुव्याख्यानशब्दार्थविस्तारः ॥**

**॥ इति अभ्यधिका शङ्का ॥**

* * *

**॥ अथ अभ्यधिकाशङ्काच्छादनम् ॥**

**॥ तत्रादौ अभ्यधिकाशङ्काच्छादनप्रकारदर्शनम् ॥**

१०१ **सु०— नन्वेवं चेन्न सूत्रमेतदाच्छादकमित्यतस्तस्य तात्पर्यमाह अतिदेशो हीति।**

**अनु०— अतिदेशो हि तादृशः।**

**हिशब्दो हेतौ। एवमधिकाशङ्कया पूर्वपक्षे प्राप्ते सूत्रकृता तादृशः पूर्वोक्तसमानस्य परिहारन्यायस्यातिदेशः कृतो यस्मात्तस्मादुक्ताशङ्काच्छादकं भवत्येवेदं सूत्रमिति योज्यम्।**

**यद्वा किमनेनाधिकाशङ्काव्युत्पादनेन, यथाभाष्यमेव पूर्वपक्षः किं न स्यादित्यत्रेदमुक्तम्। तादृशो ह्यतिदेशो यत् आशङ्काया आधिक्ये सति परिहारस्य समानत्वम्। यद्याशङ्कायां न विशेषस्तर्हि पूर्वेणैव परिहृतत्वात्प्राचीनन्यायातिदेशनमनर्थकं स्यात्, प्रत्युदाहरणं शङ्का-परिहारे शास्त्रापर्यवसानप्रसङ्गात्। यदि च परिहारोऽविशेषितो न स्यात्कथं तर्हि 'अत एवे'त्यतिदेश इति मन्दव्युत्पादनार्थमिदमुक्तम्। भाष्येऽप्यस्य सर्वस्यापि स्वीकारार्थं 'प्रसिद्धेरि'त्याह।**

**परि०— पूर्वोक्तसमानस्येति**। महायोगविद्वद्रूढिनिरवकाशलिङ्गत्वेन पूर्वोक्तसमानस्येत्यर्थः। **यथाभाष्यमेवेति**। प्रसिद्धेरितिं भाष्यानुसारादन्यत्र रूढिमात्रेण पूर्वपक्षः किं न स्यादित्यर्थः। उदाहरण-भेदेनातिदेशोऽर्थवान् स्यादित्यत आह **प्रत्युदाहरणमिति**। **अस्य सर्वस्येति**। अन्वयव्यतिरेकतः प्राणादिहेतुताया मुख्य एव दृष्टेर्विष्णावदृष्टेरित्यादेस्सर्वस्येत्यर्थः।

**गु०दी०—** ननु लक्ष्मीपतित्वाख्यनिरवकाशलिङ्गेन पूर्वाधिकरणवत् समस्तशङ्कापरिहारसम्भवात् किमधिकरणान्तरारम्भेणेति चेत् पुरुषसूक्तगतस्यास्य लिङ्गस्य स्थानान्तरगतत्वात् तत्रैवान्वयं मन्वानस्य पुनः





**स०व्र०— इद्रियसारत्वाद्भूतानामिति** । प्राणः भूतसंवेशनोद्गमनवान् तत्सारभूतेन्द्रियसंवेशनोद्गमनवत्त्वात् । यो यत्सारसंवेशनादिमान् स संवेशनादिमान् इति सामान्यव्याप्तिमूलकमनुमानमित्यर्थः । **व्याप्त्यभावादिति** । ऊर्णनाभेः स्वसारभूततन्तुसंवेशनादिमत्त्वेऽपि संवेशनादिमत्त्वाभावः ।

**विठ्ठल०— सर्वभूतसंबन्धिनोस्तयोरिति** । 'सर्वाणि ह वा इमानि भूतानी'ति सर्वभूतसंवेशनोद्गमनयोरुक्तत्वेन मुख्यप्राणे तदुपपादनाय इन्द्रियसंवेशनोद्गमनोपपादनमसङ्गतमिति भावः । इन्द्रियाणां भूतसारत्वादिन्द्रियसंवेशनोद्गमनसिद्धौ तदधीनभूतसंवेशनोद्गमने कैमुत्येन सिद्ध्यत इति नासङ्गतिरिति शङ्कते **इन्द्रियसारत्वादिति** । इन्द्रियाणि साराणि येषामिति बहुव्रीहिः । **किमेतदनुमानमिति** । प्राणः भूतसंवेशनोद्गगमनवान् तत्सारभूतेन्द्रियसंवेशनोद्गमनवत्वात् । सामान्यव्याप्त्या नदीसारफेनसंवेशनोद्गमनवान् समुद्रो नदीसंवेशनवान् इत्यनुमानमित्यर्थः । **व्याप्त्यभावादिति** । ऊर्णनाभिदेहादेः स्वसारतन्तुसंवेश(नोद्गमना)नादिमत्वेऽपि स्वसंवेशना-दिमत्वाभावाद्व्यभिचार इति भावः । **श्रुत्यनुमानेति** । यदा वै पुरुषः स्वपीति इत्यादिः । श्रुत्याभासः व्याप्तिराहित्येनोक्तानुमानाभासश्च तन्मूलसंभावनामात्रेण यतो वा इमानि भूतानीति सर्वप्राणिनिकायस्य ब्रह्मण्येव संवेशनोद्गमनप्रतिपादकश्रुतिबाधयेत्यर्थः । ननु उद्गीथदेवताप्रश्ने आदित्य इति होवाचेत्युक्तादित्यस्य प्रतिहारदेवताप्रश्ने अन्नमिति होवाचेत्युक्तान्नस्य च अब्रह्मत्वेन निश्चितत्वात् तत्प्रायपठितप्रस्तावदेवताप्राणस्यापि न ब्रह्मत्वमिति पूर्वपक्ष इति शङ्किते न चादित्योऽन्नमिति ।

**चषकः— इन्द्रियसारत्वादिति** । षष्ठ्यर्थबहुव्रीहिप्रकृतिकभावप्रत्ययः । इन्द्रियाणां भूतसारत्वादित्यर्थः । भोगप्रत्यासत्तेरिन्द्रियाणां भूतसारत्वादिति कल्पतरुकारोक्तः । **किमेतदनुमानमिति** । प्राणपक्षकं भूतसंवेशनोद्गमनवत्तासाध्यकं तत्सारभूतेन्द्रियसंवेशनोद्गमनवत्ताहेतुकं नदीसारत्वेनादिमान् सागरो नदीसंवेशनादिमानिति सामान्यव्याप्तिकमनुमानमित्यर्थः । **व्याप्त्यभावादिति** । स्वसारभूततन्तुसंवेशनादिमत्यूर्णनाभिशरीरे स्वसंवेशनादिमत्ताविरहेणेत्याशयः । विशेषव्याप्तौ सामान्यव्याप्तौ च निदर्शनाभावादित्यप्याशयं प्रकाशयन्ति **श्रुतिबाधयेति** । यतो वेत्यादिश्रुतिबाधयेत्यर्थः । प्रस्तावश्रुतेर्ब्रह्मतात्पर्यकत्वबाधेन स्वापवाक्यदिशा प्रसिद्धप्राण एवेन्द्रियलयादितात्पर्यकं प्रस्ताववाक्यमिति च पूर्वपक्ष इत्यर्थः ।

**११२ सु०— नन्वादित्योऽन्नं चोद्गीथप्रतिहारदेवते तावद्ब्रह्मणोऽन्ये, तत्सा(म्या)मान्यात् प्राणस्यापि न ब्रह्मत्वमिति पूर्वपक्षोऽस्त्विति चेन्न, निर्णायकाभाव एव प्रायपाठस्यानुसरणीयत्वात् । स्पष्टं चात्र पारमेश्वरं कर्मेत्युक्तम् । अन्यथा छत्रचामराद्यसाधारणलिङ्गसद्भावेऽपि सामन्तसन्निधिमात्रेण राजा न राजा स्यात् ।**

**परि०—** अब्रह्मप्रायपाठात् प्रस्ताववाक्यमब्रह्मपरमिति पूर्वपक्ष्यत इति भावेन शङ्कते **नन्वादित्य इति** । कतमा सा देवता उद्गीथमन्वायत्ता आदित्य इति होवाचेति कतमा सा देवता प्रतिहारमन्वायत्ता





अन्नमिति होवाचेति वाक्यद्वये श्रुत आदित्योऽन्नं चेत्यर्थः । **निर्णायकाभाव एवेति** । विशये प्रायदर्शनादिति जैमिनिसूत्रादिति भावः ।

**यादु०**— नन्वन्नस्य ब्रह्मत्वेऽन्नमेव प्रतिहरमाणानीति कथं युज्यते । ब्रह्मणोऽद्यत्वासंभवादित्यत आह **अन्नमेव प्रतिहरमाणानीति** । **प्रायपाठादिति** । पारमेश्वरकर्माभिधायकवाक्यप्रायपाठादित्यर्थः ।

**वं०प०**— अब्रह्मप्रायपाठात् प्रस्तावववाक्यमब्रह्मपरमिति पूर्वपक्ष्यत इत्यभिप्रायेण शङ्कते **नन्वादित्य इति** । कतमा सा देवता प्रतिहारमन्वायत्ता, आदित्य इति होवाचेति, कतमा सा देवता प्रतिहारमन्वायत्ता अन्नमिति होवाचेति वाक्यद्वये श्रुतमादित्योऽन्नं चेत्यर्थः ।

**आनन्दः**— **अन्यथेति** । निर्णायकसद्भावेऽपि प्रायपाठानुसारेण इत्यर्थः ।

**श्रीनिधि०**— **तत्सामान्यात्** मन्त्रदेवतात्वसाम्यादित्यर्थः ।

**शे०वा०**— अधिकाशङ्कान्तरमाशङ्कते **नन्विति** । 'कतमा सा देवतोद्गीथमन्वायत्तेत्यादित्य इति होवाच कतमा सा प्रतिहारमित्यन्नमिति होवाचेति श्रुतेरिति भावः । **उद्गीथप्रतिहारौ** सामभक्तिविशेषौ । **तत्सामान्यात्** तत्साहचर्यादित्यर्थः । **निर्णायकाभाव एवेति** । विषये प्रायदर्शनादिति वचनादिति भावः । अस्तु तर्हि प्रकृतेऽपि निर्णायकाभावादेव प्रायपाठानुसरणमित्यत आह **स्पष्टं चेति** । अस्तु निर्णायकसद्भावेऽपि प्रायपाठस्यानुसरणीय-त्वमित्यत आह **अन्यथेति** ।

**स०व्र०**— **तत्सामान्यात्** तत्सहपाठादित्यर्थः ।

**११३ सु०— कथं चावधारितमादित्योऽन्नं च न ब्रह्मेति । श्रूयते हि तत्रापि 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति' इत्यादि ब्रह्मलिङ्गम् ॥ 'अन्नमेव प्रतिहर-माणानि' इति तु प्रायपाठादुपजीवनार्थं ग्राह्यम् ।**

**परि०**— नन्वस्य ब्रह्मरूपत्वेऽन्नमेव प्रतिहरमाणानीति कथं युज्यते । ब्रह्मणोऽद्यत्वा-सम्भवादित्यत आह **अन्नमेव प्रतिहरमाणानीति** । भुञ्जानानीत्यर्थः । **प्रायपाठादिति** । ब्रह्मपरत्वेन निर्णीतप्रस्तावोद्गीथवाक्यद्वयप्रायपाठादित्यर्थः ॥

**वं०प०**— नन्वन्नस्य ब्रह्म परिहरमाणानीत्युक्ताद्यत्वविरोध इत्यत आह **अन्नमेवेति** । **प्रतिहरमाणानि** भुञ्जानानि । **प्रायपाठादिति** । उद्गीथप्रस्तावदेवतयोर्ब्रह्मत्वेन तत्प्रायपाठादित्यर्थः ।





**आनन्दः**— ननु ब्रह्मपक्षे प्रतिहरमाणानीत्युक्तम् । प्रतिहरणं नोपपद्यते । ब्रह्मणो भक्षणासंभवादित्यत्राह **अन्नमेवेति** । प्रतिहरमाणानीत्युपजीवनार्थकं ज्ञातव्यम् । एवं चान्नं परमात्मानं प्रतिहरमाणानि उपजीवन्ति । सन्ति जीवन्ति तत्र हेतुः **प्रायपाठादिति** । प्राणादित्ययोर्ब्रह्मत्वेन तत्प्रायपाठादित्यर्थः ।

**श्रीनिधि०**— **उच्चैस्सन्तं गायन्तीति** । उत्कृष्टं सन्तं गायन्तीत्यर्थः । **प्रतिहरमाणानि** भक्ष्यमाणानि । **प्रायपाठादिति** । ब्रह्मत्वेन निर्णीतादित्यप्राणप्रायपाठादित्यर्थः । **उपजीवनार्थमिति** । अन्नं भगवन्तं प्रतिहरमाणानि उपजीव्यमानानीत्यर्थो वर्णनीय इति भावः ।

**शे०वा०**— आदित्यान्नयोरब्रह्मत्वं परोक्तमङ्गीकृत्य तत्साहचर्यस्याप्रयोजकत्वमुक्तम् । असिद्धं च तदित्याह **कथं चेति** । ब्रह्मत्वसाधकाभावादेवेति चेत्तत्राह **श्रूयते हीति** । आदिपदेन सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्तीत्यस्य परिग्रहः । नन्वन्नमेव प्रतिहरमाणानीति वाक्यस्य भूताद्यत्वप्रतिपादकत्वेन न ब्रह्मधर्मप्रतिपादकत्वमिति कथं तस्यादिपदेन सङ्ग्रह इत्यत आह **अन्नमेवेति** । पारमेश्वरकर्माभिधायकवाक्यप्रायपाठादित्यर्थः ।

**स०व्र०**— नन्वन्नस्य ब्रह्मरूपत्वे अन्नमेव प्रतिहरमाणानीति कथं युज्यते, ब्रह्मणोऽद्यत्वासम्भवादित्यत आह **अन्नमेव प्रतिहरमाणानीति त्विति** । **प्रायपाठात्** पारमेश्वरकर्माभिधायकवाक्यप्रायपाठात् ।

**विठ्ठल०**— **प्रतिहरणं** = भोजनम् ॥

**११४ सु०— तस्मात्संशयपूर्वपक्षयोर(भावा)संभवान्नेदमुदाहरणम्, किन्तु न्यायविदामग्रेसरेणानन्तवेदविदा भाष्यकृतोपात्तमेवेति सिद्धम् ॥**

**॥ इति मायावाद्युक्तोदाहरणं तन्निरासश्च ॥**

**॥ इति मतान्तरनिरासः ॥**

## ॥ इति प्राणाधिकरणम् ॥

## ॥ १-१-९ ॥

* * *



# ॥ अथ गायत्र्यधिकरणम् ॥

## ॥ १-१-११ ॥

**॥ अथ अधिदैवविषयशब्दसमन्वयः ॥**

**॥ तत्रादौ स्वमतानुसारेण ज्योतिर्गायत्र्यधिकरणोर्व्याख्यानम् ॥**

**॥ तत्राप्यादौ ज्योतिरधिकरणानुव्याख्यानाभावकारणम् ॥**

**११५ सु०— ज्योतिश्चरणाभिधानादित्यत्राधिकाशङ्का भाष्य एव दर्शिता । यदाह 'अग्निसूक्तत्वादि'ति । तेन वक्तव्याभावादुत्तरं गायत्र्यधिकरणमेव विव्रियते ॥**

**आनन्दः**— ननु ज्योतिरधिकरणेऽभ्यधिकाशङ्का कुतो नात्र दृश्यते अनुव्याख्यान इत्यत्राह **ज्योतिरिति**।

**शे०वा०**— ननु कर्णादिविदूरत्वरूपनिरवकाशविष्णुलिङ्गबलात्, अग्न्यादिश्रुतेर्जडपरत्वे आकाशाधिकरणन्यायेन, देवतापरत्वे चान्तरधिकरणन्यायेन, ब्रह्मपरत्वान्न सावकाशाग्निश्रुत्या ज्योतिषोऽग्नित्वेन पूर्वपक्ष इति पूर्वाधिकरणेष्विवात्राप्यधिकाशङ्कयैव सूत्रारम्भो वर्णनीयस्तत्कुतोऽत्राभ्यधिकाशङ्काया अप्रदर्शनमित्यतो भाष्य एव तत्प्रदर्शनादत्राप्रदर्शनमित्याशयेनाह **ज्योतिश्चरणाभिधानादित्यत्रेत्यादि**।

**वा०र०**— ज्योतिश्चरणेतिसूत्रीयचन्द्रिकायामेतेन ज्योतिःशब्दाग्निशब्दौ देवतापरौ चेदित्यादिना शङ्कितपूर्वपक्षानुदयं हृदि निधाय तत्रत्योपक्रमानुसारेण मूलमवतारयति **ननु करणादीति**। बलादित्यस्य ब्रह्मपरत्वादित्युत्तरेण सम्बन्धः। अग्न्यादिश्रुतेर्ब्रह्मपरत्वादिति लभ्यते। तदुपपादनमग्न्यादिश्रुतेर्जडेत्यादि। **पूर्वपक्ष इतीति**। पूर्वपक्षो युक्त इत्यतः पूर्वेण गतार्थमेतत्सूत्रमित्याशङ्कापरिहारायेत्यर्थः।

**॥ इति ज्योतिरधिकरणानुव्याख्यानाभावकारणम् ॥**

* * *

**॥ अथ गायत्र्यधिकरणसमन्वेतव्यनामनिर्देशनम् ॥**

**११६ सु०— अधिवेदगताशेषनाम्नामुपलक्षणस्य वेदमातुस्त्रैवर्णिकद्वितीयजन्मनि जनन्या गायत्र्याः प्राधान्येन तन्नाम्नः समन्वयं प्रतिपादयितुं सूत्रम् छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनमिति।**

**ब्र०सू०— ॥ ॐ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॐ ॥**

**परि०—** इतरद्धित्वा गायत्रीनामोक्तौ हेतुः **प्राधान्येनेति** ।

**गु०दी०— गायत्र्याः प्राधान्येन** इत्यत्र गायत्रीछन्दोनिबद्धत्वेन गायत्रीशब्दवाच्यायाः 'तत्सवितुरि'-त्यादिरूपायाः ऋच इत्यर्थः ।

**यादु०—** ननु रां क्लीं ह्रीमित्येकाक्षराणां वर्णक्रमविधुराणामेव मन्त्रत्वं किं वाऽन्येषामित्यत आह **वर्णसमावेशलक्षण इति** । वर्णक्रमविशेषरूप इत्यर्थः । तथा चानेकाक्षराणामेव मन्त्रत्वमिति नियम इति भावः ।

**वं०प०— वेदमातुरिति** । वेदमाता तु गायत्रीति प्रमाणोक्तेरिति भावः । सर्ववेदव्याख्येय-पुरुषसूक्तव्याख्येयतया मूलत्वेन गायत्र्या वेदमातृत्वम् । प्राधान्येन हेत्वन्तरमाह **त्रैवर्णिकेति** । **जन्मनि** जन्म-विषये । **जनन्या** मातुः । आदौ मात्रोत्पन्नस्योपनयनेन द्वितीयं जन्म भवतीति 'मैत्रो ब्राह्मण उच्यत' इति ब्राह्मण्यापादकत्वात् प्राधान्यं ज्ञेयम् ।

**आनन्दः— अधिवेदगतेति** । अत्रापि पूर्वाधिकरणवैषम्येण 'पूर्वपक्षोत्थापनमुपपादयितुं' इति भाव्यमिति भाति । वेदमातुरित्यादि विशेषणद्वयं पूर्वन्यायेनेति । गायत्रीशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वेन महायोगविद्वद्रूढिभ्यां भगवत्परत्वमिति पूर्वन्यायेनेत्यर्थः ।

**शे०वा०—** तत्कथमवगम्यत इत्यत आह **यदाहेति** । भाष्यकार इति शेषः । तद्वाक्यमुदाहरति **अग्निसूक्तत्वादितीति** । यद्यप्यत्र तत्तत्सूक्तस्थानामग्न्यादिश्रुतीनां विष्णौ सावकाशत्वे सूक्तानामपि विष्णौ सावकाशत्वमेवेति न सावकाशप्रकरणानुगृहीतश्रुत्याऽपि पूर्वपक्षोदयो युक्तः न चैवं सर्वसूक्तानां विष्णुसूक्त-त्वेनेदमग्निसूक्तमिदं वायुसूक्तमित्यध्यापकप्रसिद्धेरयोगात्सूक्तं निरवकाशमिति युक्तः । सूक्तानुगृहीतश्रुत्युक्त्या पूर्वपक्षोदय इति वाच्यम् । सर्वसूक्तानां वैष्णवत्वेऽपीदमग्निसूक्तमिदं त्वन्यदिति व्यवस्थाया अभिव्यक्तेरिति वक्ष्यमाणरीत्योपपन्नत्वेन तन्निरवकाशत्वायोगात् । तथा च सावकाशसूक्तस्य निरवकाशविष्णुलिङ्गैः सुतरां बाधान्न तदवष्टम्भेन पूर्वपक्षोदय इति नेयमभ्यधिकाशङ्का सम्भवति । तथापि वक्ष्यमाणन्यायेनेदमग्निसूक्तमिदं वायुसूक्तमित्यादिव्यवस्थायाः सम्भवेऽपीदमग्निसूक्तं न तु विष्णुसूक्तमित्यध्यापकप्रसिद्धेरयोगात् सूक्तं निरव-काशमिति युक्तस्तेन निरवकाशलिङ्गबाधया पूर्वपक्षोदयः । निरवकाशत्वमात्रप्रयुक्तस्य लिङ्गगतस्य प्राबल्यस्य श्रुतिगतान्निरवकाशसूक्तसाहित्यश्रुतित्वोभयप्रयुक्तप्राबल्यात् दुर्बलत्वात् । न च लिङ्गस्य बहुत्वप्रयुक्तस्यापि





प्राबल्यस्य सत्त्वेन साम्यमेवेति कथमवधारणमिति वाच्यम् । तत्प्रयुक्तप्राबल्यस्य श्रुतित्वरूपस्वभावप्रयुक्तप्राबल्यात् दुर्बलत्वात् । तस्मान्निरवकाशलिङ्गेन सूक्तानुगृहीताग्न्यादिश्रुतिबाधः । अन्तरधिकरणस्थेन्द्राग्न्यादिश्रुतिस्तु न सूक्तानुगृहीतेति युक्तो निरवकाशलिङ्गैस्तद्बाध इति चन्द्रिकोक्तरीत्याऽभ्यधिकाशङ्काप्रकारोऽत्र द्रष्टव्यः । विशेषस्तु चन्द्रिकायां द्रष्टव्यः ।

अत्र सूत्रे समन्वेतव्यतयाऽभिप्रेतो गायत्रीशब्दो न स्वमात्रपरः किन्तु सजातीयानामुष्णिगादिशब्दानामुपलक्षणमिति भावेनैतदधिकरणसमन्वेतव्यशब्दावच्छेदकोपाधिकथनपूर्वकमेतदधिकरणप्रतिपाद्यमाह **अधिवेदगतेति** । कुतस्तर्हि सूत्रे गायत्रीशब्दस्यैव समन्वेतव्यतयाऽभिप्रेतत्वमन्येषां तूपलक्षणत्वमित्यत उक्तं **प्राधान्येनेति** । तत्र हेतुः **वेदमातुरित्यादि** ।

**वा०र०**— तत्तत्सूक्तस्थाग्न्यादिश्रुतीनामित्यादि तदुत्तरचन्द्रिकानुसारेण पूर्वपक्षानुदयमाशङ्कते **यद्यपीति** । एवं च तत्रेत्थं पूर्वपक्षः यद्यपि पूर्वाधिकरणन्यायेनेत्यादिसुधाभिप्रायकथनानुसारेणाभ्यधिकाशङ्कां च हृदि निधाय पूर्वपक्षोदयार्थमधिकाशङ्कां च दर्शयति **तथापि वक्ष्यमाणेत्यादिना** । **विशेषस्त्विति** । एवं चात्रेत्यादिनोक्तभेदोपपादनादिस्वरूपमित्यर्थः।

**किन्तु सजातीयानामुष्णिगादिशब्दानामिति** । नन्वेतदयुक्तम् । गायत्रीशब्द इव वर्णसमावेशलक्षणमन्त्रवाचकत्वस्योष्णिगादिशब्देष्वसत्त्वेन तदुपलक्षणानुपपत्तेः । सूत्रगतछन्दःशब्दस्य वेदपरत्वं तु निर्णीतमेव । किंवा वर्णसमावेशलक्षणो मन्त्र इत्यादि मूले एवं गायत्र्यपि वेदविशेषे एवेति न्यायविवरणटीकायां गायत्र्या वेदविशेषत्वेनेति तत्त्वप्रकाशिकायां चोक्तेः । तद्ग्रन्थेषु सूत्रानुसाराय छन्दोविशेषछन्दःशब्दाभ्यां निर्देशोऽपि वेदविशेषपदेन तद्व्याख्यानसिद्धेः स्पष्टत्वान्न वेदाङ्गगायत्र्यादि छन्दस्सु उष्णिगादिव्यावृत्तगायत्र्याख्यच्छन्दोऽभिप्रायेण किञ्चाङ्गच्छन्दसां चतुर्विंशत्यक्षरकत्वादिरूपमन्त्रनिष्ठधर्मरूपतयाऽस्यामुकं छन्द इति मन्त्रसम्बन्धितया सर्वत्र व्यवहाराच्च मन्त्ररूपत्वाभावेन तद्ग्रहणायोगः । ईशावास्यभाष्यटीकायां 'यो ह वाऽविदितार्षच्छन्दो दैवतब्राह्मणेन मन्त्रेणे'ति ऋष्याद्यज्ञाने सति योगादिकर्तुरनर्थप्रतिपादकं वाक्यमुदाहृतं तत्र स्पष्टमेवाविदितार्षच्छन्द इति बहुव्रीहिणा सम्बन्धित्वप्रतीतेः । छन्दोज्ञानं वत्सरगणनयेत्युक्तं च । तथान्यत्रापि ।

किं च गायत्रीशब्दप्रवृत्तिनिमित्तगानकर्तृत्वाख्यवाचकत्वस्य अक्षरसङ्ख्याविशेषरूपछन्दस्य योगः । 'वाग्वै गायत्री'ति वाक्यविधानस्य मन्त्रे सम्भवेऽपि सङ्ख्याविशेषेऽसंभवेन पूर्वपक्षिणा साधकत्वेनोपन्यासयोगश्च । तथा च गायत्रीशब्दस्य गायत्रीनामकमन्त्रवाचकतया एव स्वीकर्तव्यत्वात् अधिवेदगतपदार्थस्य वक्ष्यमाणरीत्या वेदगतमन्त्रविषयीकारिरूपतया नाम्न इत्येतदनुरोधेन चाधिवेदगतशब्दान्तरोपलक्षणत्वप्रतिपादनाय तदुपलक्ष्यतया वेदगतानां ब्रह्मत्वेन निर्णेयानां तथाविधशब्दानामेव ग्राह्यतया शब्दान्यसङ्ख्याविशेषात्मकवेदाङ्गछन्दसो ग्रहणमुपलक्षणया अनुपपन्नम् । न च गायत्रीछन्दस्कमन्त्रमात्रपरतया 'चेतोर्पणनिगदात् तथाहि' तावन्मात्राणां पूर्वपक्षविषयत्वं तर्हि प्रसज्यत इति वाच्यम् । इष्टापत्तेः । गायत्रीशब्दस्य छन्दस्कवाचकत्वेऽपि छन्दस्काग्निमीळ





इत्याद्यानामृचां गायत्रीत्वेन प्रचुरव्यवहाराभावेन गायत्रीच्छन्दस्कत्वरूपमपुरस्कृत्य गायत्रीपदरूढिविषयत्वस्यैव तद्वाच्यत्वे निमित्ततया पुरस्कारे कर्तव्ये विष्णुगायत्र्यादावपि गायत्रीपदरूढिसद्भावेऽपि सवितृप्रकाशनसमर्थ-तत्सवितुर्वरेण्यमिति मन्त्र एव सर्वमन्त्रेषु गायत्री वरिष्ठेति गायत्रीपौरुषमित्येतद्विवरणावसरे 'महाव्यावृत्तिभिर्हीना चतुर्विंशतिवर्णकाः । गायत्री प्रोच्यते विबुधैरिहे'ति । महाव्याहृतिभिर्हीना गायत्रीति धरणीप्रश्नोत्तरतयैवेयं गायत्री केवला इति गायत्रीशतकप्रायश्चित्तादिविधानस्थले निर्विशेषितगायत्रीत्यादिव्यवहाराणां वराहपुराणाष्टमाध्यायादौ गायत्र्याभिमन्त्रितेन अंभासा शाम्यतीत्यादौ स्वाध्यायब्राह्मणे यजुर्वेदे तथान्यत्र तत्र शेषितप्रयोगस्य दृष्टत्वात् गायत्र्या चाञ्जलिं गायत्र्यास्त्रिगुणमित्यादिशिष्टप्रयोगाद्धर्मशास्त्रादौ गायत्र्याः प्रत्यहं जपः गायत्रीं शिरसा सहेत्यादि याज्ञवल्क्यादिवचनाद्गायत्र्या इत्यस्य तत्सवितुरिति व्याख्यानाच्च गायत्रीशब्दस्य तत्सवितुरिति मन्त्रवाचकताया एव स्वीकारोपपत्तेः । अत एव वेदमातुरित्यादि विशेषणं मूले । न च तदन्यगायत्र्यामित्यनुपदमेव वक्ष्यामः । सावित्रीपदस्य तत्रास्या माता सावित्रीति वक्ष्यमाणवाक्ये गायत्र्यां प्रयोगेण सवितृप्रकाशकमन्त्रविशेषस्यैव स्वीकार्यत्वाच्च । न च न्यायविवरणटीकायामधिवेदगतानामुष्णिगादिशब्दानामित्यभिधानात् तदनुसारेणात्राभिधान-मिति वाच्यम् । उक्तानुपपत्तेस्तत्रापि तौल्येन तट्टीकाया अनिर्णीतस्वरूपतया अत्रोपष्टम्भकत्वेनोदाहर्तुमशक्य-त्वादिति चेदत्र ब्रूमः । यत्तावदुक्तं गायत्रीशब्दो मन्त्रविशेषवाच्येवेति मूलन्यायविवरणाद्यभिप्रेतमिति तत्तथैवेति वदामः । विषयसंशयपूर्वपक्षादिप्रदर्शनपरमूलादिभ्यस्तथैव प्रतीतेः । उदाहृतवाचकत्वादित्युक्त्यानुकूल्याच्च । न चैवं निर्णये उष्णिगादिशब्दोपलक्षणायोग इत्युक्तमिति वाच्यम् । उष्णिगादिशब्दैरपि गायत्रीशब्देन तच्छन्दस्कतच्छब्दे-नाभियुक्तैर्व्यवह्रियमाणप्रतिपादनवत् उष्णिगादिच्छन्दस्कानां तच्छब्दैः श्रुतिपुराणादौ व्यवह्रियमाणमन्त्रविशेषाणा-मेवोपादानेन तेषु च वाचकत्वादिपूर्वपक्ष्युक्तन्यायावकाशेन दोषाभावात् । न च गायत्रीशब्दस्य व्यक्तिविशेष इवोष्णिगादिशब्दानां व्यक्तिविशेषेषु व्यवहारो नोपलक्ष्यत इति वाच्यम् । आधुनिकानां तावत्परिचितौ तदुपलम्भो-पपत्तेः । अभियुक्तानां तु तदुपलम्भोऽस्त्येव गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यमित्यादि-पूर्वोक्तकल्पतरावुदाहृतवाक्येन वैदिकव्यवहारस्योष्णिगादिशब्दानामपि व्यक्तिविशेषप्राप्तेश्च । अत एव सजातीय-शब्दानामेवोपलक्षणमिति तत्राधिकरणे तादृशशब्दान्तरं दर्शितम् । न्यायविवरणटीकायामप्येवमेवाभिप्रेतम् । तत्त्वप्रदीपेऽपि ओषधकरत्वादुष्णिक् स्वेच्छानुरोधेन स्तोभनादानुष्टुप् त्रिभिर्देवैः स्तूयत इति त्रिष्टुबिति शब्द-व्युत्पादनवत् छन्द्यत्वाच्छन्द इति छन्दःशब्दव्युत्पादनं तु प्रसङ्गतः वेदापरपर्यायच्छन्दःशब्दस्यापि भगवति प्रवृत्तिं दर्शयितुम् । न तु सङ्ख्याविशेषरूपच्छन्दोविशेषोष्णिगादिशब्दानां प्रवृत्त्यभिधानप्रायनिमित्तेन छन्दःसामान्य-वाचिछन्दःशब्दस्य प्रवृत्त्यभिधानम् । उक्तरीत्या पूर्वपक्षादिप्रदर्शनस्य तत्राभिप्रेततया तच्छब्दानामेव भगवति योगस्य प्रदर्शनीयतया मन्त्रवाचिशब्दप्रसङ्गे छन्दःशब्दस्यापि वेदापरपर्यायस्यैव ग्रहणमिति न्यायत्वात् । 'उष्णि-गुष्णास्वरूपत्वात्त्रिदिवैस्तु यते यत' इत्याद्यैतरेयभाष्ये छन्दोऽभिधायिशब्दानां धर्मद्वारा धर्म्युपस्थापकत्वात् तच्छन्दस्केष्वपि प्रवृत्तिरित्याश्रयणेनैव बृहतीसहस्रसम्पत्त्यादिप्रतिपादनमिति मन्त्रा एवाभिप्रेता इति छन्दो-वाचितावंत्तद्युक्तत्ववाचितेति वा उभयत्र प्रयोगादङ्गीकार्यम् । अत एवानुष्टुभमनुचर्चूर्यमाणमित्यादिप्रमाणोदा-हरणम् । दशमाध्याये गायत्रीछन्दसामहमिति गीतायां तु अक्षरगणनारूपछन्दोग्रहणे बाधकाभावात् तद्ग्रहणेऽपि





न दोषः । एवं 'छन्दांसि यस्य पर्णानी'ति पञ्चदशेऽपि अथातः छन्दांस्येव व्यतिषजत्या त्वावहन्तु हरय उपरेषु (?) श्रुणु ह गिर इति गायत्रीश्च पङ्क्तीश्चेत्यादि खण्डादौ गायत्र्यादिपदे ऋग्विशेषप्रतिभाससिद्धेश्च । अथ गायत्रीशब्दे योगरूढ्योः सत्त्वेऽपि योगमात्रपुरस्कारेण सजातीयत्वमुष्णिगादिशब्दानामित्याश्रित्योष्णिगादिछन्दस्कसर्वमन्त्राणा-मुपादानमिति किं नेष्यत इति चेन्न । रूढियोगौ हि पूर्वपक्षयुक्ती । तत्रापि बलवत्तया रूढिरेव मुख्ययुक्तिः । यदि चोष्णिगादिशब्देषु सा नाश्रीयते । तर्हि पूर्वपक्षस्यैवानुदयप्रसङ्गश्चेत्यलम् । तस्मात्साधूक्तं सजातीयानामुष्णिगादि-शब्दानामितीति सूरयो विदाङ्कुर्वन्तु ।

**अधिवेदगतेति** मूलं तु 'अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगैरि'त्यनुभाष्यव्याख्यावसरे अध्यात्म-विषयैरधिभूतविषयैरिति व्याख्यानस्य कृततयाऽधिवेदविषयैरित्यर्थकम् । तदुपपादनं चैवम् । अध्यात्मगादिशब्द इवात्रापि समुदायैकदेशाश्रयणेनाधिकरणाधिकर्तव्यतोपपत्तेरधिवेदगतमन्त्रपरः । गतशब्दः प्राप्त्यर्थो विषयीकारीपर इति । तथा च वेदगतगायत्र्यादिमन्त्रविषयकगायत्रीत्यादिनामात्मकशब्दानामित्युक्तं भवति । इदं च न्याय-विवरणटीकास्थतृतीययोजनानुसारिमूलकारीयाध्यात्मविषयैरिति प्राकृतव्याख्यानानुसारेण व्याख्यानं कृतम् । तत्रत्ययोजनान्तरानुसारेण तु विभक्त्यर्थेऽधीत्येतदव्ययमित्यतोऽधिभूतादिशब्दानां भूतेषु आत्मनि वेदेषु वेदे-ष्वित्येवमर्थः । विषयसप्तम्येषा । गतशब्दश्चावगतपरः । तथा च भूतविषयाः प्रसिद्धा इत्यादिकृत्यार्थवद्वेदविषयाः प्रसिद्धा वेदगता इत्यर्थान्तरं लभ्यन्ते । तथाधिकर्तव्यप्रधानेऽधिकरणेऽधिशब्दः । गतशब्दोऽवगतवाची पूर्ववत् । तथा च भूतेषु वर्तमानाः अवगताः प्रसिद्धाऽधिभूतगता इत्यादिरूपार्थान्तरवद्वेदेषु वर्तमानाः अवगताः प्रसिद्ध इत्यर्थान्तरं च लभ्यत इति ज्ञेयम् । उपलक्षणस्येत्यस्य तन्नाम्न इत्युत्तरेण सम्बन्धः । तस्य च गायत्री-पदोक्ततत्सवितुरिति मन्त्रवाचकगायत्रीति नाम्न इत्यर्थः । इति सिद्धं कृत्वा गायत्र्यादिशब्देषु वेदगतत्वाविशेषे सति गायत्रीशब्दस्यैव छन्दःपदेन सूत्रकारो मुखत उपादानं कृतवानित्यत्र किन्नियामकमित्यतस्तत्र निमित्तकथनाय प्रवृत्तं वेदमातुरित्यादिमूलं योजयति **कुत इत्यादिना** । **उपलक्षणत्वमिति** । उपलक्षणयाऽभिप्रेतत्वमित्यर्थः । **प्राधान्येनेतीति** । गायत्र्या इति सिद्धम् । वेदगतोष्णिगादिमन्त्रेषु गायत्रीमन्त्रस्य प्राधान्येनेत्यर्थः । अर्थस्य प्राधान्याच्च तद्वाचकशब्दप्राधान्यं प्राप्तमिति गायत्रीशब्दस्यैव मुखत उपादानं युक्तमिति भावः । **तत्र हेतुरिति** । गायत्रीशब्दस्य मुखतः समन्वये हेतुभूतं यत्तच्छब्दार्थगायत्रीमन्त्रस्योष्णिगादिमन्त्रेभ्यः प्राधान्यं तत्रेत्यर्थः । मूले **वेदमातुरित्यादि** । वेदमातृशब्दो हि गायत्र्यामेव प्रयुज्यते । 'गायत्री वेदमाता च वेदः पर्वसु गीयते । पर्वभिस्तु जपेद्देवीं न मालाभिः कदाचन ॥' इत्याह्निकनिरूपणस्थले वेदमातेत्युक्तेः । गायत्र्या त्रिवृत्यः क्षिपेदिति वाक्यसमानार्थके कं त्रिः क्षिपे-द्वेदमात्रेति विश्वादर्शवाक्यगायत्र्येत्येतत्स्थाने वेदमातेत्युक्तेः । 'गायत्री छन्दसां मातेदं ब्रह्म स्तुतो मया वरदा वेदमाते'त्यादि वैदिकप्रयोगप्राचुर्याच्च । अभिधानं च तन्त्रसारे 'वेदमाता तु गायत्री'ति प्रकृतगायत्रीपादत्रय-व्याख्यानतया वर्गत्रयात्मकपुरुषसूक्ते तद्वेदः पौरुषं सूक्तमित्यनेनाभिधानाच्च । तथा सर्ववेदार्थत्वं भगवतः प्रति-पादयितुं प्रवृत्तानुव्याख्यानभाष्ययोरोङ्कारार्थव्याहृत्यर्थगायत्र्यर्थपुरुषसूक्तार्थत्वमिति परम्पराश्रयेण तत्सवितुरिति गायत्र्या एव पुरुषसूक्तव्याख्येयत्वसिद्धेश्च । तत्सवितुरिति गायत्रीमन्त्रस्य वेदमातृत्वं च 'गायत्रीं प्राप्य विधिना





मन्त्राध्यायाद्यथोदितम् । अभ्यस्योपासयेत्सन्ध्यां सायमादि ततः पर' इत्यादि वसिष्ठादिवचनेषु समस्तवेद-प्रवृत्तिहेतुत्वादिति भाति । यद्वा वेदेषु मातेति विग्रहः । इतरवेदभागस्य मातृत्वाभावः । गायत्र्यास्तु 'तत्रास्य माता गायत्री'ति वक्ष्यमाणप्रमाणानुसारेण मातृतास्तीति । अत्र पक्षे त्रैवर्णिकित्यादि विशेषणं न पूर्वयोजनायामिव स्वतन्त्रं प्राधान्ये हेतुरपि तु वेदमातृत्वोपपादकतया योज्यम् । **त्रैवर्णिकेति** । यद्यपि गायत्र्या ब्राह्मणमसृजत त्रिष्टुभां राजन्यं जगत्या वैश्यमिति श्रुतेर्गायत्र्या ब्राह्मणजन्मन्येवोपयोगस्तथापि गायत्र्याः प्राधान्योपपादक-गायत्र्याः सर्वच्छन्दोव्याप्त्या सवनत्रयव्याप्त्या वा द्विजातीयद्वितीयजन्मजननीति भामत्युक्तरीत्या त्रैवर्णिकद्वितीय-जन्मनि जननीत्वं युक्तम् । एतच्च कल्पतरावुपपादितम् । एवं हि श्रूयते । चतुरक्षराणि छन्दांस्यग्रे समभवन् । तेषु जगती सोमाहरणाय गतानि त्रीण्यक्षराणि हित्वा आगच्छता एकं हित्वा त्रिष्टुब्रागता । गायत्री तु गत्वा तानि गलितानि चत्वार्यक्षराणि सोमं चाहूतवती । ततः साष्टाक्षराऽभवत् तयैव सवनत्रयमतन्वत याज्ञिका इत्यादे-रुदाहरणात् गायत्र्या ब्राह्मणमुपनयीतेत्यादिवचनानुसारेणोपनयनशब्दार्थप्रतिपाद्येदमेव च त्रैवर्णिकानां द्वितीयं न्मेति च प्रतिपाद्य मातुर्यदग्र इत्यादि वसिष्ठादिवाक्यानां स्मृतिकौस्तुभे उदाहरणाच्च । तत्रैवात्रैवोपपत्तिमाह मनुः । 'तत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नतः । तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते । वेदप्रदाना-दाचार्यं पितरं परिचक्षते' इत्यादेः प्रतिपादनादित्यवधेयम् । अन्यान्यपि वचनानि वेदमातृत्वादिप्रतिपादकानि तत्र तत्रोदाहृतानि ज्ञेयानि ।

**विठ्ठल०**— अधिवेदगतेत्यधिकरणावच्छेदकोपाधिकथनम् । वैदिकशब्दानां बहूनां भावाद्विशिष्य गायत्रीशब्दोपादाने कारणमाह **वेदमातुस्त्रैवर्णिकस्येति** ।

**चषकः**— प्रकृतनयसमन्वेतव्याभिमतगायत्रीनाम्नश्छन्दोभिधायकत्वनियन्त्रितस्वसाजात्यविशेषित-वैदिकाखिलोष्णिगादिशब्दोपलक्षकत्वाशयेनैतन्नयसमन्वेतव्यतावच्छेदकं कीर्तयन्नेव तादृशोष्णिगादिशब्दानामुप-लक्ष्यत्वमेव । उपलक्षकता तु गायत्रीशब्दस्येत्यत्र बीजं दर्शयन् प्रकृतनयसमन्वेतव्यमभिधत्ते **अधिवेदगतेति** । अत्र हेतुः **वेदमातुरित्यादि** ।

**॥ इति गायत्र्यधिकरणसमन्वेतव्यनामनिर्देशनम् ॥**

* * *

**॥ अथ गायत्र्यधिकरणपूर्वपक्षे अभ्यधिकाशङ्कायाः प्रकारद्वयम् ॥**

**॥ तत्रादौ गायत्री ब्रह्म वा वर्णसमावेशलक्षणो मन्त्रो वेति संशयात्मकः प्रथमः प्रकारः ॥**

**११७ सु०— छन्दोगाः पठन्ति । (छां. ३।१२।१) 'गायत्री वा इदं (सर्वं) भूतमि'त्यादि । तत्र संशयः । किं गायत्री ब्रह्म किं (वा) वर्णसमावेशलक्षणो मन्त्र इति ॥ मन्त्र एवेति**





तावत्प्राप्तम् । कुतः । गायत्रीशब्दस्य छन्दोविशेषे प्रसिद्धत्वात् ॥ नन्वेतदपि पूर्वन्यायेनैव परिहृतमित्यतोऽभ्यधिकाशङ्कया पूर्वपक्षयति **नित्यत्वादिति** ।

**अनु०— नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः ।**

भवेदाकाशादिशब्दानां परमात्मपरत्वम्, अन्यगतस्य शब्दप्रवृत्तिनिमित्तस्येश्वरपरतन्त्रत्वेन तत्र मुख्यवृत्त्ययोगात् । यद्यपि विवरत्वादिकं कारणतः स्वरूपतोऽप्यनागन्तुकम्, तथाऽपि धर्मिण एवाकाशादेरुत्पत्तिविनाशवतो जन्मस्थितिलयेष्वीश्वराधीनत्वे धर्मस्यापि तथाभावोऽवर्जनीयः । न चाकाशोऽनादिनित्य इति युक्तम्, 'आत्मन आकाशः संभूत' इत्यादिश्रुतिविरोधात् ।

यस्तु 'अनादिर्वायमाकाश' इत्युक्तोऽव्याकृताकाशः सोऽनादिनित्योऽपि न तत्र पूर्वपक्षिणो विवक्षितः, भूतप्रकरणत्वात् । न चैवं प्रकृते संभवति । गायत्रीशब्दप्रवृत्तिनिमित्तं हि गानत्राणकर्तृत्वम् । यथाऽऽह श्रुतिः, 'गायति च त्रायते च' तस्माद्गायत्रीति (छां. ३।१२।१) । तत्र गानकर्तृत्वं नाम अर्थप्रतिपादकत्वम् । त्राणकर्तृत्वं चाध्येतॄणां पापाद्रक्षणशक्तिः । तदुभयमपि **कथं** केन प्रकारेण **हरेः** अधीनं स्यात्, न केनापि ।

तथा हि । विवरत्वादिवद्धर्मिणा सहैव तदधीनं वा स्यात्, ध्वनिवत्स्वयमेव वा । नाद्यः, धर्मिणः **शब्दस्य** वेदस्य **नित्यत्वात्** अनादित्वाच्च । धर्मिण एव नित्यत्वे तेन सह पराधीनत्वं कुत इति **एवार्थः** । न द्वितीयः, अर्थप्रतिपादनादिशक्तेस्तत्स्वभावत्वात् ।

**परि०**— तत्र हेतुद्वयं **वेदमातुरित्यादि** । **पठन्तीति** । तृतीयेऽध्याये । **एतदपि पूर्वन्यायेनेति** । गायत्रीशब्दार्थो न विष्णुरित्येतदपि निरवकाशब्रह्मलिङ्गरूपेणेन्द्राकाशप्राणज्योतिरादिशब्दानां विष्णवर्थकत्वप्रतिपादनन्यायेनेत्यर्थः । वक्ष्यमाणदिशाऽत्रापि निरवकाशब्रह्मलिङ्गसद्भावादिति भावः । मूलं योजयति **तदुभयमित्यादिना** । नित्यत्वादित्युपलक्षणं मत्वाऽऽह **अनादित्वाच्चेति** । एतच्च कृत्वा चिन्तयोक्तम् । वेदानुपूर्वी(र्वि?) कृत्रिमत्वस्यान्यत्र व्यक्तत्वादिति चन्द्रिकायां व्यक्तम् ।

**गु०दी०— छन्दोविशेषे प्रसिद्धत्वात्** इत्यत्र **छन्दोविशेषे** वेदात्मकमन्त्रविशेषे इत्यर्थः ।





**यादु०**— नित्यत्वस्य प्रकृतानुपयोगादाह **अनादित्वाच्चेति**। एवं च मूले नित्यत्वादित्यनादित्वसाधनायैवोक्तमिति मन्तव्यम्। अत एव न्यायविवरणटीकायां वेदस्य नित्यत्वेनानादित्वादित्युक्तम्। ननु कृतकक्रमविशिष्टवर्णसमुदायरूपस्य वेदस्य कथमनादित्वमिति चेत्। उच्यते। भूतभवद्भविष्यद्भिरखिलैरेकप्रकारेण पठ्यमानत्वरूपं नियतैकप्रकारत्वमेवानादित्वं वेदस्य विवक्षितम्। उक्तं हि तत्त्वनिर्णयटीकायां स्वतन्त्रस्य वक्तुरभावादपौरुषेयत्वमुपपद्यत इति। एतदेव चानादिनित्यत्वमिति। न तु कूटस्थत्वादिरूपं नित्यत्वमनादित्वम्। येन क्रमस्य कृतकत्वेऽपीत्यादिटीकाविरोधः। न चैवमस्मदादिवदीश्वरस्यापि कथञ्चिद्वेदजनकत्वात्तत्स्वभावस्य तदधीनतापत्तिः। एतावता नियतैकप्रकारशब्दस्वभावभूतार्थप्रतिपादनादिशक्तेः पराधीनत्वासंभवेन ईश्वराधीनत्वविघटनोपपत्तेः। अन्यथाऽस्मदाद्यधीनत्वस्याप्यापातात्। स्वातन्त्र्यस्य चेश्वरेऽप्यभावात्। न चैवंविधमनादित्वमाकाशादीनामिति तदुक्तेरभ्यधिकाशङ्काप्रदर्शकत्वमपीति न काचिदनुपपत्तिः। अत्र नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वम्। तच्च वेदानां 'नित्या वेदाः समस्ताश्चे'त्यादिप्रमाणसिद्धमिति तत्त्वसङ्ख्यानटीकाविरोधपरिहारस्तत्पञ्चिकायामस्माभिः प्रदर्शितस्तत्रैवानुसन्धेयः। चन्द्रिकायां तु कृत्वा चिन्तयाऽनादित्वोक्तिरित्युक्तम्।

**वं०प०**— उपपत्तिं तूत्तरत्र वक्ष्याम इति प्रतिज्ञातामुपपत्तिमाह **यद्यपीत्यादिना**। **कारणत इति**। ज्ञानादिकारणद्वाराऽऽगन्तुकं न भवति। अचेतनाश्रितत्वात्। नापि स्वरूपतः स्वभावतः स्वभावत्वादित्यर्थः। **ध्वनिवदिति**। अयावद्द्रव्यभाविनो भूताकाशगुणस्य ध्वनेर्धर्मिणा सह जननाभावेन धर्मिणा सह न तदधीनत्वं किन्तु केवलध्वनेरेव तद्वदित्यर्थः।

**आनन्दः**— ननु कर्तृत्वं कृत्रिमत्वं न च चेतनछन्दोविशेषरूपगायत्र्यां सम्भवतीत्यत आह **तत्र गानकर्तृत्वमिति**। **हरेरधीनं स्यादिति**। तथा च मूलेऽधीनमिति। शेष इत्युक्तं भवति।

**श्रीनिधि०**— **वर्णसमावेशलक्षण इति**। वर्णसमुदायलक्षण इत्यर्थः। नित्योत्पादनादित्वाच्चेति। नान्यत्रानादित्वादित्यलम्। नित्यत्वादिति किमर्थमिति चेन्न। अनादित्वसाधनार्थत्वात्। न च ध्वंसे व्यभिचारः। भावत्वेन विशेषणात्। न च शब्दानुपपत्तिः। साध्यसमुच्चयार्थत्वात्। यद्वा उपपत्तौ तदधीनत्वाभावे अनादित्वहेतुर्मूलोक्तो नित्यत्वहेतुस्तु विनाशे तदधीनत्वाभाव इति द्रष्टव्यम्। मूलोक्तिरूपलक्षणमिति भावः।

**शे०वा०**— अभ्यधिकाशङ्काप्रदर्शनप्रयोजकतया गतार्थताशङ्कामुत्थापयितुं विषयसंशयपूर्वपक्षानाह **छन्दोगा इति**। **पूर्वन्यायेनेति**। अन्तराधिकरणन्यायेनेत्यर्थः।

नन्वाकाशादिशब्दप्रवृत्तिनिमित्तस्यान्यगतस्यापि परमेश्वराधीनत्वात् तत्रैवाकाशादिशब्दानां मुख्यत्ववद्गायत्र्यादिशब्दप्रवृत्तिनिमित्तस्याप्यन्यगतस्य परमेश्वराधीनत्वेन तत्रैव तच्छब्दानां मुख्यत्वसम्भवान्नेयमाकाशादिशब्देभ्योऽभ्यधिकाशङ्केत्यतो न्यायवैषम्यमुपपादयितुं पूर्वाधिकरणसिद्धमाकाशादिशब्दानां भगवति मुख्यत्वं तावदनुवदति **भवेदाकाशादिशब्दानामिति**। **तत्रेति**। भूत इत्यर्थः। **यद्यपीति**। एतच्चाकाशाधिकरणीयाभ्यधिका-





शङ्काप्रदर्शनावसरे व्युत्पादितमनुसन्धेयम् । **न चेति** । तथा च तस्येश्वराधीनत्वासिद्धेर्न तद्धर्मस्यापि तदधीनत्वप्रसङ्ग इति भावः । किं भूताकाशस्यानादिनित्यत्वमुच्यते किंवाऽव्याकृताकाशस्य वेति विकल्पं मनसि निधायाद्यं दूषयति **आत्मन इति** । इति होवाचेति वाक्ये आकाशशब्दार्थत्वेनाव्याकृताकाशस्याविवक्षितत्वान्न द्वितीय इत्याह **यस्त्विति** । इति होवाचेत्यत्राविवक्षैव कुत इत्यत आह **भूतेति** । एवमाकाशादिशब्दप्रवृत्तिनिमित्तस्यान्यगतस्य भगवदधीनत्वादाकाशादिशब्दानां भगवति मुख्यत्वमुपपाद्य गायत्र्यादिशब्देषु तद्वैषम्यमुपपादयति **न चेति** । कुतो गानत्राणकर्तृत्वस्य गायत्रीशब्दप्रवृत्तिनिमित्तत्वमित्यत आह **यथाऽऽहेति** । त्रायते चेत्येव श्रुतिपाठः । अस्तु गानत्राणकर्तृत्वस्य प्रवृत्तिनिमित्तत्वम् । तथात्वेऽपि कुतो न भगवदधीनत्वमित्यतो नित्यत्वादेवेति मूलं योजयितुं विकल्पसमर्पकतया तत्कथं हरेरिति भाष्यखण्डं योजयति **तदुभयमिति** ।

**विवरत्वादिवदिति** । यथा विवरत्वादिकं धर्मिणा सहैवोत्पत्तिस्थितिविनाशेषु भगवदधीनं तथा गानत्राणकर्तृत्वमपि धर्मिणा वेदेन सहैवोत्पत्तिस्थितिविनाशेषु भगवदधीनमित्यभिप्रेतं किंवा धर्मिणो भूताकाशस्योत्पत्तिविनाशयोरभावेऽपि तद्गुणस्य ध्वनेः स्वातन्त्र्येणोत्पत्तिस्थितिविनाशेषु यथा भगवदधीनत्वं तथा धर्मिणो वेदस्योत्पत्त्याद्यभावेऽपि गानत्राणकर्तृत्वरूपस्य तद्धर्मस्य स्वातन्त्र्येणैवोत्पत्तिस्थितिविनाशेषु भगवदधीनत्वमिति विकल्पार्थः । धर्मिण आकाशादेरुत्पत्तिस्थितिविनाशवत्त्वात् तद्धर्मस्य विवरत्वादेर्धर्मिणा सहोत्पत्तिस्थितिविनाशेषु परमेश्वराधीनत्वसम्भवेऽपि प्रकृते धर्मिणो वेदस्यानादिनित्यत्वेनोत्पत्त्याद्यभावात् तद्धर्मस्य गानत्राणकर्तृत्वस्य धर्मिणा सहोत्पत्त्यादौ न भगवदधीनत्वं वक्तुं युक्तमित्यभिप्रेत्य धर्मिणो वेदस्योत्पत्तिनाशाभावोपपादकतया नित्यत्वाच्छब्दस्येति मूलं योजयति **धर्मिणः शब्दस्य वेदस्य नित्यत्वादिति** । नन्वेतावता धर्मिणोऽविनाशात् तत्र भगवदधीनत्वाप्राप्तावप्यनादित्वानुक्त्योत्पत्त्यभावालाभान्न तत्र भगवदधीनत्वसिद्धिरित्यतो नित्यत्वादिति मूलमनादित्वरूपहेत्वन्तरोपलक्षणपरतया योजयति **अनादित्वाच्चेति** । यदर्थं धर्मिणो वेदस्योत्पत्तिविनाशाभावोऽभिहितस्तत्फलसमर्पकतया भाष्यस्यैवशब्दार्थमाह **धर्मिण एव नित्यत्व इति** । अत्र नित्यत्व इत्युपलक्षणम् । अनादित्वे चेत्यपि द्रष्टव्यम् । तेन सह तदधीनत्वमित्यत्र वेदधर्मस्य गानत्राणकर्तृत्वस्येति शेषो द्रष्टव्यः ।

ननु च क्रमविशेषविशिष्टा वर्णा एव वेदो न त्वव्याकृताकाशादिवदर्थान्तरम् । न च वर्णानां देशतः कालतो वा क्रमः सम्भवति सर्वगतत्वान्नित्यत्वाच्च । अत उपलब्धिनिष्ठ एव स वाच्यः । ततश्चोपलब्धेर्जन्यतया तद्गतक्रमोऽपि जन्य इत्येवास्थेयम् । तथा च कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्यानादित्वं बाधितम् । तत्त्वनिर्णयटीकायां क्रमस्य कृतकत्वोक्तेः सिद्धान्तविरुद्धं च । तत्कथमनादित्वस्य साधकतयोपन्यास इति चेन्न । तत्त्वसङ्ख्यानटीकायां नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वम् । तच्च वेदानां नित्या वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धमित्युक्तत्वात् । युक्तं चैतत् । क्रमस्य सदेश्वरबुद्धिस्थत्वादत एवोक्तं विष्णुतत्त्वनिर्णये सर्वज्ञत्वेनेश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वादिति । तट्टीकायां कौटस्थ्यनिषेधस्त्वस्मदादीन्प्रति प्रमापकत्वोपयुक्तस्यास्मदादिबुद्धिस्थस्य क्रमस्योच्चारणाद्यधीनत्वेन कृतकत्वाद्द्रष्टव्यः । अत एव न तस्यानित्यत्वम् । सर्वेषां सर्वथा वर्णविषयकविवक्षितक्रमोपाधिभूतबुद्ध्युपरम एव हि वेदे विनाशो वक्तव्यो न तु घटादीनामिवापरः । न चेश्वरस्य





तथाविधबुद्ध्युपरमो युज्यते तस्य सदा सर्वज्ञत्वात् । अत एव च 'पुराणानामप्यन्यथारचनमेवानित्यत्वमि'ति वचनमुपपन्नम् । एवं चेश्वरबुद्धिस्थक्रमस्य नित्यत्वमनादित्वं चास्मदादिबुद्धिघटितक्रमस्य कृतकत्वमनित्यत्वं चेति तत्त्वसङ्ख्यानतत्त्वनिर्णयटीकयोरविरोध इति द्रष्टव्यम् । यद्वा तर्कताण्डवरीत्या क्रमस्य कृतकत्वेऽपि आधुनिकाध्यापकेन स्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणोत्तरोत्तरदिवसेष्वीश्वरेणापि स्वबुद्धिस्थप्रवाहानादिपूर्वपूर्वकल्पीयक्रमानुसारेणैवोत्तरोत्तरकल्पेष्वपि वेदस्योच्चारितत्वेन स्वातन्त्र्याभावेन नियतानुपूर्वीकत्वरूपापौरुषेयत्वस्यैवेहानादित्वरूपतया विवक्षितत्वान्न बाधादिप्रसङ्गः । सम्मतं चैतत् ग्रन्थकारस्य नियतैकप्रकारकत्वमपौरुषेयत्वमिति पूर्वमुक्तेरिति द्रष्टव्यम् ।

द्वितीयपक्षनिवर्तकतया तत्स्वभावः कथं हरेरिति भाष्यखण्डं योजयति **न द्वितीय इति** । आदिपदेनाध्येतॄणां पापाद्रक्षणशक्तेः सङ्ग्रहः ।

**वा०र०— छन्दोविशेष इति** मूलम् । वेदविशेषसावित्र्यपरपर्यायगायत्रीशब्दवाच्यो मन्त्रविशेष इत्यर्थः । यत्वन्यथाख्यातौ छन्दोविशेषयुक्तमन्त्र इति व्याख्यानम् । तदत्र छन्दःशब्दीयनिर्णयाज्ञानमूलमिति स्पष्टमेव । न्यायविवरणादौ वेदविशेषपदस्यैव प्रयोगेन छन्दःपदस्यैव वेदपरतायाः सिद्ध्या अक्षरसङ्ख्यागणनरूपछन्दःपरत्वाश्रयणेन व्याख्यानायोगाच्चेति ज्ञेयम् । **अन्तराधिकरणेति** । अन्तरादीति योज्यम् । **आकाशादीति** मूले तत्पुरुषबहुव्रीह्योस्तन्त्रेणाभिप्रेतत्वात् । **भगवति मुख्यत्वमिति** । मुख्यत्वमुपपादयंस्तावदनुवदतीत्यर्थः । **व्युत्पादितमिति** । विवरत्वादिकं न तावदागन्तुकज्ञानादिकारणद्वारेत्यादिनेति शेषः । **मुख्यत्वमुपपाद्येति** । मुख्यत्वमित्युपपाद्येत्यर्थः । **श्रुतिपाठ इति** । नात्र त्रैङोङित्वेनात्मनेपदित्वात् त्रायत इति पाठ इत्येवाभिप्रेतम् । येन मित्वा त्रातीति मित्रोऽयमिति ऋग्भाष्यटीकोक्तरीत्या त्रै इत्येव धात्वन्तरस्वीकारोपपत्त्या त्रायतीति परस्मैपदमपि कथञ्चिदुपपादयितुं शक्यमिति वक्तव्यं स्यात् । अपि तु वस्तुतः मूलकोशे आत्मनेपदिनि पाठादुपनिषत्पाठानुसारात् तथा पाठस्य परभाष्ये उपादानाच्च तथैव पाठ इति भाव इत्यपीति बोध्यम् । **तत्कथं हरेरिति भाष्येति** । तत्स्वभाव इति भाष्ये तदिति भिन्नं पदमित्याश्रित्य मूलप्रवृत्तिरिति सूचितमनेनेति ज्ञेयम् ।

**धर्मिणो भूताकाशस्योत्पत्तीति** । अत्र यदा ध्वन्युत्पत्तिविनाशौ न तदा आकाश उत्पद्यते किन्तु सत्येवाकाशे तत्रागन्तुककारणत्वमवधानं निमित्तीकृत्य भगवताऽऽगन्तुक एव ध्वनिरुत्पाद्यते विनाश्यते चेति भावेन **उत्पत्तिविनाशयोरभावेऽपीत्युक्तम्** । तेन सर्वस्योत्पत्तिविनाशाभावप्रतिपादने पूर्वकल्पविरोधादिकमित्यपास्तम् । अत एव स्वातन्त्र्येणेति विशेषणमिति ज्ञेयम् । **हेत्वन्तरोपलक्षणेति** । अनेनैव नित्यत्वस्य प्रकृतानुपयोगादाह **अनादित्वाच्चेतीति** । आदिम(?)न्यथाख्यातीयं व्याख्यानमसदिति सूचितं भवति । न्यायविवरणसम्मतिकथनमप्यसत् । तत्रोत्पत्तिमात्राभावाश्रयणेन पूर्वपक्षप्रवृत्त्या अनादित्वमात्रस्यैव वक्तव्यतया तत्साधकत्वेन नित्यत्वस्योपन्यासोपपत्तेः । नित्यत्वस्योत्पत्तिभावरूपानादित्वसाधकत्वमपि कथं भवतः सङ्गतम् । जन्यभावविनाशित्वनियममाश्रित्य अस्योत्पत्तिमत्वे विनाशप्रसङ्गेन विनाशाभावादुत्पत्त्यभावसिद्धि-





रिति परम्पराभिप्राये च नित्यत्वस्य प्रकृतोपयोगप्राप्त्या तदनुयोगाभावाभिप्रायोऽप्यनुपपन्नः । न्यायविवरण इवात्रोत्पत्तिमात्राभावप्रतिपादनाभावात् । उत्पत्तिविनाशवतो जन्मस्थितिलयेष्वित्युक्तमूलानुसारेणेहापि तदुभयत्रेश्वराधीनत्वनिराकरणस्य सिद्धतया विनाशे भगवदधीनत्वनिराकरणाय नित्यत्वस्यापि पृथगवश्यं वाच्यत्वात् । भवद्योजनायामनादित्वाच्चेति मूलस्थचशब्दायोगप्रसङ्गश्च । विशेषस्तु वाक्यार्थविनोदे द्रष्टव्य इत्यास्तां तावत् । **तदधीनत्वमित्यत्रेति** । प्रकृतभगवत्परं मूलस्थपरपदम् । तदधीनं वेति पूर्वमूले अनुवादानुगुण्यादित्याशयेनार्थानुवादोऽयमिति ज्ञेयम् । एतदधिकरणचन्द्रिकानुसारेण तत्त्वनिर्णयटीकां तर्कताण्डवं च मनसि कृत्वा वेदनित्यत्वमाक्षिप्य समर्थयते । **ननु च क्रमविशेषविशिष्टा इत्यादिना** । अत्र विशेषविचारः कर्तव्योऽस्ति । तत्त्वनिर्णयटीकातत्त्वसङ्ख्यानटीकाचन्द्रिकानां व्याख्यानेषु गुरुराजैरेतत्प्रमेयं निरूपितमस्ति । तद्व्याख्यानेषु क्वचिदप्युपपादनमस्मदीयं सर्वत्र बोध्यम् । अन्यथाख्यातिस्थक्रमविषये उत्पत्तिमतोऽपि नाशाभावप्रतिपादनं च जिज्ञासाधिकरणवाक्यार्थविनोदे दूषितं ज्ञेयम् । **पूर्वमुक्तेरिति** । 'अपि वेदानामङ्गीकार्या हि नित्यते'ति जिज्ञासाधिकरणीयानुव्याख्यानमूले 'ननु कोऽयं वेद' इत्याद्याशङ्क्य क्रमविशेषविशिष्टवर्णो वेदस्तस्य नियतैकप्रकारत्वमपौरुषेयत्वमित्युक्तेत्यर्थः । उपलक्षणं चैतत् । ननु वर्ण एव तावदनित्यादिति जिज्ञासाधिकरणमूले 'न हि वयं वेदं कूटस्थनित्यं ब्रूमः । किन्तु नियतैकप्रकारमि'त्यादेरुक्तेरित्यपि द्रष्टव्यम् । **कथं हरेरिति भाष्यखण्डमिति** । अनेन तत्स्वभाव इत्येकं पदमित्याश्रित्य तत्स्वभावत्वान्न स्वयमेव ध्वनिवत्तदधीनमिति योजयता न कथमपि तत्स्वभावो हरेरधीन इति भाष्यं व्याख्यातं भवतीति सूचयति ।

**विठ्ठल०— वर्णसमावेशलक्षण इति** । चतुर्विंशतिवर्णसमुदायरूप इत्यर्थः । **छन्दोविशेष इति** । छन्दोविशेषनिबद्धे मन्त्र इत्यर्थः । **पूर्वन्यायेनेति** । महायोगविद्वद्रूढिसद्भाव इति न्यायेनेत्यर्थः । **ध्वनिवदिति** । ध्वनेरागन्तुकत्वेन धर्मिणा सह जननाभावादिति भावः । **नित्यत्वानादित्वादिति** । तत्र नित्यत्वमनादित्वोपपादकं अनादित्वस्यैवेह पूर्वपक्षप्रापकत्वादिति ज्ञेयम् । अत एव न्यायविवरणटीकायां तन्मूले नित्यपदसद्भावेऽपि नित्यत्वेनानादित्वादित्युक्तम् ।

**चषकः**— अभ्यधिकाशङ्काप्रदर्शनौपयिकगतार्थताशङ्कोद्भिभावयिषया विषयसन्देहपूर्ववादि मतानि दर्शयति **छन्दोगा इति** । तृतीयेऽध्याय इत्यादिः । **तत्र संशय इत्यादि** । गायत्रीपदप्रतिपाद्यधर्मिकः ब्रह्मत्वानुपूर्वीविशेषविशिष्टवर्णात्मकरूपमन्त्रत्वोभयकोटिकः सन्देहः प्रकृतनयघटक इत्यर्थः । **एतदपि पूर्वन्यायेनेति** । मन्त्र एवेति तावत्प्राप्तमित्येतदपि निरवकाशब्रह्मलिङ्गरूपेणेन्द्राकाशप्राणज्योतिरादिशब्दानां भगवत्तात्पर्यकत्वप्रतिपादनन्यायेनापहस्तितमित्यर्थः । प्रकृतनयसमन्वेतव्यगायत्र्यादिशब्द धर्मिकातिक्रान्तनयसमन्विताकाशादिशब्दावधिकाधिक्यशङ्कौपयिकन्यायवैषम्यप्रतिपिपादयिषया प्राक्तननयसमर्थितमाकाशादिशब्दानां परमात्मनिरूपितशक्तितात्पर्यलक्षणसम्बन्धाख्यसमन्वयवत्त्वमनुवदति **भवेदित्यादि** । **तत्र** भूते । **यद्यपीति** । गगनादावनैसर्गिकं ध्वन्यादिकं स्वाश्रयोत्पादकातिरिक्तकारणद्वारा स्वरूपद्वारा चाश्रयवृत्तिप्रागभावप्रतियोगित्वादागन्तुकम् । विवर-





त्वादिकं तु नैसर्गिकमिति न तथेत्याशयः । **धर्मस्यापीति** । धर्म्यनतिरेकादिति हृदयम् । **तथाभावः** जन्मादिष्वीश्वराधीनत्वम् । **अवर्जनीयः** दुर्निवारः । **न चेति** । तथा च धर्मिण एवेशायत्तत्वं नासैत्सीदिति न तद्धर्मस्यापि तदायत्तत्वं सेत्स्यतीति भावः । **अनादिनित्यः** प्रागभावाप्रतियोगित्वविशेषितध्वंसाप्रतियोगित्ववान् । भूताकाशस्यानादिनित्यत्वमभिधित्सितमव्याकृतस्य वेति कल्पद्वयीमभिसन्दधान आद्यमपहस्तयते **आत्मन इति** । द्वितीयं प्रतिविधत्ते **यस्त्विति** । मौलेन हेतुविभक्त्यन्तेन धर्मिणो विनाशात् तत्रेशानधीनत्वसिद्धावपि अनादित्वानभिधाननिबन्धनोत्पत्तिसाहित्यालाभेन तत्र तदनायत्तता न सेधिष्यतीति मौलतादृशविभक्त्यन्तपदमेवानादित्वांशोपलक्षकमित्याशयेन तादृग्मूलं योजयति **अनादित्वाच्चेति** । धर्मिणोऽनादिनित्यत्वोक्तेः फलं दर्शयति **धर्मिण इति** । प्रथमान्तभावप्रत्ययान्तोत्तरं वेदधर्मस्य गानत्राणकर्तृत्वस्येत्युपस्कार्यम् । ननु वेदस्याव्याकृताकाशवदखण्डार्थरूपताविरहेण नित्यविभुत्वाभ्यां ज्ञानध्वनिसेनादाविव कालिकदैशिकक्रमस्य दुरुपगमतया च तत्तत्सामग्रीजनिततत्तद्वर्णविषयकप्रतीतिगतक्रमस्यैवास्थेयतया क्रमस्य कृतकत्वेऽपीति तत्त्वनिर्णयटीकायां वैदिकक्रमस्य कृतकत्वाभिधानेन कृतिनिर्वर्त्यक्रमविशेषविशिष्टवर्णात्मकपक्षीकृतवेदेनादित्वहेतोः स्वरूपासिद्धिदूषिततया तदुपन्यसनं न सङ्गच्छत इति चेन्न । तत्त्वसङ्ख्यानटीकायां नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वं तच्च नित्याः वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धमित्यभिहिततया विष्णुतत्त्वनिर्णये सर्वज्ञत्वेनेश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वादिति भगवत्पादीयविन्यासेन च तट्टीकायां कौटस्थ्यनिषेधस्यास्मदादीन्प्रति प्रमापकत्वौपयिकास्मदादिप्रतीतिगतक्रमस्योच्चारणाद्यायत्ततया कृतिनिर्वर्त्यत्वतात्पर्यकतया सामञ्जस्यात् । पारमेश्वरतथाविधबुद्ध्युपरतिविरहादेव तस्य नित्यतापि सङ्गच्छते । 'पुराणानामप्यन्यथारचनमेवानित्यत्वमि'ति वचनमत एवोपपद्यते । इत्थं च तत्त्वसङ्ख्यानटीकेश्वरबुद्धिगतक्रमस्यानादिनित्यत्वतात्पर्यिका तत्त्वनिर्णयटीका त्वस्मदादिबुद्धिघटितक्रमस्य कृतिनिर्वर्त्यत्वनाशप्रतियोगित्वतात्पर्यिकेति तयोर्नेतरेतरप्रातिरूप्यमित्यवसेयम् । तर्कताण्डवदिशा क्रमस्य कृतकत्वेऽप्याधुनिकाध्यापकेन स्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणोत्तरोत्तरदिवसेष्विवेश्वरेणापि स्वबुद्धिस्थप्रवाहनादिपूर्वपूर्वकल्पीयक्रमानुसारेणैवोत्तरोत्तरकल्पेष्वपि वेदस्योच्चरितत्वेन स्वातन्त्र्याभावेन नियतानुपूर्वीकत्वरूपापौरुषेयत्वस्यैवेहानादित्वरूपतया विवक्षितत्वान्न बाधादिप्रसङ्गः । सम्मतं चैतद्ग्रन्थकारस्य नियतैकप्रकारकत्वमपौरुषेयत्वमिति पूर्वमुक्तेरिति द्रष्टव्यमित्यपि कल्पान्तरं व्याकर्तारो न्यभांत्सुः ।

**११८ सु०—**

## अनु०— कथं प्रसिद्धबहुलशब्दानामन्यथार्थता ॥

**किञ्चाकाशादिवाक्ये सन्ति पारमेश्वराणि लिङ्गानीति युक्तं तत्र तदाश्रयणम् । न चात्र तथाविधं किमपि पश्यामः । प्रत्युत (छां. ३।१२।१) 'गायत्री वा इदं सर्वं' 'वाग्वै गायत्री' इत्यादयः शब्द एव प्रसिद्धा बहवः शब्दाः श्रूयन्ते । कथं च तेषां, विना**





**बलवद्बाधकोपनिपातेन । अन्यार्थता कल्पयितुं युक्ता, अव्यवस्थाप्रसङ्गात् । न च छन्दसः सर्वात्मकत्वानुपपत्तिः, ब्रह्मणोऽपि साम्यात् ।**

**परि०**— उत्तरार्धं योजयितुमाह **किञ्चेति** । द्वेधा हि शङ्का प्रमेयाश्रिता प्रमाणाश्रिता चेति । पूर्वार्धेनाद्योक्ता अन्त्या तूत्तरार्धेनोच्यत इति किञ्चेत्यारम्भः । **सर्वात्मकत्वेति** । गायत्री वा इदं सर्वं भूतमित्युक्तसर्वात्मकत्वेनेत्यर्थः ।

**यादु०**— **शब्द एव प्रसिद्धा बहव इति** । न च शब्दप्रसिद्धयोर्गायत्रीवाक्शब्दयोर्द्वयोरेवान्यत्र श्रवणात्कथं तेषां बहुत्वमिति शङ्कनीयम् । तयोरेव बहुवारं श्रवणात् । गायत्र्यभिन्नतयोक्तेषु प्रयुक्तपृथिव्यादिशब्दानामपि गायत्रीशब्दत्वमेवेति चाशयात् । **सर्वात्मकत्वेति** । गायत्री वा इदं सर्वमिति वाक्योक्तसर्वात्मत्वानुपपत्तिरित्यर्थः ।

**वं०प०**— बलवद्बाधकोपनिपाताभावेऽप्यन्यार्थताकल्पने को दोष इत्यत आह **अव्यवस्थेति** । शब्दानामिति शेषः । इन्द्रादिसूक्तस्थानामिन्द्रादिशब्दानामप्यग्न्यादिपरत्वं स्यादिति भावः ।

**शे०वा०**— ननु तर्हि 'नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेरि'त्येतावतैवाभ्यधिकाशङ्कया पूर्वपक्षसमर्थनात् 'कथं प्रसिद्धबहुलशब्दानामन्यथार्थते'ति कारिकोत्तरखण्डवैयर्थ्यमित्यतोऽभ्यधिकाशङ्कान्तरप्रदर्शकत्वान्न तस्य वैयर्थ्यमित्याह **किञ्चेति** । **शब्द एव प्रसिद्धा इति** । यद्यप्यत्र शब्दे प्रसिद्धयोर्गायत्रीवाक्शब्दयोरेवात्र श्रवणाद्बहवः शब्दा इति तद्बहुत्वाभिधानमयुक्तम् । तथाऽपि तयोरेव बहुवारं श्रवणाभिप्रायेण वा गायत्र्यभिन्नतयोक्तेषु प्रयुक्तपृथिव्यादिशब्दानामपि गायत्रीशब्दत्वमेवेत्यभिप्रायेण वेदं बहुत्वाभिधानमिति ध्येयम् । मूले कथंशब्देन सूचितं दोषमाह **अव्यवस्थेति** । **सर्वात्मकत्वेति** । गायत्री वा इदं सर्वमिति वाक्योक्तसर्वात्मकत्वेत्यर्थः । तथा च छन्दोविशेष एवेयं गायत्रीति भावः । **साम्यादिति** । तथा च न ब्रह्मापि गायत्रीति भावः ।

**वा०र०**— **इति कारिकेति** । इत्येतावान्यः कारिकाया उत्तरखण्ड इति योज्यम् । **यद्यप्यत्रेति** । गायत्री वा इदमिति वाक्य इत्यर्थः । द्वयोरेवाश्रयणादिति पाठः । अत्रेति द्वितीयमधिकम् । **कथंशब्देन सूचितमिति** । कथमन्यथार्थता । न कथमपि तथा सत्यव्यवस्थाप्रसङ्गादिति भाष्ययोजनमनेन सूचयति ।

**विठ्ठल०**— द्वितीयार्थं योजयितुमाह **किञ्चेति** । **शब्द एव प्रसिद्धा बहवः शब्दा इति** । गायत्री वा इदं सर्वं या वै सा गायत्री वाग्वाव गायत्रीति गायत्री वाक् पदयोरत्र बहुशः आवर्तनात् । गायत्रीविषय एव पृथिव्यादिशब्दानां पठितत्वाद्वा बहव इत्युक्तम् । **छान्दोग्ये शब्दान्तरादर्शनादिति** । अत एव उत्तराधिकरणे वक्ष्यति । **पूर्वाधिकरणे** गायत्र्याद्यन्यवाचकशब्दबाहुल्येऽपि इति । **सर्वात्मकत्वेति** । गायत्री वा इदं सर्वं भूतं यदिदं किञ्चेत्युक्तसर्वात्मकत्वानुपपत्तिः इत्यर्थः ।





**चषकः**— प्रमेयाश्रितशङ्कया पूर्वदलमवतार्य, प्रमाणाश्रितया तयोत्तरदलमवतारयति **किं चेत्यादि** । **बहवः श्रूयन्त इति** । गायत्रीवाक्शब्दयोरेवात्र श्रवणेन बहुत्वाभिधानस्यानुपपन्नताशङ्का समानानुपूर्वीकयोस्तयोरेव क्रियासमभिव्याहारेण श्रवणाशयेन गायत्र्यभिन्नतयोक्तेषु प्रयुक्तपृथिव्यादिशब्दानामपि गायत्रीशब्दत्वमेवेत्याशयेन वा निरसनीया । **सर्वात्मकत्वेति** । गायत्री वा इदं सर्वमिति वाक्याभिहितसर्वात्मकत्वानुपपत्तिरित्यर्थः ।

**॥ इति गायत्री ब्रह्म वा वर्णसमावेशलक्षणो मन्त्रो वेति संशयात्मकः प्रथमः प्रकारः ॥**

* * *

**॥ अथ च गायत्री ब्रह्म वा छन्दो वेति संशयात्मको द्वितीयः प्रकारः ॥**

**११९ सु०— नन्वियमेव गायत्री वाक्यशेषे ज्योतिष्ट्वेन पठ्यते (छां. ३।१३।७) 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्यादिना, ज्योतिश्च पूर्वाधिकरणे ब्रह्मेति निर्णीतम् ।**

**मैवम् । पूर्वाधिकरणोदाहृतवाक्योक्तस्य ज्योतिषो ब्रह्मत्वेऽप्यत्र तदनुपपत्तेः । तत्र हि कर्णादिविदूरत्वमुक्तम्, अत्र पुनः 'तदेतद् दृष्टं च श्रुतं चेति तद्विपरीतम् ॥ युज्यते च ज्योतिरिति पदं छन्दसि, तत्पर्यायस्य 'तेजो वै ब्रह्मवर्चसं गायत्री'ति तेजः-शब्दस्य तत्र दर्शनात् ।**

**अस्तु वा 'अथ यदतः परो दिवो ज्योतिरि'त्युक्तं ज्योतिर्ब्रह्म, तथाऽपि गायत्री छन्द एव, उपदेशभेदेन भिन्नप्रकरणत्वादिति ।**

**परि०**— ननूपक्रमे श्रुतगायत्र्यां कथं ज्योतिःशब्दो युक्त इत्यत आह **युज्यते चेति** । **उपदेशेति** । द्युस्थत्वदिवःपरत्वरूपोपदेशभेदेनेत्यर्थः ।

**यादु०**— साकल्येन कर्णादिविदूरत्वं पूर्वमुक्तम् । अत्र पुनस्तद्योग्यतानुसारेणाधिष्ठानादिद्वारा वा दृष्ट-त्वादिकमुच्यते । अतो न विरोध इत्यरुचेराह **अस्तु वेति** ।

**वं०प०**— **उपदेशभेदेनेति** । त्रिपादस्यामृतं दिवीति पूर्वोपदेशः, परो दिव इति पञ्चम्यन्तः पश्चिम इत्युपदेशभेदेनेत्यर्थः ।

**आनन्दः**— **ज्योतिश्च पूर्वाधिकरण इति** । तथा च गायत्र्यपि ब्रह्मेति वाक्यशेषः । **उपदेशभेदेनेति** । ज्योतिषादितः परत्वस्य गायत्र्याश्च क्वस्थत्वस्योक्तत्वेन सप्तमीपञ्चमीरूपोपदेशभेदेनेत्यर्थः ।





**श्रीनिधि०— उपदेशभेदेनेति**। उपदेशभेदो भाष्ये द्रष्टव्यः।

**शे०वा०— ज्योतिश्च पूर्वाधिकरणे ब्रह्मेति निर्णीतमिति**। यद्यप्यग्निसूक्तस्थस्य ज्योतिषो ब्रह्मत्वं पूर्वाधिकरणे निर्णीतं न तु छान्दोग्यस्थस्यापि तन्निर्णीतमित्ययुक्तमेतदित्याभाति। तथाऽपि ज्योतिर्हृदय आहितं यदित्यग्निसूक्तस्थस्यैव ज्योतिषः छान्दोग्येऽपि ज्योतिःश्रुत्या योऽयमन्तर्हृदय इति हृदयनिहितत्वधर्मेण च शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैकत्वमभिप्रेत्येदमुक्तमिति ध्येयम्। **पूर्वाधिकरणोदाहृत-वाक्योक्तस्येति**। न चैवं सति पूर्वपक्षे पूर्वसिद्धान्तेनाक्षेपाच्चिन्तावैफल्यमिति वाच्यम्। ज्योतिषो गायत्रीत्वे इयं वाव सा येयं पृथिवीति गायत्र्यभिन्नत्वेनोक्तपृथिव्यामस्यां हीदं सर्वं प्रतिष्ठितमित्युक्तस्य स्थितिहेतुत्वादेरपि तद्धर्मत्वापत्त्या जन्मादिसूत्राक्षेपात्। योऽयमन्तर्हृदय इति छान्दोग्यस्थे ज्योतिष्यानन्दमयधर्मभूतहृदयनिहितत्व-श्रवणेन ज्योतिरधिकरणमनाक्षिप्यैवानन्दमयाधिकरणाक्षेपाच्चेति ध्येयम्। ननु कर्णादिविदूरत्वं न सर्वथा कर्णादि-विदूरत्वमिह विवक्षितम्। क्वाप्यसम्भवात्। किन्त्वियदिति परिच्छेदानर्हवैभवत्वमेव। तच्च न दृष्टत्वश्रुतत्वादि-विरुद्धमित्यरुचेराह **अस्तु वेति**। ज्योतिरधिकरणे विष्णौ निर्णीतज्योतिःश्रुत्येति शेषः। **उपदेशभेदेनेति**। दिवः पर इति दिवीति च पञ्चम्युपदेशसप्तम्युपदेशभेदेनेत्यर्थः।

**वा०र०— शाखान्तराधिकरणन्यायेनेति**। आनन्दमयाधिकरणेऽनुक्रान्तमेतत्। चन्द्रिकानुसारेणाह **न चैवं सतीत्यादि**। एवमितरत्रापि तत्र तत्र। **तद्विपरीतमिति** मूलम्। कर्णाद्यगोचरत्वरूपत्वात्तद्विदूरत्वस्य तद्गोचरत्वरूपदृष्टत्वादेस्तद्विपरीतत्वमिति भावः।

**विठ्ठल०**— तदनुपपत्तेरित्युक्तानुपपत्तिं दर्शयति **तत्र कर्णादीति**। **उपदेशभेदेनेति**। त्रिपादस्यामृतं दिवीति गायत्रीप्रकरणे द्युस्थत्वमुपदिश्यते। परो वो ज्योतिरिति ज्योतिषो दिवः परत्वम् इत्युपदेशभेदेनेत्यर्थः।

**चषकः**— ननु **कर्णादिविदूरत्वं** न श्रोत्रादीन्द्रियसामान्यजनितप्रतीतित्वावच्छिन्ननिरूपितविषयता-त्वावच्छिन्नाभावः किन्तु परिच्छित्त्यनर्हताकवैभवयोगित्वमेव। तच्च दृष्टत्वश्रुतत्वादिकं न विरुणद्धीत्यरुचिमनु-सन्दधानः कल्पान्तरमनुसरति **अस्तु वेति**।

**१२० सु०— अथवाऽत्रापि 'अथ यदतः परो दिव' इति वाक्योक्ते ज्योतिषि सन्देहः किं ब्रह्मोतान्यदिति। उपक्रमे गायत्रीशब्दश्रवणादन्यदिति प्राप्तम्। ननु गायत्रीशब्दस्या-प्याकाशादिशब्दवदीश्वरपरत्वोपपत्तेः किमनेनेत्यतो नित्यत्वादित्यादिनाऽभ्यधिकाशङ्क्य-मुक्तेति।**

**परि०— अत्रापीति**। न केवलं ज्योतिर्नय एव ज्योतिषि सन्देह इत्यपेरर्थः।

**यादु०**— नन्वेवं पूर्वपक्षद्वयेऽपि पूर्वाधिकरणसिद्धान्ताक्षेपालाभाद्व्यर्थेयं चिन्तेति चेन्न । पक्षद्वयेऽपीयं वाव सेयं पृथिवीति गायत्र्यभिन्नत्वेनोक्तायां पृथिव्यामस्यां हीदं सर्वं प्रतिष्ठितमित्युक्तस्य स्थितिहेतुत्वादेरपि तद्धर्मत्वापत्त्या जन्माधिकरणाक्षेपो यम् अन्तर्हृदय इत्यानन्दमयधर्मभूतहृदयनिहितत्वश्रवणेनानन्दमयाधिकरणाक्षेपश्चेत्याशयात् । अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्युक्तस्य ज्योतिषो गायत्री वा इदं सर्वमिति गायत्र्या समारम्भः कृत इति भाष्यस्वारस्यानुरोधादाह **अथवाऽत्रापीति** । न्यायविवरणेऽत्राधिवेदगतशब्दसमन्वेतव्यताया उक्तत्वात् तदनुसारेण पूर्वमतमुक्तमित्यवगन्तव्यम् । मतद्वये विषयवाक्यभेदेऽपि प्रमेयमेकमेवेत्यतो न विरोध इति द्रष्टव्यम् ।

**शे०वा०**— न्यायविवरणेऽत्राधिकरणेऽधिवेदगतशब्दसमन्वेतव्यताया उक्तत्वात् तदनुसारेण पूर्वपक्षमुपपाद्याधुना 'अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्युक्तस्य ज्योतिषो गायत्री वा इदं सर्वमिति गायत्र्या समारम्भः कृत' इति भाष्यस्वारस्यानुरोधेन पक्षान्तरमाह **अथवेति** ।

**वा०र०**— पूर्वोत्तरपक्षयोर्मूलकथनेन विरोधं परिहरति **न्यायविवरण इति** । **भाष्येति** । सूत्रभाष्येत्यर्थः ।

**विठ्ठल०**— एवं गायत्र्याः विष्णवन्यत्वे अस्यां हीदं सर्वं प्रतिष्ठितम् इत्युक्तस्थितिहेतुत्वस्यान्यनिष्ठत्वापातात् तेन जन्माधिकरणोक्तमयुक्तं स्यात् इति । 'एतामेव नातिशीयन्त' इत्युक्तसर्वोत्तमत्वस्याप्यन्यनिष्ठत्वप्राप्तेः स एव परोवरीयानित्युक्ताकाशाधिकरणोक्तहेत्वनुपपत्तिः स्यादिति पूर्वपक्षमुक्त्वा प्रकारान्तरेणापि पूर्वपक्षमाह **अथवेति** । अस्मिन् पक्षे तु गायत्र्या विष्णवन्यत्वे प्रागुक्तं ज्योतिरानन्दमयश्च नासाविति तत्त्वप्रकाशिकारीत्या पूर्वपक्षफलं द्रष्टव्यम् ।

**चषकः**— 'इयं वा व सा येयं पृथिवी'ति गायत्र्यभिन्नत्वेनोक्तायां पृथिव्यामस्यां हीदं सर्वं प्रतिष्ठितमित्यभिहितसर्वाधारत्वस्य तद्धर्मताप्रसङ्गेन जन्मादिनयाक्षेपस्य यमन्तर्हृदय इत्यानन्दमयधर्मभूतहृदयनिहितत्वश्रवणेनानन्दमयनयाक्षेपस्य च सम्भवेन चिन्तासाफल्यमवसेयम् । न्यायविवृतौ प्रकृतनयेऽधिवेदगतशब्दसमन्वेतव्यताभिहित्या तदनुरोधेन पूर्ववादिमतमुपपाद्य सम्प्रति 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्युक्तस्य ज्योतिषो गायत्री वा इदं सर्वमिति समारम्भः कृतः इति भाष्याक्षरानुपूर्वीसामञ्जस्यमनुरुन्धानः कल्पान्तरमारचयति **अथवेति** । अत्र छान्दोग्यश्रुतिगतज्योतिःपदाभिधेयस्य गायत्री वेत्युपक्रमेण गायत्रीत्वादग्निसूक्तगततत्पदाभिधेयमपि गायत्रीत्येकं पूर्ववादिमतशरीरम् । तच्छरीरान्तरं तु अग्निसूक्तगतज्योतिःपदप्रतिपाद्यस्य कर्णादिविदूरत्वाद्ब्रह्मत्वेऽपि छन्दोगश्रुतिगततत्पदवाच्यस्य तद्विरुद्धदृष्टत्वादिश्रवणान्न ब्रह्मत्वमिति ।

**॥ इति गायत्री ब्रह्म वा छन्दो वेति संशयात्मको द्वितीयः प्रकारः ॥**

* * *





॥ अथ अभ्यधिकाशङ्काच्छादकत्वेनाधिकरणतात्पर्यम् ॥

१२१ सु०— एतदाच्छादकत्वेनाधिकरणतात्पर्यमाह इति चेदिति ।

अनु०— इति चेत्तद्धरेरेव बाहुल्याच्छ्रुतिलिङ्गयोः ।

'तत्र ब्रूम' इत्यध्याहार्यम् । **तत्** ज्योतिःप्रकरणं गायत्रीप्रकरणं च, **हरेरेव** प्रतिपादकम् । न च गायत्रीपदविरोधः । यतः **तत् हरेरेव** वाचकम् । कथम् । यस्मात् तत् गायत्रीपदप्रवृत्तिनिमित्तं मुख्यतो **हरेरेव** । अन्यगतं च हरेरेवाधीनम् ॥ न च ज्योतिषो ब्रह्मत्वे दृष्टत्वाद्यनुपपत्तिः, यतः **तत्** अधिष्ठानादिद्वारा कर्णादिविदूरस्यैव **हरेः** उपपद्यते । न चोपदेशभेदानुपपत्तिः, यतस्तद्दिवःपरत्वं दिविस्थितत्वं च विवक्षाभेदाद्धरेरेव युज्यते ।

कुत एतत् । **श्रुतिलिङ्गयोर्बाहुल्यात्** । तथा हि 'ततो ज्यायांश्च पुरुषः', 'यद्वैतद्ब्रह्म', 'य एतामेव ब्रह्मोपनिषदं वेदे'ति श्रुतयः । लिङ्गानि च गानत्राणकर्तृत्वं, भूतादिपादत्वम्, 'एतामेव नातिशीयन्त' इति सर्वोत्तमत्वम्, इत्यादीनि । अत एव श्रुतिलिङ्गबाहुल्यात् **तत्** प्रसिद्धबहुलशब्दजातमपि **हरेरेव** इति ।

**परि०**— तद्धरेरेवेति मूलमसकृदावृत्त्याऽनेकधा योजयति **तज्ज्योतिःप्रकरणमित्यादिना** । **यतस्तदिति** । तद्द्रष्टृत्वादिकं देहाद्यधिष्ठानद्वारोपपद्यत इत्यन्वयः । **विवक्षेति** । भाष्याद्युक्तदिशा त्रिसप्तलोकविवक्षाभेदादित्यर्थः । तदित्यनुवादः । प्रसिद्धबहुलशब्दजातमपीति व्याख्या ।

**यादु०**— अधिष्ठानादिद्वारेत्यत्रादिपदेन योग्यतानुसारेण दृष्टत्वादिसङ्ग्रहः । **विवक्षाभेदादिति** । त्रिसप्तलोकापेक्षयेति भाष्योक्तविवक्षाभेदादित्यर्थः ।

**आनन्दः**— तद्धरेरेवेत्यत्र नपुंसकलिङ्गस्तच्छब्दो नोपपद्यते । स्त्रीलिङ्गभूतगायत्र्याः प्रकृतत्वात्तदर्थं सेति वक्तव्यम् । अनन्वयश्च स्यादित्यतो व्याचष्टे **ज्योतिःप्रकरणमिति** । **न च गायत्रीपदविरोध इति** । गायत्रीपदबलेनास्य प्रकरणस्य छन्दोविशेषणत्वस्य निर्णयात् विष्णुपरत्वे तद्विरोधः स्यादित्यर्थः । गायत्रीपदप्रवृत्तिनिमित्तस्य विष्णावभावात्कथं तद्वाचकत्वमिति पृच्छति **कथमिति** । **न च ज्योतिष इति** । तथा चादृश्यत्वादि श्रुतिविरोध इति भावः । अधिष्ठानादीत्यत्रादिशब्देन प्रसादपरिग्रहः । ननु गायत्रीपक्षेऽपि शब्दबाहुल्यसद्भावात्कथं निर्णय इत्यत्राह **अत एवेति** । अस्यैव विवरणं श्रुतिलिङ्गबाहुल्यादिति ।





श्रुतमित्यर्थः । **प्राणोऽस्मीति** । प्रतर्दनं प्रतीन्द्रेण प्रणीतं प्राणोऽस्मि प्रज्ञात्मेति वाक्यमित्यर्थः । जानीहीत्युपक्रम्य प्राणोऽस्मि प्रज्ञात्मेत्यहङ्कारवादेन स एष वक्तुरात्मनोपदिश्यमानः प्राणः कथं ब्रह्म स्यान्न हि ब्रह्मणो वक्तृत्वं सम्भवति । 'अवागमन' इत्यादिश्रुतेरिति पूर्वपक्षांशो व्याकृतः । तत्र वक्तुरिति वचनं न श्रुत्यनुगतम् । श्रुतौ वक्तृपदाश्रवणादित्यर्थः । श्रुत्यननुगतिमभिधायोपदेशादित्यनेनैवोपदेष्टृत्वरूपवक्तृत्वलाभाद्वक्तुरित्यस्य वैयर्थ्यं चेत्याह **वक्तृत्वं हीति** । अतो वक्तुरित्यस्य वैयर्थ्यं चेति पूरणीयम् । नन्वात्मोपदेशादित्यनेन लब्धमपि वक्तृत्वं विग्रहवत्यामिन्द्ररूपदेवतायामेवोपपद्यते न वागादिरहिते ब्रह्मणीत्यतो वक्तृत्वान्यथानुपपत्त्येन्द्र एव ग्राह्य इतीन्द्र-प्रतिपत्त्यर्थं पुनरुच्यतेऽतो न वैयर्थ्यमित्याशङ्क्य निराकरोति **न चेति** । **तदप्रत्यायकत्वादिति** । वाक्करण-व्यापारकत्वरूपवक्तृत्वस्य देवमनुष्यादिसाधारणत्वेन देवताविशेषरूपेन्द्रप्रत्यायकत्वासम्भवादित्यर्थः । मतान्तरे उद्भावितक्षतिद्वयं सिद्धान्ते न प्रसज्यत इत्याह **अस्माकं त्विति** । **विशिष्टशास्त्रेति** । षट्त्रिंशदक्षरबृहती-छन्दस्कसहस्रर्चात्मकशस्त्रशंसनकर्तुरित्यर्थः । तथा च बृहतीसहस्रशंसनस्य श्रुत्युदिततया न वक्तुः इत्यस्य वैयर्थ्यश्रुत्यननुगतत्वे दर्शितयुक्तिसूचकत्वादिति हृदयम् ।

**॥ इति केचित्कृतवाक्योदाहरणानुपपत्तिः ॥**

## ॥ इति पादान्त्यप्राणाधिकरणम् ॥
## ॥ १-१-१२ ॥

* * *



॥ अथ पादोपसंहारः ॥

॥ तत्रादौ पादार्थोपसंहारः ॥

१२८ सु०— पादार्थमुपसंहरति **तस्मादिति**।

अनु०— तस्मादन्यत्रगैः शब्दैरुक्तन्यायैः समन्ततः।
एको नारायणो देवो भण्यते नात्र संशयः॥

**अन्यत्रगैः** नामात्मकैरिति शेषः। **तस्मात्** इत्यस्यैव विवरणम् **उक्तन्यायैरिति**। उक्तो न्यायो येषु ते तथोक्ताः। **समन्ततः** सर्ववेदगतैः। **एको** मुख्यार्थः॥ **नात्र संशय इति**।

लक्षणयाऽयं समन्वयोऽभिधीयत इति केषाञ्चिन्मतं, मुख्यवृत्त्येति सिद्धान्तः; अतोऽविप्रतिपत्तेरत्र संशयो न कार्यो निर्णायकस्योक्तत्वादित्यर्थः।

अथवोक्तेऽपि न्यायेऽनादिवासनानिमित्तोऽन्यस्य मुख्यवाच्यत्वविषयः संशयो न कार्य इत्यनेनाचष्टे।

**परि०— उक्तत्वादिति**। 'कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम्। योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः' इत्यादिना ईक्षतिनये समन्वयसूत्रस्थसंशब्दरूपस्य लक्ष्यत्वेऽनवस्थारूपस्य निर्णायकस्य चोक्तत्वादित्यर्थः।

**यादु०—** ननु करणापेक्षायाः शब्दैरित्यनेनैव पूर्णत्वादुक्तन्यायैरिति किमर्थमित्यतो नोक्तन्यायानां पृथक्करणत्वकर्मधारयाश्रयणेन वैयर्थ्यं किन्तु बहुव्रीह्याश्रयणेन करणभूतशब्दानुग्राहकत्वमेवेत्याशयेनाह **उक्तो न्यायो येष्विति**। **उक्तत्वादिति**। ईक्षत्यधिकरण इति शेषः।

**आनन्दः—** शब्दानां न्यायरूपत्वाभावादाह **उक्तन्याय इति**।

**शे०वा०—** अन्यत्रगैः शब्दैरित्येवोक्ते अन्यत्रप्रसिद्धलिङ्गात्मकानामपि शब्दानामुपादानप्रसङ्गात् तेषां चात्र पादेऽसमन्वितत्वात् क्वचित्समन्वयेऽपि तस्य नामसमन्वयार्थत्वेन तात्पर्याविषयकत्वात्। तथा सति वक्ष्यमाणन्यायैरिति वक्तव्यतयोक्तन्यायैरित्यस्यास्वारस्यप्रसङ्गाच्चेत्यतः शेषं सम्पूर्य व्याचष्टे **नामात्मकैरिति शेष इति**। ननूक्तन्यायैरित्यस्य वैय्यर्थ्यं तस्मादित्यनेनैव तल्लाभादित्यत आह **तस्मादित्यस्यैव विवरणमिति**। ननु





तथाऽप्युक्तन्यायैरित्यस्य न प्रत्येकं भण्यत इत्यनेन सम्बन्धो बाधितत्वादित्यतः शब्दैरित्यनेन विशेषणतया सम्बन्धो वाच्यः । न चायमपि सम्भवति । शब्दानामुक्तन्यायरूपत्वाभावादित्यतो बहुव्रीह्याश्रयणेन कर्मधारयानाश्रयणान्नानुपपत्तिरिति भावेन व्याख्याति **उक्तो न्यायो येषु ते तथोक्ता इति** । गावी गौणीत्यादिभाषाशब्दसाधारण्येन अन्यत्रप्रसिद्धनामात्मकशब्दमात्रस्य समन्तत इत्यनेन ग्रहणे उक्तन्यायैरित्यस्यानुपपत्तिप्रसङ्गात् समन्तत इत्यस्य तात्पर्यमाह **सर्ववेदगतैरिति** । **एको मुख्यार्थ इति** । 'एके मुख्यान्यकेवला' इत्यभिधानादिति भावः । नात्र संशय इत्यप्रसक्तप्रतिषेधोऽनुपपन्न इत्यतः प्रसञ्जकसद्भावान्नाप्रसक्तप्रतिषेधोऽयमिति भावेनाह **लक्षणयेति** । तर्हि तत एव संशयः स्यादेवेति कथं तदभावोक्तिरित्यतोऽभिप्रायमाह **निर्णायकस्येति** । उक्तत्वादीक्षत्यधिकरण इति शेषः ।

**विठ्ठल०— तस्मादित्यस्यैव विवरणमिति** । तस्मादित्यस्य उक्तयुक्तिसमुदायादित्यर्थकत्वादिति भावः । तर्ह्युक्तन्यायादिति स्यादिति चेत् उक्तन्यायोपेतैः शब्दैरिति हेतुगर्भविशेषणत्वादित्याशयेन आह **उक्तन्यायेष्विति** । **उक्तत्वादिति** । "कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम्" इत्यादिनेक्षत्यधिकरणे उक्तत्वादित्यर्थः । **इत्याचष्ट इति** । आप्ततयैवं शिक्षयतीति भावः ।

**॥ इति पादार्थोपसंहारः ॥**

* * *

**॥ अथ सूत्राणामेतेषामेतावन्मात्रार्थताप्रतीतिनिरासः ॥**

**१२९ सु०— सर्वज्ञकल्पेन तत्त्वोपदेशाय प्रवृत्तेन भगवताऽऽचार्येणैवं सूत्रेषु व्याख्यातेषु शिष्याणामेतावन्मात्रार्थान्येतानीति प्रतीतिः स्यात्, तां निराकर्तुमाह वासुदेवादीति ।**

**अनु०— वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः ।**
**अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं प्रति ॥**
**प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथाऽपि वा ।**

वासुदेवादित्वेनेत्यर्थः । **चशब्दो** वक्ष्यमाणपक्षान्तरसमुच्चयार्थः । प्रथमपादान्ते कथनादस्मिन्नेव पाद इति भाति, तन्निरासायोक्तं **सर्वशः** सर्वेष्वपि पादेषु । **अथवेति** निपातसमुदायः पक्षान्तरे । **पञ्चमूर्तिः** नारायणादित्वेन । **प्रति**शब्दो वीप्सायां कर्मप्रवचनीयः । **अथाऽपि वेति** त्रयो निपाता यथाक्रमं प्रतिसूत्रमित्यादिभिस्त्रिभिः सम्बध्यन्ते ।





अत्रेयं मूर्तिः प्रतिपाद्यत इति कथं ज्ञायत इत्यत आह **तैरिति** ।

## अनु०— तैस्तैर्युक्तिश्रुतिन्यायविशेषैः

न्यायशब्दः प्रकारवचनः, श्रुतिलिङ्गव्यतिरिक्तन्यायार्थो वा । तस्यां तस्यां मूर्तौ प्रसिद्धैर्लिङ्गश्रुतिसमाख्यादिव्यावर्तकैर्विवेको ज्ञातव्य इति शेषः ।

ननु चतुर्मूर्तिः पञ्चमूर्तिर्वेति प्रत्यधिकरणं प्रतिसूत्रं वा प्रत्यक्षरं वेति च वस्तु-विकल्पः कथमित्यत आह **योग्यतेति** ।

## अनु०— योग्यता यथा ॥

सर्वेऽपि पक्षाः सूत्रकृतो विवक्षिताः । पुरुषाणां योग्यताऽनतिक्रमेण प्रतीयन्ते । तदपेक्षया विकल्पो युज्यत इति योज्यम् ।

एवमलौकिकार्थत्वं कुतः सूत्राणामित्यत आह बृहत्तन्त्रेति ।

## अनु०— बृहत्तन्त्रप्रमाणेन

एवमर्थत्वं सूत्राणां ज्ञेयमिति शेषः । 'बह्वर्थ' इति वक्ष्यमाणं चा(वा)ऽत्र सम्बध्यते ।

तर्हि कस्मात्तथा न व्याख्यायत इत्यत आह **बह्वर्थमपीति** ।

## अनु०— बह्वर्थमपि सङ्ग्रहात् । उच्यते नरबुद्धीनामपि किञ्चिद्ग्रहार्थतः ॥

सूत्रजातमिति शेषः । **उच्यते** व्याख्यायते ।

बुद्धिशब्दस्य ज्ञानार्थत्वे ग्रहो ग्राह्यं भावप्रधानो निर्देशः । ग्राह्यत्वमेवार्थः प्रयोजनं तस्मै । मनोऽर्थत्वे ग्रहणं ग्रहः ।





**परि०— वीप्सायामिति** । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनव' इति सूत्रेण कर्मप्रवचनीयसंज्ञक इत्यर्थः । तथा च कर्मप्रवचनीययुक्ते द्वितीयेति भावः ।

**गु०दी०— बह्वर्थमिति वक्ष्यमाणम्** इत्यत्र बह्वर्थमपीत्यत्रैव विद्यमानं बह्वर्थपदं एवमर्थत्वमिति परामृष्टं बह्वर्थं सूत्रजातमिति प्रतिज्ञारूपतया पृथक्कृत्य योजनीयमित्यर्थः । बृहत्तन्त्रप्रमाणेन **बह्वर्थमपि** बह्वर्थतया सिद्धमपि सङ्ग्रहादुच्यत इति योजनाऽपि द्रष्टव्या ।

इति श्रीमद्वादिराजपूज्यचरणविरचितन्यायसुधाटिप्पण्यां प्रथमाध्यायस्य प्रथमः पादः ॥

**यादु०— सर्वज्ञकल्पेनेति** । सर्वज्ञादीश्वरादीषन्न्यूनेनेत्यर्थः । तेन ईषदसमाप्तौ कल्पविधानादाचार्याणां च सर्वज्ञत्वात्कथं सर्वज्ञकल्पेनेत्युक्तिरिति शङ्काऽनवकाशः । **प्रतिशब्द इति** । तथा च तद्योगाद् द्वितीयेति भावः । **अतिरिक्तन्यायार्थो वेति** । समाख्यादिरूपन्यायार्थ इत्यर्थः ।

**वं०प०—** ननु वासुदेवादिरूपेणेत्यत्र रूपशब्दोऽधिकः । तथाहि । वासुदेवादिरूपेण चतुःप्रकार इति वाच्यम् । तथा च रूपपदार्थमूर्तिपदास्वारस्यम् । तत्स्वारस्यापेक्षायां तु वासुदेवादित्वेन चतुर्मूर्तिरिति वक्तव्यम् । तथा च रूपपदास्वारस्यमित्याशङ्कायां रूपापरपर्यायमूर्तिपदस्वारस्यायादिपदात्परो रूपशब्दो धर्मपरो विवक्षित इत्याशयेनाह **वासुदेवादित्वेनेत्यर्थ इति** । **सर्वेष्वपि पादेष्विति** । एतदध्यायगतेषु सर्वेष्वपि पादेष्वित्यर्थः । अन्यथा सर्वाध्यायगतपादेष्वित्यर्थकरणे उत्तरत्र युक्तिपादे 'मूर्तीनां वर्णमागमादि'त्यत्र वासुदेवादिरूपेणेत्यनेन पुनरुक्तिमाशङ्क्य तत्परिहारः क्रियते । स न युक्तः स्यादित्यवगन्तव्यम् । **वस्तुनि विकल्प इति** । एकस्याधिकरणादेश्च मूर्तिप्रतिपादकत्वपञ्चमूर्तिप्रतिपादकत्वरूपविरुद्धधर्मद्वयालिङ्गितत्वमित्यर्थः । **तदपेक्षया** योग्यतापेक्षया ।

**आनन्दः—** सूत्रव्याख्यानस्य समाप्तत्वाद्वासुदेवादीत्यनर्थकमत्राह **सर्वज्ञेति** । वासुदेवादिरूपेणेत्यत्र वासुदेवादिः प्रसिद्धं रूपमभिप्रतीयते तत्तु प्रमाणविरुद्धमित्यत आह **वासुदेवादित्वेनेति** । **न्यायशब्द इति** । अन्यथा युक्तिशब्देन पौनरुक्त्यं स्यादिति भावः ।

**शे०वा०—** वासुदेवादीत्यादिभाष्यस्याऽऽनर्थक्यं परिहरति **सर्वज्ञकल्पेनेति** । सर्वज्ञत्वस्येश्वरमात्रनिष्ठत्वात् सर्वज्ञकल्पेनेत्युक्तम् । **वक्ष्यमाणेति** । अथवा पञ्चमूर्तिरित्यनुपदमेव वक्ष्यमाणेत्यर्थः । भ्रान्तिनिवर्तकत्वान्न सर्वश इत्यस्य वैय्यर्थ्यमिति भावेन भ्रान्तिनिमित्तकथनेन तामुपपादयति **प्रथमपादान्त इति** । कथं सर्वश इत्यनेनोक्तभ्रान्तिनिरास इत्यतस्तत्तात्पर्यमाह **सर्वश इति** । **निपातसमुदाय इति** । तथा च नान्यतरवैयर्थ्यमिति भावः । **वीप्सायामिति** । अधिकरणमधिकरणं प्रतीत्येवं वीप्सायामित्यर्थः । **कर्मप्रवचनीय इति** । 'लक्षणेत्थम्भूता-





ख्यानभागवीप्सासु प्रतिपर्यनव' इति स्मरणादित्यर्थः । तथा च कर्मप्रवचनीयप्रतिशब्दयोगात् 'कर्मप्रवचनीययुक्ते द्वितीयेत्यधिकरणमि'ति द्वितीयोपपत्तिरिति भावः । **त्रिभिः सम्बध्यत इति** । तथा चात्र न निपातसमुदायाश्रयणक्लेश इति भावः । **कथं ज्ञातव्यमिति** । व्यावर्तकाभावादिति भावः । **प्रकारवचन इति** । युक्तिशब्देन युक्तेर्गृहीतत्वेन न्यायशब्दस्य तदर्थताया अयोगादिति भावः । **अतिरिक्तन्यायार्थो वेति** । समाख्यादिरूपन्यायार्थ इत्यर्थः । अत एव लिङ्गश्रुतिसमाख्यानादिभिरिति वक्ष्यतीति ध्येयम् । व्यावर्तकाभावशङ्काया मूलेन परिहारसिद्धये व्यावर्तकपरतया विशेषशब्दव्याख्यानं **व्यावर्तकैरिति** । साकाङ्क्षत्वादपेक्षितशेषं पूरयति **विवेको ज्ञातव्य इति शेष इति** । **अत्रापि सम्बध्यत इति** । उपलक्षणं चैतत् । बह्वर्थमिति भावप्रधानत्वं च द्रष्टव्यम् । यद्यप्यत्रापि सूत्राणां ज्ञेयमिति शेषोऽपेक्षित एव । तथाऽपि पूर्वपक्ष इवानेकार्थत्वांशे न तत्पूरणमिति भावेन पक्षान्तराश्रयणमिति बोध्यम् । तया बह्वर्थतया । बह्वर्थस्य बह्वर्थतयाऽव्याख्याने निमित्ताभावादिति भावः । **ग्रहो ग्राह्यमिति** । गृह्यत इति ग्रह इति कर्मसाधनो ग्रहशब्द इति भावः ।

**वा०र०— कल्पेनेत्युक्तमिति** । ईषदसमाप्तौ 'कल्पप् देश्यदेशीयर' इति सूत्रेणेष न्यूनार्थकल्पप्प्रत्यये ईषन्न्यूनो विद्वान् विद्वत्कल्प इत्यादाविवेशन्न्यूनः सर्वज्ञः सर्वज्ञकल्प इति सर्वज्ञकल्पपदे ईषन्न्यूनतायाः उक्तत्वान्नेश्वरलक्षणस्य भाष्यकारेऽङ्गीकारप्राप्तिरिति भावः ।

**विठ्ठल०— सर्वज्ञकल्पेनेति** । ईशे असार्वत्रिकत्वादाचार्यज्ञानस्यैव मुक्तिरिति ध्येयम् । वासुदेवादिरूपैश्चतुर्मूर्तिरिति वक्तव्यम् । अन्यपदार्थानां सङ्कर्षणप्रद्युम्नानिरुद्धानां त्रित्वेन बहुवचनस्यैव युक्तत्वादित्यतोऽत्र रूपशब्दः प्रकारपर इत्यभिप्रेत्याह **वासुदेवादित्वेन इति** । **वीप्सायामिति** । 'लक्षणेत्थंभूताख्या न वीप्सासु प्रतिपर्यनव' इति सूत्रेण कर्मप्रवचनीययुक्ते द्वितीयेति भावः । **न्यायशब्दः प्रकारवचनः इति** । अन्यथा युक्तिशब्देन पौनरुक्त्यापत्तेः इति भावः । न्यायपदस्य युक्त्यतिरिक्तसमाख्यावाक्यप्रकरणादिन्यायपरताविवक्षयोक्तं **समाख्यादिभिरिति** । **कुत** इत्यस्य कुतः प्रमाणादित्यर्थः । **ज्ञानार्थत्व इति** । नरबुद्धीनाम् अल्पज्ञानानां ज्ञानायेत्ययोगान्नरबुद्धीनां सूत्रजातस्य ग्राह्यत्वाय सूत्रजातं व्याख्यायत इत्यर्थोऽङ्गीकार्य इति भावः । **मनोऽर्थत्वे इति** । अल्पमनस्कानां सुबोधायेत्युक्तं भवति ।

**चषकः— वीप्सायामिति** । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनव' इत्यनेन योगेन प्रतिकर्मप्रवचनीयसंज्ञक इत्यर्थः ।

**॥ इति सूत्राणामेतेषामेतावन्मात्रार्थताप्रतीतिनिरासः ॥**

* * *





**॥ अथ भाष्यानुव्याख्यानयोर्बह्वर्थत्वम् ॥**

**१३० सु०—** न चैवं सूत्रार्थलेशव्याख्यानपरोऽयं ग्रन्थ इत्यनादरणीय इत्याशयेनाह **ग्रन्थ इति**।

**अनु०— ग्रन्थोऽयमपि बह्वर्थो**

**समग्रार्थव्याख्यानमकुर्वन्नपि।**

**अयमित्युक्तत्वात्सत्यपि तस्मिन्पुनरस्य विरचनाद्भाष्यमल्पार्थमिति नाशङ्कनीय-मित्याह भाष्यं चेति ।**

**अनु०— भाष्यं चात्यर्थविस्तरम्।**

**अतिशयितेनार्थेन विस्तरो यस्येति व्यधिकरणबहुव्रीहिर्गमकत्वात् ।**

**बह्वर्थत्वमनयोरनुपलम्भबाधितमिति चेन्न । व्याख्यानसामग्रीवैकल्यनिमित्तत्वात् तदनुपलम्भस्येत्याशयेनाह बहुज्ञा एवेति ।**

**अनु०— बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ॥**

**एतयोः भाष्यानुभाष्ययोः।**

**परि०— गमकत्वादिति**। विग्रहेणोक्तार्थस्य प्रत्यायकत्वादित्यर्थः। विग्रहेण योऽर्थ उच्यते तं चेत्समस्तं पदजातं प्रत्याययति तत्र समासो भवति। तादृशार्थोऽत्र समस्तेन गम्यत इति समासः (युक्तः) । कृत्तद्धितसमासा हि अर्थगमक एव शब्दे भवन्ति । न सर्वत्र । अभिधानलक्षणा हि कृत्तद्धितसमासाः इति अकर्तरि च कारक इति सूत्रभाष्योक्तेः । अत एव ग्रामं गच्छतीत्यादौ ग्राम-गामीति कर्मण्यङ्(णि)न भवति कृतः कट इति घञ् न भवति अनभिधानादित्युक्तं भाष्ये । अत एव अविकशब्दादेव तस्य विकार इत्यणप्रत्ययः आविकमित्यनेनाविविकारस्य प्रतीतेः । न तु अवेर्विकार आवमिति आवशब्देनाविविकारस्य अप्रतीतेः आविशब्दाद्विकारार्थकाणप्रत्ययरूपतद्धितो न भवति





किन्त्वविकशब्दादेवेत्युक्तम् । पञ्चभिर्भुक्तमस्येति व्यधिकरणस्थले पञ्च भुक्तवन्तोऽस्येति समानाधिकरणस्थले वाऽनेकमन्यपदार्थे समासो न भवति अनभिधानादित्युक्तम् 'अनेकमि'ति सूत्रभाष्ये । **बहुज्ञा एवेतीति** । तथा च प्रदर्शितमस्माभिस्तत्र तत्र बह्वर्थत्वमिति भावः ।

**यादु०— अर्थेन विस्तर इति** । ततश्च विस्तरशब्दस्य शब्दप्रपञ्चपरस्य 'ऋदोरब्' इत्यब्रा निष्पन्नस्योपपत्तिरिति भावः । षष्ठ्याश्रयणे त्वर्थप्रपञ्चप्राप्त्या 'प्रथने वाव शब्द' इति शब्दातिरिक्तार्थप्रपञ्चविवक्षायां घञो विधानेन विस्तार इति स्यादिति ज्ञातव्यम् । ननु 'समानाधिकरणानां बहुव्रीहिरिष्यत' इति वार्तिककारेण नियमितत्वात्कथमत्र व्यधिकरणबहुव्रीह्याश्रयणमित्यत आह **गमकत्वादिति** । तथा च 'न धातुलोपः आर्धधातुक' इत्यत्र धातुलोपशब्दे षष्ठीगर्भव्यधिकरणबहुव्रीह्याश्रयणाद्यत्र वाक्यार्थगमकता व्यधिकरणबहुव्रीहेः सम्भवति तत्र तदाश्रयणेऽपि न दोष इति वैयाकरणानामभिप्रेतत्वेनोक्तवार्तिकं प्रायिकमिति भावः ।

इति श्रीमन्न्यायसुधाटिप्पण्यां श्रीमद्वेदेशतीर्थपूज्यपादशिष्ययदुपतिविरचितायां
प्रथमाध्यायस्य प्रथमः पादः ॥

**वं०प०—** अयमित्यस्यार्थः समग्रार्थव्याख्यानमकुर्वन्नपीति । अयं सूत्रार्थलेशव्याख्यानपरोऽपि ग्रन्थो बह्वर्थ इति विशिष्योक्त्या भाष्यमल्पार्थमिति सूचितम् । विशिष्यैकस्तुतिरपरनिन्दाभ्यनुज्ञापिकेति न्यायादित्याशयः । हेत्वन्तरमप्याह **सत्यपीति** ।

**आनन्दः—** अयमनुव्याख्यानरूपः । **तस्मिन्** भाष्याख्ये । समानाधिकरणानां बहुव्रीहिरित्युक्तत्वात्कथमेतदित्यत आह **गमकत्वादिति** ।

**श्रीनिधि०— गमकत्वादिति** । समानाधिकरणानामेव बहुव्रीहिरिष्यत इत्युत्सर्गवार्तिकमिति भावः ।

**शे०वा०—** ननु 'प्रथने वावशब्द' इति वावुपपदे प्रपञ्चविवक्षायां स्तृञो घञ्विधानादर्थविस्तारमिति भवितव्यम्, तत्कथमित्यर्थविस्तरमितीत्यतोऽशब्दप्रथनविवक्षायामेव स्तृञो घञ्विधानादर्थप्रपञ्चविवक्षायां घञ्प्रसङ्गेऽपि प्रकृते विस्तरशब्दस्य शब्दप्रपञ्चपरत्वेन घञोऽप्राप्तेः 'ऋदोरबि'त्यनेनाप्प्रत्यय एव युक्त इति भावेनार्थप्रथनव्यावर्तनेन शब्दप्रथनं दर्शयति **अतिशयितेनेति** । ननु 'शेषो बहुव्रीहिरि'त्यधिकारसूत्रस्थशेषपदादप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च लब्धम् । ततश्च कथमतिशयितेनार्थेन विस्तरो यस्येति व्यधिकरणबहुव्रीह्याश्रयणमित्यतः पञ्चभिर्भुक्तमस्येति वैयधिकरण्य इव पञ्च भुक्तवन्तोऽस्येति क्वचित्सामानाधिकरण्येऽपि कण्ठेकाल इत्यत्र तद्दर्शनेन सामानाधिकरण्यवैयधिकरण्ययोरप्रयोजकत्वेन समासस्य विग्रहवाक्यार्थगमकत्वागमकत्वयोरेव बहुव्रीहिसम्भवासम्भवप्रयोजकत्वाद्युक्तो वैयधिकरण्येऽपि गमकत्वात्समास इति भावेनाह **गमकत्वादिति** ।

**वा०र०— ननु शेषो बहुव्रीहिरित्यादि** । एतच्चोपासनापादे भक्तिपादे च व्युत्पादयिष्यते । व्यधिकरणत्वेऽपि गमकत्वात्समास इत्येतत्सर्वभारतार्थस्य सङ्ग्रहो यस्यामिति । बहुव्रीहिमिति गीताभाष्यटीकाव्याख्यानप्रपञ्चेऽस्माभिर्विवृतमस्ति । भक्तिपादीयटीकातट्टीकयोश्च व्युत्पादयिष्यते ।

**स०व्र०—** ननु प्रथने वावशब्द इति अशब्दे प्रथने घञ्प्रत्ययस्य विहितत्वेनात्यर्थविस्तरमिति वक्तव्येऽर्थविस्तरमिति कथमित्यत आह **अतिशयितेनेति** । **गमकत्वादिति** । समासार्थावबोधने समर्थत्वादित्यर्थः ।

॥ श्रीसुधाटिप्पणिका श्रीसत्यव्रततीर्थविरचिता प्रथमाध्यायस्य प्रथमः पादः ॥

**विठ्ठल०— गमकत्वादिति** । अर्थविशेषावगमार्थं हि समासाश्रयणम् । तथा च व्यधिकरणबहुव्रीहेरप्यर्थस्य गमकत्वान्न समानाधिकरणबहुव्रीहिरेवेति नियम इति भावः । **व्याख्यानसामग्रीति** । तथा च महाप्रज्ञावत्वरूपव्याख्यानसामग्रीवैकल्यात् यावदर्थानुपलम्भः इति भावः ।

**चषकः— अर्थेन विस्तर इति** । षष्ठीसमासादरे अर्थसम्बन्धिप्रपञ्चप्रत्यायनेन 'प्रथने वावशब्द' इति शब्दातिरिक्तार्थप्रपञ्चविवक्षायां वौ उपपदे स्तृञो घञो विधानाद्विस्तार इति न्यासेन भवितव्यमिति स नादृतः, तथा च पर्युदस्तशब्दप्रपञ्चस्य विवक्षिततया 'ऋदोरप्' इत्यपा निष्पद्यत इति भावः । ननु 'वृष्टे देवे गतः' पञ्चभिर्भुक्तमस्येत्यादौ बहुव्रीहिवारणाय 'प्रथमाविभक्त्यर्थे बहुव्रीहिः समानाधिकरणानामिति वक्तव्यमि'ति वार्तिकस्यावतीर्णतया कथं प्रकृते व्यधिकरणबहुव्रीह्याश्रयणं सङ्गच्छत इत्याशङ्कायां पञ्च भुक्तवन्तोऽस्येति क्वचित्सामानाधिकरण्येऽपि बहुव्रीह्यदर्शनात् सप्तमीविशेषणे इति लिङ्गात् कण्ठे काल इत्यादिकाचित्कव्यधिकरणस्थलेऽपि तद्दर्शनेन 'न धातुलोप आर्धधातुके' इत्यत्र धातुलोपशब्दे षष्ठीगर्भव्यधिकरणबहुव्रीह्याश्रयणाच्च सामानाधिकरण्यवैय्यधिकरण्ययोर्बहुव्रीहिप्रयोजकताराहित्येन समासस्य विग्रहवाक्यजनितान्वयधीजनकतासत्त्वेन (प्रयोजकतया प्रकृतसमासे तादृशधीजनकतासत्त्वेन ? ) वैय्यधिकरण्येऽपि स सङ्गच्छत इत्याशयेनाह **गमकत्वादिति** ।

**॥ इति भाष्यानुव्याख्यानयोर्बह्वर्थत्वम् ॥**

* * *

**॥ अथ उक्तसमन्वयफलरूपायाः जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणसिद्धेः उपसंहारः ॥**

**१३१ सु०— एवं प्रासङ्गिकमुक्त्वोपपादितस्यान्यत्रप्रसिद्धनामसमन्वयस्य फलं लक्षणसिद्धिमुपसंहरति तस्मादिति ।**





## अनु०— तस्मान्महागुणो विष्णुर्नाम्नामपुनरुक्तितः ।

**सकलवेदगतसमस्तनामवाच्यत्वादित्यर्थः । कथं तन्मात्रेण महागुणत्वम् । नाम्नां यौगिकत्वादपुनरुक्तितश्चेति ॥**

**परि०— लक्षणसिद्धिमिति** । ब्रह्मपदोक्तगुणपूर्णत्वरूपप्रधानलक्षणासिद्धिमित्यर्थः ॥

इति श्रीमन्न्यायसुधापरिमळे सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते प्रथमाध्यायस्य प्रथमः पादः ॥

**वं०प०— लक्षणेति** । साध्यलक्षणेत्यर्थः । यौगिकत्वेऽपि पुनरुक्तत्वेऽपि पुनरुक्तत्वेऽनन्तगुणासिद्धेरपुनरुक्तत्वमपेक्षितम् । अपुनरुक्तत्वेऽपि रूढत्वे 'यच्छब्दा योगवृत्तय' इत्युक्तत्वात् तदसिद्धिप्रसङ्गाद्यौगिकत्वमपेक्षितमित्याशयेन नाम्नां यौगिकत्वादपुनरुक्तितश्चेत्युक्तम् ।

**आनन्दः— फलं लक्षणसिद्धिमिति** । लक्षणसिद्धिरूपं फलमित्यर्थः ।

॥ इति श्रीमन्न्यायसुधाटिप्पण्यां प्रथमाध्यायस्य प्रथमः पादः ॥

**शे०वा०— समस्तनामेति** । समस्तान्यत्रप्रसिद्धनामेत्यर्थः । **कथमिति** । रूढ्या सकलनामवाच्यत्वस्य गुणपूर्त्यसाधकत्वाद्योगेन सकलनामवाच्यत्वे च भगवन्नामाऽऽवृत्तिमात्रत्वप्रसक्तेरिति भावः ।

**विठ्ठल०— लक्षणसिद्धमिति** । गुणपूर्णत्वोपपादकजगज्जन्मादिकारणत्वरूपं लक्षणसिद्धिमित्यर्थः ॥

इति श्रीमद्विठ्ठलाचार्यवर्यतनुजेन आनन्दतीर्थेन रचितायां श्रीमन्न्यायसुधागूढवाक्यार्थविवृतौ
प्रथमाध्यायस्य प्रथमः पादः सम्पूर्णः ॥

**चषकः— बहुज्ञा एवेतीति** । बह्वर्थत्वं तत्र तत्र प्रदर्शितमेवास्माभिरित्यवसेम् । **लक्षणसिद्धिमिति** । ब्रह्मपदंप्रत्यायितगुणपूर्णतारूपं सम्भाव्यप्रधानलक्षणसिद्धिमित्यर्थः । **समस्तनामेति** । श्रुत्यादिव्युत्पादितत्वकोशादिव्युत्पादितत्वान्यतरविशेषितेशेतरप्रसिद्धिकशब्दसामान्येत्यर्थः । **कथमिति** । समुदायवृत्त्योक्तसकलपदाभिधेयत्वस्य गुणपूर्त्यसाधकतया अवयववृत्त्या तादृशापर्यायानन्तशब्दवाच्यत्वोपगमेन तत्प्रवृत्तिनिमित्तानन्तगुणपूर्णता सेत्स्यतीत्यर्थः ।

**॥ इति उक्तसमन्वयफलरूपायाः जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणसिद्धेः उपसंहारः ॥**

* * *





॥ अथ पादान्त्यमङ्गलाचरणम् ॥

**१३२ सु०—**

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृते-
रनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृता-
वयं पूर्वेऽ(र्वा)ध्याये प्रथमचरणः पर्यवसितः ॥

इति प्रथमाध्यायस्य प्रथमः पादः ॥

**वं०प०**— इति श्रीमत्पूर्णप्रज्ञभगवत्पादविरचितस्यानुव्याख्यानस्य टीकायां तत्प्रशिष्यजयतीर्थमुनिविरचितायां विषमपदवाक्यार्थविवृतौ प्रथमाध्याये प्रथमः पादः समाप्त इत्याह **इति श्रीमत्पूर्णप्रमतीति** । **भगवत्पाद**ः पूज्यपादः । उत्तमानां स्वरूपं तु पादशब्देन भण्यत इति वचनात् । **सुकृते**ः समीचीनकृतेः । तत्कृतिविषयस्य तद्विरचितस्येत्यर्थः । **प्रगुणेति** । गुणप्रधानभाव इति प्रयोगात् गुणशब्द उपसर्जनवाची । तथा च तत्प्रशिष्यः शिष्यशिष्येत्यर्थः । शिष्यशिष्यः प्रशिष्यः स्यादित्यभिधानात् । पूर्णप्रज्ञाचार्याणां शिष्याः पद्मनाभतीर्थास्तच्छिष्या अक्षोभ्यतीर्थास्तच्छिष्यत्वादिति भावः । **विषमेति** । विषमाणि दुरधिगमार्थानि यानि पदानि तदुपेतानि यानि वाक्यानि तेषां येऽर्थास्तद्विवृतौ तद्विवरणरूपायामित्यर्थः । प्रथमचरणः प्रथमपादः पर्यवसितः समाप्त इत्यर्थः ॥

॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽगृहीतसुधावाक्यार्थविवरणे
प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥

**श्रीनिधि०**— **विषमपदवाक्येति** । आपाततः प्रतीतार्थे तात्पर्यरहितानीत्यर्थः । अतो युक्त एवायं प्रयास इति भावः ।

शिवादिदेवैः शिरसा सादरं सर्वदा धृताः ।
यत्पादपांसवस्तस्याः भर्तुर्मध्वान् भजेशकान् ॥

प्रथमः पादः समाप्तः ॥

**शे०वा०**— अलङ्कारश्लोके प्रगुणशब्दो ऋजुवाची । ऋजावजिह्मप्रगुणावित्यभिधानादिति द्रष्टव्यम् ।





यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात्।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां
श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ
श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां
श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ
शेषवाक्यार्थचन्द्रिकायां प्रथमाध्यायस्य प्रथमः पादः ॥

**वा०र०— अलङ्कारेति**। अनेनान्त्यश्लोकः स कृतिस्वरूपप्रतिपादनपरोऽप्यकारतयाऽभियुक्तैर्व्यवह्रीयत इति सूचितं भवति। एवं सर्वत्र। मूले **विषमपदवाक्येति**। विषमो भागः 'विषम उपन्यास' इत्यादौ विषमशब्दस्य दुर्गमत्वादिहापि विषमत्वं दुर्गमत्वादिकं ज्ञातव्यमित्यदोषमिति मङ्गलम् ॥

स्वामिचरणसेवात्वबुद्ध्यैवैतद्ग्रन्थकरणमिति चिकीर्षितप्रतिज्ञानन्तरमुक्तं पादान्तेऽपि स्मारयति । अनेनैव सेवात्वेन पादव्याख्यानं गुरावर्पितं भवति । एवमुत्तरत्राद्यन्तयोस्तदर्थमेवैतत्पद्यम् । 'अस्त्वेषा भक्तियुक्ते'ति विवरणप्रमेयसङ्ग्रहान्ते मङ्गलश्लोके प्रयोगाद्गणशुद्धिविरहस्य काव्यदोषतया यतिभङ्गवच्छास्त्रदोषत्वाभावाद्बहुल-भ्रामरसेचकेत्यादिषु दुष्टत्वाच्च 'क्तेति' संयुक्ताक्षराद्यभूत यु इत्येतत्तु षष्ठक्षरस्य संयुक्ताद्यन्ततया गुरुत्वेनार्या-विशेषगतषष्ठाक्षरस्य लघुत्वनियमात् कथमेतदित्यादि कुचोद्यानवकाशः । यदत्र वक्तव्यं तत्प्रथमत एव चिकीर्षितप्रतिज्ञास्थव्याख्यावसरे उक्तं तत एव प्रतिपत्तव्यम् ।

श्रीमन्न्यायसुधागूढशेषवाक्यार्थचन्द्रिका।
सेविता प्रथमे पादे तेन प्रीतो गुरुर्भवेत् ॥

आनन्दाब्धिप्रजातत्रिदशशतगुरुश्रीनिवासानुजश्री-
विद्याधीशाख्यरत्नाद्भुतविदमृतगोः केशवाचार्यवर्यात्।
श्रीरुग्मिण्यां प्रजातस्य विबुधनृसिंहस्यगुर्वीयसौध-
व्याख्यापाठादिशोधात्मकविवृतिकृतौ नामपादः समाप्तः ॥

इति श्रीमत्सकलविद्वद्वृन्दशिखामणि श्रीपाण्डुरङ्गिकेशवाचार्यवर्यनामकश्रीगुरुराजवर्यविरचित-
श्रीमन्न्यायसुधाविषमपदवाक्यव्याख्यानरूपशेषवाक्यार्थचन्द्रिकायाः व्याख्यापाठादिशोधरूपविवृतौ
वाक्यार्थरत्नमालाभिधायां गुरुराजपुत्रपाण्डुरङ्गिनरसिंहसूरिविरचितायां
प्रथमाध्यायस्य प्रथमः पादः ॥





**चषकः— सुकृतेरनुव्याख्यानस्येति** । नीलघट इत्यादेः साधुतावारणाय सीतारामदाराः चञ्चाः पुरुषं पश्य वार्ध्रिकाः(?) पुरुषं पश्येत्यादिसामञ्जस्यानुरोधेनासति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानलिङ्गवचनकत्वमिति नियमस्य स्थिततया कर्त्रर्थकषष्ठ्या समस्तस्य कर्मसाधनक्तिन्नन्तस्य नित्यस्त्रीत्वाद्भावल्युडन्तस्य नित्यक्लीबत्वात् विशेषानुशासनविषयतया समानलिङ्गकत्वाभावेऽपि न क्षतिः । न च ग्रन्थविशेषपरानुव्याख्यानपदस्य भावल्युडन्तत्वायोगेनानुव्याख्यायते परापरतत्त्वादिकमनेनात्रेति करणसाधनत्वस्याधिकरणसाधनत्वस्य वा उपेयतया तादृशस्य च 'कोऽसावनुमान' इति भाष्ये भाषणात् 'यो भावे ल्युट् स नपुंसकः अन्यत्र त्वभिधेयवशादनियतलिङ्ग' इति कैय्यटोक्त्या इध्मप्रव्रश्चनः कुठारः करणं करणी प्रमाणं प्रमाणी गवामयनो देशोपनी(न्नी?)शाला गोदोहनी स्थालीत्यादिदर्शनेन नित्यक्लीबताविरहेण नोक्तदिशा निर्वाह इति वाच्यम् । कर्त्रर्थकषष्ठ्यन्तेन कृतव्यधिकरणबहुव्रीहिकभावसाधनक्तिन्नन्तसुकृतिपदस्य क्लीबस्य भाषितपुंस्कतयाऽनादेरनादिन इत्यादाविव 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्ये'ति विभाषया नुमभाव इति पदद्वयसामानाधिकरण्यसामञ्जस्यमवसेयम् । प्रगुणशब्दो ऋजुवाची । ऋजावजिह्मप्रगुणावित्यभिधानात् ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः ।
मदीयपरिचर्च्चूर्या लेशतो वृणुतान्मयि(पि?) ॥

॥ इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीसत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रगालवपुरी-
श्रीनिवासाचार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां चषकनाम्न्यां
श्रीमन्न्यायसुधाव्याख्यायां प्रथमाध्यायस्य प्रथमः पादः ॥

**ए०बा०**— पादान्तेऽपि मङ्गलमनुष्ठितं निबध्नन्ति **इति श्रीमदित्यादिना ॥ इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना । कृतायां टीकायां विषमपदवाक्यार्थविवृतावयं पूर्वाध्याये प्रथमचरणः पर्यवसितः ॥ १ ॥**

श्रीरस्यास्तीति श्रीमान् तेन श्रीव्यासेन पूर्णा पूरिता प्रमतिः प्रकृष्टविद्या यस्मिन् स तथोक्तः । तदुक्तं सुमध्वविजये 'पुर एव पूरितमपूरयत्पुनर्ननु कृष्ण एष परमार्थसञ्चया । भगवन्मनः पुरमिवायतं पुरा निजधाम तां च जगृहे तदद्भुतमि'ति । भगवान् बुद्धः पादे यस्येति वा । समन्तभद्रो भगवान् इत्यमरः । प्रत्याख्यातबुद्धमतत्वादिति भावः । भगवतो हरेः पादः भिन्नांश इति वा । 'ममैवांशो जीवलोके जीवभूतः सनातन' इति गीतायां श्रीकृष्णोक्तेः । भगवतो हरेः पादो भिन्नांशो विभूतिरूपं यस्मिन्निति वा **भगवत्पादः** श्रीमध्वाचार्यः ॥ ३ ॥

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं' इति गीतायां भगवदुक्तेः । ततः पूर्णप्रमतिशब्देन कर्मधारयः । तस्य **सुकृतेः** शोभना कृतिः यस्य तथोक्तस्यानुव्याख्यानस्य तदभिधग्रन्थस्य ।





अनुव्याख्यानकर्मकृतेः शोभनता चानायासेन निष्पत्तिः । तदप्युक्तं तत्रैव । 'युगपद्रचयन्नेतां कदाचित्सः निरन्तरम् । चतुरश्चतुरः शिष्यान् लीलयाऽलेखयत्खलु' इति ॥ १ ॥

यद्वा श्रीमांश्चासौ पूर्णः पूर्णप्रज्ञाचार्यश्च श्रीमत्पूर्णः नामैकदेशन्यायात् । तस्य प्रमतिरिच्छा । अनुव्याख्यानचिकीर्षेति यावत् । यथा सा तथोक्ता । त्रिविक्रमपण्डिताचार्यकृत 'अनुव्याख्यानं कुरु' इति याचना तया निमित्तेन भगवत्पादेत्यादि प्राग्वत् । तदुक्तं सुमध्वविजये 'ग्रन्थेभ्य एभ्योऽगाधेभ्यो युक्तयो नो दुरुद्धराः । मनोमान्द्यात्ततो ग्रन्थं व्यक्ततर्कततिं कुरु' इत्यर्थितो व्यधान्मध्वः सः **अनुव्याख्यानं** सतां सुधामिति ॥ २ ॥

अथवा श्रीमध्वाचार्येण पूर्णप्रमतिः यस्मिन् स तथोक्तः श्रीपद्मनाभतीर्थः । तदुक्तं पद्मनाभतीर्थं प्रकृत्य सुमध्वविजये 'श्रुत्या मत्या तथा भक्त्या विरक्त्या नित्यसेवया । अस्मै प्रसन्नः प्राज्येक्षः सद्यो विद्यां ददौ शुभामि'ति । तस्मै पद्मनाभतीर्थाय । तस्य भगवत्पादसुकृतेः भगवत्पादस्येति प्राग्वत् । शोभना कृतिः व्याकृतिरिव व्याकृतिः यस्येत्यादि प्राग्वत् । श्रीमदाचार्यपूर्णानुग्रहलब्धविद्यैः श्रीपद्मनाभतीर्थैर्विवृतस्यानुव्याख्यानस्येति यावत् । तच्च पद्मनाभतीर्थकृतं अनुव्याख्यानं श्रीमदानन्दतीर्थकृतानुव्याख्यानव्याख्यानमिव अतिगम्भीरम् । तदुपजीवि च अस्मद्व्याख्यानमिति भावः ॥ ३ ॥

यद्वा 'अग्रणीर्ग्रामणीः श्रीमानि'ति सहस्रनामसु पाठात् 'श्रीमान् लक्ष्मीपतिः पूर्ण' इति प्रकृष्टा मतिर्यथा भवति तथेति क्रियाविशेषणमव्ययम् । भूम्नः क्रतुवज्ज्यायस्त्वमित्यर्थोऽनेनासूचि ॥ ४ ॥

जयः सर्वोत्कर्षः तीर्थे शास्त्रे यस्य स तथेत्याख्या **जयतीर्थाख्या** प्रगुणा ऋज्वी अन्वर्थेति यावत् । जयतीर्थाख्या यस्य स तथोक्तेन **यतिना** । ऋजावजिह्मगुणाविति विशेष्यनिघ्नामरः । प्रगुणः प्रशिष्य इत्यपि व्याचक्षते । 'ये निर्जितेन्द्रियग्रामा यतया यतिनश्च' इत्यमरः । तत्त्वसङ्ख्यानादाविवात्र मङ्गलानुष्ठाननिबन्धने द्रष्टव्ये । शिष्टं स्पष्टम् ॥ १ ॥

**॥ इति पादान्त्यमङ्गलाचरणम् ॥**

**॥ इति पादोपसंहारः ॥**

## ॥ इति प्रथमाध्यायस्य प्रथमः पादः ॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

***





इति

**श्रीमद्बादरायणविरचितानां** वेदार्थनिर्णायकानां श्रीमद्ब्रह्मसूत्राणां
**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य** द्वितीयव्याख्यानस्य **श्रीमदनुव्याख्यानस्य**
**श्रीजयतीर्थविरचितायां** विषमपदवाक्यार्थविवृतौ टीकायां **श्रीमन्न्यायसुधायां**
**परिमळाद्युपेतायां**
**प्रथमाध्याये प्रथमपादः** संपूर्णः ॥

अनेन कर्मणा एतद्ग्रन्थप्रतिपाद्यः
समस्तगुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गतसीतापतिश्रीमन्मूलरामचन्द्रः
प्रीयताम् ।
प्रीतो भवतु ॥

**श्रीकृष्णार्पणमस्तु ॥**

**कायेन वाचा मनसेन्द्रियैर्वा**
**बुध्याऽत्मना वाऽनुसृतःस्वभावम् ।**
**करोमि यद्यत्सकलं परस्मै**
**नारायणायेति समर्पयामि ॥**





# परिशिष्टानि



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ब्रह्मसूत्रानुव्याख्यानम्

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## ॥ आनन्दमयाधिकरणम् ॥

**ॐ आनन्दमयोऽभ्यासात् ॐ ॥ १-१-१२ ॥**

समन्वयारम्भः

एवं शास्त्रावगम्यत्वे विभागेन समन्वयम् ॥ १५४ ॥

आनन्दमय इत्यादिनाऽध्यायेन वदत्यजः ।

प्रथमाध्यायस्य प्रथमपादे अन्यत्रप्रसिद्धनामात्मकशब्दानां समन्वयः

तत्रान्यत्रप्रसिद्धानां विष्णावेव समन्वयम् ॥ १५५ ॥

शब्दानां प्रथमे पादे

आनन्दमयाधिकरणे गुणिसामान्यवाचिनां गुणवाचिनां च समन्वयः

गुणिसामान्यवाचिनाम् ।

गुणवाचिनां च प्रथममाह देवः समन्वयम् ॥ १५६ ॥

आनन्दमयादिपञ्चकस्य विष्णुवाचकत्वम्

समुद्रशायिनं सर्वप्रसूतिप्रभवं श्रुतिः ।





तदेव ब्रह्म परममिति सावधृतिर्जगौ ॥ १५७ ॥

यतोऽतो ब्रह्मशब्दस्य तत्रैव नियतत्वतः ।
येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके ॥ १५८ ॥

अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ।
आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् ॥ १५९ ॥

आनन्दमयशब्दस्य अन्नमयाद्युपलक्षणत्वम्

उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम् ।

यथाश्रुतग्रहणे सूत्राणां सर्वतोमुखत्वानुपपत्तिः

सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये ॥ १६० ॥

पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम् ।

सर्वेषां वेदानां ब्रह्मनिष्ठता

सर्वे वेदा आमनन्ति यत्पदं त्विति हि श्रुतिः ॥ १६१ ॥

सूत्रे आनन्दमयस्यैव निर्देशो कारणम्

आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः ।
समस्ताब्रह्मताप्राप्तेरानन्दमयनाम हि ॥ १६२ ॥

आनन्दमयशब्दस्य अन्नमयाद्युपलक्षणत्वे कारणान्तरम्

ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम् ।

पुच्छत्वाभिधानेऽपि पूर्णत्वावयवित्वाविरोधः

ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वतः ॥ १६३ ॥





यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला।
दर्शिता चैव पार्थाय निःसीमाः शक्तयोऽस्य हि ॥ १६४॥

पूर्वोत्तरार्धयोः भिन्नविषयत्वात्
तापनीयवाक्ये न रुद्रस्य परब्रह्मत्वोक्तिः

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
विष्णवाख्यमुक्तमन्यत्र ह्यूर्ध्वरेतं च तत्प्रति ॥ १६५॥

विरूपाक्षाख्यमपरं ब्रह्मोक्तं तद्व्रते स्थितम्।
समानाधिकृतत्वं चेदुत्तरं नीललोहितम् ॥ १६६॥

कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति।
ब्रह्माधिपतिरित्यत्र तापनीयश्रुतौ पुरः ॥ १६७॥

स्वरितब्रह्मशब्दान्तं बहुव्रीहित्वमेष्यति।
स्वाहेन्द्रशत्रुर्वर्धस्व यद्बहुव्रीहितामगात् ॥ १६८॥

तस्मादस्येन्द्र एवाभूच्छत्रुरित्युत्तरश्रुतेः।
पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमेष्यति ॥ १६९॥

महाव्याकरणे सूत्रमिति स्वरविनिर्णये।
ऋतं सत्यं परं ब्रह्मेत्याद्युद्देश्यद्वितीयका ॥ १७०॥

विभक्तिरूर्ध्वरेतादिः प्रथमा रुद्रगोचरा।
तस्माद्विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः ॥ १७१॥

ऊर्ध्वरेता इति ह्येव श्रुत्यर्थोऽवसितो भवेत्।

उक्तार्थे नीलग्रीवश्रुतिसमाख्यानम्

ऋतं सत्यं परं ब्रह्म प्रति विष्णुं सदाशिवः ॥ १७२॥

ऊर्ध्वरेता ध्यायतीह शङ्करो नीललोहितः।
इत्यर्थमेतमेवाह नीलग्रीवश्रुतिः परा ॥ १७३ ॥

आथर्वणी परं ब्रह्म तस्मादेको हरिः श्रुतौ।

रुद्रस्य परब्रह्मत्वे 'तदेवर्तमि'ति श्रुतिविरोधः

तदेवर्तमिति प्राह कथमेवान्यथा श्रुतिः ॥ १७४ ॥

अवधारयन्ती तस्यैव ह्युतत्वादिकमञ्जसा।
एको नारायण आसीन्न ब्रह्मा न च शङ्करः ॥ १७५ ॥

रुद्रादीनां प्रलयेऽभावाच्च न परब्रह्मत्वम्

वासुदेवोऽग्र एवासीन्न ब्रह्मा न च शङ्करः।
नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः ॥ १७६ ॥

इत्यादिवाक्यतो

विष्णोरुत्पत्तिवाक्प्रादुर्भावविषया

विष्णोरुत्पत्तिरवतारगा।

मुख्यं ब्रह्म हरिस्तस्मात्

'ब्रह्मविदाप्नोति परमि'ति प्रस्तावात् अन्नमयादीनां मुख्यब्रह्मत्वम्

प्रस्तावः परमित्यपि॥ १७७॥

मुख्यब्रह्मग्रहे युक्ते नामुख्यं युज्यते क्वचित्।
असंभवे हि मुख्यस्य गौणार्थाङ्गीकृतिर्भवेत् ॥ १७८ ॥

## ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ

## ॥ १-१-१३ ॥





मयटः पञ्चसु प्राचुर्यार्थत्वम्

प्राचुर्यार्थाश्च मयटः सर्वेऽत्र प्रतिपादिताः ।

अन्नमयादिपञ्चानापि भगवद्वाचकत्वम्

भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेः ॥ १७९ ॥

महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत् ।
महाप्राणो महाबोधो महाविज्ञानवानपि ॥ १८० ॥

मनोविज्ञानयोर्विशेषसामान्यविषयत्वम्

विशेषसामान्यतया विज्ञानं मन इत्यपि ।

अभेदेऽपि भेदप्रतिनिधिविशेषबलेनानेकत्वोक्तिः

एकस्य ज्ञानरूपस्य हरेरुक्तिर्विभागतः ॥ १८१ ॥

अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः ।
भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम् ॥ १८२ ॥

ब्रूयुः हरेर्जीवजडैरपि भेदं हि मुख्यतः ।
ब्रह्मतर्कवचोऽप्येवम्

एकस्यापि हरेः पञ्चधा कथनं युक्तमित्युपसंहारः

अत एकः स पञ्चधा ॥ १८३ ॥

उक्तोऽन्नमय इत्यादि

भृगुवल्लीसंवादः

भृगोश्चैतद्वदिष्यति ।

प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते ॥ १८४ ॥

प्रचुरान्नादिरेवातो ह्यन्नमन्नमयेत्यपि ।
उच्यते ह्यविशेषेण नान्यत्किञ्चिदिहोच्यते ॥ १८५ ॥

## ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ १-१-१४ ॥

लोकचेष्टान्यथाऽनुपपत्त्या विष्णोरानन्दमयत्वसिद्धिः

महानन्दत्व एवास्य हेतुः 'कोऽन्यादि'ति स्फुटम् ।
उक्तः श्रुत्यन्तरे यस्मात्सुखं लब्ध्वा करोत्ययम् ॥ १८६ ॥

करोति नासुखी 'भूमा सुखं नाल्पे सुखं भवेत्' ।
इत्युक्तं यत्प्रवृत्तिश्च नृत्तगानादिका सुखात् ॥ १८७ ॥

दुःखाद्रोदादिका चैव सर्वकर्तृत्वतोऽस्य च ।
सर्वशक्तेर्न दुःखं स्यात् अतः केवललीलया ॥ १८८ ॥

प्रवर्तको न चेदेष प्राण्यादन्याच्च कः पुमान् ।

## ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ १-१-१५ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णे उक्तमेव
अन्नमयादिवाक्यपञ्चके गीयते

ब्रह्मवित्परमाप्नोतीति यत्प्रथमसूचितम् ॥ १८९ ॥

तदेव मन्त्रवर्णेन सत्यं ज्ञानमनन्तवत् ।
लक्षितं तत्र सत्यत्वं सृष्ट्याऽन्नप्राणयोरपि ॥ १९० ॥

उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ।
अनन्तत्वं तथाऽऽनन्दमयवाचाऽप्युदाहृतम् ॥ १९१ ॥

सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते।
इति सृष्टिरिह प्रोक्ता जगत्सद्भावयापकम् ॥ १९२ ॥

ब्रह्मेति स्थापनायैव सत्त्वं जीवनमेव च।
विशीर्णता च सत्त्वं स्यात्सन्नमित्याहुरेव यत् ॥ १९३ ॥

अतोऽद्यताऽच्युताऽनन्त्वं सत्यशब्दार्थ एव हि।
प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ॥ १९४ ॥

आयुः प्राणो हि भूतानामिति यद्गतिजीवने।
उक्ते सदिति धात्वर्थो गतिश्चातो हि सत्यता ॥ १९५ ॥

प्राणत्वं अवबोधार्थो मनुधातुः प्रकीर्तितः।
नाल्पे सुखमिति प्रोक्त्यैवानन्दमयतोक्तितः ॥ १९६ ॥

अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पके।
अतो हि मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया ॥ १९७ ॥

क्रियते परया यस्मात्

**ॐ नेतरोऽनुपपत्तेः ॐ**

**॥ १-१-१६ ॥**

जीवादेः न अन्नमयादिप्रकरणप्रतिपाद्यत्वम्

इतरोऽत्र न कथ्यते।

अन्नमयादीनां जीवादिवाचित्वे तज्ज्ञानान्मोक्षानुपपत्तिः

पुरुषं वेत्ति यो मुच्येन्नान्यः पन्था हि विद्यते ॥ १९८ ॥

इति श्रुतेरन्यवेदी कथं मुक्तिं प्रयास्यति।





पुरुषादिशब्दानां नारायणवाचित्वम्

पुरुषः पर आत्माऽजो ब्रह्म नारायणः प्रभुः ॥ १९९ ॥

महानानन्द उद्विष्णुर्भग ओम इतीर्यते ।
स्वयं नारायणो देवो नान्यस्यैतानि कस्यचित् ॥ २०० ॥

तस्मादोमित्युदाहृत्य यज्ञदानानि कुर्वते ।
सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः ॥ २०१ ॥

इति पैङ्गिश्रुतिस्तेन नान्यज्ञानाद्विमुच्यते ।

चतुर्विधाकाशसृष्टिनिरूपणम्,
हरेराकाशशब्दमुख्यवाच्यत्वम्

ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च ॥ २०२ ॥

तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ।
भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः ॥ २०३ ॥

हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ।
आ समन्तात्काशते यदाकाशो मुख्यतो हरिः ॥ २०४ ॥

चतुर्विधवाय्वग्न्यादिसृष्टिनिरूपणं,
हरेर्वाय्वादिशब्दमुख्यवाच्यत्वम्

बलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् ।
आप आपालनाच्चैव पृथिवी प्रथितो यतः ॥ २०५ ॥

उष्टानामाश्रयत्वेन स एवौषधिनामकः ।
ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् ॥ २०६ ॥





पुरुषशब्दस्य मुख्यतो हरिवाचकत्वम्

पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते ।

जनिस्वरूपनिरूपणम्

क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः ॥ २०७ ॥

आकाशादिषु नान्यास्ति ह्यभिमानोऽभिमानिनः ।
अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भवः ॥ २०८ ॥

'स वा एष' इति श्रुत्यर्थः

एवं देहादिपर्यन्तमागतं हरिमेव तु ।
परामृशति तस्यैव पञ्चरूपत्ववित्तये ॥ २०९ ॥

त्यक्त्वा भूतादिकं सर्वं स वा एष इति श्रुतिः ।
स इत्यात्मपदोद्दिष्ट एष जीवशरीरगः ॥ २१० ॥

सारान्नमय एवायं न लोकान्नमयः प्रभुः ।
इति तं रसशब्देन विशिनष्टि शरीरगम् ॥ २११ ॥

'तस्येदमेव शिर' इत्यादिश्रुत्यर्थः

इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः ।
शिर आदेर्भवेज्जीवशिर आदौ व्यवस्थितेः ॥ २१२ ॥

प्राणमयज्ञानान्मोक्षकथनात् प्राणमयो नान्यः

तं विदित्वाऽस्य मुक्तिः स्यान्नान्यज्ञानात्कथञ्चन ।

**ॐ भेदव्यपदेशाच्च ॐ ॥ १-१-१७ ॥**

जीवब्रह्मणोरभेदो नात्र विवक्षितः

आदित्ये पुरुषे चायमिति भेदोपदेशतः ॥ २१३ ॥

नास्याभेदोऽस्ति जीवेन

**ॐ कामाच्च नानुमानापेक्षा ॐ ॥ १-१-१८ ॥**

प्रत्यक्षागमविरुद्धस्यानुमानस्य नाभेदसाधकत्वम्

नानुमा कामचारिणी ।
विमतानि शरीराणि मद्भोगायतनानि यत् ॥ २१४ ॥

शरीराणीत्यादिका तु तत्त्वज्ञाने ह्यपेक्ष्यते ।
प्रत्यक्षादिविरुद्धत्वात् अक्षागमभयोज्झिता ॥ २१५ ॥

अनुमा कामवृत्ता हि कुत्र नावसरं व्रजेत् ।
जड आत्मैव वस्तुत्वात्प्रमेयत्वाज्जडं चितिः ॥ २१६ ॥

घन आकाश इत्याद्या वार्यन्ते केन हेतुना ।

तात्पर्यभेदात् भेदसूत्राणां न पुनरुक्तता

न जीवभेदसूत्राणां शङ्क्याऽत्र पुनरुक्तता ॥ २१७ ॥

वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णता ।

**ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ**
**॥ १-१-१९ ॥**

अन्नमयादीनां कोशपरत्वनिरासः

योगमन्नमयाद्यैर्यत्फलत्वेनास्य शंसति ॥ २१८ ॥





स्थानद्वयेऽप्यतः कोशा एत इत्यतिसाहसम्।
उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति ॥ २१९ ॥

अतिक्रमं वदन्तं तमुपशब्दो निवारयेत्।
अश्रुतस्यातिशब्दस्य स्थानं दद्यात्कथं पुनः ॥ २२० ॥

श्रुताश्रुतपरित्यागकल्पने विगतह्रियाम्।
मृतावेव परित्यागः कृतो ह्यन्नमयस्य च ॥ २२१ ॥

ये(यो?)ऽन्नं ब्रह्मेत्याद्युपासां सामानाधिकरण्यतः।
उक्त्वा पञ्चस्वरूपाणां पुनस्तत्प्राप्तिवादिनी ॥ २२२ ॥

स्थानद्वयगता वेदवाणी तदपलापिनाम्।
तमसोऽन्यत्र संस्थानं कथमेव सहेत सा ॥ २२३ ॥

भृगुवल्युक्तान्नादयोऽपि ब्रह्मैव

अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकम्।
आह ब्रह्म कथं तन्न द्वारं तदितिवादिनः ॥ २२४ ॥

उपसत्तिं कथं विद्युः उपसन्नाय हि त्रिशः।
वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वा ॥ २२५ ॥

सकृद्धेत्यागमा ब्रूयुः संप्रदायविदोऽपि च।
तद्यत्किञ्चित्कथं ब्रूयादुपसन्नाय दिक्पतिः ॥ २२६ ॥

न वदेद्ब्रह्म च कथं मायावी न हि वारिराट्।

चक्षुरादिशब्दा अपि ब्रह्मवाचिनः

चष्ट इत्येव तच्चक्षुः श्रवणाच्छ्रोत्रमुच्यते ॥ २२७ ॥
वचनादेव वाग्ब्रह्म सृष्टिस्थित्यादिकारणम्।

वल्लीद्वयेऽपि ब्रह्मणः अष्टरूपोपदेशः

तच्च वाधूलशाखायामष्टरूपमुदाहृतम् ॥ २२८ ॥

विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः ।
आवापोद्वापतः शाखा यत आहुः परं पदम् ॥ २२९ ॥

लब्धोपदेशस्य भृगोः पुनः उपसर्पणं भगवद्रूपान्तरसाक्षात्कारार्थम्

यतो भूतानि जायन्त इत्याद्यैर्लक्षणैः स्वयम् ।
लक्षितं गुरुणा पश्चात्तपसैवापरोक्षितम् ॥ २३० ॥

दृष्ट्वैकैकस्वरूपं तु समस्तोक्तानुदर्शनम् ।
इच्छताऽऽज्ञां गुरोः प्राप्य तपसैवापरोक्षितम् ॥ २३१ ॥

अन्नादीनामब्रह्मत्वे श्रुतहानिरश्रुतग्रहः

अब्रह्मेत्येव वदतां श्रुतहान्यश्रुतग्रहौ ।
साक्षाल्लक्षणतां प्राप्ताविति लज्जा तदुक्तिषु ॥ २३२ ॥

मोक्षे उपदिष्टो भेदः न मिथ्या

समीपे सहभोगस्य मुक्तित्वेनोक्तितोऽसकृत् ।
भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत् ॥ २३३ ॥

अन्नमयादिचतुर्णां कोशत्ववादिनां भास्करादीनां मतनिरासः

एतेन मयटश्चैव द्वैविध्येनार्थकल्पनात् ।
तदन्येषां मतमपि सत्संसत्सु न भासते ॥ २३४ ॥

अधिकरणार्थोपसंहारः

अतो नारायणो देवो निश्शेषगुणवाचकैः ।





गुणिसामान्यवचनैरपि मुख्यतयोदितः ॥ २३५ ॥

अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगैः ।
अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः ॥ २३६ ॥

सकलशब्दानां भगवत्येव समन्वयः

जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ।
ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः ॥ २३७ ॥

अन्वयः सर्वशब्दानां गुणसर्वस्ववेदकः ।

सर्वशब्दानामीश्वरे महायोगः अन्यत्र योगमात्रम्

शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात् ॥ २३८ ॥

अन्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा ।
तद्वाचकत्वं शब्दानां बहुलातिप्रयोगतः ॥ २३९ ॥

विद्वदविद्वद्रूढी

रूढमित्येव साध्यं स्यात् रूढिर्हि द्विविधा मता ।
अविद्वद्विद्वदास्यैव मुख्या हि विदुषां तु सा ॥ २४० ॥

विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यते ।
तस्मान्मुख्यार्थता विष्णोः इति कृत्वा हृदि प्रभुः ॥ २४१ ॥

समन्वयं साधयति

॥ इति आनन्दमयाधिकरणम् ॥ ६ ॥



# ॥ अन्तस्थत्वाधिकरणम् ॥

अधिदैवगतशब्दसमन्वयः

**ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ १-१-२० ॥**

इन्द्रादिशब्दानामिन्द्रादिषु महायोगविद्वद्रूढी इत्यभ्यधिकाशङ्कया पूर्वपक्षः

देवानां तत्र शक्तताम् ।

आशङ्क्य तत्र रूढिं च

निरवकाशविष्णुलिङ्गैः इन्द्रादिशब्दा विष्णुवाचकाः, विष्णावेव विद्वद्रूढिः महायोगश्च

तच्छब्दानामपि स्वयम् ॥ २४२ ॥

समुद्रान्तःस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढताम् ।

साधयित्वा

**ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ १-१-२१ ॥**

अन्तःप्रविष्टस्य इन्द्रादिदेवेभ्यो न अभेदः

अभिदां तैश्च पुनरेव न्यवारयत् ॥ २४३ ॥

॥ इत्यन्तस्थत्वाधिकरणम् ॥ ७ ॥

# ॥ आकाशाधिकरणम् ॥

अधिभूतविषयशब्दसमन्वयः

**ॐ आकाशस्तल्लिङ्गात् ॐ ॥ १-१-२२ ॥**

आकाशशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वाभावान्नाकाशशब्दवाच्यो हरिरित्याक्षेपः

चेष्टा हि चेतनानां या सा भवेत्तत्प्रसादतः ।





अचेतनस्वभावस्तु विवरादिः कथं ततः ॥ २४४ ॥
इति शङ्कानिवृत्त्यर्थम्

निरवकाशविष्णुलिङ्गैः आकाशशब्दवाच्यो हरिरेव

आकाश इति नाम च ।
'परतोऽपि वरीयस्त्वपूर्वाल्लिङ्गाद्धरेर्भवेत् ॥ २४५ ॥

आकाशस्य अवकाशदातृत्वमीश्वरायत्तम्

नभो ददाति श्वसतां मार्गं यन्नियमाददः ।
इत्यादिवाक्यैः

इत्याकाशाधिकरणम् ॥ ८ ॥

## ॥ प्राणाधिकरणम् ॥

प्राणाद्याध्यात्मिकशब्दसमन्वयः

**ॐ अत एव प्राणः ॐ ॥ १-१-२३ ॥**

अन्वयव्यतिरेकाभ्यां मुख्यप्राणस्य जीवनहेतुत्वदृष्टेः स एव प्राणशब्दवाच्य इत्यभ्यधिकाशङ्का

अध्यात्ममन्वयव्यतिरेकतः ॥ २४६ ॥
प्राणादिहेतुतादृष्टेः

प्रबलविष्णुलिङ्गैः प्राणादिवाच्यो हरिरेव

अतिदेशो हि तादृशः ।

लिङ्गं बलवदेव स्यात् प्रेरकोऽस्यापि यद्धरिः ॥ २४७ ॥

इति प्राणाधिकरणम् ॥ ९ ॥





## ।। ज्योतिरधिकरणम् ।।

**ॐ ज्योतिश्चरणाभिधानात् ॐ ।। १-१-२४ ।।**

इति ज्योतिरधिकरणम् ।। १० ।।

* * *

## ।। गायत्र्यधिकरणम् ।।

गायत्र्याद्यधिवेदगताशेषनामसमन्वयः

**ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ**
**।। १-१-२५ ।।**

नित्यस्य शब्दस्य तत्स्वभावस्य च ईश्वरानधीनत्वात्
गायत्र्यादिशब्दानां न विष्णुवाचकतेत्यभ्यधिकाशङ्का

नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः ।
कथं प्रसिद्धबहुलशब्दानामन्यथार्थता ।। २४८ ।।

इति चेत्

श्रुतिलिङ्गबाहुल्यात् गायत्र्यादिवाच्यः हरिरेव

तद्धरेरेव बाहुल्याच्छ्रुतिलिङ्गयोः ।

**ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ।। १-१-२६ ।।**

**ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ**
**।। १-१-२७ ।।**





नित्यस्यापि ईश्वरशक्त्यधीनत्वम्

तादृशत्वाच्च तच्छक्तेः

इति गायत्र्यधिकरणम् ॥ ११ ॥

* * *

## ॥ अन्तिमप्राणाधिकरणम् ॥

### ॐ प्राणस्तथानुगमात् ॐ
### ॥ १-१-२८ ॥

श्रुतिलिङ्गबाहुल्यात् प्राणशब्दमुख्यवाच्यः इन्द्रादिरिति पूर्वपक्षः

बाहुल्ये श्रुतिलिङ्गयोः॥ २४९ ॥

अन्यस्य मुख्यवाच्यत्वमिति

एतानि श्रुतिलिङ्गानि विष्णौ सावकाशानि

तन्मात्रगस्य हि।
विष्णावेव तु लिङ्गानि प्राणस्थानि तु सर्वशः ॥ २५० ॥

### ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन् ॐ
### ॥ १-१-२९ ॥

प्राणसंवादपूर्वाणि मुख्यतो जीवगानि च।
अभ्यार्चच्छतवर्षाणि प्राणवंशत्वमित्यपि ॥ २५१ ॥

### ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ
### ॥ १-१-३० ॥

**ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ**
**॥ १-१-३१ ॥**

॥ इत्यन्तिमप्राणाधिकरणम् ॥ १२ ॥

***

पादार्थोपसंहारः

तस्मादन्यत्रगैः शब्दैरुक्तन्यायैः समन्ततः ।
एको नारायणो देवो भण्यते नात्र संशयः ॥ २५२ ॥

वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः ।
अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं प्रति ॥ २५३ ॥

प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथाऽपि वा ।
तैस्तैर्युक्तिश्रुतिन्यायविशेषैः योग्यता यथा ॥ २५४ ॥

बृहत्तन्त्रप्रमाणेन बह्वर्थमपि सङ्ग्रहात् ।
उच्यते नरबुद्धीनामपि किञ्चिद्ग्रहार्थतः ॥ २५५ ॥

ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ॥ २५६ ॥

तस्मान्महागुणो विष्णुर्नाम्नामपुनरुक्तितः ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्यायस्य प्रथमः पादः ॥

***



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

**श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य प्रप्रथमटीका**

**श्रीपद्मनाभतीर्थविरचिता**

# सन्न्यायरत्नावली

## ॥ आनन्दमयाधिकरणम् ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

१५४* वृत्तवर्तिष्यमाणयोः सङ्गतिमाह **एवमिति**।

१५५ पूर्वं सामान्येन शास्त्रसमन्वयो ब्रह्मणि व्युत्पादितः। तमेव सम्प्रति विभज्य प्रतिपादयति **आनन्दमय इत्यादिना** अध्यायशेषेण सूत्रकार इत्यर्थः। तत्र तावदर्थान्तरेषु निरूढशब्दानाम् इत ऊर्ध्वम् आपादपरिसमाप्तेर्विष्णौ समन्वयः प्रतिपाद्यत इत्याह **तत्रेति**।

१५६ तत्रापि प्रथमाधिकरणस्यैकत्रानिरूढत्वेन गुणिसामान्यवाचिनामानन्दमयादिशब्दानां गुणवाचिनामानन्दादि-शब्दानां ब्रह्मणि समन्वयः प्रतिपाद्यत इत्याह **गुणिसामान्येति**।

तैत्तिरीयके श्रूयते। 'स वा पुरुषोऽन्नरसमयः तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमय-स्तस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयस्तस्माद्वा तस्मादन्नमयादन्योऽन्तर आत्मा विज्ञानमयस्तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय' इति। तत्र संशयः 'किमन्नमयादयः कोशाः किं विष्णुरि'ति। न विष्णुः। कुतः। विकारात्मकत्वात्। तथा हि। श्रुत्यन्तरे पठिता अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्धयन्तामिति। अत्रोच्यते। 'विष्णुरेवानन्दमयादयः', 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते', 'आनन्दं ब्रह्मणो विद्वान् विज्ञानं ब्रह्म चेद्वेदे'ति ब्रह्मशब्दालम्बनतया प्रतीयमानत्वात्। 'तदेव ब्रह्म परममि'ति श्रुतेर्ब्रह्मशब्दस्तु विष्णवेकविषयः॥ ५८॥

१५९ यदुक्तमानन्दमयादिशब्दानां कोशार्थत्वं श्रुत्यन्तरे उक्तं तन्न। तत्र ब्रह्मशब्दाभावात्। त्वक् चर्मादि-विकारप्रायपठितत्वाच्छुद्धयन्तामिति शुद्धिप्रार्थनलिङ्गाच्च। यत्र यत्र शाखासु ब्रह्मशब्दसामानाधिकरण्येन शब्दाः

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम्।





पठ्यन्ते तत्र तत्रानेनैव न्यायेन तैर्हरिरेवोच्यते । अयमेवाभ्यासो ब्रह्मशब्दस्य यः प्रत्यन्नमयादिशब्दमेकस्य पाठः । न च वाच्यमानन्दमयोऽभ्यासादिति सूत्रकारेणानन्दमयस्यैव विष्णुत्वमुक्तमिति । आनन्दमयशब्दस्य तुल्यन्यायतया अन्नमयाद्युपलक्षणार्थत्वात् । एवमाकाशस्तल्लिङ्गादित्याद्यधिकरणेषु आकाशादिशब्दानां स्वतुल्यन्यायशब्दान्तरोपलक्षणत्वमवगन्तव्यम् । सर्वशाखाविनिर्णयविषयत्वात्सूचकत्वात्सूत्राणामल्पाक्षरत्वान्न बहुशब्दपाठस्तेषु ।

१६१ न च वाच्यमानन्दमयशब्देनैव ब्रह्मणि सर्वशाखासमन्वयस्योपलक्षयितुं शक्यत्वादुपरितनाधिकरणवैय्यर्थ्यमिति । युक्त्यन्तरेण श्रुत्यन्तरेषु ब्रह्मसमन्वयाक्षेपे तत्परिहारायाधिकरणान्तरारम्भात् । किञ्च 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतेर्विष्णौ सर्ववेदसमन्वयस्यावश्यकत्वात्सूत्रेषु यावदुक्तमात्रपरिग्रहानुपपत्तेर्युक्तं शब्दान्तरोपलक्षणत्वमानन्दमयपदस्य ।

१६२ ननूपलक्षणत्वेनानन्दमयस्य ब्रह्मत्वप्रतिज्ञानं कस्मात्कृतम् । अन्नमयस्य किं न स्यादित्यत आह **आनन्दमयेति** ।

१६२ 'अन्योऽन्तर आत्मा आनन्दमयः तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठे'ति पुच्छस्यैव ब्रह्मत्वोक्तेः । आनन्दमयस्य अवयविनोऽब्रह्मत्वशङ्कापरिहाराय आनन्दमयस्य ब्रह्मत्वोक्तेः । आनन्दमयस्य अवयविनोऽब्रह्मत्वशङ्कापरिहाराय आनन्दमयस्य ब्रह्मत्वं प्रतिज्ञातं सूत्रकारेणेत्यर्थः ।

१६३ तस्मात् आनन्दमयादिपञ्चकस्य विष्णुत्वं ब्रह्मशब्देनाभ्यस्तत्वात् । भगवदवयवस्यापि ब्रह्मत्वात् ब्रह्मपुच्छमिति वचनमविरुद्धमित्याशयवानाह **ब्रह्मेति** ।

१६४ 'एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारो क्लेशहानिं करिष्यत' इति विष्णुपुराणे । एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वरम् । अनेकवक्त्रनयनमनेकाद्भुतदर्शनमि'ति च भारते । यथा भगवत्कृष्णकेशस्य कृष्णावतारत्वेन प्रादुर्भूतस्य ब्रह्मत्वं दृष्टम् । एवमानन्दमयस्य भगवतः पुच्छत्वेऽपि ब्रह्मत्वमविरुद्धं निःसीमाचिन्त्यशक्तित्वादित्यर्थः ।

१६५ ननु यदुक्तं विष्णोरेव नियतत्वात् ब्रह्मशब्दस्य तत्समानाधिकृतानाम् आनन्दमयादिशब्दानां विष्णुपरत्वमिति तन्न युज्यते । यत्कारणम् 'ऋतं सत्यं परं ब्रह्मे'त्यत्र श्रुत्यन्तरे रुद्रेऽपि ब्रह्मशब्दः श्रूयत इत्याशङ्क्य तच्छ्रुतेर्भगवत्परत्वमाह **ऋतं सत्यमिति** ।

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितमि'ति तापनीयवचनस्य पूर्वार्धोक्तं विष्णवाख्यं परं ब्रह्मोद्दिश्य उत्तरार्धेन विरूपाक्षाख्यमपरं ब्रह्म ऊर्ध्वरेतस्त्वादिवृत्तित्वमुच्यते ।





१६६ अत्र पूर्वोत्तरार्धयोः सामानाधिकरण्याङ्गीकारे नीललोहितपदस्य कृष्णपिङ्गलपदेन पौनरुक्त्यं स्यात् । 'क्षीरोदार्णवशायिनं नृकेसरिणं योगिध्येयं परमपदं जानीयामि'त्युपक्रमविरोधश्च स्याद्रुद्रस्य परब्रह्मत्वे ।

१६७ तथा तद्वाक्यशेषे श्रूयमाणस्य ब्रह्मादिपदस्य स्वरितब्रह्मशब्दान्तवतो ब्रह्माधिपतिर्यस्य रुद्रस्येन्द्रशत्रु-शब्दस्य स्वरितेन्द्रशब्दान्तवत इन्द्रः शत्रुर्हन्ता यस्य स तथोक्त इति बहुव्रीहिरेव समासः ।

१६९ अन्यथा 'तस्मादस्येन्द्रः शत्रुरभवदि'ति वाक्यशेषविरोधात् । तथा च शिक्षाकारेणोक्तम् । 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादि'ति । यत्र समस्यमानपदयोः पुल्लिङ्गयोः पूर्वपदमन्तःस्वरितं भवति तत्र बहुव्रीहिसमासविधायकमहाव्याकरणसूत्रं दर्शयति **पूर्वान्तेति**।

१७० तस्माद्वाक्यशेषानुगुण्यात् ऋतं सत्यमिति वचनस्यायमेवार्थ इत्याह **ऋतं सत्यमिति**।

१७२ एतमेवार्थमाथर्वणवेदस्थनीलग्रीवश्रुत्या दृढयति **ऋतं सत्यमिति**।

१७५ तस्मात्सर्वश्रुतिसङ्गत्या विष्णुरेव परं ब्रह्म । कथमन्यथा 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'ति श्रुतिरुपपद्येत । जगत्कारणत्वेन विष्णोरेव परब्रह्मत्वं वाक्यान्तरेण दृढयति **एको नारायण इति** ।

१७७ तस्माद्यत्रकुत्रचित्पुराणेषु विष्णोरपि जननवचनमवताराभिप्रायमित्याहुः **विष्णोरुत्पत्तिरवतारगेति**।

१७८ अतो विष्णावेव ब्रह्मशब्दस्य मुख्यत्वात् तत्समभिव्याहृतान्नमयादिशब्दोऽपि तत्परोऽङ्गीकर्तव्यः । किञ्च 'ब्रह्मविदाप्नोति परमि'ति मुख्यं ब्रह्मोपक्रान्तमतो 'येऽन्नं ब्रह्मे'त्यादेरर्थान्तराभ्युपगम उपक्रमविरोधः स्यात् । न च वाच्यं ब्रह्मादेरपीषद्बृहत्वाद्ब्रह्मशब्देनात्र ग्रहणं किं न स्यादिति । मुख्येऽसम्भवत्यमुख्यकल्पनायोगात् ।

१७९ नन्वन्नमयादिशब्दानां ब्रह्मपरत्वे कथं मयट्प्रत्ययो युज्यते । तस्य मृन्मयो घट इत्यादौ विकारार्थत्व-दर्शनात् । नैष दोषः । अत्र मयट्प्रत्ययस्यान्नादिप्राचुर्यार्थत्वेनाविरोधात् । प्रकाशमयो रविरित्यादौ प्राचुर्येऽपि मयट्प्रयोगदर्शनात् । तदेतदाह **प्राचुर्येति**।

१७९ नन्वन्नमयशब्दस्य विष्णुपरत्वे 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इत्यत्र अद्यत्वं प्रसिद्धान्नलिङ्गं कथं युज्यत इत्यत आह **भोग्यत्वमिति**।

१८० किञ्च अन्नमयशब्दस्य प्रसिद्धान्नविषयत्वे भूतात्तृत्वं प्रसिद्धब्रह्मलिङ्गमयुक्तं स्यात् । इदानीमन्नमयादि-शब्दान्विष्णौ निर्वक्तुमाह **महाभोक्तेति**।





१८५ अतृत्वगुणयुक्तं. तथोपजीव्यत्वलक्षणाद्यत्वगुणयुक्तमन्नमयशब्दवाच्यमन्नमयशब्दस्य तत्प्राचुर्यवत्वादत्तृत्वप्रचुरस्तदुपजीव्यप्रचुरश्च वाच्यः । स च जगदत्तृत्वात्पोषणादिकर्तृत्वेन जगदुपजीव्यत्वाद्विष्णुः । अन चेष्टायामिति धातोश्चेष्टाप्रचुरः प्राणमयो बोधप्रचुरो मनोमयो विज्ञानप्रचुरो विज्ञानमयः । ननु 'अन्नरसमयादन्योऽन्तर आत्मा प्राणमय' इत्यादिष्वन्नशब्दः कथं स्वगतभेदवर्जिते विष्णौ युज्यत इत्यत आह **अन्न इति** ।

इतश्च अन्नमयादिरूपेण पञ्चधा प्रतिपादितम् आनन्दवल्ल्यां ब्रह्मावगम्यते । तस्योत्तरत्र भृगुवल्ल्यां भृगवे वरुणेन ब्रह्मत्वेनोपदेक्ष्यमाणत्वात् । ननु 'एवं प्राण' इत्यादौ मयटोऽश्रवणात् न अन्नमयादिशब्दवाच्यम् आनन्दवल्ल्युक्तं वरुणेनोपदिष्टमिति चेत् । नैतत्साधु । एतस्यैवोपक्रमोपदिष्टस्य अन्नादिशब्दवाच्यस्य 'एतमन्नमयमात्मानमुपसंक्रम्य', 'एतं प्राणमयमात्मानमुपसंक्रम्ये'त्यादि वाक्यशेषे प्राप्यतया मयडन्त-अन्नादिशब्दैः अन्नमयादिशब्दैश्च वाच्यमित्यभ्युपगन्तव्यम् ।

१८६ इतश्चानन्दमयो विष्णुरित्याह **महानन्दत्व इति** । 'अन्योऽन्तर आत्माऽऽनन्दमय' इति पूर्वनिर्दिष्टस्य विष्णोरानन्दमयत्वे हेतुरुच्यते । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाशं आनन्दो न स्यादि'ति वाक्यशेषेणैतदेव श्रुत्यन्तरेण स्फुटीकरोति **श्रुत्यन्तर इति** ।

१८७ 'यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति यो वै भूमा तत्सुखं नाल्पे सुखमि'ति । श्रुत्यन्तरोक्तं प्रकृतोपयोगितयोपपादयति **यत्प्रवृत्तिरिति** । अस्यायमर्थः । चतुर्विधा हि लौकिकी चेष्टा दृश्यते । सुखोद्रेकात् नृत्यगानादिरूपा । दुःखोद्रेकात् रोदनोदरताडनादिरूपा । सुखप्राप्त्यर्था भोजनादिरूपा । दुःखनिवृत्त्यै औषधसेवनादिरूपा । 'कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य सर्वशक्तेर्विष्णोः दुखादिनिबन्धनचेष्टाऽसम्भवात् सुखमेव लब्ध्वा करोती'ति श्रुत्योक्तम् । अतो जीवचेष्टान्यथाऽनुपपत्त्या तत्प्रवर्तकस्य विष्णोरानन्दोद्रेकसिद्धिः । किञ्चैष एव आनन्दयतीति अन्येषाम् आनन्ददातृत्वश्रुतेः आनन्दमयत्वं विष्णोरेवावगम्यते । योऽन्येषाम् आनन्दं ददाति असौ प्रचुरानन्द इति लोके प्रसिद्धम् । अतो मयटश्चात्र प्राचुर्यमेव विवक्षितं वाक्यशेषबलात् ।

१८९ इतश्च आनन्दमयादिशब्दवाच्यं परंब्रह्मेत्याह **ब्रह्मविदित्यादिना** ।

१९० 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र यत्सत्यत्वं ब्रह्मविशेषणमुक्तं तदुत्तरत्र आकाशादिसृष्टिवाक्येन अन्नमयप्राणमयपदाभ्यां विव्रीयते ।

१९१ यदनन्तत्वं ब्रह्मविशेषणमुक्तं तदानन्दमयपदेन विवृतम् ।

१९२ एतदेव विवृणोति **सद्भावमित्यादिना** । 'जगतः सद्भावं यापयति प्रापयती'ति सत्यशब्दो निरुक्तः । 'आत्मन आकाशः सम्भूत' इत्यादिवाक्येन 'जीवनविशीर्णत्वे सच्छब्देनोच्येते तदुभयं यापयती'ति सत्यशब्दो निरुक्तो जीवनप्रदत्वान्नकर्तृत्ववाचिना अन्नशब्देन जीवनम् । षद्लृविशरणगत्यवसादनेष्विति धातोर्गतिश्च सच्छब्देनोच्यते । तदुभयं यापयतीति सत्यशब्दो निरुक्तः ।





१९५ प्राणयतीति प्राण इति जीवनगतिप्रदत्ववाचिना प्राणशब्देनोच्यते।

१९६ मनु अवबोधन इति धातोर्बोधप्राचुर्यवाचिना मनोमयशब्देन विज्ञानमयशब्दो विवृतः ।

१९७ आनन्दप्राचुर्यवाचिनाऽऽनन्दमयशब्देनानन्तत्वमुपपादितम् । ब्रह्मणः पूर्णानन्दस्य परिच्छिन्नस्थित्ययोगात् । अतस्तदेशाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तार्थस्य प्रपञ्च्यमानत्वात् आनन्दमयादिवाक्यैरितरत्कोशादिकं न कथ्यते । न च वाच्यं प्रकृत्यादिरेव प्रतिपाद्यते । 'मम योनिर्महद्ब्रह्मे'त्यादिवाक्येषु तत्रापि ब्रह्मशब्दप्रयोगात् । 'ब्रह्मविदाप्नोति परं', 'यो वेद निहितं गुहायां', 'परमे व्योमन्', 'सोऽश्नुते सर्वान्कामान्सह', 'ब्रह्मणा विपश्चिता', 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन', 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति', 'शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुत' इत्यादि मोक्षश्रुतिविरोधात् । न च प्रकृत्यादिज्ञानादपि मोक्ष इति वाच्यम् । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत' इति श्रुत्यन्तरविरोधात् । न चैतद्वचनमन्यविषयम् ।

१९८ 'सहस्रशीर्षे'त्यादिपुरुषशब्दश्च विष्णवेकविषय इत्यत्र श्रुतिमाह **पुरुष इत्यादिना**।

२०२ इतश्चात्र अन्नमयादिशब्दो विष्णुपर इति प्रतिपादयितुमाह **ब्रह्मशब्देत्यादिना** । य उपक्रमे ब्रह्मशब्देन निर्दिष्टो विष्णुः स एवात्मशब्देन च ।

२०३ तस्मादाकाशशब्दवाच्यचतुष्टयसृष्टिरुच्यते । आत्मन आकाशः सम्भूत इत्येवमेवाकाशाद्वायुरित्यादावगन्तव्यम् । तच्चतुष्टयमाह **भूतमिति** ।

२०४ आकाशादिशब्दानां कथं हरिवाचकत्वमित्यत आह **आसमन्तादित्यादिना**।

२०७ भूततदभिमानिन्यादीनां सृष्टिप्रकारमाह **क्रियेत्यादिना**।

२०९ एवमुक्तप्रकारेण अन्तर्यामित्वेनाकाशादिषु प्रविश्य अन्नजन्यदेहपर्यन्तमागतमात्मशब्दोक्तं हरिमेवान्यपरित्यागेन निष्कृष्य निर्दिशति ।

२१० तस्यैवान्नमयादिपञ्चरूपत्वं विधातुं स वा एष पुरुषोऽन्नरसमय इति श्रुतिः।

२११ रसशब्दो रसान्नमिति कर्मावद्येनेति भागवतोक्तिवद्विपरीतसमासेन लौकिकव्यावृत्त्यर्थः ।

२१३ दृष्टश्च समासो भूतपूर्वशब्दे 'तस्येदमेव शिर' इत्यादिना भगवदवयवानां प्रत्यक्षनिर्देशः कथमित्यत आह **आदित्य इति** । 'यदा ह्येष एतस्मिन्नदृश्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । स यश्चायं पुरुषो यश्चासावादित्य' इत्याधाराधेयभावेन भेदोपदेशान्न ब्रह्मादिजीवराशीनां विष्णोरभेदः ।

२१४ 'विमतानि शरीराणि मद्भोगायतनानि शरीरत्वात् मच्छरीरवदि'त्यनुमानात् ऐकात्म्यसिद्धिरिति **चेन्न** । प्रत्यक्षादिप्रमाणविरुद्धेनातिप्रसङ्गित्वात् ।





२१६ तथा हि । 'चेतनमचेतनं भवितुमर्हति वस्तुत्वात् घटवत्, अचेतनं वा चेतनं भवितुमर्हति प्रमेयत्वात् आत्मवत् । आकाशं, मूर्तं भवितुमर्हति भूतत्वात् पृथिवीवदि'ति ।

२१७ ननु 'नेतरोऽनुपपत्तेः', 'भेदव्यपदेशाच्च', 'कामाच्च नानुमानापेक्षा' इत्यत्र जीवपरयोर्भेदो निरूपितः । स एव 'भेदव्यपदेशाच्चान्यः', 'अनुपपत्तेस्तु न शारीरः', 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयत' इत्यादौ निरूपयिष्यते च । तस्मादेतेषां सूत्राणां पौनरुक्त्यमिति चेन्न ।

२१८ प्रकारान्तरेण तत्र तत्र भेदाक्षेपे श्रुत्यन्तरेण च न्यायान्तरेण च समाधानात् । पृथगुपदेशादित्यत्र सर्वशङ्कोद्धारेण जीवपरमभेदस्य समर्थितत्वात् । अत ऊर्ध्वं न शङ्का न चोत्तरम् ।

२१८ इतश्च नान्नमयादयः कोशा इत्याह **योगमित्यादिना** । 'स य एवं वित् । अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमात्मानमुपसङ्क्रामती'त्यानन्दवल्ल्यामस्माल्लोकात्प्रेत्य 'एतमन्नमयमात्मानमुपसङ्क्रम्ये'त्यादिना भृगुवल्ल्यामप्यपरोक्षज्ञानिनोऽन्नमयादिरूपाणां प्राप्तिः फलत्वेनोच्यते । अतः कोशत्वाभिधानमतिसाहसम् । न चोपसङ्क्रामतीत्यस्यातिसङ्क्रमण इत्यर्थः ।

२२१ श्रुतपरित्यागाश्रुतकल्पनाप्रसङ्गात् । उपसङ्क्रम्य 'एतत्साम गायन्नास्त' इत्यनतिक्रमोक्तेश्च । किञ्चास्माल्लोकात्प्रेत्येत्यनेनैव मुक्तिवचनेन अन्नादिविकारात्मकं कोशातिक्रमणस्य सिद्धत्वान्न पुनस्तदतिक्रमणं युज्यते ।

२२२ 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासत' इत्यादिना 'अन्नं ब्रह्मेति व्यजानादि'त्यादिना चान्नमयादीनां ब्रह्मत्वेनोपास्तिं विधाय तदुपासकस्य अन्नमयमात्मानमुपसंक्रामती'त्यादिना अन्नमयादिप्राप्तिं प्रतिपादयन्त्योः आनन्दवल्लिभृगुवल्ल्योरपलापिनां तत्कोपेनानर्थो भवतीत्याह **येऽन्नमित्यादिना**।

२२४ इदानीं भृगुवल्ल्यामन्नमयादिरूपब्रह्मप्रतिपादनपरत्वं विवृणोति **अधीहीत्यादिना** । 'भृगुर्वै वारुणिर्वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि'ति यतो भृगुणा ब्रह्म पृष्टो वरुणोऽन्नादिरूपं ब्रह्मोपदिशति । अतः कथमेतत् । ब्रह्म न स्यात् । न चात्र शाखाचन्द्रन्यायेनान्नादिकं ब्रह्म प्रतिपत्तिद्वारमुपदिष्टमित्याह **द्वारमिति** । न हि चन्द्रदर्शनार्थिनः शाखाचन्द्र इत्युपदिश्यते । किं तर्हि शाखां पश्यत उपरि चन्द्रमित्येषोपदिश्यते । तस्माद्ब्रह्मप्रश्नस्य तद्द्वारोत्तरत्वमसङ्गतमेव । न च प्रसिद्धान्नादेर्ब्रह्मप्रतिपत्तिद्वारत्वं घटादेरिव किञ्चिदुपलभ्यते । तस्मादत्रान्नादिशब्दो ब्रह्मपर एव ।

२२७ इदानीमन्नमनःप्राणशब्दानां पूर्वं निरुक्तेर्दर्शितत्वाच्चक्षुः श्रोत्रत्वक्शब्दानां ब्रह्मणि निरुक्तिमाह **चष्ट इति** ।

२२९ यद्यपि अत्र पूर्वोक्तविज्ञानानन्दादिद्वारेण चक्षुःश्रोत्रवाचा वा अन्नादिषड्रूपमेव ब्रह्मोपदिष्टं तथाऽपि विज्ञानानन्दसहितान्नादिरूपस्य ब्रह्मणो वाधूलशाखायां प्रतिरूपं सृष्ट्यादिलक्षणलक्षितत्वेन प्रतिपादितत्वात् । न हि विज्ञानानन्दयोरब्रह्मत्वमाशङ्कनीयम् । यस्मादावापोद्वापतः शाखाः परं पदं प्रतिपादयन्ति ।





२३० एतच्चान्नादिरूपं ब्रह्म 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे'ति सृष्ट्यादिलक्षणलक्षिततत्वेन वरुणेनोपदिष्टं शिष्येण पश्चात्तपसैवापरोक्षितमब्रह्म कथं स्यात् । न हि प्रसिद्धान्नादिकं तपसाऽपरोक्षितव्यम् । न च वाच्यमन्नादीनां ब्रह्मत्वे 'स तपोऽतप्यत स तपस्तप्त्वाऽन्नं ब्रह्मेति व्यजानादि'त्यन्नावगत्या ब्रह्मणोऽवगतत्वात् । पुनरपि 'स तपोऽतप्यत स तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानादि'त्यादिवैय्यर्थ्यमिति । उपदिष्टान्नादिपञ्चरूपस्य ब्रह्मण एकरूपापरोक्षरूपान्तरापरोक्षीकरणापेक्षया पुनर्ध्यानादिलक्षणतपसो वैय्यर्थ्यात् । 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विज्ञाय जिज्ञासस्वे'त्यावर्तनम् । प्रतिरूपापरोक्षसाधनेऽपि गुर्वनुज्ञाप्राप्त्यर्थम् । अब्रह्म । तथा पूर्वपूर्वरूपस्य परित्यागश्चात्राश्रुतकल्पनाकल्पितः । 'अन्नं ब्रह्मेति व्यजानादि'त्यादिना ब्रह्मत्वमेव श्रुतमन्नादीनाम् । किञ्च 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति, अन्नं प्रयन्त्यभिसंविशन्ती'त्यादिना प्रतिरूपब्रह्मलिङ्गदर्शनादपि पञ्चरूपं ब्रह्मैव । एतच्चाब्रह्मेति ये वदन्ति तेषां श्रुतहान्यश्रुतपरिग्रहावविनाभूताविति तन्मतानुवादस्य लज्जाकरत्वादुपरम्यते ।

२३३ एवं वादवत् 'अस्मिन्नस्य च तद्योगं शास्ती'ति सूत्रं कोशनिराकरणपरत्वेन वर्णयित्वा जीवपराभेदनिराकरणस्यापि प्रस्तुतत्वात् तत्परत्वेनापि वर्णयति **समीप इति** ।

२३४ एवं पञ्चकोशादिमतं निराकृत्य चतुःकोशादिमतं निराकरोति **एतेनेति** ।

२३५ अन्नादिचतुर्षु मयटो विकारार्थत्वमानन्दमये प्राचुर्यार्थत्वमिति कल्पने प्रायपाठपरित्यागः स्यात् । इदानीमधिकरणार्थमुपसंहरति **अत इत्यादिना** ।

२३६ तस्मादन्नमयादिपञ्चरूपो विष्णुरिति सिद्धम् ।

२३७ ननु जगज्जन्मादिकारणत्वमात्रं प्रतिज्ञातत्वात्प्रतिपादयितुं युक्तं ब्रह्मणो न तु पूर्णानन्दादिगुणजातमपीत्यत आह **जन्मेत्यादिना** । जगज्जन्मादिकर्तृत्वलक्षणोक्त्यैव ब्रह्मणः सार्वज्ञ्यादिनिखिलगुणानामर्थोक्तत्वात् तत्प्रतिपादनं सङ्गतमेव । सर्वगुणसम्पूर्तिश्च विष्णौ न कतिपयवाक्यैरवगन्तुं शक्या । किं त्वेष सर्वज्ञ एष सर्वेश्वर एषोऽन्तर्याम्येष योनिः सर्वस्येत्यनन्तवैदिकपदावगम्या । यत एवेन्द्रादिशब्दानामशेषाणामपि तस्मिन्मुख्यवृत्तिः सिद्ध्यति । न पुनरिन्द्रादिषु ।

२३८ इदिपरमैश्वर्य इत्यादिधातोः परमैश्वर्यादिकमेवेन्द्रादिशब्दप्रवृत्तिनिमित्तं मुख्यमवगतम् । तच्च न विष्णोरन्यत्र सम्भवति । अतः परमेश्वरादन्यत्रेन्द्रादिशब्दप्रयोग ऐश्वर्यादिनिमित्तत्वादौपचारिकः । यदल्पमैश्वर्यादिकं





पुरन्दरादिष्वपि इन्द्रादिशब्दप्रवृत्तिनिमित्तं तद्भगवद्दत्तमेव । अतोऽपीन्द्रादिशब्दो विष्णावेव मुख्यः । यथाऽयसोऽपि दाहकत्वकारणेऽग्नौ दहतीति शब्दो मुख्यः ।

२४० न केवलमिन्द्रादिशब्दानां मुख्ययोगवृत्तिः किन्तु मुख्यरूढिरप्यवगन्तव्या । स ब्रह्म स हरिः स शिवः सेन्द्र इत्यादिना बहुशः प्रयोगात् । इयं तु विद्वद्रूढिरुच्यते । यो वेदेतिहासादिषु विदुषामेव शब्दार्थः प्रसिद्धो योगवृत्त्युपेताया तु निरुक्त्यज्ञानामपि ज्वलनादिषु प्रसिद्धिः ।

२४१ अग्न्यादिशब्दानां साऽविद्वद्रूढिस्तत्र वेदानुकूल्या विद्वद्रूढिरेव बलवती । तस्माद्यौगिकत्वाच्च शब्दजातस्य विष्णुरेव मुख्यार्थ इत्यभिप्रेतं समन्वयं प्रतिपादयितुं सूत्रकारस्येत्यर्थः ।

**॥ इति आनन्दमयाधिकरणम् ॥**

***

## ॥ अन्तस्थत्वाधिकरणम् ॥

२४२ तत्र तावत् एतस्यैवार्थस्य आक्षेपसमाधानरूपेण 'अन्तरस्तद्धर्मोपदेशादि'त्यधिकरणं विवृणोति **देवानामित्यादिना** । इदमाम्नायते । 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिं चतुर्होतारं प्रदिशोनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्ददि'ति । तत्रेन्द्रादिशब्दानां पुरन्दरादिष्वेव लोकरूढत्वाद्योगस्य च सम्भवात् तत्परत्वमिति प्राप्तेऽभिधीयते । इन्द्रादिशब्देन विष्णुरेव ग्राह्यः । ब्रह्म तपोलभ्यत्वजगत्प्रतिष्ठात्वादिलिङ्गात् ।

२४३ 'अन्तः समुद्रे मनसा चरन्तमि'त्यादिसन्निहितवाक्यावगतक्षीराब्धिशायित्वादिलिङ्गाच्च । तस्येन्द्रादिष्वसम्भवाल्लोकरूढिबाधाद्युक्त इन्द्रादिशब्दस्य कश्यपो देवराडिन्द्र इत्यादि भगवन्नामसु प्रयोगाद्विद्वद्रूढ्या महायोगेन च विष्णावतिमुख्यत्वात् स एवात्र प्रतिपाद्यः । न चेन्द्रादिशब्दानां भगवति प्रयोगेण लोकसिद्धेन्द्राद्यभेदो भगवतोऽत्र विवक्षित इति वाच्यम् । 'इन्द्रस्यात्मा निहितः पञ्चहोता वायोरात्मानं कवयो निचिक्युः । अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्मान्वविन्ददि'त्यादिसन्निहितवाक्येष्विन्द्रान्तर्यामितया भेदव्यपदेशात् । अतो विष्णुरेवात्र प्रतिपाद्यत इति सिद्धम् ॥

**॥ इति अन्तस्थत्वाधिकरणम् ॥ ७ ॥**

***





# ॥ आकाशाधिकरणम् ॥

२४४ इदानीमाकाशस्तल्लिङ्गादित्यधिकरणं विवृणोति **चेष्टा हीत्यादिना**।

२४५ छान्दोग्ये श्रूयते । 'अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैतेभ्यो ज्यायानाकाशः परायणम् । स एष परोवरीयानुद्गीथः स एषोऽनन्त' इत्यत्राकाशशब्देन भूताकाश एव ग्राह्यः । प्रथमपठितत्वात्प्रसिद्धत्वाच्च । तत्रैव वाक्यशेषो वर्णनीयः । प्रसिद्धाकाशस्यापि किञ्चिद्भूतकारणत्वादिसम्भवात् । न च पूर्वन्यायेनात्र आकाशशब्दो विष्णुपरो युक्तः । तत्रेन्द्रादिशब्दानां भगवद्दत्तैश्वर्यादिमच्चेतनपरित्यागेन विष्णुपरत्वम् । न हि जडाकाशस्यावकाशस्यावकाशादिरूपं भगवद्दत्तम् । तस्माद्भूताकाशपरमिदं वाक्यम् 'अतो जगत्कारणत्वे ब्रह्मणि सर्ववेदसमन्वयो न युक्त' इत्यत्रोच्यते । आकाशशब्देन विष्णुरेवोच्यते । परोवरीयस्त्वादिलिङ्गात् । अत्र तच्च 'महतो महीयानि'त्यादिना विष्णोरेवावगतम् । न च भूताकाशस्य सर्वभूतोत्पत्तिकारणत्वं युज्यते । विरोधात् । आसमन्तात्काशत इति योगेन विद्वद्रूढ्या चाकाशशब्दाद्विष्णोरेव प्रतीतेरनन्तशब्दविरोधाच्च लोकसिद्धाकाशस्य परित्यागो युक्तः । यदुक्तमाकाशशब्दस्य विष्णुपरत्वे कारणत्वं विवरादिभावस्यानन्याधीनत्वं तदसिद्धम् ।

२४६ 'नभो ददाति श्वसतां मार्गं यन्नियमाददद' इत्यादिवाक्यैर्नभसोऽपि विवरादिभावस्य भगवदधीनत्वश्रवणात् । तस्मान्मुख्याकाशो हरिरेवात्र प्रतिपाद्यत इति सिद्धम् ॥

**॥ इति आकाशाधिकरणम् ॥ ८ ॥**

***

# ॥ प्राणाधिकरणम् ॥

२४६ इदानीमधिभूताकाशशब्दसमन्वयन्यायेन अध्यात्मगतप्राणशब्दस्य हरौ समन्वयप्रतिपादकम् अत एव प्राण इति सूत्रं व्याचष्टे **अध्यात्ममित्यादिना** । इदमाम्नायते । 'तद्वै त्वं प्राणोऽभवः महान्भोगः प्रजापतेर्भुजः करिष्यमाणो यद्देवान्प्राणयो न वे'ति । तत्र प्राणशब्दस्य वायौ प्रसिद्धत्वात् तत्परत्वं तावत्प्राप्यते । न च नवदेवशब्दोदितेन्द्रियगणनेतृत्वलिङ्गात् हृषीकेशपरत्वम् । इन्द्रियप्रवृत्तिनिवृत्त्योरन्वयव्यतिरेकाभ्यां मुख्यप्राणाधीनत्वदर्शनात् । तल्लिङ्गस्य वायावप्युपपन्नत्वादत्राभिधीयते । प्राणपदोक्तो विष्णुरेव ।

२४७ 'यतो मुख्यं तस्यैवेन्द्रियप्रेरकत्वलिङ्गमुपपन्नम् । कतरः स आत्मा येन वा पश्यति येन वा श्रुणोति' इत्यादिवचनात् । प्राणहृषीकेशप्रेर्यत्वश्रवणात् । न मुख्यस्य प्राणमित्यादौ पञ्चवृत्तिप्राणस्य प्रेरकत्वम् । न च





मुख्ये सम्भवत्यमुख्यं युज्यते । किञ्च 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे' इत्यादिसन्निहितवाक्योक्त-श्रीपतित्वलिङ्गात् । अन चेष्टायामिति धातोः प्रकृष्टचेष्टायोगेन विद्वद्रूढ्या च प्राणशब्दो विष्णावेवेति सिद्धम् ॥

**॥ इति प्राणाधिकरणम् ॥ ९ ॥**

## ॥ गायत्र्यधिकरणम् ॥

२४८ इदानीं ज्योतिश्चरणाभिधानादित्यधिकरणं तात्पर्यतो विवृणोति **नित्यत्वादिति** । इदमाम्नायते । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरि'ति । तत्र ज्योतिःशब्दस्य तेजोधातौ प्रसिद्धत्वात् कश्चित्तेजोधातुरर्थः स्यात् । 'तस्यैषा सृष्टिर्यत्रैतस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाती'ति वाक्यशेषे तेजोविषयलिङ्गश्रवणात् । अथवा द्योतकरणत्वलिङ्गेन गायत्री ज्योतिःशब्दाभिधेया । तस्या एव गायत्री वा इदं सर्वमित्यादिनोपक्रमात् । न च गायत्र्या विष्णवायत्तत्वात् तच्छब्देन विष्णुरभिधीयते । नित्यत्वेनान्यानधीनस्वभावत्वात्तस्याः । 'वाग्वै गायत्री सैषा चतुष्पदे'त्यादि-प्रसिद्धशब्दानुगुण्यात् गायत्रीप्रतिपादनमत्र युक्तम् । एवं प्राप्तेऽभिधीयते । विष्णुरेव ज्योतिःशब्दाभिधेयः । 'विमे कर्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत्' इत्यादौ तस्यैव ज्योतिःशब्दार्थत्वेन प्रसिद्धत्वात् । न च एतत्प्रसिद्धाग्निपरं वाक्यम् । 'वैश्वानरमृत आजातमग्नि'मित्युपक्रमादिति वाच्यम् । 'अनूनमग्निं पुरुधासु चन्द्रम्', 'अग्निनाऽग्निः समिद्ध्यत' इत्यादिश्रुतेः 'अहमग्निरहं हुतमि'त्यादिभगवद्वचनाच्च विष्णोरेव मुख्यतोऽग्निशब्दार्थ-त्वात् । न ह्यग्नेः कर्णादिदूरत्वं च सम्भवति । परिच्छेद्यप्रकृतस्य । किं चोत्तमेष्वनुत्तमेषु लोकेष्वित्युक्तनिरतिशय-स्थाननिवासो 'यद्गत्वा न निवर्तन्ते तद्धाम परमं ममे'त्यादौ भगवतो विष्णोरेव प्रसिद्धः । यदुक्तमग्निलिङ्गमुष्णिमानं विजानातीति तदग्नेरौष्ण्यनियामकान्तर्यामिप्रदर्शनपरतयोपपन्नम् । न च गायत्र्युपक्रमात् गायत्री ज्योतिःशब्दार्थः । 'गायति च त्रायति च तस्मात् गायत्री नामे'ति वचनात् । गायत्रीशब्देन विष्णोरत्र विवक्षितत्वात् । 'अस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयन्त' इति निरतिशयत्वादितलिङ्गश्रवणाच्च । 'यद्वैतद्ब्रह्मेति तदेतत्पूर्णमप्रवृत्ति-पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेदे'त्यादिवाक्यशेषगतब्रह्मादिशब्दश्च गायत्रीशब्दस्य विष्णुपरत्व एवोपपद्यते । न च गायत्र्या अनन्याधीनस्वरूपतया गायत्रीशब्दो विष्णुपर इति वाच्यम् । 'यो वाचमन्तरो यमयती'ति शब्दमात्रस्य तच्छक्तिनियम्यत्वश्रवणात् । 'त्रिपादस्यामृतं दिवी'ति निर्दिष्टवस्तुनोऽन्यदुच्यते । अथ 'यदतः परो दिवो ज्योतिरि'ति यदिति प्रकृतिपरामर्शविरोधात् । प्रकाशात्मकत्वेन दिवीति निर्देशो वैकुण्ठस्य युज्यते । तस्मात्स्वर्गादिः परतो दीप्यमानो ज्योतिःशब्दार्थः । 'सर्वं खल्विदं ब्रह्मे'ति उपरितनवाक्यबलात् विष्णुरिति सिद्धम् ॥ १० ॥ ११ ॥

**॥ इति गायत्र्यधिकरणम् ॥ ११ ॥**





# ॥ अन्तिमप्राणाधिकरणम् ॥

२४९ इदानीं प्राणस्तथाऽनुगमादित्यधिकरणं तात्पर्यतो व्याचष्टे **बाहुल्य इत्यादिना** । ऐतरेयके श्रूयते— 'ता वा एताः शीर्षञ्छ्रियः श्रिताश्चक्षुःश्रोत्रंमनोवाक्प्राण' इति । येन श्रुतिलिङ्गबाहुल्यन्यायेन ज्योतिर्विष्णुरित्युक्तम् । पूर्वत्र तन्न्यायेनात्र तावत्प्राणो मुख्यप्राणो भवितुमर्हति । चक्षुरादिप्रायपठितत्वात् । तस्यैव प्राणस्येन्द्रियैः सह विवादश्रवणात् । 'ता अहिंसन्ताहमुक्थमस्म्यहमुक्तमस्मीति ता अब्रुवन् । हन्तास्माच्छरीरादुत्क्रामाम । तद्यस्मिन्नुत्क्रान्त इदं शरीरं पत्स्यती'त्यादौ प्राणस्य हीन्द्रियैर्विवादः प्रसिद्धः । 'अथ ह प्राणा अहं श्रेयसि व्यूदिर' इत्यादि शाखान्तरेषु । अपि च 'प्राण उदक्रामत्तत्प्राणे उत्क्रान्ते पद्यत प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत् । तदु ह मुख्यप्राणलिङ्गं तस्य हि निर्गमनप्रवेशाभ्यां शरीरनिपातोत्थानप्रसिद्धेः । तथोत्तरत्रापि प्राणलिङ्गं श्रूयते । प्राणवंश इति स्थविरः शाकल्यस्तद्यथा शालवंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमेतस्मिन्प्राणे चक्षुःश्रोत्रंमनोवागिन्द्रियाणि शरीरं सर्वमात्मा समाहित' इतीदमेव जीवसहितदेहेन्द्रियाधारत्वमन्यत्राप्युक्तम् ।

२५१ मुख्यप्राणस्यैव तान्वरिष्ठः प्राण उवाच । 'मा मोहमापद्यथाऽहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीत्यारभ्य अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितमिति । अथवा जीवोऽत्र प्राणो भवितुमर्हति । एष इमं लोकमभ्यार्चत् पुरुष य एष तपति तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतंवर्षाणि पुरुषायुषो भवन्तीत्युत्तरत्र शतायुष्ट्वलिङ्गेन जीवस्य प्राणताऽवगम्यते । जीवस्य हि शतायुष्ट्वमन्यत्र सिद्धम् । 'शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय' इति । यद्वेन्द्रोऽत्र प्राणः स्यात् । तस्याप्युत्तरत्र प्राणत्वश्रवणात् । तमिन्द्र उवाच । 'ऋषे प्रियं वै मे धामोपागाः वरं ते ददामी'ति । स होवाच । 'त्वामेव जानीयामि'ति । तमिन्द्र उवाच । 'प्राणो वा अहमस्मी'ति । एवं प्राप्तेऽभिधीयते । विष्णुरेवात्र प्राणशब्दवाच्यः । प्राणशब्दस्योत्तरत्र तस्मिन्ननुगमात् । सर्वं हीदं प्राणेनावृतम् । 'स एषोऽसुः स एष भूतिश्चाभूतिश्च तं भूतिरि'ति देवा उपासाञ्चक्रिरे ते बभूवुः । 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच' इत्येव विद्यात् । 'अथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्गृहीता तदयं प्राणोऽधितिष्ठती'ति । एतच्चान्यत्र विष्णोरेव प्रसिद्धम् । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः', 'मध्ये वामनमासीनं विश्वे देवा उपासते', 'सर्वे वेदा यत्पदमामनन्ति', 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इत्यादौ । 'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषमि'ति ब्रह्मोपक्रमाच्च । प्राणशब्दश्च परमात्मपरस्तस्य वाक्तन्तिर्नामानि दामानि तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् । अथातो विभूतयोऽस्य पुरुषस्य तस्य वाचा सृष्टौ पृथिवी चाग्निश्चे'त्याद्युपरितनवाक्यबाहुल्याच्च । यदुक्तमिन्द्रियाधारत्वादिप्राणलिङ्गं तद्विष्णोर्नेतुं शक्यं प्राणव्यापारस्य तदधीनत्वात् । 'यः प्राणमन्तरो यमयती'ति श्रुतेः । यदुक्तं 'जीवलिङ्गं शतं वर्षाण्यभ्यार्चदि'ति । तज्जीवान्तर्यामिविष्णुविषयमेव । स इदं सर्वं मध्यतो दधे यदिदं किञ्चेत्यादिवाक्यशेषात् । यदिदं वाक्यं प्राणो वा अहमस्मीति तदपीन्द्राविष्टविषयमेव । 'प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति । स एतेन रूपेण सर्वा दिशोऽस्मी'ति वाक्यशेषात् । एतच्चोपपादितं पाद्मेऽपि । 'तत्तन्नाम्नोच्यते विष्णुः





सर्वशास्तृत्वहेतुतः । न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तममि'ति । तथा च प्रह्लादवाक्यं श्रीविष्णुपुराणे । 'सर्वगत्वादनन्तस्य स एवाहमिति स्थित' इति । न चेन्द्रस्य सर्वगतत्वादिकं युक्तं जीवविशेषस्य । न चेन्द्रं प्रत्यक्षेण पश्यतो ऋषेस्तज्ज्ञानवरप्रार्थनं युज्यते । तस्मादिन्द्रवचनमन्तर्यामिविषयम् । अतोऽत्र मुख्यतः प्राणनामा भगवान्विष्णुः प्रतिपाद्यत इति सिद्धम् ।

२५२ इदानीम् 'आनन्दमयोऽभ्यासादि'त्यारभ्य प्रतिपादितमुपसंहरति **तस्मादिति** । नारायणवासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धरूपो वासुदेवादिचतुर्मूर्तिर्वा भगवान्विष्णुः प्रत्यधिकरणं प्रतिसूत्रं प्रतिपदं प्रत्यक्षरं च तत्तन्मूर्तिषु प्रसिद्धनामवशान्निरुक्तिबलाच्च प्रतिपाद्योऽवगन्तव्यः । शाङ्खायनसंहितायां चेदं 'भगवान् वासुदेव आत्माऽव्यक्तं प्रकृतिः प्रधानं नित्यमनन्तमि'त्यादिना वासुदेवादिमूर्तिषु नामविभागः प्रसिद्धः । निर्वचनभेदादेकस्यापि शब्द-स्यार्थभेदो ज्ञायते । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इत्यादौ । अधिकरणपञ्चावयवभेदात् । सूत्रस्य पदभेदात् । पदस्य चाक्षरभेदात् । अक्षरस्य स्वरव्यञ्जनसन्धिसन्धानभेदाच्च युक्तं चतुर्व्यूहादिविषयत्वम् । प्रसिद्धं च वेदे चतुर्धा पञ्चधा वा प्रतिपादनं चतुर्व्यूहाद्यभिप्रायेण । 'ता वा एताश्चतस्रश्चतुर्धा', 'अथातः संहिताया उपनिषदं व्याख्यास्यामः', 'पञ्चस्वधिकरणेषु' इत्यादौ । सूत्राणामेवंविधार्थः श्रुतियुक्तिबलोपेतो बृहत्तन्त्रेण व्याख्यातः । स च मनुष्याणां बहुतरज्ञानासामर्थ्यात्किञ्चिज्ज्ञानार्थं सङ्ग्रहेण व्याख्यातो भाष्यानुव्याख्यानाभ्याम् । अतोऽर्थगम्भीरत्वा-देतयोरर्थातिशयेन बहुज्ञैरेव ज्ञातुं शक्यः । तस्मादस्मिन् शास्त्रे निखिलवेदविचाराधिकारे अनन्तधा अनन्तशब्दैः भिन्नप्रवृत्तिनिमित्तवद्भिः प्रतिपाद्यमानत्वात् नारायणस्य अनन्तगुणत्वं सिद्ध्यति । न हि सहोच्चारितपदानां पौन-रुक्त्यमुचितम् ।

२५३ तदेतदाह **वासुदेवेत्यादिना** ।

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्रानुव्याख्यानटीकायां सन्न्यायरत्नावल्यां श्रीमत्पद्मनाभतीर्थभट्टारकविरचितायां प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥**





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका

## श्रीत्रिविक्रमपण्डिताचार्यविरचिता

# नयचन्द्रिका

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

१५४ **आनन्दमयोऽभ्यासात्** इत्यादेरध्यायस्य पूर्वत्र प्रपञ्च्यप्रपञ्चकभावात्मिकां सङ्गतिं दर्शयति **एवमित्यादिना** । **एवम्** उक्तप्रकारेण ब्रह्मणः सामान्यतः शास्त्रावगम्यत्वे प्रतिपादिते सति ।

१५५ **तत्र** इत्यादिना पादसङ्गतिं दर्शयति । अत्र अध्याये ।

१५६ **शब्दानां** नाम्नाम् । **गुणीत्यादिना** अधिकरणसङ्गतिं दर्शयति । आनन्दमयविज्ञानमयादीनां सामान्यवाचका गुणिसामान्यवाचिनो लिङ्गात्मका इत्यर्थः । गुणवाचिन आनन्दादयो नामात्मकाः । अन्नादयो गुणिविशेषवाचिनो नामात्मकाश्चशब्दपरिगृहीताः ।

१५७ 'यमन्तःसमुद्रे कवयो वयन्ति', 'यदक्षरे परमे प्रजाः', 'यतः प्रसूता जगतः प्रसूती', 'तोयेन जीवान्', 'तदेव ब्रह्म परमं कवीनाम्, 'येऽन्नं ब्रह्मोपासते', 'सह ब्रह्मणे'त्यादि ब्रह्मशब्दाभ्यासः ॥ १५८ ॥

१५९ एतद्रूपास्वेतद्रूपं यासां ता एतद्रूपा वाधूलकादय आसु । आनन्दमय इत्याद्यैः शब्दैः हरिः स्वयं वाच्यो न ब्रह्मादयः । तेषां मुख्यब्रह्मत्वाभावात् । अन्नमयप्राणमयमनोमयविज्ञानमया अन्नं प्राण इत्याद्या आद्यशब्दार्थाः ।

१६० उपलक्षणत्वमित्यादेरयमर्थः । आनन्दमयोऽन्तरो द्युभ्वाद्यायतनमित्यादिसौत्राणां शब्दानां तत्तच्छाखागतशब्दान्तराणामन्नमयादीनामुपलक्षणत्वमस्ति । तत्तन्निर्दिष्टबलादेव तेषामपि ग्रहणोपपत्तेः । सूत्रस्याल्पाक्षरतयैव सर्वशाखाविनिर्णयार्थमेव।

१६१ एवं तर्हि तत्तत्समाख्याबलेन सर्वशाखासमन्वयसम्भवात् किमधिकरणान्तरारम्भ इत्यत आह **पुनश्चेति** । ततः समाख्यादेरपि प्राबल्येन शङ्काप्रापकाद्धेतोर्निमितात् तन्निरासाय अधिकरणान्तरम् । तत्राप्यतिप्राबल्येन सिद्धान्तप्रापकाद्धेतोरिति वा ।

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम् ।





१६१ 'सर्वे वेदा यत्पदमामनन्ती'ति कठश्रुतिं सूचयति **सर्व इति** । अनन्तवेदवाच्यस्य ब्रह्मणः प्रतिपादनमुपलक्षणयैव हि घटत इत्याशयः । एवं चेदन्नमयशब्दस्य प्राथमिकत्वात् किमिति सूत्रयित्वा अन्यान्नोपलक्षितवान् । अथवा 'अन्नं प्राण' इत्यत्र श्रूयमाणमन्नशब्दं सूचयित्वा तेनान्यत्किमिति नोपलक्षितवान् ।

१६२ न हि नामपादे विशेषप्रयोजनं विना लिङ्गविचारस्य सावकाशत्वमित्यत आह **आनन्दमयेति** । अन्योऽन्तर आत्माऽऽनन्दमयः । प्रस्तुत आनन्दमयाख्यरूपे तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । 'ब्रह्म पुच्छं प्रतिष्ठे'ति ब्रह्मणः पुच्छतोक्तित आनन्दमयस्वरूपस्य समस्तस्याब्रह्मताप्राप्तेस्तन्निरासाय आनन्दमयनाम सूत्रितम् । तस्मात् ब्रह्म आनन्दमय एव । न तु पुच्छमित्यभिप्रायः । तन्निरासाभावे ब्रह्मणोऽवयवित्वासिद्धेस्तज्जिज्ञासाया एवासम्भवात् ।

१६३ **ब्रह्मशब्दस्य च** इत्यादेरयमर्थः । 'येऽन्नं ब्रह्मोपासते । ये प्राणं ब्रह्मोपासते । अस्ति ब्रह्मेति चेद्वेद । विज्ञानं देवाः सर्वे । ब्रह्मज्येष्ठमुपासते । आनन्दं ब्रह्मणो विद्वानि'ति पञ्चस्वरूपप्रकरणे । 'अधीहि भगवो ब्रह्मेति । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मे'त्यादिशाखाविशेषे च ब्रह्मशब्दस्य चाभ्यासात् । चशब्दात्, ब्रह्म पुच्छमित्युक्तेश्च ।

१६४ ब्रह्मत्वमवयवतयैव ब्रह्मणोऽवयवानामेव अवयविस्वरूपत्वतः । यथैवावयवस्वरूपस्य कृष्णकेशात्मनः कृष्णस्यापि ब्रह्मता तथा सर्वत्रावयवे हि ब्रह्मता स्यात् । 'एवं संस्तूयमानस्तु भगवान् परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारं क्लेशहानिं करिष्यत' इति विष्णुपुराणे । 'एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वरमि'ति भगवद्गीतासु ।

१६५ 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितमि'ति तापनीयश्रुतौ । ब्रह्मशब्दं शङ्करविषयमाशङ्क्य तत्परिहाराय योजनान्तरं दर्शयन्नाह **ऋतं सत्यमिति** ।

१६६ समानाधिकृतत्वं चेत् पूर्वोत्तरार्धयोः समानाधिकृतत्वमेव युक्तमिति चेदुत्तरत्रोक्तं नीललोहितरूपं पूर्वार्धोक्तकृष्णपिङ्गलरूपेण निमित्तेन पुनरुक्तं भविष्यति । तथाऽपि परब्रह्मत्वं रुद्रादन्यस्य न सम्भवति ।

१६७ तस्य ब्रह्माधिपतित्वोक्तेरित्यत आह **ब्रह्मेति** । अत्र तापनीयश्रुतावेव पुर उपरि वाक्ये ब्रह्माधिपतिरिति समासपदं स्वरितब्रह्मशब्दान्तत्वात् बहुव्रीहित्वमेष्यति ।

१६८ तादृशस्य बहुव्रीहित्व उदाहरणमाह **स्वाहेति** । 'इन्द्रशत्रुर्वर्धस्व स्वाहे'ति मन्त्रे इन्द्रशत्रुरिति पूर्वपदान्तत्वात् बहुव्रीहितामगादिति यत् तस्मात् ब्रह्माधिपतिरित्यपि बहुव्रीहित्वमेत्येव ।

१६९ तस्मात् 'अस्येन्द्रः शत्रुरभवदित्युत्तरश्रुतेः' इन्द्रशत्रुसमासस्य बहुव्रीहित्वं निश्चीयते । 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादि'ति शिक्षायां





पूर्वान्तस्वरिते पुंसोर्बहुव्रीहिरिति सूत्रितम् । पुंसो विवक्षायां पूर्वपदान्तस्य स्वरितत्वे बहुव्रीहित्वं प्राप्नुयात् । 'अश्वपते गोपते' इत्यादावश्वपूर्वान्तस्वरितत्वात् बहुव्रीहित्वं स्यात् । तद्व्यवच्छेदाय पुंसोरित्युक्तम् ।

१७७ ऋतत्वादिकमित्यादिशब्दजातस्य नाभावित्यादि द्रष्टव्यम् । विष्णोः कृष्णादिरूपतयोत्पत्तिस्तु स्वलोकात् केवलमत्रावतारणत्वेनावगता न तु देहाद्युत्पत्त्या । तस्मान्मत्वर्थादिविरोधः स्यात् । किन्तु विरिञ्चादिष्वपि ब्रह्म-शब्दस्योपचारतो वृत्तेर्ब्रह्मशब्दाभ्यासस्तद्विषयः किं न *स्यादित्यत आह* **प्रस्ताव इति** ।

१७९ ब्रह्मविदाप्नोति परमिति ब्रह्मणो ह्युपक्रमोऽतस्तद्ब्रह्मणे युक्ते सति नामुख्यं गृहीतुं युज्यते । अत्रान्न-मयादिषु विकारवाचिनो मयट्शब्दस्य श्रवणाद्विकाराभिमानिनां ब्रह्मादीनां वाच्यत्वप्राप्तिः । विकारात्मकानां शब्दानां कोशादीनां वेत्याशङ्क्य परिहाररूपेण 'विकारशब्दान्नेति चेन्न प्राचुर्यादि'ति सूत्रं विवृणोति **प्राचुर्यार्था इति** । अत्र श्रूयमाणमयटः सर्वेऽप्यत्र प्राचुर्यार्थाः प्रतिपादिताः । अन्नमयादिश्लोकेषु 'अन्नं हि भूतानां ज्येष्ठम्', 'प्राणं देवा अनुप्राणन्ति', 'विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमि'त्यादौ सर्वज्येष्ठत्वसर्वदेवादिचेष्टकत्वाद्युक्त्या तत्त-त्प्राचुर्यमेव हि प्रतिपाद्यते । न ह्यपूर्णस्यैते गुणाः सम्भवेयुः । विकारप्रधानप्राचुर्येषु मयडिति प्राचुर्येऽपि मयटः प्रवृत्तिर्दृष्टा ।

१७९ ननु 'अद्यतेऽत्ति च भूतानि' इति अत्तृत्ववचनान्न प्राचुर्यमात्रं विवक्षितम् । विकारित्वमेवेत्यत आह **भोग्यत्वमिति** । उपजीव्यतया भोग्यत्वमेवाद्यत्वम् । न भक्ष्यत्वम् । अतोऽन्नमय इत्यन्नमयरूप एव प्रचुरः । प्रचुरान्नमिति यावत् । तथा च महाभोक्ता महाभोग्य इत्युक्तं स्यात् ।

१८० तदेतदाह **महाभोक्तेति** । **अन्नमये** अन्नमयशब्दे ।

१८१ ननु 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमय' इत्यादौ पौरस्त्यात् पाश्चात्यस्य अन्यत्वकथनात् नैकरूपाण्येतानि अत्रोच्यन्ते अभिन्नोऽपीति । अत्र प्रमाणमाह **अभेदेति**।

१८४ भृगोरर्थे वरुणोऽप्येतदेवान्नमयादिरूपं वदिष्यति अन्नं प्राणमित्यादिमयट्शब्दश्रवणादन्य उच्यत इत्यत आह **प्राप्यत्वेनेति**।

१८५ एतमन्नमयमात्मानमुपसङ्क्रामतीत्यादिना तेषामेवोपासितानां प्राप्यत्वेनोपरि मयट्शब्देन सह प्रोक्तः तत्राप्यन्यद्वारादिकं नोच्यते । अतोऽन्नमयोऽपिशब्दात्प्राणमय इत्यादिरपि प्रचुरान्नादिरेवोच्यते ।

१८६ इह तैत्तिरीयश्रुतौ ब्रह्मणोऽन्यद्वारकोशादिकं किञ्चिदपि नोच्यते । 'तद्धेतुव्यपदेशाच्चे'ति सूत्रं विवृणोति **महानन्दत्व इति** । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'ति । 'यद्येष आकाश आनन्दो न स्यात् तर्हि क एव सामान्येन चेष्टेत को वा प्रकर्षेण चेष्टेत' इत्यत्र महानन्दत्व एव हेतुरुक्तो न ह्यनानन्दमात्रत्वे नाप्यानन्दविकारत्वे । तत्प्रतिपादयति **श्रुत्यन्तर इति** ।





१८७ 'यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोती'त्युक्त्वा 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ती'ति सुखशब्देन पूर्णसुखमुक्तमिति यस्मात्तस्मान्महानन्दत्व एवायं हेतुः । यत्प्रवृत्तिरित्यादेरयमर्थः । 'सुखाद्दुःखाच्च लोके प्रवृत्तिर्दृश्यत' इति यतः सर्वशक्तेर्न दुःखं सम्भवतीति यतः अतः केवललीलया केवलानन्दमूलचेष्टयाऽयं सर्वप्रवर्तको न चेदस्वतन्त्रेऽस्मिन् जगति क एव पुमान् प्राण्यादिति सुखप्राप्त्यर्थं दुःखपरिहारार्थं च प्रवृत्ति-दुःखनिवृत्तायामेवान्तर्भूतासम्भवेति हि दुःखं सुखप्राप्त्याशायां तत्प्राप्तिपर्यन्तम् । आशा हि परमं दुःख-मित्यादेश्च ॥ १८८ ॥

१८९ मान्त्रवर्णिकमेव च गीयत इति सूत्रं विवृणोति **ब्रह्मवित्परमाप्नोतीति** । यद्ब्रह्मोपक्रमे सूचितं तदेव 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति मन्त्रवर्णेन लक्षितम् । सत्यज्ञानानन्दादिलक्षणत्वेन प्रकाशितम् । तत्र मन्त्रवर्णे सृष्ट्युक्त्येति शेषः । मनसा विज्ञानेनाप्युक्तमिति शेषः ।

१९२ कथं सत्यादिशब्दार्थत्वं सृष्ट्यादेरित्यत आह **सद्भावमिति** । सद्भावः सत्यवस्तूनां सत्ता तत्त्रिविधामपि यापयतीति सत्यम् । इत्येषा सत्यशब्देन सूचिता । सृष्टिरिहान्नमयादिश्लोके विस्तरश उक्तेति स्थापनायैवे-त्येतमर्थं स्थापयितुमेवोक्ता हि सृष्टिः । 'अन्नाद्भूतानि जायन्त' इति सत्त्वमेव जीवनं चेदप्यत्रोक्तं 'जातान्यन्नेन वर्धन्त' इत्यादि । षद्लृविशरणगत्यवसादनेष्विति धातोर्विशीर्णता च सत्त्वं स्यादप्यत्रोच्यते।

१९४ अत्ति च भूतानि । 'सन्नं तु वर्धितं प्रोक्तं सन्नं शान्तं च सूरिभिरि'त्यादौ विनष्टं सन्नमित्याहुरेव हि । अतोऽद्यताऽत्तृतारूपत्वमन्नत्वं सत्यशब्दार्थः स्यादेव हि । अद्यता नामोत्पत्तिवृद्ध्योरुभयत्राप्युपजीव्यता ।

१९५ 'अत्तृता संहर्तृत्वं प्राणमि'त्यादिना चेष्टारूपिणी गतिरुच्यते । 'प्राणो हि भूतानामायुरि'ति जीवनमायु-र्निमित्तत्वादायुः।

१९६ मनु अवबोधन इति धातोर्मनो विज्ञानमेव । 'नाल्पे सुखमस्ति भूमैव सुखमि'ति प्रोक्त्यैव सुखशब्द-स्यानन्तसुखवाचित्वादत्र भगवत एवानन्दमयत्वोक्तितो मन्त्रवर्णोक्तमनन्तत्वं सुनिर्णीतम् ।

१९७ परिपूर्णरूपं पूर्णाल्पके न स्याद्धि स्वव्याहतेरेव । उक्तार्थं निगमयति **अतो हीति** ।

१९८ **परया** उत्तरभागश्रुत्या । यस्मादित्युक्तार्थं परामृश्य तमित्यपि हेतुं करोतीत्युत्तरसूत्रं व्याचक्षाणो भगवान् मध्वदेवो मन्त्रवर्णे तु ब्रह्मण इतरस्यानुक्तत्वात् उत्तरभागश्रुतेर्मन्त्रवर्णविस्ताररूपत्वात् तत्रेतरवाच्यत्वानुपपत्तेः उत्तरो ब्रह्मादिः प्रकृतिर्वाऽत्र तैत्तिरीयश्रुतौ न प्रतिपाद्यत इत्यर्थः ।

१९८ 'नेतरोऽनुपपत्तेरि'त्यस्यार्थान्तरमाह **पुरुषमिति** । 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यत' इति श्रुतेर्विष्णुवेदिन एव मोक्षः । 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते', 'एतमानन्दमय-मात्मानमुपसङ्क्रामती'त्यादिनोच्यते । अत्र आनन्दमयात् मोक्षः ।





१९९ विष्णावेव पुरुषशब्द इत्याह **पुरुष इति**। तेन विष्णोरन्यस्य पुरुषत्वनिषेधेन मोक्षप्रतिषेधेन च।

२०२ ननु 'आकाशाद्वायुरि'त्यादि भूतसृष्टिमुक्त्वा औषधीकारि-अन्नमयं पुरुषशब्दं प्रस्तुत्य अन्नमयप्रतिपादनात् कथमितरकोशा नोच्यन्त इत्यत आह **ब्रह्मेति**।

२०३ 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या औषधय औषधीभ्योऽन्नमन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमय' इत्यादिश्रुतयः॥ २०४॥

२०५ बलरूपत्वाद्बकारस्य वकारः कुत्रचिच्छब्दस्यादिग्रहणेनैव तदर्थ उच्यते।

२०६ उकारो द्वितीया मात्रा। उत्कर्षादुभयत्वाद्वेतिवत्। उषास्तेषु धातृत्वादौषधिः।

२०७ 'पुरि शेत' इत्यत्र तृतीयेऽतिशय इति न्यायो द्रष्टव्यः।

२११ न चोक्तान्नमयो न बाह्यो लोकान्नमयाख्यः कोशोऽन्नरसमयः। रसो वै स इति रसशब्देन विशेषणात्।

२१२ कथं तस्येदमित्यादौ प्रत्यक्षत्वव्यपदेशात् परमात्मोच्यत इत्यत आह **इदमिति**।

२१३ 'तमेवं विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाये'ति श्रुतेरन्यस्य कोशादेर्न मुच्यते। उच्यते चास्मिन्प्रकरणे अन्नमयादिज्ञानान्मोक्षः। एतमानन्दमयमात्मानमुपसङ्क्रम्येत्याद्युक्तयुक्तेरेव ब्रह्मादीनामपि परित्यागा-योगाद्विष्णवैक्येनानन्दमयत्वं स्यादित्याशङ्कापरिहारार्थं 'भेदव्यपदेशादि'ति सूत्रं योजयति **नेत्यादिना**।

२१८ समन्वयादौ प्रासङ्गिकतया वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णता।

२१९ 'एतमन्नमयमात्मानमुपसङ्क्रामति। एतमानन्दमयमात्मानमुपसङ्क्रम्ये'ति स्थानद्वयेऽप्येवं श्रुतपरित्यागा-श्रुतकल्पने तेषां स्यातामिति शेषः।

२२१ अस्माल्लोकात्प्रेत्येत्युक्तायां मृतायामेव तेन शरीरतयाऽभिहितस्यान्नमयशब्दस्य परित्यागः कृतो हि। तस्मादन्नमयादीनामप्यतिक्रमाभिप्राये पुनरुक्तिः।

२२२ अन्नमयादिशब्दानां ब्रह्मशब्दस्य वा सामानाधिकरण्यतः।

२२४ 'अधीहि भगवो ब्रह्मे'ति भृगुणोक्तो 'वरुणोऽन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि'ति ब्रह्माह। तत्कथं ब्रह्म न भवति। शाखाचन्द्रदर्शनन्यायेन ब्रह्मदर्शनद्वारम्। न तु ब्रह्मेति वादिनः कथं गुरुप्रसादनप्रकारं विद्युः।





२२७ चक्षुरादीनामन्नमयादिषु सहपाठे पुनः 'यतो वा इमानि भूतानि जायन्त' इत्यादिना सामान्योपदिष्टानां स्रष्टृत्वादिब्रह्मलक्षणानां तेष्वनुक्तेः कथमद्वारत्वमित्यत आह **चष्ट इति** ।

२२८ चक्षुरादिमत्त्वेनोपदिष्टं तद्ब्रह्मैव हि 'यतो वा' इत्यादिना सृष्ट्यादिकारणत्वेनोक्तमित्यभिप्रायेणाह **ब्रह्म सृष्टिस्थित्यादिकारणमिति** । एवं क्वचित् षड्रूपत्वं क्वचित्पञ्चरूपत्वमपरत्राष्टरूपत्वं चोक्तम् ।

२२९ तस्मान्मिथो विरोध इत्यत आह **आवापेति** । गुणरूपादीनामावापोद्वापतः ।

२३० 'यतो वा इमानि भूतानि जायन्ते । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्मे'ति लक्षितं गुरुणा । 'स तपोऽतप्यत । स तपस्तप्त्वा । अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येवे'त्यादि ब्रह्मत्वेन श्रुतमन्नादिकम् ।

२३२ अ इति ब्रह्मेति हि मायिनो वदन्ति । इति लज्जा तदुक्तिष्विति हेतोः तेषां श्रुतियोजनानुवादेषु लज्जा वर्ततेऽस्माकम् ।

२३२ 'अस्मिन्नस्य च तद्योगं शास्ती'ति सूत्रार्थमाह **समीप इति** ।

२३४ भास्करीयास्तावदन्नमयादिषु मयटो विकारार्थत्वं कल्पयन्ति । आनन्दमये प्राचुर्यम् । तन्निराकरोति **एतेनेति** ।

२३५ अधिकरणार्थं निगमयति **अत इति** । **गुणवाचका** आनन्दादयः । **गुणिवाचका** अन्नमयादयः ।

२३७ ननु जन्माद्यस्य यत इति सूत्रेण जन्मादिकारणत्वं ब्रह्मणो लक्षणत्वेन प्रतिज्ञातमुपपद्यते च । तच्च ज्ञानप्रयत्नेच्छादिमत ईश्वरस्यानन्दाद्यनन्तकल्याणगुणप्रतिपादनात्मकः समन्वयः किमर्थ इत्यत आह **जन्मेति** । **गुणसर्वस्वसिद्धये** गुणसर्वस्वरूपसिद्धये न तु केषाञ्चिद्गुणानां सिद्धये । तद्गुणसर्वस्वं शास्त्रमूलमिति यतस्ततः ।

२३८ सर्वशास्त्रशब्दानां समन्वय एव गुणसर्वस्ववेदकः । प्राणादिशब्दानां प्रवृत्तिहेतूनां प्रकृष्टत्वादीनां तस्मिन् भगवति सम्बन्धात् ।

२३९ तन्निमित्तत्वतोऽल्पस्यापि भगवन्निमित्तत्वतः ॥ ६ ॥

२४२ 'अन्तस्तद्धर्मोपदेशादि'ति सूत्राभिप्रायमाह **देवानामिति** । **शक्ततां** तत्र तत्र समन्वयधर्मित्वे समर्थताम् ।





२४३ 'भेदव्यपदेशाच्चान्य' इत्यभेदं न्यवारयत्॥ ७॥

२४४ नन्वस्तु चेतनानां प्रवर्तकत्वेन हरेस्तच्छब्दवाच्यत्वम् । आकाशाद्यचेतनं हि तत्स्वभावस्य विवरत्वादेः परेणानियतत्वात् कथं तच्छब्दवाच्यत्वमित्याशङ्काभिप्रायः ।

२४५ आकाशस्तल्लिङ्गादिति सूत्रं व्याख्याति **आकाश इति** । पूर्वशब्दादनन्तत्वं द्रष्टव्यम् । आदिशब्दात् 'यस्तभ्नानाकमृष्वं बृहन्तं दाधर्य प्राचीं ककुभं पृथिव्या' इत्यादि ॥ ८॥

२४७ 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते । एतेन ह वाव पयो मण्डं भवती'ति शरीरे यच्चेष्टावत्प्राणवद्भवति । यत्प्राणवन्न भवति तच्चेष्टावन्न भवतीत्यन्वयव्यतिरेकाभ्यां चेष्टायाः । आदिशब्दाज्जीवः । अत एव प्राण इत्यतिदेशः । प्राणादिनाम्नां लिङ्गमात्रेण कथमनुकर्षणमित्यत आह **लिङ्गमिति** । **अस्यापि** नामवतोऽपि ॥ ९॥

२४८ **शब्दस्य** गायत्र्यादिशब्दस्य । **नित्यत्वात्** स्वभावस्य च नित्यत्वात् कथं हरिनिमित्तभूतः स्यात् । अग्न्यादौ प्रसिद्धानां ज्योतिरग्निगायत्र्यादिप्रबलशब्दानां तद्धरेरेव तच्छब्दजातं हरेरेव वाचकम् । हरेरेव पुरुषामृतादिश्रुतीनां चरणाभिधानलिङ्गानां च बाहुल्यान्नित्यानां नित्यत्वस्यापि नियामकत्वं तादृशत्वम् ॥ ११॥

२४९ **बाहुल्य** इत्यादेरयमर्थः । प्राणादिश्रुतीनां प्राणविसंवादिलिङ्गानां च बाहुल्यसाधकत्वेनाङ्गीकृते सति तत एवान्यस्य मुख्यप्राणस्य मुख्यवाच्यत्वमिति मतं चेन्न ।

२५१ अत्र हि मुख्यप्राणस्य 'ता अहिंसन्त । अहमुक्थमस्म्यहमुक्थमस्मीति । ता अब्रुवन् । हन्तास्माच्छरीरादुत्क्रमाम । तद्यदस्मिन्न उत्क्रान्ते इदं शरीरं पत्स्यति तदुक्थं भवती'त्यादिः प्राणसंवादः । पूर्वशब्दात् प्राणनिर्गमनादि । तं शतं वर्षाण्यभ्यार्चत् । प्राणो वंशत्वमिति स्थविरः शाकल्यः । तदस्य 'प्रथमं जन्मेत्यादीनि जीवलिङ्गानि॥ १२॥

२५३ न केवलमस्य शास्त्रस्य मुख्यस्य मुख्यतः परिदृश्यमान एवार्थ इत्याह **वासुदेवेति** । सर्वशः सर्वशास्त्रे चतुरध्याये विभागेनाध्यायपादविभागेन पादे त्वधिकरणानां चतुर्धा विभागेनाधिकरणादिषु सूत्रादीनां चतुर्धा विभागेन । अथ प्रत्यधिकरणं नारायणसहितत्वेन पञ्चमूर्तिर्वा प्रतिपाद्यते ।

२५४ प्रतिसूत्रं पादादिविभागेन प्रतिपदमक्षरविभागेन प्रत्यक्षरं स्वरव्यञ्जनाद्यन्तं सन्धिसन्धानविभागेन तैस्तैस्तदुचितैर्युक्त्यागमैर्विषयसंशयादिक्लृप्तिरूपन्यायविशेषैश्च सहैव प्रोक्तः । यथा पुरुषाणां योग्यता ।





२५५ इदं सूत्रजातं बृहत्तन्त्रप्रमाणेनैवं बह्वर्थवत्पर्यवसीयते । व्याख्यातार्थता ह्येतेऽर्थाः सूत्रजातस्य बृहत्तन्त्रोक्त-युक्त्यादिभिस्तथाऽप्यस्माभिः सङ्ग्रहादुच्यते ।

२५६ ननु बह्वर्थानां सूत्राणामिदं व्याख्यानं नानुरूपमित्यत आह **ग्रन्थ इति** ।

२५७ **महागुणः** अनन्तगुणः । अनन्तवेदपदात्मकानां नाम्नां पुनरुक्तिरहितत्वतस्तत्प्रतिपाद्यानां गुणानामप्यनन्तत्वं स्यात् ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यविरचितायां नयचन्द्रिकायां प्रथमाध्यायस्य प्रथमः पादः ॥ १-१ ॥**

॥ श्रीकृष्णार्पणमस्तु ॥





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका

श्रीशङ्करपण्डिताचार्यविरचिता

# अनुव्याख्यानसम्बन्धदीपिका

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

१५४* मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्येति प्रस्तुतं शास्त्रादवगम्यमवधृत्य अवशेषिताध्यायसङ्गतिमाह **एवमिति**।

१५५ लिङ्गान्नाम्नः प्राथम्यं दृश्यते। अप्रथमं तत्समन्वयं वक्तीत्याह **तत्रेति**।

१६० आनन्दमय इत्यादि सूत्रव्याख्यानेन गुणगुणिसामान्यवाचिशब्दसमन्वयमाह समुद्रे आनन्दमय इत्युक्ते किमित्यन्नमयादि ग्रहणमित्यत आह **उपलक्षणत्वमिति**।

१६० किमित्युक्तिं विनोपलक्षणमित्यत आह **सूत्रस्येति**।

१६१ एकसूत्रेण सर्वसमत्वतोपलक्षणोऽधिकरणान्तरं कुत इत्याशङ्क्याह **पुनरिति**।

१६१ सूत्रपदस्य ब्रह्मवाचकत्वेन सर्वपदान्तरोपलक्षणत्वं प्रमाणानुसारित्वादङ्गीकार्यमित्यभिप्रैति **सर्व इति**।

१६२ किमिति प्रथमप्राप्तान्नमयविसृष्ट्या आनन्दमयो गृह्यत इत्यत आह **आनन्दमयेति**।

१६३ कुतोऽवयव्यवयवयो उभयोरपि ब्रह्मत्वमित्याशङ्कायां उभयत्रापि ब्रह्मशब्दादित्यभिप्रैति **ब्रह्मशब्दस्येति**।

१६४ विष्णवैकदेशस्य अपि पूर्णत्वं दृष्टान्ततोऽवगमयति **यथेति**।

१६५ 'ऋतं सत्यमि'त्यत्र ऋतस्य परप्रतीतेर्ब्रह्मशब्दाद्विष्णोरेवानन्दमयत्वनिर्णयो न सुलभ इत्याशङ्कां नुदति **ऋतमिति**।

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम्।





१६६ तर्हि वाक्यभेदशेषः स्यादित्यत आह **समानेति**।

१६७ वाक्यशेषगतब्रह्माधिपतिपदस्य रुद्रविषयस्य बहुव्रीहिसमासता च न रुद्रस्य परब्रह्मत्वमित्याह **ब्रह्मेति**।

१६८ पदस्य बहुव्रीहितत्वे लक्ष्यमाह **स्वाहेति**।

१६९ लक्षणमाह **पूर्वेति**।

१७० अथोर्ध्वते तं च तत्प्रतीत्युक्तविभक्तिभेदं स्पष्टयति **ऋतमिति**।

१७४ **तदेव परब्रह्मे**त्यवधारणाच्चेतरस्य परब्रह्मत्वं नास्तीत्याह **तदिति**।

१७६ विष्णोर्जननवचनात् सर्वजन्यकारणत्वाभावादपरब्रह्मत्वमित्यत आह **नेन्द्र इति**।

१७७ एक इति उत्पत्तिवचनस्य गतिमाह **विष्णोरिति**।

१७७ परब्रह्मप्रस्तावाच्च विष्णुरेवानन्दमय इत्याह **प्रस्ताव इति**।

१७८ अमुख्यब्रह्मग्रहे कारणाभावाच्चैवमित्याह **मुख्येति**।

१७८ तदेव स्पष्टयति **असम्भव इति**।

१७९ विकारवाचि मयट्शब्दान्नात्र विष्णुरुच्यत इत्याशङ्कापरिहारशब्दादिति सूत्रं व्याख्याति **प्राचुर्येति**।

१७९ भूताद्यत्वं परत्वविरुद्धमित्यत आह **भोग्यत्वमिति**।

१८० प्राचुर्यार्थत्वं स्पष्टयति **महाभोक्तेति**।

१८२ अन्नमयादीनां प्रत्येकमन्यत्रोक्त्या परब्रह्मत्वविरोध इत्यत आह **अभेद इति**।

१८२ अन्यशब्देन विशेषाङ्गीकारे सर्वत्र ....त आह **भेदेति**।

१८४ आनन्दमयादि पञ्चकस्य ब्रह्मत्वेन भृगवे वरुणेनोपदेश्यमानत्वाच्च न कोशत्वमित्याह **भृगोरिति**।

१८४ वरुणोपदिष्टान्नादौ मयड्वतीत्वात्कथमन्नमयादित्वमित्यत आह **प्राप्यत्वेनेति**।

१८५ ...... एवोपसंहाराविरोध्युपक्रमस्य तदेकार्थत्वं निगमयति **प्रचुरेति**।





१८६ इतो हेतोरपि विष्णोरेवानन्दमय इति हृदा लब्धे भूरित्यादि सूत्रार्थमाह **महानन्दत्व इति**।

१८६ आनन्दो न स्यादिति। महानन्दत्वमेव श्रुत्यभिप्रेतमित्याह **श्रुत्यन्तर इति**।

१८७ अनन्तरेणानुपपन्नापरतन्त्रचेष्टेश्वरस्य पूर्णसुखत्वे हेतुरिति प्रतिपादयति **यदिति**।

१८९ इतोऽप्युक्तार्थसिद्धिरित्यभिप्रायेण मान्त्रवर्णिकमित्यादिसूत्रार्थमाह **ब्रह्मविदिति** ।

१९७ अन्नमयादिशब्दानां सत्यत्वादिप्रतिपादनपरमाह। नार्थं निगमयति **अतो हीति**।

१९८ मोक्षसाधनाज्ञानविषयत्वाच्चानन्दमयो विष्णुरन्यो नेति हृदा नेतरोनुपपत्तेरिति सूत्रं व्याख्याति **पुरुषमिति** ।

१९९ पुरुषशब्देऽपि विष्णौ प्रसिद्ध इत्यत्र श्रुतिमाह **पुरुष इति** ।

२०३ परामर्शाच्च विष्णुरेवान्नमयस्यास्य ब्रह्मविषयत्वप्रकटनात् ब्रह्मप्रस्तावं दर्शयति **ब्रह्मेति**।

२०३ चतुर्विषयत्वं चतुर्विधत्वं तदाह **भूतमिति**।

२०४ मुख्यतो हरेः उक्तत्वे हेतुमाह **आ समन्तादित्यादिना**।

२०६ दृष्टानामाश्रयत्वं दर्शयति **ओषधीष्विति**।

२१० भूततदभिमान्यादीनां सृष्टिप्र.......... शब्दार्थमाह **स इति**।

२११ अन्नरसमय इति। सारान्नमयत्वोक्त्या लोकान्नमयात् शरीर.........गं विष्णुं व्यावर्तयतीत्याह **सारेति**।

२१२ अप्रत्यक्षस्य हरेः प्रत्यक्षवचनवदिदमिति निर्देशः कस्मादित्यत आह **इदमिति**।

२१३ जीवस्य ब्रह्मभेदे सति तस्याप्यानन्दमयत्वमिति शङ्कापरिहाराय भेदव्यपदेशाच्चेति सूत्रं व्याख्याति **आदित्य इति**।

२१४ श्रुतिर्भेदपरा चेदनुमया भेदसिद्धिरित्याशङ्कां नुदति **नानुमेति**।

२१५ प्रत्यक्षादिविरुद्धाङ्गीकारेऽतिप्रसङ्गमाह **अक्षेति**।

२१६ तादृशानुमानां सर्वत्रावसरं दर्शयति **जड इति**।





२१७ भेदसूत्राणां बहुत्वं दोषस्तर्हीत्याशङ्क्याह **नेति** ।

२१८ यदन्नादिकं कोशपञ्चकं वदतिं । तन्न युक्तम् । तद्योगस्य फलरूपत्वोक्त्या ब्रह्मत्वावगतेः । न हि देहबन्धस्तत्त्वज्ञानफलमिति दर्शयन् 'अस्मिन्नस्ये'त्यादिसूत्रं व्याख्याति **योगमिति** ।

२१९ नात्रोपसङ्क्रम्येति । योगश्शस्यते किन्तु ........ क्रम एवेत्यत आह **उपेति** ।

२२१ अस्माल्लोकात्प्रेत्ये ते मृतावेव कोशातिक्रमात् । पुनरपि तद्वचने पुनरुक्तिश्च स्यादित्याह **मृताविति** ।

२२२ अन्नमयादेः श्रुत्याभिप्रेतब्रह्मत्वं सन्त्यज्य कोशत्वं वदतां श्रुतिकोपेन अनर्थश्च स्यादित्याह **येऽन्नमिति** ।

२२४ भृगुवल्ल्यां अन्नादेरन्नमयादिब्रह्मत्वं प्रतिपादयति **अधीहीति** ।

२२५ उपसन्नार्थत्वं वदन् गुरुरिति वदतो न विद्युश्चेद्विद्वांसः किं गुरुकृत्यं ब्रूयुरित्यत आह **उपसन्नायेति** ।

२२७ उपसन्नाय ब्रह्म वक्तव्यं चेदपि वरुणेन तन्नोदिष्टम् । व्याजेनेति । न श्रोत्रत इत्याह माया............यादिपदं निरुक्तमथ चक्षुरादिपादं निर्वक्ति ब्रह्मविषयतया **चष्ट इति** ।

२२८ अन्नं प्राणं मनो वाक्चक्षुःश्रोत्रविज्ञानानन्दा (?) ब्रह्मवराधुलनास्वां याम् । तेषां प्रत्येकं सृष्ट्यादि-कथनाच्चेत्याह **तच्चेति** ।

२२९ भृगुवरुणोपदेशे विज्ञानानन्दे चावनुक्तौ भृग्वव.........चक्षुःश्रोत्राणि नोक्तानि कुत इत्यत आह **आवापेति** ।

२३० स्रष्टृत्वादिलक्षणैर्ब्रह्मत्वेन कथितान्नादिकमब्रह्मेति वेदतो मतानुवादो रक्षाकर इत्यभिप्रैति **यत इति** ।

२३३ 'अस्मिन्नस्य चे'त्यादिसूत्रं योगमन्नमयेत्यादिना कोशनिराकरणपरतया अधिकरणस्य अपि प्रस्तुतत्वात् परतयापि च व्याख्याति **समीप इति** ।

२३४ अन्नादिचतुष्के मयड्विकारार्थः । पञ्चमे प्राचुर्यार्थ इति । भास्करीयमतं च मयटां प्रतिपादितैकार्थत्वेन । न युक्तम् । प्रायपाठपरित्यागप्रसङ्गाच्चेत्यभिप्रैति **एतेनेति** ।

२३७ अधिकरणा ......... जन्मादिकारणत्वमात्रं प्रतिज्ञातमतीत्यपूर्णानन्दत्वप्रतिपादनमसङ्गतमिति न मन्तव्यम् । सार्वज्ञादिगुणजातं विना कारणत्वानुपपत्त्यात्र तत्प्रतिपादनस्य सङ्गतत्वादित्याह **जन्मेति** ।

२३७ लौकिककर्तृदृष्टान्तेन ब्रह्मणः सर्वगुणत्वं न वा ........त्यभिप्रैति **शास्त्रमूलमिति** ।





२३८　गुणसर्वस्वसिद्धिः कुत इत्यत आह **अन्वय इति** ।

२३९　सर्वशब्दानां ब्रह्मवाचकत्वमप्रसिद्धमङ्गीकर्तुमशक्यमित्यत आह **तद्वाचकत्वमिति** ।

**॥ इति आनन्दमयाधिकरणम् ॥ ६ ॥**

**✻✻✻**

## ॥ अन्तस्थत्वाधिकरणम् ॥

२४२　न हि तद्वाचकत्वं लोकरुढम् । अतः कथं रूढमिति साध्यसमन्वयाक्षेपसमाधानरूपेणान्तस्तद्धर्मेत्यादिसूत्रद्वयं व्याख्याति **देवानामिति** ।

**॥ इत्यन्तस्थत्वाधिकरणम् ॥ ७ ॥**

**✻✻✻**

## ॥ आकाशाधिकरणम् ॥

२४४　आकाशस्य परमात्मनियतत्वमाशङ्क्य तच्छब्दे समन्वयासम्भवं परिहरन्नाकाशस्तल्लिङ्गादिति सूत्रं व्याख्याति **चेष्टेति** ।

**॥ इत्याकाशाधिकरणम् ॥ ८ ॥**

**✻✻✻**

## ॥ प्राणाधिकरणम् ॥

२४६　आकाशस्येश .........परिहारसाम्येऽपि प्राणशब्दसमन्वयव्याख्यान एव प्राण इति सूत्रितस्य विशेषाशङ्कावचने कारणमित्याह **अध्यात्ममिति**।

२४७　लिङ्गान्नाम्नः प्रबलत्वेऽपि हरेः प्राणप्रेरकत्वाल्लिङ्गमेव बलवदित्याह **लिङ्गमिति** ।

**॥ इति प्राणाधिकरणम् ॥ ९ ॥**

# ॥ गायत्र्यधिकरणम् ॥

२४८ नित्यस्य वेदस्य तदनिय.......... 'ज्योतिश्चरणे'त्यादि सूत्रार्थमाह **नित्यत्वादिति**।

२४९ नित्यस्य कुतस्तन्नियतत्वमित्यत आह **तादृशत्वादिति**।

॥ इति गायत्र्यधिकरणम् ॥ ११ ॥

* * *

# ॥ अन्तिमप्राणाधिकरणम् ॥

२४९ चकाराद्यो वाचि तिष्ठन् इत्यादेश्चेत्यर्थः। श्रोत्रं मनो वाक्प्राण इत्यादि वाक्ये विष्णौ प्राणशब्दसमन्वयासम्भवमाशङ्क्य निरस्यन् प्राणस्तथेत्यादि ............. **बाहुल्य इति**।

॥ इत्यन्तिमप्राणाधिकरणम् ॥ १२ ॥

* * *

# पाथार्दोपसंहारः

२५२ पादार्थं नियमयति **तस्मादिति**।

२५४ **प्रत्यक्षरं प्रतिपदम्** पुनर्दुःखगुण इत्यर्थः।

२५६ सत्सूत्रमेव केवलं बह्वर्थं तद्व्याख्यानरूपोऽयं ग्रन्थोऽपि मुखतः प्रतीतार्थविवक्षया सङ्क्षिप्तो विशेषज्ञानमालोचनया प्रतीतबह्वर्थ इति हृदाह **ग्रन्थ इति**।

**इति प्रथमाध्यायस्य प्रथमः पादः ॥**

* * *

# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीर्थाः

**श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥**

— श्रीवादिराजतीर्थाः

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीर्थाः

**सुधा वा पठनीया । वसुधा वा पालनीया ॥**

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीर्थाः

Printed at : Sudha Mudrana, Bangalore.